यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ ६ ॥

*a*) पा 4·4·86 वशं गता.

यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः ।
न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥ ७ ॥

*a*) श्वे 6·16; मै 1·4; 6·34; गी 16·19.

यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः ।
स तु तत्पदमाप्नोति यस्माद् भूयो न जायते ॥ ८ ॥

*a*) छां 4·15·6; 8·15·1; प्र 1·10; गी 8·26.

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान् नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ ९ ॥

*a*) ऋ 1·22·20; 1·154·5 विष्णोः पदे परमे मध्व उत्सः; मै 6·26.

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ १० ॥

*a*) क 6·7–8; गी 3·42.

महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः ॥ ११ ॥

*a*) बृ 6·4·28.

एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ १२ ॥

*a*) श्वे 4·14; मुं. 3·1·7; गी 6·21; 7·25; 13·15. —*b*) आर्षसंधि; cp मै 6·7 अपोऽप्यायनात् ( for अपो आप्यायनात् ).

यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥ १३ ॥

*a*) क 6·10–11; छां 6·8·6. —*b*) मै 5.1; मां 7.

उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत ।
क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत् कवयो वदन्ति ॥ १४ ॥

*a*) अ 11·1·10 त्रयो वरा यतमाँस्त्वं वृणीषे. —*b*) ऋ 7·65·3 दुरत्येतू रिपवे मर्त्याय; गी 7·14.

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥ १५ ॥

*a*) बृ 3·8·7. —*b*) श्वे 4·11; क 1·17; ब्रसू 1·2·7 निचाय्यत्वादेवं व्योमवच्च.

नाचिकेतमुपाख्यानं मृत्युप्रोक्तꣳसनातनम् ।
उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥ १६ ॥

य इमं परं गुह्यं श्रावयेद् ब्रह्मसंसदि ।
प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते ।
तदानन्त्याय कल्पत इति ॥ १७ ॥

॥ इति तृतीया वल्ली ॥

*a*) ब्रह्मसंसद् denotes the place and श्राद्धकाल the time.

---

पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ् पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥

*a*) अ 10·2·6 कः सप्त खानि वि ततर्द शीर्षणि (cp तैसं 5·1·8·1 सप्त वै शीर्षण्याः प्राणाः); मै 2·6 खानीमानि भित्त्वोदितः. —*b*) ई 8. —*c*) अन्तरात्मन् = आत्मन् (Vedic locative) + अन्तर्; cp बृ 4·3·4–5 यश्चायमन्तरात्मन्नाकाशः. —*d*) ऋ 3·30·6 जहि प्रतीचो अनूचः पराचः. —*e*) मै 6·1.

पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् ।
अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ २ ॥

*a*) बालाः — cp धीर and पाक in ऋ 1·164·21 स मा धीरः पाकमत्रा विवेश पण्डित and बाल in बृ 3·5·1 and गी 5·4. —*b*) विततस्य for विततं, a nice instance of hypallage. For वितत see बृ 4·4·8.

येन रूपं रसं गन्धं शब्दान् स्पर्शाꣳश्च मैथुनान् ।
एतेनैव विजानाति किमत्र परिशिष्यते । एतद् वै तत् ॥ ३ ॥

*a*) These 5 objects of sense are mentioned in बृ 3·2·2 (गन्ध), 4 (रस), 5 (रूप), 6 (शब्द), 8 (स्पर्श). अ 19·9·5 इमानि यानि पञ्चेन्द्रियाणि मनःषष्ठानि. —*b*) Does मैथुन refer to the pair (मिथुन) of विषय and इन्द्रिय ?

स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ ४ ॥

*a*) छां 6·8·1; बृ 4·3·18 (बुद्धान्त for जागरितान्त). —*b*) See 2·12 above.

य इमं मध्वदं वेद आत्मानं जीवमन्तिकात् ।

ईशानं भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै तत् ॥ ५ ॥

*a*) ऋ 1·164·22 (मध्वद्) यस्मिन्वृक्षे मध्वदः सुपर्णाः (= अ 9·9·21). —*b*) बृ 4·4·15. —*c*) क 4·12,13. —*d*) ई 6.

यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत ।

गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत । एतद्वै तत् ॥ ६ ॥

*a*) Reference to सांख्य पुरुष? The verse seems to be pretty obscure! Cp गी 13·19.

या प्राणेन संभवत्यदितिर्देवतामयी ॥

गुहां प्रविश्य तिष्ठन्तीं या भूतेभिर्व्यजायत । एतद्वै तत् ॥ ७ ॥

*a*) Reference to सांख्य प्रकृति? Cp गी 13·19.

अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः ।

दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः । एतद्वै तत् ॥ ८ ॥

*a*) = ऋ 3·29·2 (with सुधितो for सुभृतो and गर्भिणीषु for गर्भिणीभिः).

यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति ।

तं देवाः सर्वे अर्पितास्तदु नात्येति कश्चन । एतद्वै तत् ॥ ९ ॥

On the whole verse, see जैब्रा 2·28 : मद्वेवोदेति सूर्योऽस्तं मद्व (*air*) च गच्छति । मां सर्वे देवा अन्वायत्ता मामु नात्येति किंचन ॥ The first half of the verse is commented on in बृ 1·5·23.

*a*) ऋ 10·121·6 यत्राधि सूर उदितो विभाति; अ 10·8·16. —*b*) अ 10·8·16. —*c*) बृ 1·5·23.

यदेवेह तदमुत्र यदमुत्र तदन्विह ।

मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १० ॥

*a*) अ 13·1·39 अमुत्र सन्निह वेत्थ; गी 6·40. —*b*) बृ 4·4·19.

मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन ।

मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति ॥ ११ ॥

*a*) Verse = बृ 4·4·19 (with अनुद्रष्टव्यं for आप्तव्यं and आप्नोति for गच्छति).

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।

ईशानं भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै तत् ॥ १२ ॥

*a*) क 4·13; 6·17. ब्रसू 1·3·24–25 शब्दादेव प्रमितः । हृद्यपेक्षया तु मनुष्याधिकारत्वात्. छां 5·18·1 (प्रादेशमात्र); मै 1·2; 6·17. —*b*) श्वे 3·13; 5·8. —*c*) मै 6·38.

अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः । एतद्वै तत् ॥ १३ ॥

*a* ) शब्रा 10·6 3·2 यथा ज्योतिरधूममेवम्. —*b* ) बृ 1·5·23.

यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति ॥ १४ ॥

*a* ) दुर्ग and पर्वत are respectively summit and slopes. —*b* ) धर्म used in the Buddhist sense ( phenomenon )? Cp the sense of the word धर्माः in Gauḍapāda's माण्डूक्यकारिका ( IV·1 et passim ).

यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम ॥ १५ ॥

॥ इति चतुर्थी वल्ली ॥

*a* ) मुं 3·2·8; प्र. 6·5. —*b* ) ई 7; गी 2·46.

---

पुरमेकादशद्वारमजस्यावक्रचेतसः ।
अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते । एतद्वै तत् ॥ १ ॥

*a* ) छां 8·1·1 ( ब्रह्मपुरे ). —*b* ) ऐ 1·3·12 ( विदृतिर्नाम द्वाः ); श्वे 3·18 and गी. 5·13 ( नवद्वारे पुरे ). —*c* ) वक्र not found in Vedic literature.

हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ २ ॥

*a* ) ऋ 4·40·5 ( omits बृहत् ) = वासं 12·14 ( has बृहत् ). Commented on in शब्रा 6·7·3·11. बृहत् has been added to ऋतम् as in ऋ 9·107·15[bd]; 9·108·8[d] and 10·66·4[a]. —*b* ) दुरोण a house, i. e. fitted with a door ( दुर् ).

ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।
मध्ये वामनमासीनं विश्वे देवा उपासते ॥ ३ ॥

*a* ) Cp क 5·5. —*b* ) वासं 16·30 नमो ह्रस्वाय च वामनाय च. शब्रा 1·2·5 5 वामनो ह विष्णुरास. Cp क 4·12 ( अंगुष्ठमात्रः पुरुषः ).

अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः ।
देहाद्विमुच्यमानस्य किमत्र परिशिष्यते । एतद्वै तत् ॥ ४ ॥

*a* ) अस्य seems to refer to शरिर. Cp क 6·4 प्राक् शरीरस्य विस्रसः ; बृ 3·7·2 व्यस्रंसिषतास्याङ्गानि. —*b* ) क 4·3.

नँ प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ ५ ॥

*a* ) क 5·3.

हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।
यथा च मरणं प्राप्य आत्मा भवति गौतम ॥ ६ ॥

1 ) v. l. वक्ष्यामि ( शंकरभाष्य ).

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥ ७ ॥

*a*) छां 5·10·7 (कपूया and रमणीया योनि ). —*b* ) क 6·4 (शरीरस्य. —*c* ) देहिन् a later coinage dating from क and श्वे ( 2·14; 3·18 ) —*d* ) आश्रा 1 स्थाणुं वर्च्छति गर्तं वा प्रतिपद्यते. छां 5·2·3; बृ 6·3·7; मै 2·6. —*e* ) ऐआ 2·3·2 यथाप्रज्ञं हि संभवाः, बृ 4·4·2; 4·4·5 ( पुण्यः पुण्येन कर्मणा भवति ).

यँ एषँ सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ।
तदेवँ शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे तदुँ नात्येति कश्चन । एतद्वै तत् ॥ ८ ॥

1 ) Drop यः and पुरुषः m. c. —2 ) v. l. एषु ( रंगरामानुज ).
*a* ) वासं 32·1. —*b* ) क 6·1. —*c* ) अ 10·8·16 ( with किंचन for कश्चन ).

अग्निर्यथैको भुवनं प्रविष्टो रूँपंरूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूँपंरूपं प्रतिरूपो बहिश्च ॥ ९ ॥

*a* ) Verse 9[b] = ऋ 6·47·18 ( = बृ 2·5·19 ); ऋ 3·53·8 रूपंरूपं मघवा बोभवीति.

वायुर्यथैको भुवनं प्रविष्टो रूपंरूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपंरूपं प्रतिरूपो बहिश्च ॥ १० ॥

सूर्यो यथा सर्वलोकस्य चक्षुर्न लिँप्यते चाक्षुषैर्बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा न लिँप्यते लोकदुःखेन बाह्यः ॥ ११ ॥

*a* ) ई 2.

एको वँशी सर्वभूतान्तरात्मा एँकं रूँपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १२ ॥

1) रंगरामानुज reads बीजम्.

*a*) बृ 4·4·22. —*b*) श्वे 3·18;6·12. —*c*) आत्मस्थ = शरीरस्थ; cp क 3·4 (आत्मेन्द्रियमनोयुक्तम्).

नित्योऽनित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ १३ ॥

1) v. l. नित्यानाम् (for अनित्यानाम्; cp चेतनश्चेतनानाम् which immediately follows).

*a*) ई 8; श्वे 6·13.

तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् ।
कथं नु तद्विजानीयां किमु भाति विभाति वा ॥ १४ ॥

*a*) Cp एतद्वै तत् in क 4·3 et passim. —*b*) मै 7·1; गी 12·3.

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १५ ॥

॥ इति पञ्चमी वल्ली ॥

*a*) गी 15·6,12; उदान 10 न तत्थ सुक्का जोतन्ति आदिच्चो नप्पकासति । न तत्थ चंदिमा भाति तमो तत्थ न विज्जति; प्र 2·9. —*b*) मुं 2·2·11. —*c*) तैब्रा 3·12·9·7 येन सूर्यस्तपति तेजसेद्धः.

---

ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद्वै तत् ॥ १ ॥

In general cp गी 15·1–3 and the tree Yggdrasil in the Scandinavian mythology.

*a*) तैआ 1·11·5 ऊर्ध्वमूलमवाक्शाखं वृक्षं यो वेद संप्रति. —*b*) ऋ 10·97·5 अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता. अ 3·6·1 अश्वत्थः खदिरादधि; 6·11·1 शमीमश्वत्थ आरूढः; छां 8·5·3; कौ 1·3 (इल्यो वृक्षः).

यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम् ।
महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥ २ ॥

*a*) ई 5; ब्रसू 1·3·39 कम्पनात्. —*b*) ऋ 2·41·10 इन्द्रो अंग महद्भयम्. —*c*) Oft-quoted क 6·9; श्वे 3·1,10,13; 4·17, 20.

भयाँदस्याग्निस्तपति भयात्तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ३ ॥

1 ) Read सूर्यः m. c.

*a* ) तै 2·8.

इहँ चेदँशकद्बोद्धुं प्राक् शरीरस्य विस्रसः ।
ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते ॥ ४ ॥

*a* ) के 2·5; गी 5·19, 23. —*b* ) पा 3·1·55 ... ऌदितः परस्मैपदेषु ( शक is शक्लृ ). —*c* ) तैब्रा 3·8·20·5 अश्वमेधयाजी जरसा विस्रसा अमुं लोकं याति; ऐआ 2·3·7 विस्रसा हैवास्माल्लोकात्प्रैति; क 5·4. —*d* ) छां 3·14·1; बृ 4·4·5.

यथाऽऽदर्शे तथाऽऽत्मनि यथा स्वप्ने तथा पितृलोके ।
यथाऽप्सु परीव ददृशे तथा गन्धर्वलोके छायातपयोरिव ब्रह्मलोके ॥ ५ ॥

*a* ) शब्रा 12·9·2·2 मनुष्या वै जागरितं पितरः सुप्तम्. —*b* ) बृ 4·1·4. —*c* ) क 3·1.

इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् ।
पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥ ६ ॥

*a* ) योसू 3·14 शांतोदिताव्यपदेश्यधर्मानुपाती धर्मी; धम्मपद 374 यतो यतो सम्मसति खन्धानं उदयब्बयं; क 6·11.

इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् ।
सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥ ७ ॥

*a* ) क 3·10,11; गी 3·42.

अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च ।
यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ ८ ॥

*a* ) अ 12·3·5 व्याप नभसी महित्वा; 13·2·30 उभा समुद्रौ रुच्या व्यापिथ; 17·1·13 यथेन्द्र तन्वान्तरिक्षं व्यापिथ; श्वे 4·10. मै 6·31,35; 7·2.

न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥ ९ ॥

*a* ) The whole verse = श्वे 4·20 (with minor variants). —*b* ) ऋ 10·129·4 हृदि प्रतीष्या कवयो मनीषा; श्वे 4·17. —*c* ) क 6·2.

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥ १० ॥

*a* ) क 3·10–13. —*b* ) गी 8·12, 13.

तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।

अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ ११ ॥

*a*) Cp योसू 1·2 योगश्चित्तवृत्तिनिरोधः. —*b*) छां 1·3·12; 2·22·2; मुं 2·2·4; श्वे 2·9. —*c*) मां 6; क 6·6; गी 11·2; योसू 3·14.

नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।

अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥

*a*) के 1·3; मुं. 3·1·8; तै 2·8.

अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः ।

अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ १३ ॥

*a*) श्वे 1·10.

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।

अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १४ ॥

*a*) बृ 4·4·6.

यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।

अथ मर्त्योऽमृतो भवत्येतावद्ध्यनुशासनम् ॥ १५ ॥

*a*) मुं 2·1·10; 2·2·9; 3·2·9; छां 7·26·2. —*b*) शब्रा 11·5·6·8 मध्वाहुतयो वा एता देवानां यदनुशासनानि; बृ 2·5·19; 4·5·15; तै 1·11.

शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ।

तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ १६ ॥

*a*) छां 8·6·6. —*b*) प्र 3·6.

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः ।

तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण ।

तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥ १७ ॥

*a*) छां 5·18·1; मै 6·38; क 4·12,13; ब्रसू 1·3·24–25. —*b*) श्वे 3·13; 5·18. —*c*) गी 15·15. —*d*) शब्रा 4·3·3·16 तथैषीका विमुञ्जा स्यात्.

मृत्युप्रोक्तां नाचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् ।

ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव ॥ १८ ॥

॥ इति षष्ठी वल्ली ॥

*a*) Nom. Sg. of नचिकेत; cp नाचिकेत क 1·18;2·10;3·2,16. —*b*) बृ 4·4·23 (विरजः); छां 8·7·1; मै 6·4, 25; प्र 1·16; मुं 1·2·11.

॥ इति कठोपनिषत् ॥

---

# ॥ प्रश्नोपनिषत् ॥

[ This Upaniṣad belongs to the Paippalāda Śākhā of the Atharvaveda. The opening narrative seems to be an imitation of Śatapatha Brāhmaṇa 10·6·1ff and Chāndogya 5·11·1f. ]

सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौसल्यश्चाश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ॥ १ ॥

*a* ) These Ṛṣis are not found in अ. —*b* ) मुं 1·2·12; 3·2·10. —*c* ) छां 8·1·1. —*d* ) मुं 1·2·12; छां 8·7·2; कौ 4·19.

तान्ह स ऋषिरुवाच । भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ । यथाकामं प्रश्नान् पृच्छत । यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति ॥ २ ॥

*a* ) छां 8·9·3ff. —*b* ) बृ 2·1·18; छां 7·1·5.

अथ कबन्धी कात्यायन उपेत्य पप्रच्छ । भगवन् कुतो ह वा इमाः प्रजाः प्रजायन्त इति ॥ ३ ॥

*a* ) तै 3·1.

तस्मै स होवाच । प्रजाकामो वै प्रजापतिः । स तपोऽतप्यत । स तपस्तप्त्वा स मिथुनमुत्पादयते रयिं च प्राणं चेति । एतौ मे बहुधा प्रजाः करिष्यत इति ॥ ४ ॥

*a* ) छां 1·1·6; बृ 1·1·4; बृ 5·12·1; प्र 1·15.

आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः । रयिर्वा एतत्सर्वं यन्मूर्तं चामूर्तं च । तस्मान्मूर्तिरेव रयिः ॥ ५ ॥

*a* ) प्र 3·8. —*b* ) बृ 2·3·1f; ऐ 3·2. —*c* ) पा 3·3·77 मूर्तौ घनः; 6·1·24.

अथाऽऽदित्य उदयन् यत्प्राचीं दिशं प्रविशति तेन प्राच्यान्प्राणान् रश्मिषु संनिधत्ते । यद्दक्षिणां यत्प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा दिशो यत्सर्वं प्रकाशयति तेन सर्वान् प्राणान् रश्मिषु संनिधत्ते ॥ ६ ॥

*a* ) Cp अवान्तरदिश् in वासं 24·26 नकुलान् बभ्रुकानवान्तरदिशाभ्य आलभते; शब्रा 1·8·1·40 चतस्रो वाऽवान्तरदिशः; बृ 1·1·1 अवान्तरदिशः पर्शवः; नि 11·40 अष्टापदी दिग्भिश्चावान्तरदिग्भिश्च.

स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते । तदेतदृचाऽभ्युक्तम् ॥ ७ ॥

विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् ।

सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥ ८ ॥

*a* ) = मै 6·8.

संवत्सरो वै प्रजापतिः । तस्यायने दक्षिणं चोत्तरं च । तद्ये ह वै तदिष्टापूर्ते कृतमित्युपासते ते चान्द्रमसमेव लोकमभिजयन्ते । त एव पुनरावर्तन्ते । तस्मादेत ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते । एष ह वै रयिर्यः पितृयाणः ॥ ९ ॥

*a* ) बृ 6·2·15–16. —*b* ) छां 4·15·5. —*c* ) छां 5·10·3; मुं 1·9·2,10. —*d* ) गी 8·24–26.

अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्याऽऽदित्यमभिजयन्ते । एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणम् । एतस्मान्न पुनरावर्तन्त इति । एष निरोधः । तदेष श्लोकः ॥ १० ॥

*a* ) छां 5·10·2. —*b* ) मुं 1·2·11. —*c* ) छां 8·6·5.

पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् ।

अथेमे अन्य उ परे विचक्षणं सप्तचक्रे षडर आहुरर्पितमिति ॥ ११ ॥

*a* ) ऋ 1·164·12 ( with उपरे as one word ); अ 9·9·12 ( with विचक्षणे ).

मासो वै प्रजापतिः । तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणः । तस्मादेत ऋषयः शुक्ल इष्टं कुर्वन्तीतर इतरस्मिन् ॥ १२ ॥

*a* ) शुक्ल and कृष्ण as पक्ष adj. only here. Cp. ऋ 6·9·1 अहश्च कृष्णमहरर्जुनं च ( in contrast ). —*b* ) Who are these ?

अहोरात्रो वै प्रजापतिः । तस्याहरेव प्राणो रात्रिरेव रयिः । प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते । ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते ॥ १३ ॥

*a* ) पा 5·4·87; 2·4·28,29; ऋ 10·190·2 अहोरात्रा यं परियन्तो नापुः; वासं 27·45; 14·30 ( अहोरात्रे fem. du. ); छां 8·4·1. —*b* ) छां 8·4·3; 8·5·1ff.; मुं 2·1·7; 3·1·5; क 2·15; प्र 1·15; गी 8·11.

अन्नं वै प्रजापतिस्ततो ह वै तद्रेतः । तस्मादिमाः प्रजाः प्रजायन्त इति ॥ १४ ॥

*a* ) प्र 4·4. —*b* ) छां 5·10·6; ब्रसू 3·1·26 रेतःसिग्योगोऽथ. —*c* ) तै 3·2.

तद्ये ह वै तत्प्रजापतिव्रतं चरन्ति । ते मिथुनमुत्पादयन्ते । तेषामेवैष ब्रह्मलोकः । येषां तपो ब्रह्मचर्यम् । येषु सत्यं प्रतिष्ठितम् ॥ १५ ॥

*a* ) Cp 1·13 above.

तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति ॥ १६ ॥

॥ इति प्रथमः प्रश्नः ॥

*a* ) क 6·18; बृ 4·4·23; मुं 2·2·9. —*b* ) शब्रा 5·2·2·20 स जिह्म एति स ह्वलति; ई 18 जुहुराणम्.

---

अथ हैनं भार्गवो वैदर्भिः पप्रच्छ । भगवन् कत्येव देवाः प्रजां विधारयन्ते । कतर एतत् प्रकाशयन्ते । कः पुनरेषां वरिष्ठ इति ॥ १ ॥

1 ) v. l. बलिष्ठः ( रंगरामानुज ).

*a* ) For this प्रश्न cp in general अ 11·4.

तस्मै स होवाच । आकाशो ह वा एष देवो वायुरग्निरापः पृथिवी वाङ्मनश्चक्षुः श्रोत्रं च । ते प्रकाश्याभिवदन्ति । वयमेतद्बाणमवष्टभ्य विधारयामः ॥ २ ॥

*a* ) बाण an old word in the sense of 'body' only here. Cp अ 3·23·2 आ ते योनिं गर्भ एतु पुमान् बाण इवेषुधिम्.

तान्वरिष्ठः प्राण उवाच । मा मोहमापद्यथ, अहमेवैतत्पञ्चधाऽऽत्मानं प्रविभज्यै-तद्बाणमवष्टभ्य विधारयामीति । तेऽश्रद्दधाना बभूवुः ॥ ३ ॥

*a* ) छां 5·1·6; बृ 6·1·7.

सोऽभिमानादूर्ध्वमुत्क्रमत इव । तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रामन्ते । तस्मिंश्च प्रतिष्ठमाने सर्व एव प्रातिष्ठन्ते[1] । तद्यथा मक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एवोत्क्रामन्ते । तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रातिष्ठन्ते । एवं वाङ्मनश्चक्षुः श्रोत्रं च । ते प्रीताः प्राणं स्तुन्वन्ति ॥ ४ ॥

1 ) v. l. प्रतिष्ठन्ते ( रंगरामानुज ).

*a* ) अभिमान ( noun ) rare in older literature. Cp ऋ 10·73·1 मन्द् ओजिष्ठो

बहुलाभिमानः, मुं 1·2·9. —*b*) बृ 4·3·37,38. —*c*) ऋ 1·119·9 उत स्या वां मधुमन्माक्षिकारपत्. —*d*) Why प्रातिष्ठन्ते instead of प्रतिष्ठन्ते (cp प्रतिष्ठमाने).

एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष वायुः ।
एष पृथिवी रयिर्देवः सदसच्चामृतं च यत् ॥ ५ ॥

*a*) गी 9·19.

अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम् ।
ऋचो यजूंषि सामानि यज्ञः क्षत्रं ब्रह्म च ॥ ६ ॥

*a*) ऋ 10·78·4 रथानां न ये अराः सनाभयः; अ 10·8·34 अरा नाभाविव श्रिताः; वासं 34·5 यस्मिन्नृचः साम यजूंषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः. —*b*) अ 11·4·15 प्राणे सर्वं प्रतिष्ठितम्. —*c*) तैब्रा 3·12·8·1; बृ 2·5·15; मुं 2·2·6.

प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे ।
तुभ्यं प्राण प्रजास्त्विमा बलिं हरन्ति प्राणैः प्रतितिष्ठसि ॥ ७ ॥

*a*) वासं 31·19; अ 10·8·13. —*b*) ऋ 5·1·10 तुभ्यं भरंति क्षितयो... बलिमग्ने अन्तित ओत दूरात्; 7·6·5 विशश्चक्रे बलिहृतः सहोभिः; 10·173·6 विशो बलिहृतस्करत्; अ 11·4·19 यथा प्राण बलिहृतस्तुभ्यं सर्वाः प्रजा इमाः.

देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा ।
ऋषीणां चरितं सत्यमथर्वाङ्गिरसामसि ॥ ८ ॥

*a*) वासं 1·8 देवानामसि वह्नितमम्. —*b*) ऋ 10·14·3 स्वाहान्ये स्वधयान्ये मदन्ति; शब्रा 13·8·1·4 स्वधा वै पितॄणामन्नम्. —*c*) ऋ 1·110·2 चरितस्य भूमना used in physical sense, here in the metaphorical; अ 3·15·4 शुनं नो अस्तु चरितमुत्थितं च. —*d*) अथर्वाङ्गिरसः jointly mentioned as ऋषि here for the first time. Cp अ 11·6·13 अथर्वाणः अंगिरसः मनीषिणः mentioned severally; later mentioned as the epithet of the अथर्ववेद. Cp शब्रा 11·5·6·7 अथर्वाङ्गिरसोऽहरहः स्वाध्यायमधीते; छां 3·4·1; बृ 2·4·10; तै 2·3; मै 6·33.

इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता ।
त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः ॥ ९ ॥

*a*) क 5·15.

यदा त्वमभिवर्षस्यथेमाः प्राण ते प्रजाः ।
आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति ॥ १० ॥

*a*) छां 7·10·1.

व्रा^a^त्यस्त्वं प्राणैकऋ^b^षिरत्ता^c^ विश्वस्य सत्प^d^तिः ।
वयमाद्यस्य दातारः पिता त्वं मातरि^e^श्व नः ॥ ११ ॥

*a*) अ 15·1. —*b*) ई 16; मुं 3·2·10. —*c*) ब्र 1·2·5; क 2·24; ब्रसू 1·2·9 अत्ता चराचरग्रहणात्. —*d*) ऋ 1·54·7 त्वं सोमासि सत्पतिः; 1·11·1 वाजानां सत्पतिं पतिम्. पा 2·1·61. —*e*) ऋ 10·88·19 सुपर्णा वसते मातरिश्वः ( Voc. ); ई 4.

या ते तनू^a^र्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि ।
या च मनसि संतता शिवां तां कुरु मोत्क्रमीः ॥ १२ ॥

*a*) छां 5·1·12.

प्रा^a^णस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम् ।
मा^b^तेव पुत्रान् रक्षस्व श्री^c^श्च प्रज्ञां च विधेहि न इति ॥ १३ ॥

॥ इति द्वितीयः प्रश्नः ॥

*a*) अ 11·4·1 प्राणाय नमो यस्य सर्वमिदं वशे यस्मिन्सर्वं प्रतिष्ठितम्. —*b*) ऋ 6·75·4 मातेव पुत्रं बिभृतामुपस्थे. —*c*) श्रीः accu. pl. seems to be irregular.

---

अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ । भगवन्, कुत एष प्राणो जायते । कथमायात्यस्मिन् शरीरे । आत्मानं वा प्रविभज्य कथं प्रातिष्ठते । केनोत्क्रमते । कथं बाह्यमभिधत्ते । कथमध्यात्ममिति ॥ १ ॥

तस्मै स होवाच । अ^a^तिप्रश्नान् पृच्छसि । ब्र^b^ह्मिष्ठोऽसीति । तस्मात्तेऽहं ब्रवीमि ॥ २ ॥

*a*) To read as अति प्रश्नान्, अति going with पृच्छसि ! Cp बृ 3·6·1 अनतिप्रश्न्यां वै देवतामतिपृच्छसि. —*b*) बृ 3·1·2.

आत्मन एष प्राणो जायते । यथै^1^षा पुरुषे छायैतस्मिन्नेतदाततम् । म^a^नोकृतेनाऽऽयात्यस्मिन् शरीरे ॥ ३ ॥

1) यथैषा...आततम् seems to be metrical ( two padas of अनुष्टुप् )

*a*) मनः + अकृतेन; शंकराचार्य seems to read मनः कृतेन. Böhtlingk reads मनः ( which goes with the earlier आततम् ) । तेन..., Hillebrandt reads मनोद्धुतेन depending on कौ 2·1 तस्य ह वा एतस्य प्राणस्य मनो दूतम्.

यथा सम्रा^a^डेवाधिकृ^b^तान् विनियुङ्क्ते । एतान् ग्रामान् एतान् ग्रामानधितिष्ठ^c^स्वेति । एवमेवै^d^ष प्राण इतरान् प्राणान् पृथक्पृथगेव संनिधत्ते ॥ ४ ॥

*a*) बृ 4·4·1 ( often used in बृ ); मै 6·8. —*b*) Here used for the first time in the sense 'Officer.' —*c*) छां 8·1·5; पा 1·4·46; 1·4·97. In the sense "to govern" here for the first time.

पायूपस्थेऽपानम् । चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रातिष्ठते । मध्ये तु समानः । एष ह्येतद्धुतमन्नं समं नयति । तस्मादेताः सप्तार्चिषो भवन्ति ॥ ५ ॥

*a*) वासं 6·14; 20·9; पा 2·4·2 द्वंद्वश्च प्राणितूर्यसेनाङ्गानाम्. —*b*) Popular etymology of समान. —*c*) मुं 1·2·4; 2·1·8.

हृदि ह्येष आत्मा । अत्रैतदेकशतं नाडीनाम् । तासां शतं शतमेकैकस्याः । द्वासप्ततिर्द्वासप्ततिः प्रतिशाखानाडीसहस्राणि भवन्ति । आसु व्यानश्चरति ॥ ६ ॥

*a*) छां 8·3·3. —*b*) छां 8·11·3; बृ 2·1·19. —*c*) Contrast छां 8·6·6; क 6·16.

अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति । पापेन पापम् । उभाभ्यामेव मनुष्यलोकम् ॥ ७ ॥

*a*) मै 6·21. —*b*) प्र 1·9.

आदित्यो ह वै बाह्यः प्राण उदयति । एष ह्येनं चाक्षुषं प्राणमनुगृह्णानः । पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्य । अन्तरा यदाकाशः स समानः । वायुर्व्यानः ॥ ८ ॥

*a*) प्र 1·5. —*b*) छां 8·12·4.

तेजो ह वा उदानः । तस्मादुपशान्ततेजाः । पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः ॥ ९ ॥

*a*) प्र 4·6. —*b*) Here for the first time! —*c*) छां 6·8·6; 6·15·2.

यच्चित्तस्तेनैष प्राणमायाति । प्राणस्तेजसा युक्तः सहाऽऽत्मना यथासङ्कल्पितं लोकं नयति ॥ १० ॥

*a*) छां 3·14·1; गी 8·6.

य एवं विद्वान् प्राणं वेद । न हास्य प्रजा हीयते, अमृतो भवति । तदेष श्लोकः ॥ ११ ॥

*a*) अ 11·1·34 प्रजामृतत्वमुत दीर्घमायुः; ऋ 5·4·10 प्रजाभिरग्ने अमृतत्वमश्याम्; तैब्रा 1·5·5·6 प्रजामनु प्रजायसे तदु ते मर्त्य अमृतम्; छां 2·22·2.

उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा ।
अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते विज्ञायामृतमश्नुते ॥ १२ ॥

॥ इति तृतीयः प्रश्नः ॥

*a*) ऋ 1·139·9 तेषां देवेष्वायतिरस्माकं तेषु नाभयः ( आयति in ऋ only once ).

अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ । भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति । कान्यस्मिञ्जाग्रति । कतर एष देवः स्वप्नान् पश्यति । कस्यैतत्सुखं भवति । कस्मिन्नु सर्वे संप्रतिष्ठिता भवन्तीति ॥ १ ॥

तस्मै स होवाच । यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डल[b] एकीभवन्ति । ताः पुनःपुनरुदयतः प्रचरन्ति । एवं ह वै तत्सर्वं परे देवे मनस्येकीभवंति । तेन तर्ह्येष पुरुषो न शृणोति । न पश्यति । न जिघ्रति । न रसयते । न स्पृशते । नाभिवदते । नाऽऽदत्ते । नाऽऽनन्दयते । न विसृजते । नेयायते । स्वपितीत्याचक्षते[d] ॥ २ ॥

*a*) बृ 2·4·11. —*b*) A late word. —*c*) मुं 3·2·7; बृ 4·1·2; मां 5. —*c*) Here five ज्ञानेन्द्रियाणि and five कर्मेन्द्रियाणि are systematically referred to. —*d*) छां 6·8·1.

प्राणाग्नय एवैतस्मिन्पुरे जाग्रति । गार्हपत्यो ह वा एषोऽपानः । व्यानोऽन्वाहार्यपचनः । यद्गार्हपत्यात्प्रणीयते[b] प्रणयनात् । आहवनीयः प्राणः ॥ ३ ॥

*a*) शब्रा 2·2·2·18. —*b*) ऐब्रा 8·24; के 1·8.

यदुच्छ्वासनिश्वासावेतावाहुती समं नयतीति समानः । मनो ह वाव यजमानः । इष्टफलमेवोदानः । स एनं यजमानमहरहर्ब्रह्म गमयति ॥ ४ ॥

*a*) छां 8·3·2.

अत्रैष देवः स्वप्ने महिमानमनुभवति । यद्दृष्टं दृष्टमनुपश्यति । श्रुतं श्रुतमेवार्थमनुशृणोति । देशदिगन्तरैश्च प्रत्यनुभूतं पुनःपुनः प्रत्यनुभवति । दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति । सर्वः पश्यति ॥ ५ ॥

*a*) छां 7·26·2 सर्वं ह पश्यः पश्यति; बृ 2·5·19 अयमात्मा ब्रह्म सर्वानुभूः.

स यदा तेजसाऽभिभूतो भवति । अत्रैष देवः स्वप्नान् न पश्यति । अथ तदैतस्मिञ्छरीर एतत्सुखं भवति ॥ ६ ॥

*a*) मां 5 आनन्दमयो हि आनन्दभुक्.

स यथा सोम्य वयांसि वासोवृक्षं संप्रतिष्ठन्ते । एवं ह वै तत्सर्वं पर आत्मनि संप्रतिष्ठते ॥ ७ ॥

*a*) वासस् ( dwelling place ). Cp वासः m. only once in ऋ 5·13·14 शिशुं मृजन्त्यायवो न वासे; ऋ 1·25·4 वयो न वसतीरुप.

पृथिवी च पृथिवीमात्रा च । आपश्चाऽऽपोमात्रा च । तेजश्च तेजोमात्रा च । वायुश्च वायुमात्रा च । आकाशश्चाऽऽकाशमात्रा च । चक्षुश्च द्रष्टव्यं च । श्रोत्रं च श्रोतव्यं च । घ्राणं च घ्रातव्यं च । रसश्च रसयितव्यं च । त्वक् च स्पर्शयितव्यं च । वाक् च वक्तव्यं च । हस्तौ चाऽऽदातव्यं च । उपस्थश्चानन्दयितव्यं च । पायुश्च विसर्जयितव्यं च । पादौ च गन्तव्यं च । मनश्च मन्तव्यं च । बुद्धिश्च बोद्धव्यं च । अहंकारश्चाहंकर्तव्यं च । चित्तं च चेतयितव्यं च । तेजश्च विद्योतयितव्यं च । प्राणश्च विधारयितव्यं च ॥ ८ ॥

*a*) Cp मां 3,4 एकोनविंशतिमुखः. —*b*) बृ 4·4·1.

एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः । स परेऽक्षर आत्मनि संप्रतिष्ठते ॥ ९ ॥

*a*) श्वे 6·8.

परमेवाक्षरं प्रतिपद्यते । स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य । स सर्वज्ञः सर्वो भवति । तदेष श्लोकः ॥ १० ॥

*a*) बृ 3·8·8. —*b*) The श्लोक in 4·11 is commented on in this कण्डिका with प्रतीकs.

विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि संप्रतिष्ठन्ति यत्र ।
तदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वमेवाऽऽविवेशेति ॥ ११ ॥

॥ इति चतुर्थः प्रश्नः ॥

*a*) बृ 4·3·7; 4·4·22.

---

अथ हैनं शैब्यः सत्यकामः पप्रच्छ । स यो ह वै तद् भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत । कतमं वाव स तेन लोकं जयतीति । तस्मै स होवाच ॥ १ ॥

*a*) In the sense of 'death' only here in old lit. —*b*) क 2·15–17; मां 1ff.

एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः । तस्माद्विद्वानेतेनैवाऽऽयतनेनैकतरमन्वेति ॥ २ ॥

*a*) मुं 1·1·4; छां 2·23·4.

स यद्येकमात्रमभिध्यायीत। स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसंपद्यते। तमृचो मनुष्यलोकमुपनयन्ते। स तत्र तपसा ब्रह्मचर्येण श्रद्धया संपन्नो महिमानमनुभवति ॥ ३ ॥

*a*) ई 1. —*b*) Contrast देवयान and पितृयाण of छां 5·3 and बृ 6·2.

अथ यदि द्विमात्रेण मनसि संपद्यते। सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकम्। स सोमलोके विभूतिमनुभूय पुनरावर्तते ॥ ४ ॥

*a*) प्र 1·9, 10; प्र 3·7,10.

यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत। स तेजसि सूर्ये संपन्नः। यथा पादोदरस्त्वचा विनिर्मुच्यते। एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम्। स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते। तदेतौ श्लोकौ भवतः ॥ ५ ॥

*a*) त्रिमात्रेणोम् = त्रिमात्रेण + ओम्; cp पा 6·1·95 ओमाङोश्च. —*b*) Only here. —*c*) बृ 4·4·7 अहिनिर्ल्वयनी. —*d*) पा 3·3·77 मूर्तौ घनः — जीवघनः (only once); cp सैन्धवघन and विज्ञानघन in शबा 14·7·3·13 = प्रज्ञानघन बृ 4·5·13, मां 5. —*e*) श्वे 1·13; 2·3.

तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः।
क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक्प्रयुक्तासु न कम्पते ज्ञः ॥ ६ ॥

*a*) The three mātrās are combined, mathematically so to say, as अन्योन्यसक्ताः (taken two at a time); अनविप्रयुक्ताः (taken one at a time) and सम्यक्प्रयुक्ताः (taken three at a time), मां 8. —*b*) Cp in general गी 5·8–9. —*c*) गी 10·7 अविकम्पेन योगेन. —*d*) श्वे 6·2; 6.17.

ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत्तत्कवयो वेदयन्ते।
तमोङ्कारेणैवाऽऽयतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं चेति ॥७॥

॥ इति पञ्चमः प्रश्नः ॥

*a*) सामभिः (ब्रह्मलोकं ?). —*b*) The two पाद्s are metrically defective. —*c*) के 4·8; ऐ 2·1; बृ 4·1·2; छां 6·8·2.

---

अथ हैनं सुकेशा भारद्वाजः पप्रच्छ। भगवन् हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैतं प्रश्नमपृच्छत। षोडशकलं भारद्वाज पुरुषं वेत्थ। तमहं कुमारमब्रुवं नाहमिमं वेद। यद्यहमिममवेदिषं कथं ते नावक्ष्यमिति। समूलो वा एष परिशुष्यति योऽनृतमभिवदति। तस्मान्नार्हाम्यनृतं वक्तुम्। स तूष्णीं रथमारुह्य प्रवव्राज। तं त्वा पृच्छामि क्वासौ पुरुष इति ॥ १ ॥

*a*) छां 6·7·1; बृ 1·5·14. —*b*) ब्रू (6th conj.) hence अब्रुवम्. —*c*) छां 4·4·5; 5·3·5; 6·2·7.

तस्मै स होवाच । इहैवान्तः शरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडश कलाः प्रभवन्तीति ॥ २ ॥

*a*) वासं 8·36 त्रीणि ज्योतींषि सचते स षोडशी; बृ 1·5·14–15 but सप्तदशः प्रजापतिः in शब्रा 10·4·1·16–17; छां 6·7·1ff.

स ईक्षांचक्रे । कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि, कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति ॥ ३ ॥

*a*) छां 6·2·3 ff; ब्रसू 1·1·5 ईक्षतेर्नाशब्दम्. —*b*) प्र 2·4.

स प्राणमसृजत । प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च ॥ ४ ॥

*a*) प्र 1·4. —*b*) मुं 2·1·3; छां 5·4·2; बृ 6·2·9. —*c*) मुं 3·2·7.

स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति । भिद्येते तासां नामरूपे । समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति । भिद्येते चासां नामरूपे । पुरुष इत्येवं प्रोच्यते । स एषोऽकलोऽमृतो भवति । तदेष श्लोकः ॥ ५ ॥

*a*) मुं 3·2·8. —*b*) छां 6·3·2,3; छां 8·14·1; बृ 1·4·7; मुं 1·1·9.

अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः ।
तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति ॥ ६ ॥

*a*) वासं 34·5 प्रतिष्ठिता रथनाभाविवाराः. —*b*) Omit यथा m. c.

तान्होवाच । एतावदेवाहमेतत्परं ब्रह्म वेद । नातः परमस्तीति ॥ ७ ॥

*a*) बृ 2·3·6.

ते तमर्चयन्तस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति नमः । परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ८ ॥

॥ इति षष्ठः प्रश्नः ॥

*a*) Popular etymology of पिता (पारं तारयसि). —*b*) ऋ 7·73·1 अतारिष्म तमसस्पारमस्य; छां 7·1·3; 7·26·2. —*c*) मुं 3·2·11.

॥ इति प्रश्नोपनिषत् ॥

---

# ॥ मुण्डकोपनिषत् ॥

[ This Upaniṣad like the प्रश्नोपनिषत् belongs to the अथर्ववेद, often called as मुण्डोपनिषत् in short. Cp शिरोव्रतम् ( मुण्ड ) referred to in मुं 3·2·10 below. Cp मुण्ड in पा 3·1·21. ]

ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्ता भुवनस्य गोप्ता ।
स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥

1 ) सर्वविद्यावरिष्ठाम् ( रंगरामानुज ).

*a* ) बृ 1·4·9. मै 2·3; 6·29. मुं 1·1·2,13; 3·2·10. गी 10·32. —*b* ) अथर्व ( proper noun ) only here.

अथर्वणे यां प्रवदेत ब्रह्माथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम् ।
स भारद्वाजाय सत्यवहाय प्राह भारद्वाजोऽङ्गिरसे परावराम् ॥ २ ॥

1 ) सत्यवाहाय ( रंगरामानुज ).

शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ । कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥ ३ ॥

*a* ) छां 5·11·1. —*b* ) मुं 3·2·11. —*c* ) Cp मुं 1·2·12 ( समित्पाणिः ); 13 ( उपसन्नाय ). —*d* ) छां 6·1·3; बृ 2·4·5.

तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च ॥ ४ ॥

*a* ) वेदितव्ये इति ( with वेदितव्ये being प्रगृह्य see पा 1·1·11 ); मै 6·22.

तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते ॥ ५ ॥

*a* ) छां 7·1·2; बृ 4·1·2. —*b* ) The four Vedas and अंगानि के 4·8. —*c* ) मुं 2·2·3; बृ 3·8·8.

यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥ ६ ॥

1 ) Omit यद्भूतयोनिम् m. c.

*a*) अद्रेश्यम् Irr. from दृश् (Cp मां 7 अदृष्टम्). —*b*) मां 7. —*c*) श्वे 3·19. —*d*) श्वे 3·11,21; 6·17; मुं 3·2·5.

**यथोर्णनाभिः[a] सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति ।**
**यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात्[b] सम्भवतीह विश्वम् ॥ ७ ॥**

*a*) Is this ऊर्णवाभिः ? (तैब्रा 1·1·2·5 ते ऊर्णावभयोऽभवन्); बृ 2·1·20; मै 6·22; श्वे 6·11. —*b*) मुं 2·1·1; श्वे 6·10.

तपसा[a] चीयते ब्रह्म ततोऽन्नमभिजायते ।
अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥ ८ ॥

*a*) Cp in general मुं 2·1·2,3.

**यः[a] सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ।**
**तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ॥ ९ ॥**

॥ इति प्रथमः खण्डः ॥

*a*) मुं 2·2·7.

---

**तदेतत्सत्यम्[a] ।**
**मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां[b] बहुधा सन्ततानि ।**
**तान्याचरथ नियतं सत्यकामा[c] एष वः पन्थाः सुकृतस्य लोके[d] ॥ १ ॥**

*a*) मुं 2·1·1. —*b*) त्रेता = अग्नित्रेता; cp मनु 2·231; मभा (CE) 12·109·7 साग्नित्रेता गरीयसी. —*c*) Cp ऋतं in कठ 3·1. —*d*) प्र 5·3.

यदा लेलायते[a] ह्यर्चिः समिद्धे हव्यवाहने ।
तदाज्यभागावन्तरेणाहुतीः[1] प्रतिपादयेत् ॥ २ ॥

1) Omit तद् m. c. ?

*a*) मुं 1·2·4; बृ 4·3·7; श्वे 3·8.

यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च ।
अहुतमवैश्वदेवमविधिना[1] हुतमासप्तमांस्तस्य लोकान् हिनस्ति ॥ ३ ॥

1) v. l. अश्रद्धया.

काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुची[1] च देवी लेलायमाना इति सप्त जिह्वाः[a] ॥ ४ ॥

1 ) v. l. विश्वरूपा, विश्वरूपी.

*a* ) Cp ऋ 1·146·1 सप्तरश्मिम् अग्निम्; 3·6·2 सप्त जिह्वाः .

एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन्[a] ।
तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः ॥ ५ ॥

*a* ) Irregular form !

एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति ।
प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥ ६ ॥

प्लवा[a] ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं[b] येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति ॥ ७ ॥

*a* ) ऋ 1·182·5 युवमेतं चक्रथुः सिन्धुषु प्लवम्; अ 12·2·18.  —*b* ) मुं 1·1·5 : Four Vedas × 3 ( संहिता + ब्राह्मण + सूत्र ) = 12 + six Vedaṅgas  18 ?

अविद्यायामन्तरे[a] वर्तमानाः स्वयंधीराः पण्डितंमन्यमानाः ।
जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥ ८ ॥

*a* ) क 2·5; मै 7·9.

अविद्यायां बहुधा वर्तमाना वयं कृतार्था[a] इत्यभिमन्यन्ति बालाः ।
यत्कर्मिणो[b] न प्रवेदयन्ति रागात् तेनातुराः क्षीणलोकाश्च्यवन्ते[c] ॥ ९ ॥

*a* ) श्वे 2·14. कृतार्थ is a late word, occurring first here. Cp Pāli standard expression : कतं करणीयं.  —*b* ) An old word ( ऋ 8·22·10; श 6·101·2 etc ) but used here first in the Upaniṣads !  —*c* ) Cp the expression खीणा जाति in Pāli.

इष्टापूर्तं[a] मन्यमाना वरिष्ठं नान्यच्छ्रेयो[b] वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे ते[1] सुकृतेऽनुभूत्वा[2] इमं लोकं हीनतरं वा विशन्ति ॥ १० ॥

1 ) Omit m.c. ?  —2 ) Renou reads अनुभूत्व इमम्.

*a* ) छां 5·10·3; प्र 1·9.  —*b* ) क 2·1; cp मुं 1·1·7 above.

तपःश्रद्धे[a] ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां[b] चरन्तः ।
सूर्यद्वारेण[c] ते विरजाः[d] प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥ ११ ॥

*a*) छां 5·10·1–2; ऐब्रा 2·15, 36 (उप + वस्); शब्रा 1·1·1·7; पा 1·4·48 वार्तिक –वसेरश्यर्थस्य प्रतिषेधः; तैसं 1·6·7·3 यदनाश्वानुपवसेत् पितृदेवत्यः स्यात्. बृ 6·2·15. —*b*) पा 4·2·38 (भैक्ष); बृ 3·5·1 भिक्षाचर्यं चरन्ति. —*c*) प्र 1·10. —*d*) बृ 4·4·23; क 6·18; मुं 2·2·9 विरजम्; प्र 1·16.

परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ १२ ॥

*a*) शब्रा 10·5·3·9 कर्मणाऽऽचीयन्त. Cp कर्मजित and पुण्यजित in छां 8·3·6. —*b*) बृ 3·5·1 निर्विद्य; ऋ 1·120·12 सतो बन्धुमसति निरविन्दन्; 10·129·4 अध स्वप्नस्य निर्विदे. —*c*) छां 8·13·1. —*d*) तै 1·11; छां 8·15·1 गुरोः कर्मातिशेषेण; श्वे 6·23 तथा गुरौ; छां 4·9·3; 6·14·2 आचार्यवान् पुरुषो वेद. —*e*) छां 4·4·5 समिधमाहर; कौ 1·1; छां 5·11·7; प्र 1·1. —*f*) पा 5·2·84; अ 9·6·37; ऐब्रा 1·25 अपि अश्लीलस्य श्रोत्रियस्य मुखं व्येव ज्ञायते. —*g*) मुं 3·2·10; प्र 1·1.

तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय ।
येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ १३ ॥

॥ इति द्वितीयः खण्डः ॥

*a*) छां 7·1·1 उपससाद सनत्कुमारं नारदः; मुं 1·1·3; प्र 1·1. —*b*) क 2·24 नाशान्तमानसः. —*c*) बृ 1·4·9; मै 2·3; मुं 1·1·1; 3·2·10.

॥ इति प्रथमं मुण्डकम् ॥

---

तदेतत्सत्यम् ।
यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः ।
तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ॥ १ ॥

*a*) मुं 1·2·1. —*b*) बृ 2·1·20. Cp बृ 3·8; ऋ 10·90 in general. —*c*) तै 3·1.

दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥ २ ॥

*a*) बृ 2·3·5. —*b*) ई 5. —*c*) बृ 3·8·8. —*d*) मुं 1·1·8–9.

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ ३ ॥

*a*) Note in reverse order श्वे 2·12 पृथिव्यप्तेजोऽनिलखानि and also श्वे 6·2.

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृतश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥ ४ ॥

*a*) क 2·13 विवृतं सद्म; 2·23; ऋ 1·91·22 ज्योतिषा वि तमो ववर्थ. The Vedas are *revealed* texts. —*b*) ऋ 10·90·14 (पद्भ्यां भूमिः). —*c*) क 5·9,12.

तस्मादग्निः समिधो यस्य सूर्यः सोमात्पर्जन्य ओषधयः पृथिव्याम् ।
पुमान् रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषात्संप्रसूताः ॥ ५ ॥

*a*) छां 5·4·1. —*b*) छां 5·5·2. —*c*) छां 5·8·2. मैत्रा 1·330 पतो वै पुमान्योषायां रेतः सिञ्चति, अथ सा प्रजायते. अ 6·11·2 पुंसि वै रेतो भवति तत्स्त्रियामनुषिच्यते; छां 5·3–10.

तस्मादृचः साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च ।
संवत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्यः ॥ ६ ॥

*a*) ऋ 10·90·9 ऋचः सामानि जज्ञिरे...यजुस्तस्मादजायत. —*b*) बृ 3·8·9. —*c*) छां 5·10; प्र 1·9–10.

तस्माच्च देवा बहुधा संप्रसूताः साध्या मनुष्याः पशवो वयांसि ।
प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥ ७ ॥

*a*) ऋ 10·90·7–10. —*b*) अ 11·4·13.

सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषः समिधः सप्त होमाः ।
सप्त इमे[1] लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त ॥ ८ ॥

1) Drop इमे m. c.

*a*) अ 10·8·9 तदासत ऋषयः सप्त साकम्; शबा 6·7·2·5 नव वै प्राणाः सप्त शीर्षन् अवाञ्चौ द्वौ; श्वे 3·18; क 5·1; ऐ 1·3·12; गी 5·13. —*b*) प्र 3·5; मुं 1·2·4; बृ 2·2·3–4. —*c*) श्वे 3·11; cp गुहाचर in मुं 2·2·1.

अतः समुद्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः ।
अतश्च सर्वा ओषधयो रसश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥ ९ ॥

*a*) बृ 3·8·9.

पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् ।
एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ॥ १० ॥

॥ इति प्रथमः खण्डः ॥

*a*) ऋ 10·90·2. —*b*) छां 7·26·2; मुं 3·2·9.

आविः संनिहितं गुहाचरं नाम महत्पदमत्रैतत्समर्पितम् ।
एजत्प्राणन्निमिषच्च यदेतज्जानथ सदसद्वरेण्यम् ।
परं विज्ञानाद्यद्वरिष्ठं प्रजानाम् ॥ १ ॥

*a* ) ऋ 10·8·6 आविः संनिहितं गुहा जरन्नाम महत्पदम्. —*b* ) ऋ 10·121·3 यः प्राणतो निमिषतो महित्वा. —*c* ) श्वे 4·18.

यदर्चिमद्यदणुभ्योऽणु च यस्मिँल्लोका निहिता लोकिनश्च ।
तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः ।
तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि ॥ २ ॥

*a* ) शब्रा 11·8·4·5 न मम लोकी त्वहं भविष्यामि; छां 2·17·2. —*b* ) मै 6·28; छां 8·4·2.

धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं संधयीत ।
आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥ ३ ॥

*a* ) मुं 3·2·6. —*b* ) बृ 3·9·6. —*c* ) उपासा only here; cp उपासन in कौ 2·7; छां 2·1·1. —*d* ) Read संदधीत ? —*e* ) मुं 1·1·5. —*f* ) विद् *to know* and not विध् *to pierce*.

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ४ ॥

*a* ) क 2·15; श्वे 1·14; मै 6·3 et passim. —*b* ) प्र 5·1; मां 12. —*c* ) क 6·11. —*d* ) श्वे 5·6; 6·17. मै 6·34.

यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ।
तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः ॥ ५ ॥

1 ) v. l. अन्तरीक्षम्.

*a* ) बृ 3·8·7. —*b* ) बृ 4·4·20. —*c* ) श्वे 6·19.

अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमानः ।
ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात् ॥ ६ ॥

*a* ) बृ 2·1·19. —*b* ) छां 7·26·2.

यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि ।
दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः ॥ ७ ॥

*a* ) मुं 1·1·9. —*b* ) ऋ 10·90·3; छां 3·12·6. —*c* ) छां 8·1·1.

मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं संनिधाय ।
तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति ॥ ८ ॥

*a* ) छां 3·14·2. —*b* ) क 6·17; प्र 3·4; छां 3·12·7–9. —*c* ) तै 2·5.

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ ९ ॥

*a* ) छां 7·26·2. —*b* ) छां 3·14·4. —*c* ) बृ 4·4·22. —*d* ) क 6·15.

हिरण्मये परे[1] कोशे विरजं ब्रह्म निष्कलम् ।
तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥ १० ॥

1 ) रंगरामानुज reads पुरे.

*a* ) ई 15; बृ 5·15. —*b* ) मुं 3·1·8; प्र 6·5; मै 6·15; श्वे 6·5, 6·19. —*c* ) बृ 4·4·16.

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ ११ ॥

*a* ) क 5·15; श्वे 6·14; गी 15·6, 12.

ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण ।
अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ १२ ॥

॥ इति द्वितीयः खण्डः ॥

*a* ) Cp in general छां 7·25·1.

॥ इति द्वितीयं मुण्डकम् ॥

---

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ १ ॥

*a* ) ऋ 1·164·20; अ 9·9·20; श्वे 4·6; क 3·1.

समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ २ ॥

*a* ) श्वे 4·7. —*b* ) श्वे 4·7. Cp अनीश in श्वे 1·2.

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥ ३ ॥

*a* ) छां 7·26·2; मै 6·18. —*b* ) श्वे 5·6. —*c* ) छां 8·13·1; मज्झिमनिकाय 1·134. —*d* ) श्वे 6·19. —*e* ) A late word. Cp गी 5·19; 6·33

प्राणो ह्येष यः सर्वभूतैर्विभाति विजानन् विद्वान् भवते नातिवादी ।
आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ॥ ४ ॥

1 ) Omit यः m. c. —2 ) v. l. आत्मरतिक्रियावान्. —3 ) Does शंकराचार्य read ब्रह्मविदः for एषः as appears from his भाष्य ?

*a* ) Is this नातिवादी ( न + अतिवादी ) in consonance with छां 7·15·4 ? श 11·3·25 तस्मातिवदेत्; तैब्रा 1·3·6·2 सर्वा वाचोऽतिवदति; 1·8·3·2 तस्माद्राष्ट्रं विशमातिवदति. —*b* ) छां 7·25.2.

सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।
अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥ ५ ॥

*a* ) बृ 4·4·22. —*b* ) Cp श्वे 6·21 सम्यगृषिसंघजुष्टम्. —*c* ) छां 2·25·1–2. —*d* ) बृ 4·3·7 ( हृद्यन्तर्ज्योतिः पुरुषः ). —*e* ) गी 5·26.

सत्यमेव जयति नानृतं सत्येन पन्था विततो देवयानः ।
येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम् ॥ ६ ॥

1 ) v. l. जयते; cp जयते in verse 10 below.

*a* ) बृ 6·2·15. —*b* ) ऋ 7·76·2 प्र मे पन्था देवयाना अदृश्रन्; 10·18·1 यस्ते स्व इतरो देवयानात्; 10·51·5 सुमनस् पथः कृणुहि देवयानान्; 1·72·7 अन्तर्विद्वान् अध्वनो देवयानान्. For वितत see बृ 4·4·8 अणुः पन्था विततः पुराणः. —*c* ) बृ 4·3·21; श्वे 1·11. —*d* ) ऋ 3·51·2 चकार गर्भं सनितुर्निधानम्; गी 9·18; 11·18.

बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति ।
दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम् ॥ ७ ॥

*a* ) Cp क 2·8; 2·20; श्वे 3·20; मै 6·20; मुं 2·2·2. —*b* ) ई 5; गी 13·15.

न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ।
ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥ ८ ॥

*a* ) क 6·12. —*b* ) मुं 3·2·7. —*c* ) छां 7·26·2. —*d* ) Omission of ततस्तु improves metre ! —*e* ) मुं 2·2·10; श्वे 6·19.

एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश ।
प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्येष आत्मा ॥ ९ ॥

a ) बृ 4·4·19. —b ) प्र 2·3; 3·12; मै 2·6.

यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् ।
तं तं लोकं जयते तांश्च कामान् तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः ॥ १० ॥

॥ इति प्रथमः खण्डः ॥

a ) Peculiar use for संविभावयति ( only here ); छां 8·2. —b ) बृ 1·4·15. —c ) मै 2·1. Cp आत्मवित्-छां 7·1·3; बृ 3·7·1; मुं 2·2·9. —d ) तैब्रा 2·1·1·1 वायव्य-मालभेत भूतिकामः; 2·2·3·3 पुरोडाशं... निर्वपेद् भूतिकामः; तै 1·11; गी 18·78.

---

स वेदैतत्परमं ब्रह्म धाम यत्र विश्वं निहितं भाति शुभ्रम्[1] ।
उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः ॥ १ ॥

1 ) v. l. अशुभ्रम्.

a ) छां 8·1·1; मुं 3·2·4. —b ) छां 8·1·3 ( समाहितम् ). —c ) बृ 4·3·21; 4·4·6.

कामान् यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र ।
पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः ॥ २ ॥

a ) कामभिः is irregular ! —b ) बृ 4·4·6. —c ) छां 8·13.

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ ३ ॥

a ) = क 2·23.

नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाऽप्यलिङ्गात् ।
एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्म धाम ॥ ४ ॥

a ) क 6·11. —b ) Here for the first time. —c ) गी 6·36. —d ) छां 8·1·1; मुं 3·2·1.

सम्प्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः ।
ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाऽऽविशन्ति ॥ ५ ॥

a ) छां 8·13. —b ) A word popularised by the Jains. —c ) श्वे 6·17. —d ) गी 7·18.

वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥ ६ ॥

*a*) श्वे 6·22. —*b*) संन्यासयोग for the first time here. —*c*) मुं 3·1·8-10; छां 7·26·2.

गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु ।
कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ॥ ७ ॥

*a*) प्र 6·4. —*b*) मुं 3·1·8. —*c*) तै 2·4,5. —*d*) बृ 4·4·2; प्र 4·2; मां 5.

यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥ ८ ॥

*a*) ऋ 7·49·2 समुद्रार्था आपः; 2·35·3 समानमूर्वं नद्यः पृणन्ति; छां 6·10·1; बृ 2·4·11. —*b*) सुत्तनिपात 1037 यत्थ नामं च रूपं च असेसं उपरुज्झति.

स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति । नास्याब्रह्मवित् कुले भवति । तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥ ९ ॥

*a*) मां 10. —*b*) छां 7·1·3. —*c*) मुं 2·1·10; छां 7·26·2.

तदेतदृचाऽभ्युक्तम्—
क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठा स्वयं जुह्वत एकर्षिं श्रद्धयन्तः ।
तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥ १० ॥

*a*) ई 16; प्र 2·11. —*b*) अ 10·2·27 तद्वा अथर्वणः शिरो देवकोशः समुब्जितः.

तदेतत्सत्यमृषिरङ्गिराः पुरोवाच नैतदचीर्णव्रतोऽधीते ।
नमः परमर्षिभ्यो नमः परमर्षिभ्यः ॥ ११ ॥

॥ इति द्वितीयः खण्डः ॥

*a*) मुं 1·1·3·

॥ इति तृतीयं मुण्डकम् ॥

॥ इति मुण्डकोपनिषत् ॥

---

# ॥ माण्डूक्योपनिषत् ॥

[ The माण्डूक्योपनिषत् like the प्रश्न and मुण्डक belongs to the Atharvaveda. It has the fundamental idea that the entire universe is expressed in the syllable ओम् whose four मात्राs are identified with the four states of consciousness. These latter are the same as dealt with in the छान्दोग्योपनिषद् ( No. 9 ) VIII. 7-12. which form the basis of this Upaniṣad. The माण्डूक्यकारिकाs of Gauḍapāda are based upon this Upaniṣad and are only an amplification of speculations contained in it. Śaṅkarāchārya calls this Upaniṣad वेदान्तार्थसारसंग्रहभूत ]

ओमित्येतदक्षरमिदं सर्वम् । तस्योपव्याख्यानम् । भूतं भवद्भविष्यदिति सर्वमोङ्कार एव । यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव ॥ १ ॥

*a* ) छां 1·1·1. —*b* ) Cp गी 7·26 ( समतीतानि, वर्तमानानि, भविष्याणि ), श्वे 6·5 ( परस्त्रिकालात् ).

सर्वं ह्येतद् ब्रह्म । अयमात्मा ब्रह्म । सोऽयमात्मा चतुष्पात् ॥ २ ॥

*a* ) छां 3·14·1. —*b* ) बृ 1·4·10 ( अहं ब्रह्मास्मि ) 2·5·19. —*c* ) Cp ऐ 1·3·12 ( त्रय आवसथाः । त्रयः स्वप्नाः । ).

जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः ॥ ३ ॥

*a* ) बृ 4·3·16–18; क 4·4. —*b* ) छां 5·18·2.

स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः ॥ ४ ॥

*a* ) क 4·4. बृ 4·3·9, 12, 17, 18, 34, छां 6·8·1. —*b* ) बृ 4·2·3 ( प्रविविक्ताहारतरः ).

यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति तत्सुषुप्तम् । सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवाऽऽनन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः ॥ ५ ॥

*a* ) बृ 4·3·19-21; छां 8·11·1; कौ 3·3. —*b* ) बृ 2·1·19. Cp संप्रसाद in छां 8·3·4 and बृ 4·3·15. —*c* ) बृ 4·4·2. —*d* ) बृ 4·5·13. —*e* ) तै 2·5; 3·10; ब्रसू 1·1·12. In general Cp बृ 4·3·7,11; 4·3·21, 35; छां 8·6·3; प्र 4·6.

एष सर्वेश्वरः । एष सर्वज्ञः । एषोऽन्तर्यामी । एष योनिः सर्वस्य । प्रभवाप्ययौ हि भूतानाम् ॥ ६ ॥

Cp in general वासं 32·8 तस्मिन्निदं सं च विचैति सर्वम्; शब्रा 13·7·1·1 हन्ताहं भूतेषु आत्मानं जुहवानि भूतानि चात्मनीति; तैआ 3·14·1–2 एको देवो बहुधा निविष्टः ... तं भर्तारं तमु गोप्तारमाहुः; बृ 1·2·1; 1·5·3; छां 1·9·1; क 2·25; तै 3·1; मुं 1·1·7; 2·1·1.

*a* ) बृ 4·4·22. —*b* ) मुं 1·1·9; 2·2·7. —*c* ) बृ 3·7. —*d* ) मुं 1·1·6. —*e* ) क 6·11.

नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम् । अदृष्टम-व्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते । स आत्मा । स विज्ञेयः ॥ ७ ॥

Cp in general ऋ 1·164·46...एकं सद्विप्रा बहुधा वदन्ति; 10·82·6; 10·90·2; 10·129·2; 6·48·18 ( quoted in बृ 2 5·19 ); तैब्रा 3·12·9·7; छां 6·1·3.

*a* ) अ 19·9·14 तच्छान्तं तच्छिवं सर्वमेव शमस्तु नः. —*b* ) बृ 5·14·3-4, 6–7; छां 3·12·5; 3·18·2; 4·5–8; मै 6·19.

सोऽयमात्माऽध्यक्षरमोङ्कारः । अधिमात्रं पादा मात्रा मात्राश्च पादा अकार उकारो मकार इति ॥ ८ ॥

*a* ) This word is formed like अधिदैवम् and अध्यात्मम्. —*b* ) ऐब्रा 5·32 अकार उकारो मकार इति तानेकधा समभरत्, तदेतदोमिति ।

जागरितस्थानो वैश्वानरः प्रथमा मात्राऽऽप्तेरादिमत्त्वाद्वा । आप्नोति ह वै सर्वान् कामानादिश्च भवति ॥ ९ ॥

*a* ) Popular etymology !

स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्कर्षादुभयत्वाद्वा । उत्कर्षति ह वै ज्ञानसन्ततिम् । समानश्च भवति । नास्याब्रह्मवित् कुले भवति य एवं वेद ॥ १० ॥

*a* ) Popular etymology ! —*b* ) तैसं 2·5·3·6 यज्ञस्य संततिः; ऐब्रा 1·11 यज्ञस्य संतत्यै. —*c* ) मुं 3·2·9.

सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मितेरपीतेर्वा । मिनोति ह वा इदं सर्वमपीतिश्च भवति य एवं वेद ॥ ११ ॥

*a* ) मां 6 ( अप्यय ); क 6·11; छां 6·8·1; 8·11·1; बृ 4·1·2; 4·4·6; 4·4·8; तै 2·2; मुं 1·2·7; 2·1·1.

अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैतः । एवमोङ्कार आत्मैव । संविशत्यात्मनाऽऽत्मानं य एवं वेद ॥ १२ ॥

Cp in general छां 1·1·1; तै 1·8; क 2·17; श्वे 1·14; मुं 2·2·4; मै 6·24.

*a* ) वासं 32·11 आत्मनात्मानमभि सं विवेश.

॥ इति माण्डूक्योपनिषत् ॥

# ॥ तैत्तिरीयोपनिषत् ॥

[This Upanishad belongs to the Kṛṣṇa Yajurveda and forms prapāṭhakas 7—9 of the Taittirīyāraṇyaka.]

ॐ शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा ।
शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥

नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु मामवतु वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ १ ॥

*a*) = ऋ 1·90·9. —*b*) ऋ 8·29·7 et passim, श्रीण्येक उरुगायो वि चक्रमे. —*c*) Contrast बृ 2·3·3 अथामूर्तं वायुश्चान्तरिक्षं च (where वायु is अमूर्त). —*d*) ऋत and सत्य joined together in ऋ 10·190 1; तै 1·9.

ॐ शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम सन्तानः । इत्युक्तः शीक्षाध्यायः ॥ २ ॥

*a*) मुं 1·1·5. —*b*) Cp in general ऐआ 3·1·5-6 याऽसौ मात्रा पूर्वरूपोत्तररूपे अन्तरेण संधिविज्ञापनी साम तद् भवति.

सह नौ यशः । सह नौ ब्रह्मवर्चसम् । अथातः संहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महासंहिता इत्याचक्षते ॥ अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः सन्धिः । वायुः संधानम् । इत्यधिलोकम् ॥ अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपः सन्धिः । वैद्युतः सन्धानम् । इत्यधिज्यौतिषम् ॥ अथाधिविद्यम् । आचार्यः पूर्वरूपम् । अन्तेवास्युत्तररूपम् । विद्या सन्धिः । प्रवचनं सन्धानम् । इत्यधिविद्यम् ॥ अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा सन्धिः । प्रजननं सन्धानम् । इत्यधिप्रजम् ॥ अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक् सन्धिः । जिह्वा सन्धानम् । इत्यध्यात्मम् ॥ इतीमा महासंहिताः । य एवमेता महासंहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ॥ ३ ॥

*a*) पा 1·4·45 आधारोऽधिकरणम्. अधिकरण occurs here for the first time. —*b*) संहिता and महासंहिता (Cp संधिः and संधान below) occur here for the first

time. Cp पा 1·4·109; नि 1·17. —c) ऋ 3·29·1 अस्ति प्रजननं कृतम्; तैब्रा 3·11·9·6 त्रिवृत् प्रजननम्—उपस्थो योनिर्मध्यमा (गर्भधारणस्थानम्); ऐब्रा 3·35 तदुपरिष्टात् प्रजननं दधाति प्रजात्यै; नि 3·21 शेपः वैतसमिति पुंस्प्रजननस्य.

यश्छन्दसामृषभो विश्वरूपः। छन्दोभ्योऽध्यमृतात्संबभूव। स मेन्द्रो[a] मेधया स्पृणोतु[b]। अमृतस्य देव धारणो भूयासम्। शरीरं मे विचर्षणम्[c]। जिह्वा मे मधुमत्तमा[d]। कर्णाभ्यां भूरि विश्रुवम्[e]। ब्रह्मणः कोशोऽसि[f] मेधया पिहितः। श्रुतं मे गोपाय। आवहन्ती वितन्वाना। कुर्वाणाऽचीरमात्मनः[1]। वासांसि मम गावश्च। अन्नपाने च सर्वदा। ततो मे श्रियमावह। लोमशां पशुभिः स्वाहा। आ मा यन्तु ब्रह्मचारिणः स्वाहा। वि मा यन्तु ब्रह्मचारिणः स्वाहा। प्र मा यन्तु ब्रह्मचारिणः स्वाहा। दमायन्तु ब्रह्मचारिणः स्वाहा। यशो जनेऽसानि स्वाहा। श्रेयान् वस्यसोऽसानि स्वाहा। तं त्वा भग[g] प्रविशानि स्वाहा। स मा भग प्रविश स्वाहा। तस्मिन्त्सहस्रशाखे। नि भगाहं त्वयि मृजे[h] स्वाहा।

यथापः प्रवता[i] यन्ति यथा मासा अहर्जरम्[j]।
एवं मा ब्रह्मचारिणो धातरायन्तु सर्वतः ॥ स्वाहा ॥

प्रतिवेशोऽसि[k] प्र मा भाहि प्र मा पद्यस्व ॥ ४ ॥

1) v. l. चीरम्.

a) ऐआ 2·3·7. तपशः स इन्द्रः स भूतानामधिपतिः; ऐ 1·3·14; कौ 2·6; 3·1. —b) ऋ 6·42·4 अभिशस्तेरवस्परत्; 10·87·7 उतालब्धं स्पृणुहि यातुधानात्; शब्रा 3·3·1·3 वज्रेणैवैतद्राज्येन स्पृणुते, तां स्पृत्वा स्वीकुरुते. —c) ऋ (खिल) 4·8·5 शरीरं मे विचक्षणम् (v. l. विचक्षण); cp विचर्षणिः in ऋ 4·36·5. —d) ऋ 5·11·5 तुभ्येदमग्ने मधुमत्तमं वचः; cp ऋ 3·26·7 घृतं मे चक्षुरमृतं म आसन् (locative sg.); ऋ 8·17·5 गृभाय जिह्वया मधु. —e) वि-श्रुवम् (Aorist?). —f) अ 10·2·31 and 32 तस्यां हिरण्मयः कोशः; छां 3·15·1 and 3; मुं 2·2·9; मै 3·4; 6·27. —g) ऋ 7·41·5 तं त्वा भग सर्व इज्जोहवीति। स नो भग पुरएता भवेह. —h) शब्रा 11·5·3·4, 7 किं स्रुचं परिमृज्य कूर्चे न्यमार्जीः; बृ 6·4·5. —i) ऋ 3·5·8 आप इव प्रवता शुंभमानाः, 9·24·2 आपो न प्रवता यतीः. —j) शब्रा 10·4·3·1–2. स यो ह एतं मृत्युं संवत्सरं वेद न हास्यैष पुरा जरसो अहोरात्राभ्यां आयुः क्षिणोति; बृ 4·4·16. —k) ऋ 10·66·13 क्षेत्रस्य पतिं प्रतिवेशमीमहे.

भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः। तासामु ह स्मैतां चतुर्थीम्। माहाचमस्यः प्रवेदयते। मह इति। तद् ब्रह्म। स आत्मा। अङ्गान्यन्या देवताः। भूरिति वा अयं लोकः। भुव इत्यन्तरिक्षम्। सुवरित्यसौ लोकः। मह इत्यादित्यः। आदित्येन वाव सर्वे लोका महीयन्ते। भूरिति वा अग्निः। भुव इति वायुः।

सुवरित्यादित्यः। मह इति चन्द्रमाः। चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते। भूरिति वा ऋचः। भुव इति सामानि। सुवरिति यजूꣳषि। मह इति ब्रह्म। ब्रह्मणा वाव सर्वे वेदा महीयन्ते। भूरिति वै प्राणः। भुव इत्यपानः। सुवरिति व्यानः। मह इति अन्नम्। अन्नेन वाव सर्वे प्राणा महीयन्ते॥ ता वा एताश्चतस्रश्चतुर्धा। चतस्रश्चतस्रो व्याहृतयः। ता यो वेद स वेद ब्रह्म। सर्वेऽस्मै देवा बलिमावहन्ति ॥ ५ ॥

*a*) तैसं 1·6·10·2 अग्निहोत्रं एताभिः व्याहृतिभिः उपसादयेत्; 5·5·3·3 भूर्भुवः सुवरिति स्वयमातृण्णा उप दधाति... एताभिः खलु वै व्याहृतीभिः प्रजापतिः प्राजायत ( व्याहृति व्याहृती also ); पा 8·2·71 ( भुवश्च महाव्याहृतेः ); तैब्रा 2·2·4·3 एता वै व्याहृतय इमे लोकाः; ऐब्रा 5·32 एतानि ह वै वेदानामन्तःश्लेषणानि यदेता व्याहृतयः; शब्रा 1·1·1·13 एताभिर्गनिरुक्ताभिर्व्याहृतिभिः; मै 6·2. —*b*) छां 4·17·3. —*c*) Cp 'भूमा' in छां 7·23·1. —*d*) छां 3·13·5-7. —*e*) बृ 1·5·3. —*f*) बृ 6·1·13; छां 2·21·4; 5·14·1; प्र 2·7; कौ 2·1, 2·2.

स य एषोऽन्तर्हृदय आकाशः। तस्मिन्नयं पुरुषो मनोमयः। अमृतो हिरण्मयः। अन्तरेण तालुके। य एष स्तन इवावलम्बते। सेन्द्रयोनिः। यत्रासौ केशान्तो विवर्तते। व्यपोह्य शीर्षकपाले। भूरित्यग्नौ प्रतितिष्ठति। भुव इति वायौ। सुवरित्यादित्ये। मह इति ब्रह्मणि। आप्नोति स्वाराज्यम्। आप्नोति मनसस्पतिम्। वाक्पतिश्चक्षुष्पतिः। श्रोत्रपतिर्विज्ञानपतिः। एतत्ततो भवति॥ आकाशशरीरं ब्रह्म। सत्यात्म प्राणारामं मनआनन्दम्। शान्तिसमृद्धममृतम्। इति प्राचीनयोग्योपास्स्व ॥ ६ ॥

*a*) छां 8·1·1. —*b*) मै 6·20-21. —*c*) छां 5·13·1.

पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः। अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि। आप ओषधयो वनस्पतय आकाश आत्मा। इत्यधिभूतम्॥ अथाध्यात्मम्—प्राणो व्यानोऽपान उदानः समानः। चक्षुः श्रोत्रं मनो वाक् त्वक्। चर्म माꣳसꣳस्नावास्थि मज्जा। एतदधिविधाय ऋषिरवोचत्। पाङ्क्तं वा इदꣳसर्वम्। पाङ्क्तेनैव पाङ्क्तꣳस्पृणोतीति ॥ ७ ॥

*a*) ऐब्रा 2·14 पाङ्क्तोऽयं पुरुषः पञ्चधा विहितो लोमानि त्वङ्मांसमस्थि मज्जा; तैब्रा 1·1·10·4 पांक्तं वा इदं सर्वम्, पांक्तेनैव पांक्तं स्पृणोति; बृ 1·4·17; 3·9·28 ( स्नावन् and मज्जा ); ई 8 ( अस्नाविरम् ). —*b*) तांब्रा 17·5·1 तदात्मन्यधिविधाय तेनैनमयाजयत्; शब्रा 6·3·1·16 चिते ह्येतस्मिन् होत्रा अधिविधीयन्ते.

ओमिति ब्रह्म। ओमितीदꣳसर्वम्। ओमित्येतदनुकृतिर्ह स्म वा अप्यो श्रावयेत्याश्रावयन्ति। ओमिति सामानि गायन्ति। ओꣳशोमिति शस्त्राणि शꣳसन्ति। ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति। ओमिति ब्रह्मा प्रसौति। ओमित्यग्निहोत्रमनुजानाति। ओमिति ब्राह्मणः प्रवक्ष्यन्नाह। ब्रह्मोपाप्नवानीति। ब्रह्मैवोपाप्नोति ॥ ८ ॥

*a* ) Some wrongly read अनुकृति ह ( Śaṅkara's reading is correct ). —*b* ) शोम् cp ऐब्रा 3·12 शोंसाव ( also शोशोंसाव ). BR suggest that the form शोंसाव has grown out of शंसाव (√ शंस् ); Viśvabandhu Śāstri suggests शंस + ओम् with the elision of टि as per पा 6·1·94 वार्तिक; also cp शांखायन 14·3 शोंसावो ३ इति प्रातःसवन आह्वयते. —*c* ) तैसं 3·2·9·6 प्रतिगरोऽध्वर्यूणाम्; शब्रा 4·3·2·1 तस्मा एतद् गृणते ( होत्रे ) प्रत्येवाध्वर्युर्गृणाति तस्मात्प्रतिगरो नाम. —*d* ) स्तौति is a rare form. —*e* ) तैसं 6·6·11·5 इन्द्रस्य प्रियं धामोपाप्नोति; शब्रा 12·4·3·3 उप ह तं काममाप्नोति.

ऋतं च स्वाध्यायप्रवचने च । सत्यं च स्वाध्यायप्रवचने च । तपश्च स्वाध्यायप्रवचने च । दमश्च स्वाध्यायप्रवचने च । शमश्च स्वाध्यायप्रवचने च । अग्नयश्च स्वाध्यायप्रवचने च । अग्निहोत्रं च स्वाध्यायप्रवचने च । अतिथयश्च स्वाध्यायप्रवचने च । मानुषं च स्वाध्यायप्रवचने च । प्रजा च स्वाध्यायप्रवचने च । प्रजनश्च स्वाध्यायप्रवचने च । प्रजातिश्च स्वाध्यायप्रवचने च । सत्यमिति सत्यवचा राथीतरः । तप इति तपोनित्यः पौरुशिष्टिः । स्वाध्यायप्रवचने एव नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः ॥ ९ ॥

*a* ) ऋ 10·190·1 ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत. —*b* ) बृ 4·4·23 शान्तो दान्त उपरतः. —*c* ) मानुष ( noun *n*. ). ऋ 1·51·1 यस्य द्यावो न विचरन्ति मानुषा; तैब्रा 1·2·1·15. मानुषाद्दैव्यमुपैमि; ऐब्रा 3·33 तपन्मानुषं सन्मानुषमित्याचक्षते; बृ 2·5·13 इदं मानुषं सर्वेषां भूतानां मधु. —*d* ) तै 3·10. —*e* ) तै 3·2; के 4·8; श्वे 1·15 and 16; 6·21; मुं 1·2·11; प्र 1·10; मै 4·3; छां 3·17. —*f* ) शब्रा 11·5·7·1 अथातः स्वाध्यायप्रशंसा— प्रिये स्वाध्यायप्रवचने भवतः.

अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजिनीव[1] स्वमृतम् । अस्मि[2] द्रविणꣳसवर्चसम् । सुमेधा अमृतोऽक्षितः[3] ॥ इति त्रिशङ्कोर्वेदानुवचनम् ॥ १० ॥

1 ) Read वाजिनीवसु ? —2 ) Read सु or स for अस्मि ? —3 ) Read अमृत + उक्षितः = अमृतोक्षितः ?

*a* ) Only here; शंकराचार्य understands this as प्रेरयिता. —*b* ) बृ 6·2·3; क 1·8; गी 7·23. पा 5·4·122 नित्यमसिच् प्रजामेधयोः. —*c* ) छां 3·17·6 अक्षितमसि. —*d* ) बृ 4·4·22; महावग्ग 1·183 अञ्ञाविञ्ञाकरण.

वेदमनूच्याऽऽचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रव-

चनाभ्यां न प्रमदितव्यम् । देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माकꣳसुचरितानि । तानि त्वयोपास्यानि । नो इतराणि । ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः । तेषां त्वयाऽऽसनेन प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् ॥ अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तेषु वर्तेरन् । तथा तेषु वर्तेथाः । एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमु चैतदुपास्यम् ॥ ११ ॥

1 ) v. l. देयम्.

*a* ) ऋ 1·109·3 मा च्छेद्म रश्मींरिति नाधमानाः; cp 2·28·5 मा तन्तुश्छेदि वयतो धियं मे. छां 8·15; 3·17·5; 5·8·9; बृ 1·5·16–17; तै 1·9; 6·4·3; मनु 3·2. —*b* ) Dative sg. fem. ending in ऐ used instead of ablative; cp बृ 1·5·18 पृथिव्यै चैनमग्नेश्च. —*c* ) श्वे 6·23; अ 9·6·48 अतिथीन् प्रति पश्यति. —*d* ) शब्रा 2·2·4·9 तद्वा एतदेव विचिकित्सायै जन्म यत् प्रजापतिः व्यचिकित्सत्. तैब्रा 2·1·2·2 तद् व्यचिकित्सत् । जुहवानी३ मा हौषा३मिति । तद्विचिकित्सायै जन्म; छां 3·14·4; क 1·20. —*e* ) तैसं 2·5·11·3 अथो ... अभ्यनक्ति, अलूक्षो भवति; तैब्रा 1·1·6·6 घृते भवति यज्ञस्यालूक्षान्तत्वाय. —*f* ) धम्मपद 139; दीघनिकाय 3·248; 3·250; मज्झिमनिकाय 1·130; अंगुत्तरनिकाय 3·290.

शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा ।
शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥

नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् ॥ १२ ॥

॥ इति शीक्षावल्ल्यध्यायः ॥

---

ब्रह्मविदाप्नोति परम् । तदेषाभ्युक्ता—

सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् ।

सोऽश्नुते सर्वान् कामान् । सह ब्रह्मणा विपश्चितेति ॥

तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात्पुरुषः । स वा एष पुरुषोऽन्नरसमयः । तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ १ ॥

1 ) Shall we read आनन्दम् for अनन्तम्? Cp बृ 3·9·28 विज्ञानमानन्दं ब्रह्म. In any case this seems to be the root of later Vedāntic सच्चिदानन्द.

a ) अभ्युक्ता ( कक ); cp बृ 4·4·23; मुं 3·2·10; प्र 1·7; कौ 1·6; however, what follows is metrically irregular. —b ) क 1·14; 2·20; 3·1; 4·6–7; मुं 2·1·10; 3·1·7. —c ) ऋ 10·129·7 योऽस्याध्यक्षः परमे व्योमन्; तै 3·6; श्वे 4·8; मुं 2·2·7. —d ) क 2·18; श्वे 2·4. —e– –e ) छां 6·2; ऐ 1·2, 3·3 and 11; श्वे 2·12; 6·2; क 3·15; प्र 6·4; मै 3·2; 6·4.

अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीꣳ श्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपियन्त्यन्ततः । अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । [ अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । ]

अन्नाद् भवन्ति भूतानि जातान्यन्नेन वर्धन्ते ।

अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते ॥

तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधतामन्वयं पुरुषविधः । तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ २ ॥

a ) तैब्रा 3·10·1·4 अन्नवान् रसवानिरावान्, सर्वौषधः संभरः महस्वान्; शब्रा 3·2·2·15 प्रथमे व्रते सर्वौषधं सर्वसुरभि आवपन्ति; छां 5·2·4; बृ 6·3·1. —b ) These two पाद्s are mere repetitions; hence included in brackets. —c ) बृ 1·4·1.

प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये ।

प्राणो हि भूतानामायुस्तस्मात्सर्वायुषमुच्यते ॥

सर्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मोपासते । प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥ तस्माद्वा एतस्मात्

प्राणमयात् । अन्योऽन्तर आत्मा मनोमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधतामन्वयं पुरुषविधः । तस्य यजुरेव शिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ ३ ॥

*a*) Formation like सर्वौषधम् (2·2). —*b*) Cp छां 3·5 1–2; also बृ 2·3·6.

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचन ॥ इति ॥

तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥ तस्माद्वा एतस्मान्मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधतामन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग आत्मा । महः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ ४ ॥

*a*) तै 2·9; बृ 3·4·2; 3·5·1; 4·2·4; 4·4·21; क 2·23; मुं 1·1·5. —*b*) बृ 1·4·2. —*c*) तै 2·9 reads कुतश्चन. Cp the word अकुतोभय. —*d*) क 6 11; श्वे 2·11.

विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च ।
विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते ॥
विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति ।
शरीरे पाप्मनो हित्वा सर्वान् कामान्त्समश्नुते ॥ इति ॥

तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥ तस्माद्वा एतस्माद् विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधतामन्वेष पुरुषविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ ५ ॥

*a*) ऐआ 3·2·6; बृ 3·1; छां 4.16; बृ 1·5·23; कौ 2·5; छां 5·11–24; छां 3·16–17. —*b*) गौका 2·38 तत्त्वादप्रच्युतो भवेत्. —*c*) बृ 4·3·8; 5·5·3. छां 8·13·1; —*d*) मै 6·13. —*e*) मै 6·27. —*f*) बृ 4·3·10.

असन्नेव स भवति असद् ब्रह्मेति वेद चेत् ।
अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः ॥ इति ॥

तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥ अथातोऽनुप्रश्नाः — उताविद्वानमुं लोकं प्रेत्य कश्चन गच्छती३ । आहो विद्वानमुं लोकं प्रेत्य कश्चित्समश्नुता३ उ ॥

सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजत । यदिदं किंच । तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च

त्यच्चाभवत् । निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च । सत्यमभवत् । यदिदं किंच । तत्सत्यमित्याचक्षते । तदप्येष श्लोको भवति ॥ ६ ॥

*a*) क 6·12–13. —*b*) जै 3·30·6 स ह स्म कुरुपञ्चालानां ब्राह्मणाननुपृच्छमानश्चरति. —*c*) छां 6·2·1 3. —*d*) More elaborate in ऐ 1·3·12. —*e*) Genesis 2·7: And the Lord God formed man... and breathed into his nostrils the breath of life. —*f*) मै 2·6; बृ 1·4·7; 1·6·3; 2·1·20; 2·5·18; छां 6·1·3; 6·2·3; 7·1·2–3.

असद्वा इदमग्र आसीत् ततो वै सदजायत ।
तदात्मानꣳ स्वयमकुरुत तस्मात्तत्सुकृतमुच्यते ॥ इति ॥

यद्वै तत्सुकृतम् । रसो वै सः । रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति । को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति । यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवति । तत्त्वेव भयं विदुषोऽमन्वानस्य । तदप्येष श्लोको भवति ॥ ७ ॥

1) शांकरपाठ—एतस्मिन्नु दरं अन्तरं कुरुते । — 2) v. l. मन्वानस्य.

*a*) क 10·129·1 नासदासीन्नो सदासीत्तदानीम्; तैब्रा 2·2·9·1 तदसदेव सन्मनोऽकुरुत स्यामिति; शब्रा 6·1·1·1 असद्वा इदमग्र आसीत्. —*b*) ऐ 1·2·3. —*c*) कौ 1·5 तं ब्रह्मरसः प्रविशति. —*d*) बृ 1·3·32. —*e*) बृ 1·2·4.

भीषाऽस्माद्वातः पवते भीषा उदेति सूर्यः ।
भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ॥ इति ॥

सैषाऽऽनन्दस्य मीमाꣳसा भवति । युवा स्यात् साधुयुवाऽध्यायकः । आशिष्ठो द्रढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितृणां चिरलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितृणां चिरलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमाजानजानां देवानामानन्दाः । स एकः कर्मदेवानां देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं कर्मदेवानां देवानामानन्दाः । स एको देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवा-

नामानन्दाः । स एक इन्द्रस्यानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमिन्द्रस्यानन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं बृहस्पतेरानन्दाः । स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मणो आनन्दः । श्रोत्रियस्य चाकामहतस्य । यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात् प्रेत्य । एतमन्नमयमात्मानमुपसंक्रामति । एतं प्राणमयमात्मानमुपसंक्रामति । एतं मनोमयमात्मानमुपसंक्रामति । एतं विज्ञानमयमात्मानमुपसंक्रामति । एतमानन्दमयमात्मानमुपसंक्रामति । तदप्येष श्लोको भवति ॥ ८ ॥

a) क 6·3. —b) बृ 3·6·1; 4·3·32, 33; कौ 1·3. —c) अध्यापकः perhaps = आध्यायिकः cp अध्यायिन् in पा 4·4·71. —d) Almost all editions read द्रढिष्ठः (contrary to the Pāṇinian form द्रढिष्ठः)! Cp पा 6·4·161 and पतञ्जलि's भाष्य on it. —e) वासं 31·17 तन्मर्त्यस्य देवत्वमाजानमग्रे. —f) तै 3·10; बृ 5·5.

यतो^a वाचो निवर्तन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन ॥ इति ॥

एतꣳ ह वाव न तपति । किमहꣳ साधु नाकरवम् । किमहं पापमकरवमिति । स य एवं विद्वानेते आत्मानꣳ स्पृणुते । उभे ह्येवैष एते आत्मानꣳ स्पृणुते । य एवं वेद । इत्युपनिषत् ॥ ९ ॥

a) तै 2·4; बृ 4·4·12–13; 4·4·15–17; छां 7·26·2; के 2·2–3; क 5·12; 6·12–15. —b) बृ 4·4·22; ई 6,7; श्वे 4·18. Cp छां 3·5·2; क 3·17; श्वे 5·6; 6·22; तै 3·10; मै 6·29,34; मुं 2·2·8; 3·2·2; 3·2·8; गौका 1·16.

॥ इति ब्रह्मवल्ली ॥

---

भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत् प्रोवाच — अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति । तꣳ होवाच — यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत् प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद् ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ १ ॥

a) Cp in general शब्रा 11·6·1·1–13; छां 7; तै 3·1 parallel to छां 7·1. —b) तस्मै = वरुणाय. —c) Cp बृ 4·1 for the various words here (प्राणः, चक्षुः, श्रोत्रम्, मनस् etc.). —d) Cp छां 8·7–12. —e) छां 3·14·1 (तज्जलान्) and के 4·6 (तद्वनम्); ब्रसू 1·1·2 (जन्माद्यस्य यतः). —f) अ 11·4·11 प्राणो मृत्युः; शब्रा 11·3·3·1 ब्रह्म वै मृत्यवे प्रजाः प्रायच्छत्; तैआ 3·14·2; बृ 1·2·1; छां 1·9·1.

अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । त৺होवाच — तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ २ ॥

*a* ) अ 8·9·3 ब्रह्मैतद्विद्वांस्तपसा विपश्चित्. के 4·8; श्वे 1·15–16; 6·21; मुं 1·2·11, 3·2·4; प्र 1·10; मै 4·3; छां 3·17.

प्राणो ब्रह्मेति व्यजानात् । प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राणं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । त৺होवाच — तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ ३ ॥

*a* ) बृ 4·1·3 प्राणो वै ब्रह्मेति.

मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । त৺होवाच — तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ ४ ॥

विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । त৺होवाच — तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ ५ ॥

आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति । सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता । स य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ ६ ॥

*a* ) भार्गवी and वारुणी meaning 'belonging to भृगु and वरुण (as disciple and teacher)'.

अन्नं न निन्द्यात् । तद् व्रतम् । प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठितः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रति-

ष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ ७ ॥

अन्नं न परिचक्षीत । तद् व्रतम् । आपो वा अन्नम् । ज्योतिरन्नादम् । अप्सु ज्योतिः प्रतिष्ठितम् । ज्योतिष्यापः प्रतिष्ठिताः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ ८ ॥

*a*) ऋ 7·100·6 किमित्ते विष्णो परिचक्ष्यं भूत् प्र यद्ववक्षे शिपिविष्टो अस्मि.

अन्नं बहु कुर्वीत । तद् व्रतम् । पृथिवी वा अन्नम् । आकाशोऽन्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ ९ ॥

न कंचन वसतौ प्रत्याचक्षीत । तद् व्रतम् । तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात् । अराध्यस्मा अन्नमित्याचक्षते । एतद्वै मुखतोऽन्न राद्धम् । मुखतोऽस्मा अन्न राध्यते । एतद्वै मध्यतोऽन्न राद्धम् । मध्यतोऽस्मा अन्न राध्यते । एतद्वा अन्ततोऽन्न राद्धम् । अन्ततोऽस्मा अन्न राध्यते । य एवं वेद ॥ क्षेम इति वाचि । योगक्षेम इति प्राणापानयोः । कर्मेति हस्तयोः । गतिरिति पादयोः । विमुक्तिरिति पायौ । इति मानुषीः समाज्ञाः ॥ अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति । यश इति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्युपस्थे । सर्वमित्याकाशे । तत्प्रतिष्ठेत्युपासीत । प्रतिष्ठावान् भवति । तन्मह इत्युपासीत । महान् भवति । तन्मन इत्युपासीत । मानवान् भवति । तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद् ब्रह्मेत्युपासीत । ब्रह्मवान् भवति । तद् ब्रह्मणः परिमर इत्युपासीत । पर्येणं म्रियन्ते द्विषन्तः सपत्नाः । परि येऽप्रिया भ्रातृव्याः । स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात् प्रेत्य । एतमन्नमयमात्मानमुपसंक्रम्य । एतं प्राणमयमात्मानमुपसंक्रम्य । एतं मनोमयमात्मानमुपसंक्रम्य । एतं विज्ञानमयमात्मानमुपसंक्रम्य । एतमानन्दमयमात्मानमुपसंक्रम्य । इमाँल्लोकान् कामान्नी कामरूप्यनुसंचरन् । एतत् साम गायन्नास्ते । हा३वु हा३वु हा३वु । अहमन्नमहमन्नमहमन्नम् । अहमन्नादो३ऽहमन्नादो३ऽहमन्नादः । अहꣳ श्लोककृदहꣳ श्लोककृदहꣳ श्लोककृत् । अहमस्मि प्रथमजा ऋता३स्य । पूर्वं देवेभ्यो-

ऽमृतस्य ना३भाँयि । यो मा ददाति स इदेव मा३ऽऽवाः । अहमन्नमन्नमदन्तमा३द्मि । अहं विश्वं भुवनमभ्यभवा३म् । सुर्वर्न ज्योतीः । य एवं वेद । इत्युपनिषत् ॥ १० ॥

*a*) ऋ 1·31·15 स्वाकृतत्पा यो वसतौ स्योनकृत्. —*b*) ऋ 1·112·3 नानाधियो वसूयवः. —*c*) ऋ 10·166·5 योगक्षेमं व आदायाहं भूयासमुत्तमः. क 2·2; गी 9·22. —*d*) समाज्ञाः (only here) where मानुषीः (= मानुष्यः) = आध्यात्मिक्यः as opposed to दैवीः. —*e*) ऐब्रा 8·28 अथातो ब्रह्मणः परिमरः etc; कौ 2·12 अथातो दैवः परिमरः. —*f*) तै 2·8; बृ 5·5. —*g*) ऋ 10·61·19 द्विता अहं प्रथमजा ऋतस्य; अ 6·12·21 विश्वकर्मन् प्रथमजा ऋतस्य. —*h*) = नाभिः ? —*i*) From अव् *to help* ? —*j*) Cp तैआ 4·40·1 सुवर्न ज्योतीः.

॥ इति भृगुवल्ली ॥

॥ इति तैत्तिरीयोपनिषत् ॥

---

# ॥ ऐतरेयोपनिषत् ॥

[This Upaniṣad forms adhyāyas 4-6 of the Aitareya Āraṇyaka and belongs to the Rigveda. It is cited in three Adhyāyas, the first adhyāya being divided in khaṇḍas and kaṇḍikās, while the last two adhyāyas are divided only in kaṇḍikās.]

आत्मा वा इदमेक एवाग्र आसीत् । नान्यत् किंचन मिषत् । स ईक्षत—लोकान्नु सृजा इति ॥ १ ॥

*a*) बृ 1·4·1. —*b*) इदम् used adverbially. Cp ऋ 10·165·1 कुतो नियंत्या इदमा जगाम; 10·108·1 किमिच्छन्ती सरमा प्रेदमानट्; शब्रा 2·5·1·1 प्रजापतिर्ह वा इदमग्र एक एव आस; छां 1·12·4 ते ह यथैवेदं... सर्पन्तीत्येवम्; 6·1·3 यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽसि. —*c*) तैसं 6·3·5·1 साध्या वै देवा अस्मिँल्लोक आसन् नान्यत्किंचन मिषत्. Also ऋ 10·190·2 विश्वस्य मिषतो वशी. —*d*) शब्रा 2·5·1·1 has स ऐक्षत, छां 6·2·3. ब्रसू 1·1·5 ईक्षतेर्नाशब्दम्, 1·3·13 ईक्षतिकर्मव्यपदेशात्सः. —*e*) शब्रा 2·5·1·1 स प्रजा असृजत.

स इमाँल्लोकानसृजताम्भो मरीचीर्मरमापः । अदोऽम्भः परेण दिवम् । द्यौः प्रतिष्ठा । अन्तरिक्षं मरीचयः । पृथिवी मरः । या अधस्तात्ता आपः ॥ २ ॥

*a*) ऋ 10·82·1, 5 (where द्यावापृथिवी and आपः are mentioned). छां 6·2·3; तै 2·6. —*b*) अम्भः celestial waters and आपः terrestrial ones. —*c*) परेण governs accusative. अ 10·1·16 परेणेहि नवतिं नाव्या अति. ऐब्रा 8·14 ये के च परेण हिमवन्तं जनपदाः. बृ 1·3·12 परेण मृत्युमतिक्रान्तः. —*d*) पा 6·2·116 नञो जरमरमित्रमृताः.

स ईक्षत—इमे नु लोकाः । लोकपालान्नु सृजा इति । सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्छयत् ॥ ३ ॥

*a*) शब्रा 14·7·2·24 एष लोकपालः. Cp भूतपाल in बृ 4·4·22; कौ 3·8; पा 6·2·78 गोतन्तियवं पाले; is लोकपाल अन्तोदात्त? —*b*) Solitary form of मुर्छ् (मूर्त, मूर्ति and मूर्छ come from the same root).

तमभ्यतपत् । तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डम् । मुखाद् वाक् । वाचोऽग्निः ॥ नासिके निरभिद्येताम् । नासिकाभ्यां प्राणः । प्राणाद् वायुः ॥ अक्षिणी निरभिद्येताम् । अक्षीभ्यां चक्षुः । चक्षुष आदित्यः ॥ कर्णौ निरभिद्येताम् । कर्णाभ्यां श्रोत्रम् । श्रोत्राद्दिशः ॥ त्वङ् निरभिद्यत । त्वचो लोमानि । लोमभ्य ओषधिवनस्पतयः ॥

हृदयं निरभिद्यत । हृदयान् मनः । मनसश्चन्द्रमाः ॥ नाभिर्निरभिद्यत । नाभ्या अपानः । अपानान्मृत्युः ॥ शिश्नं निरभिद्यत । शिश्नाद्रेतः । रेतस आपः ॥ ४ ॥

*a*) Cp in general ऋ 10·90·13–14 चन्द्रमा मनसो जातः, चक्षोः सूर्यो अजायत। मुखादिन्द्रश्चाग्निश्च प्राणाद् वायुरजायत. —*b*) छां 3·19·1. —*c*) Cp ऋ 10·163·1 अक्षीभ्यां ते नासिकाभ्याम्. अ 11·3·34 सूर्याचन्द्रमसाभ्यामक्षीभ्याम्. पा 7·1·77 ई च द्विवचने.

॥ इति प्रथमः खण्डः ॥

---

ता एता देवताः सृष्टा अस्मिन् महत्यर्णवे प्रापतन्। तमशनापिपासाभ्यामन्ववार्जत्[1]। ता एनमब्रुवन् – आयतनं नः प्रजानीहि । यस्मिन् प्रतिष्ठिता अन्नमदामेति ॥ १ ॥

1) v. l. अशनायापिपासाभ्याम्. Cp अशनापिपासे in छां 6·8·3; क 1·12; बृ 3·5·1.

*a*) शब्रा 2·6·2·17 तदेनं साश्वसमेवान्ववार्जति.

ताभ्यो गामानयत् । ता अब्रुवन् न वै नोऽयमलमिति । ताभ्योऽश्वमानयत् । ता अब्रुवन् न वै नोऽयमलमिति ॥ २ ॥

*a*) ऋ 9·11·3 शं गवे शं जनाय शमर्वते; छां 6·8·3 गोनाय, अश्वनाय and पुरुषनाय. गो and अश्व occur in this section, while पुरुष occurs in the next.

ताभ्यः पुरुषमानयत् । ता अब्रुवन् सुकृतं बतेति । पुरुषो वाव सुकृतम् । ता अब्रवीद्यथायतनं प्रविशतेति ॥ ३ ॥

*a*) तै 2·7. —*b*) कौ 3·3; 4·19.

अग्निर्वाग्भूत्वा मुखं प्राविशत् । वायुः प्राणो भूत्वा नासिके प्राविशत् । आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत् । दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन् । ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन् । चन्द्रमा मनो भूत्वा हृदयं प्राविशत् । मृत्युरपानो भूत्वा नाभिं प्राविशत् । आपो रेतो भूत्वा शिश्नं प्राविशन् ॥ ४ ॥

तमशनापिपासे अब्रूताम् — आवाभ्यामभिप्रजानीहीति । ते अब्रवीत् — एतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ[a] करोमीति । तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनापिपासे भवतः ॥ ५ ॥

*a*) तैब्रा 3·7·5·9 भजतां भागी भागम्. पा 3·2·142.

॥ इति द्वितीयः खण्डः ॥

---

स ईक्षत—इमे नु लोकाश्च लोकपालाश्च । अन्नमेभ्यः सृजा इति ॥ १ ॥

*a* ) Cp ऐ 1·1·3. —*b* ) शब्रा 14·7·2·24; ऐ 1·1·3.

सोऽपोऽभ्यतपत् । ताभ्योऽभितप्ताभ्यो मूर्तिरजायत । या वै सा मूर्तिरजायतान्नं वै तत् ॥ २ ॥

तदेतत्सृष्टं[1] पराङत्यजिघांसत्[2] । तद्वाचाऽजिघृक्षत् । तन्नाशक्नोद्वाचा ग्रहीतुम् । तद्धैनद् वाचाऽग्रहैष्यदभिव्याहृत्य[3] हैवान्नमत्रप्स्यत् ॥ ३ ॥

1 ) v. l. अभिसृष्टम्. Cp बृ 6·4·2. —2 ) Böhtlingk reads अत्यजिगांसत्. —3 ) Böhtlingk reads अग्रहैष्यत्.

*a* ) शब्रा 10·5·2·13 तस्य हैतस्य हृदये पाशावतिष्ठतो. Cp अतिघ्नी in बृ 2·1·19.

तत्प्राणेनाजिघृक्षत् । तन्नाशक्नोत् प्राणेन ग्रहीतुम् । स यद्धैनत् प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत् ॥ ४ ॥

तच्चक्षुषाऽजिघृक्षत् । तन्नाशक्नोच्चक्षुषा ग्रहीतुम् । स यद्धैनच्चक्षुषाऽग्रहैष्यद् दृष्ट्वा हैवान्नमत्रप्स्यत् ॥ ५ ॥

तच्छ्रोत्रेणाऽजिघृक्षत् । तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुम् । स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत् ॥ ६ ॥

तत्त्वचाऽजिघृक्षत् । तन्नाशक्नोत् त्वचा ग्रहीतुम् । स यद्धैनत्त्वचाऽग्रहैष्यत् स्पृष्ट्वा हैवान्नमत्रप्स्यत् ॥ ७ ॥

तन्मनसाऽजिघृक्षत् । तन्नाशक्नोन्मनसा ग्रहीतुम् । स यद्धैनन्मनसाऽग्रहैष्यद् ध्यात्वा हैवान्नमत्रप्स्यत् ॥ ८ ॥

तच्छिश्नेनाऽजिघृक्षत् । तन्नाशक्नोच्छिश्नेन ग्रहीतुम् । स यद्धैनच्छिश्नेनाग्रहैष्यद् विसृज्य हैवान्नमत्रप्स्यत् ॥ ९ ॥

तदपानेनाजिघृक्षत् । तदावयत् । सैषोऽन्नस्य ग्रहो यद्वायुः । अन्नायुर्वा एष यद्वायुः ॥ १० ॥

*a* ) ऋ 10·113·8 अग्निर्न जम्भैस्तृष्वन्नमावयत्. अ 4·6·3 सुपर्णस्त्वा गरुत्मान्विष प्रथममावयत्. वासं 21·44 मेषस्य हविष आवयत्. शब्रा 1·6·3·5 स तेनाशनमावयत्. आवयत् is causal imperfect of अव्. —*b* ) Double saṁdhi.

स ईक्षत । कथं न्विदं मदृते स्यादिति । स ईक्षत कतरेण प्रपद्या इति । स ईक्षत यदि वाचाभिव्याहृतम्, यदि प्राणेनाभिप्राणितम्, यदि चक्षुषा दृष्टम्, यदि श्रोत्रेण श्रुतम्, यदि त्वचा स्पृष्टम्, यदि मनसा ध्यातम्, यद्यपानेनाभ्यपानितम्, यदि शिश्नेन विसृष्टम्, अथ कोऽहमिति ॥ ११ ॥

*a*) छां 6·3·2; तै 2·6; मै 2·6. —*b*) ऐआ 2·1·4 तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषम्.

स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत । सैषा विदृतिर्नाम द्वाः । तदेतन्नान्दनम् । तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथोऽयमावसथोऽयमावसथ इति ॥ १२ ॥

*a*) Cp in general बृ 1·4·7; छां 6·2·3; तै 2·1; ऐ 3·3. —*b*) तैब्रा 2·7·17·3 यत्सीमन्तं कङ्कतस्ते लिलेख. —*c*) बृ 2·5·18 (the same idea). —*d*) कखिल 3·10·6 याभिर्गच्छति नान्दनम्. —*e*) बृ 4·3·15; छां 8·3·4;8·12·3; पा 4·4·74;5·4·23; 6·2·144.

स जातो भूतान्यभिव्यैख्यत्—किमिहान्यं वावदिषदिति । स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिती३ ॥ १३ ॥

1) v. l. अभिव्यैक्षत्. —2) Böhtlingk reads वाव दिशेत्; Delbrück वि-वदिषेत्.

*a*) अभि + वि + ईख्‌ (?) (= ईक्ष् ?) Prākṛtisation ? —*b*) ततम = त + तम. Cp पा 5·3·93 वा बहूनां जातिपरिप्रश्ने डतमच्. S'aṅkara takes it as haplology from तततमम्. Cp छां 5·10·6 दुर्निष्पतरं for दुर्निष्पततरम्.

तस्मादिदन्द्रो नाम । इदन्द्रो ह वै नाम । तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः, परोक्षप्रिया इव हि देवाः ॥ १४ ॥

*a*) Cp शब्रा 3·2·1·29 इन्द्रस्य हि एषा योनिः । अतो ह वा एनां प्रविशन् प्रविशति । अतो वा जायमानो जायते. —*b*) शब्रा 6·1·1·2 इन्धो ह वै तमिन्द्र इत्याचक्षते परोक्षम् । परोक्षकामा हि देवाः. —*c*) ऐब्रा 3·33 यन् मानुषं सन्मानुषमित्याचक्षते परोक्षेण, परोक्षप्रिया इव हि देवाः. ऐब्रा 7·30 न्यग्रोहं सन्तं न्यग्रोध इत्याचक्षते परोक्षेण etc. बृ 4·4·2.

॥ इति तृतीयः खण्डः ॥

॥ इति प्रथमोऽध्यायः ॥

---

पुरुषे ह वा अयमादितो गर्भो भवति यदेतद्रेतः । तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतमात्मन्येवात्मानं बिभर्ति । तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति । तदस्य प्रथमं जन्म ॥ १ ॥

1 ) v. l. अथैनम् ( Böhtlingk ).

*a* ) अ 6·11·2 पुंसि वै रेतो भवति तत्स्त्रियामनु षिच्यते; शबा 11·2·1·1 त्रिर्ह वै पुरुषो जायते ... ... . —*b* ) बृ 6·4·1. —*c* ) बृ 6·4·9 अंगादंगात्संभवसि. —*1* ) जै 3·8·9–10 स होवाच–त्रिर्वै गृहपते पुरुषो जायते etc.

तत्स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा । तस्मादेनां न हिनस्ति । साऽस्यैतमात्मानमत्र गतं भावयति ॥ २ ॥

*a* ) Only here; cp अमुत्रभूय in वासं 27·9 अमुत्रभूयादध यद्यमस्य ... अमुत्र:; वस्योभूय in अ 16·9·4 वस्योभूयाय; ब्रह्मभूय in गी 14·26; 18·53; पा 3·1·107 भुवो भावे. —*b* ) भावयति, भावयितव्या and भावयित्री in the text occur only here.

सा भावयित्री भावयितव्या भवति । तं स्त्री गर्भं बिभर्ति । सोऽग्र एव कुमारं जन्मनोऽग्रेऽधि भावयति । स यत्कुमारं जन्मनोऽग्रेऽधि भावयत्यात्मानमेव तद् भावयत्येषां लोकानां संतत्यै । एवं संतता हीमे लोकाः । तदस्य द्वितीयं जन्म ॥ ३ ॥

*a* ) गी 3·11 परस्परं भावयन्तः. —*b* ) ऐब्रा 7·10 अमुष्य लोकस्य संततिं धारयति.

सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते । अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति । स इतः प्रयन्नेव पुनर्जायते । तदस्य तृतीयं जन्म ॥ ४ ॥

*a* ) वासं 34·55 सप्त ऋषयः प्रतिहिताः शरीरे. —*b* ) Only here !

तदुक्तमृषिणा—

गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा ।
शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयम् ॥ इति ॥

गर्भ एवैतच्छयानो वामदेव एवमुवाच ॥ ५ ॥

1 ) v. l. S'aṅkara reads अधः.

*a* ) = ऋ 4·27·1. —*b* ) बृ 2·5·18. —*c* ) ब्रसू 1·1·30 शास्त्रदृष्ट्या तूपदेशो वामदेववत्.

स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत् समभवत् ॥ ६ ॥

*a* ) क 6·4. —*b* ) के 1·2.

॥ इति द्वितीयोऽध्यायः ॥

कोऽयम्ᵃ ? आत्मेति वयमुपास्महे । कतरःᵇ स आत्मा ? ॥ १ ॥

*a* ) छां 5·11·1. —*b* ) ऐ 1·3·11; प्र 2·1; 4·1 ( not in an alternative sense ).

येन वा पश्यतिᵃ, येन वा शृणोति, येन वा गन्धान् जिघ्रति, येन वा वाचं व्याकरोति, येन वा स्वादु चास्वादु च विजानाति । यदेतद्धृदयं मनश्चैतत् । संज्ञानᵇमाज्ञानंᶜ विज्ञानंᵈ प्रज्ञानंᵉ मेधाᶠ दृष्टिर्धृतिर्मतिर्मनीषाᵍ जूतिःʰ स्मृतिः संकल्पः क्रतुरसुःⁱ कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्यʲ नामधेयानि भवन्ति ॥ २ ॥

*a* ) Add रूपं ( पश्यति ), शब्दं ( शृणोति ) etc. —*b* ) कौ 3·7 ( in general ) मै 6·31. —*c* ) तांब्रा 10·2·7. अपि ग्राम्याणां पशूनां वाचः आजानाति; पा 6·3·5 आज्ञायिनी च. —*d* ) छां 7·7·1; बृ 2·4·13; 3·9·28; क 3·9. —*e* ) क 2·24; बृ 4·5·13; मां 5. —*f* ) बृ 1·5·1; तै 1·4; क 2·23; मुं 3·2·3. —*g* ) क 6·9; श्वे 3·13; 4·17. —*h* ) ऋ 1·127·2 यमिमा विशः प्रावन्तु जूतये; वासं 2·13 मनो जूतिर्जुषतामाज्यस्य. —*i* ) निघण्टु 3·9 where चेतः चित्तं क्रतुः are given as names of प्रज्ञा(न). निघण्टु passage seems to be the basis of this ऐतरेय passage. —*j* ) वासं 34·3 यत्प्रज्ञानमुत चेतो धृतिश्च.

एषᵃ ब्रह्मा । एष इन्द्रः । एष प्रजापतिः । एते सर्वे देवाः । इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींष्येतानीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डᵇजानि च जारुजानिᶜ च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किंचेदं प्राणि जंगमᵈ च पतत्रि च यच्च स्थावरम् । सर्वं तत् प्रज्ञानेत्रम्ᵉ । प्रज्ञाने प्रतिष्ठितम् । प्रज्ञानेत्रो लोकः । प्रज्ञा प्रतिष्ठा । प्रज्ञानंᶠ ब्रह्म ॥ ३ ॥

*a* ) Cp in general ऋ 10·90·8; अ 11·4·13; मुं 2·1·7. —*b* ) छां 6·3·1; मनु 1·43–46. —*c* ) अ 1·12·1 जरायुजः. —*d* ) नि 5·3 on स्था–जगत् ( ऋ 10·88·4 ) स्थावरं जंगमं च यत्; 9·13 ( on ऋ 6·47·29 ) स्थावरं जंगमं च. जंगम occurs here for the first time ( old word is जगत् ); पा 3·2·175 ( स्थावर ). —*e* ) प्रज्ञानेत्र = प्रज्ञाननेत्र ( haplology ? ); so also प्रज्ञानेत्र = प्रज्ञाननेत्र ? Is प्रज्ञा प्रतिष्ठा = प्रज्ञानप्रतिष्ठः ( going with लोक ) ? —*f* ) बृ 2·4·14; 3·9·28; कौ 3·8; तै 2·6.

स एतेन प्रज्ञेनाऽऽत्मनाऽस्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत् समभवत् ॥ ४ ॥

॥ इति तृतीयोऽध्यायः ॥

॥ इत्यैतरेयोपनिषत् ॥

---

# ॥ छान्दोग्योपनिषत् ॥

[ This Upaniṣad, consisting of eight adhyāyas, belongs to the Sāmaveda. Side by side with the Bṛhadāraṇyaka Upaniṣad, it is the biggest and most significant collection of theologico-philosophical expressions, views, doctrines and legends. Practically every adhyāya is an independent unit, although it appears, in many cases, that the adhyāya itself is made up of several minor units. ]

ओमित्येतदक्षरमुद्गीथमुपासीत । ओमिति ह्युद्गायति । तस्योपव्याख्यानम् ॥१॥

*a* ) पा 8·2·47 ओमभ्यादाने, but not so here; therefore not प्लुत, ओम् being syntactically connected with उपासीत. Cp Hebrew '*amen*', uttered at the end of a prayer etc. —*b* ) तैसं 3·2·9·5-6 उद्गीथ एव उद्गातॄणाम्, ऋचः प्रणव उक्थशंसिनाम्; अ 11·7·5 उच्छिष्ट उद्गीथः; 15·3·8 उद्गीथोऽपश्रयः; ऐब्रा 5·32 त्रयो वर्णा अजायन्त अकार उकारो मकार इति। तानेकधा समभरत् तदेतदोमिति, तस्मादोमोमिति प्रणौति...साम्ना उद्गीथम्. उद्गीथम् neuter in शब्रा 14·9·3·9 from उद्-गीतम् as in उक्थ ( उक्त ), कृथ ( कृत ) etc. —*c* ) Cp छां 1·1·10; 1·4.1; 3·19·1; मां 1.

एषां भूतानां पृथिवी रसः । पृथिव्या आपो रसः । अपामोषधयो रसः । ओषधीनां पुरुषो रसः । पुरुषस्य वाग्रसः । वाच ऋग्रसः । ऋचः साम रसः । साम्न उद्गीथो रसः ॥ २ ॥

—*a* ) ऋ 6·44·21 स्वादू रसो मधुपेयो वराय; 10·9.2 यो वः शिवतमो रसः; अ 10·8·44 रसेन तृप्तो न कुतश्चनोनः; बृ 1·3·19; 4·5·13; छां 3·5.4; तै 2·6.

स एष रसानाꣳ रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः ॥ ३ ॥

—*a* ) शब्रा 3·1·3·1 अग्निर्वै देवानामवरार्ध्यो विष्णुः परार्ध्यः; 3·8·4·1 पुरुषः परार्ध्यः पशूनाम्. पा 4·3·5; cp क 3·1 ( परार्धे ).

कतमा कतमर्क्कतमत् कतमत् साम कतमः कतम उद्गीथ इति विमृष्टं भवति ॥ ४ ॥

*a* ) ऋ 10·65·7 ऋतस्य योनिं विमृशन्त आसते; 10·88·16 मनसा विमृष्टम्; अ 13·1·8 वि रोहितो अमृशद्विश्वरूपम्.

वागेवर्क् । प्राणः साम । ओमित्येतदक्षरमुद्गीथः । तद्वा एतन्मिथुनं यद्वाक्च प्राणश्चर्क्च साम च ॥ ५ ॥

*a* ) जै 3·34·1.

तद्वेतन्मिथुनमोमित्येतस्मिन्नक्षरे स⁺सृज्यते । यदा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य कामम् ॥ ६ ॥

*a* ) शब्रा 4·1·4·4 तौ समसृजेताम्, तत एव मैत्रावरुणो ग्रहोऽभवत्. —*b* ) ऋ 1·144·4 समाने योना मिथुना समोकसा, 1·164·11 आ पुत्रा अग्ने मिथुनासो अत्र, 4·45·1 पृक्षासो अस्मिन्मिथुना अधि त्रयः ( three forming a pair ? ), 10·17·2 अजहादु द्वा मिथुना सरण्यूः ( where द्वा मिथुना means one pair only ! ), नि 12·10 यमौ मिथुनौ. —*c* ) बृ 4·3·21; 4·4·6; क 2·11; मु 3·1·6.

आपयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥ ७ ॥

तद्वा एतदनुज्ञाक्षरम् । यद्धि किंचानुजानात्योमित्येव तदाह । एषो एव समृद्धिर्यदनुज्ञा । समर्धयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥ ८ ॥

*a* ) For the first time only here. पा 8·1·43 ननु इति अनुज्ञैषणायाम्.

तेनेयं त्रयी विद्या वर्तते । ओमित्याश्रावयति । ओमिति श⁺सति । ओमित्युद्गायति । एतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन ॥ ९ ॥

*a* ) शब्रा 4·6·7·1 त्रयी वै विद्या—ऋचो यजूंषि सामानि. ऐब्रा 5·32 त्रय्यै विद्यायै शुक्रम्. —*b* ) तै 1·8. —*c* ) वासं 20·9 अपचितिर्भसत्—a root of Tāntrika worship! शब्रा 3·4·1·5 अपचितिं कुर्वन्ति.

तेनोभौ कुरुतः । यश्चैतदेवं वेद यश्च न वेद । नाना तु विद्या चाविद्या च । यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति ॥ १० ॥

॥ इति प्रथमः खण्डः ॥

*a* ) ऋ 1·102·5 नाना हि त्वा हवमाना जना इमे; शब्रा 1·4·4·8 मनश्च वाक् च समानमेव सन् नानेव; 7·3·1·10 नानो वा एतत् यद्दैवं च मानुषं च; बृ 4·4·19; छां 4·10·3; क 2·1; 2·4; 4·11; ई 9; श्वे 5·1; पा 5·2·27 विनञ्भ्यां नानाञौ नसह. —*b* ) शब्रा 10·4·5·1 अथ आदेशा उपनिषदाम्; 10·5·1·1 वागेवोपनिषत्; ऐआ 3·2·5 अथ खल्वियं सर्वस्यै वाच उपनिषत्; बृ 2·1·20; 2·4·10; 4·2·1; छां 8·8·4–5; कौ 2·1; 2·2; के 4·7; तै 1·3; श्वे 1·16; 5·6; जै 4·17·2. —*c* ) शब्रा 7·3·1·24 नाना हि दिशास्तिष्ठन् । तिष्ठन् वै वीर्यवत्तरः; तांब्रा 15·1·13 वृष्णियो वा अयं आत्मनो वीर्यवत्तरः; op ऋ 10·60·12 अयं मे भगवत्तरः.

देवासुरा ह वै यत्र संयेतिरे । उभये प्राजापत्यास्तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम इति ॥ १ ॥

Cp in general : बृ 1·3·1–6; 1·4·7: 2·2·3; छां 2·7·1; 2·11·1; 3·18·1–6; 8·12·4–5; के 1·4–8; जै 1·60; 2·1; 2·3; 2·10.

*a*) यत्र = when; cp ऋ 1·121·9 कुत्साय यत्र पुरुहूत वन्वन्; 7·65·2 यावा च यत्र पीपयन्नहा च; 7·83·6 यत्र प्र सुदासमावतम्; छां 6·8·1 यत्रैतत्स्वपिति. —*b*) ऐब्रा 1·23 समयतन्त; शब्रा 3·4·4·3 पस्पृधिरे.

ते ह नासिक्यं प्राणमुद्गीथमुपासांचक्रिरे । तꣳहासुराः पाप्मना विविधुः । तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च । पाप्मना ह्येष विद्धः ॥ २ ॥

*a*) ऋ 5·40·9 स्वर्भानुस्तमसाविध्यदासुरः; वासं 6·35 पाप्मा हतो न सोमः; अ 17·1·29 मा मा प्रापत् पाप्मा मोत मृत्युः; ऐब्रा 1·16 न पाप्मना संसृज्यते; तैब्रा 2·3·3·1 विशीर्षा स पाप्मा अमुष्मिँल्लोके भवति...सशीर्षा...; शब्रा 11·1·6·9 तांस्तत एव पाप्मनाविध्यन्; ई 8 अपापविद्धम्; बृ 1·3·2. —*b*) ऋ 10·146·6 सुरभिं आञ्जनगन्धिं अरण्यानिम्; अ 6·124·3 अभ्यञ्जनं सुरभि सा समृद्धिः; अ 8·6·12 दुर्गन्धीन्; अ 19·38·1 सुरभिर्गन्धोऽश्नुते. Cp स्रभिष्ठ (superlative of सुरभि) शब्रा 6·8·2·3 स्रभिष्ठ एनल्लोके कुरुध्वम् ( solitary occurrence ! )

अथ ह वाचमुद्गीथमुपासांचक्रिरे । ताꣳहासुराः पाप्मना विविधुः । तस्मात्तयोभयं वदति सत्यं चानृतं च । पाप्मना ह्येषा विद्धा ॥ ३ ॥

*a*) ऋ 7·49·3 सत्यानृते अवपश्यञ्जनानाम्.

अथ ह चक्षुरुद्गीथमुपासांचक्रिरे । तद्धासुराः पाप्मना विविधुः । तस्मात्तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च । पाप्मना ह्येतद्विद्धम् ॥ ४ ॥

*a*) ऋ 10·88·7 दृशेन्यः अग्निः; तैब्रा 2·7·9·4 दिदृक्षेण्यो दर्शनीयो भवति; षब्रा 2·3 गायत्र्या व्रतं दर्शनीयं त्रिष्टुभा श्रवणीयम्.

अथ ह श्रोत्रमुद्गीथमुपासांचक्रिरे । तद्धासुराः पाप्मना विविधुः । तस्मात्तेनोभयꣳ शृणोति श्रवणीयं चाश्रवणीयं च । पाप्मना ह्येतद्विद्धम् ॥ ५ ॥

*a*) षब्रा 2·3; नि 5·25 श्रवस्यानि श्रवणीयानि भवन्ति.

अथ ह मन उद्गीथमुपासांचक्रिरे । तद्धासुराः पाप्मना विविधुः । तस्मात्तेनोभयꣳ संकल्पयते संकल्पनीयं चासंकल्पनीयं च । पाप्मना ह्येतद्विद्धम् ॥ ६ ॥

*a*) ऋ 10·164·5 जाग्रत्स्वप्नः संकल्पः पापः; अ 11·8·1 संकल्पस्य गृहादधि; 11·8·27 चित्तानि सर्वे संकल्पाः......; बृ 1·5·3; 2·4·11; 4·5·12; छां 7·4·1; 7·5·1; केन 4·5; ऐ 3·2; मै 6·30.

अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे। त९ हासुरा ऋत्वा विदध्वंसुर्यथाऽश्मानमाखणमृत्वा विध्व९सेतैवम् ॥ ७ ॥

*a* ) तैसं 2·6 2·5 तस्माद् ब्राह्मणो मुख्यः ( Cp ऋ 10·90·12 ); तैब्रा 1·1·2·1 मुखं वा एतदृतूनां यत्फाल्गुनी……मुख्य एव भवति; शब्रा 1·6·1·16 एता वै मुख्या आर्तयः; बृ 1·3·7 ( आसन्य from आसन् just as मुख्य from मुख ); के 1·1 प्रथमः प्राणः. —*b* ) Only here and in the next खण्ड. आखण appears in शांखायनश्रौसू 6·3·8; 17·5·5 आखणं विध्यति; लाट्यायनश्रौसू 1·11·5 वितती हैव आखणः; 3·10·5 स्थूणे विमिन्वन्ति आखणाय; cp पाली-अक्खणवेधिन्; तैसं 6·4·11·3 यथा त्सारिणति म आखं इयति नापरात्स्यामि.

यथाऽश्मानमाखणमृत्वा विध्व९सत एवं हैव स विध्व९सते य एवंविदि पापं कामयते यश्चैनमभिदासति । स एषोऽश्माखणः ॥ ८ ॥

*a* ) अभि + दास *to treat as an enemy*; cp दस्यु and दास; cp ऋ 6·5·4 यो नः सनुत्यो अभिदासदग्ने; अ 5·6·10 यो अघायुरभिदासात्; ऋ 7·104·7 यो नः कदाचिदभिदासति द्रुहा.

नैवैतेन सुरभि न दुर्गन्धि विजानाति । अपहतपाप्मा ह्येषः । तेन यदश्नाति यत्पिबति तेनेतरान्प्राणानवति । एतमु एवान्ततोऽवित्त्वोत्क्रामति । व्याददात्येवान्तत इति ॥ ९ ॥

1 ) Cp अवित्त्वा in छां 1·11·2.

*a* ) छां 8·1·5; 8·4·1; 8·7·1; बृ 4·3·21; मै 2·3; 4·4; 6·1. —*b* ) तेन means *therefore*. Cp मैसं 1·4·10 यद् ग्राम्यस्य नाश्नाति तेन ग्राम्यानवरुन्द्धे। शब्रा 4·1·5·7. यथावेदिथं तेनाहिंसिषम्. —*c* ) बृ 1·4·11; 1·4·15; 1·5·21; तै 2·2. —*d* ) अ 6·56·1 व्यात्तं न संयमत्; वासं 31·22 अश्विनौ व्यात्तम्; शब्रा 1·6·4·18 सोऽस्य व्यात्तमापद्यते; जैब्रा 1·176 शिशुमारी प्रतीपं व्यादाय तिष्ठति; बृ 1·1·1 व्यात्तम्; 6 2·12; गी 11·24; पा 1·3·20.

त९ हाङ्गिरा उद्गीथमुपासांचक्रे । एतमु एवाऽऽङ्गिरसं मन्यन्तेऽङ्गानां यद्रसः ॥ १० ॥

*a* ) बृ 1·3·8 popular etymology; cp also नि 3·17 अंगारेषु अंगिराः.

तेन त९ ह बृहस्पतिरुद्गीथमुपासांचक्रे । एतमु एव बृहस्पतिं मन्यन्ते । वाग्घि बृहती तस्या एष पतिः ॥ ११ ॥

*a* ) बृ 1·3·20.

तेन त९ हाऽयास्य उद्गीथमुपासांचक्रे । एतमु एवाऽयास्यं मन्यन्ते । आस्याद्यदयते ॥ १२ ॥

*a* ) Popular etymology; ऋ 10·67·1; 10·108·8; ऐब्रा 7·16; जै 2·7·2.

तेन तꣳ ह बको दाल्भ्यो विदांचकार । स ह नैमिशीयानामुद्गाता बभूव । स ह स्मैभ्यः कामानागायति ॥ १३ ॥

*a*) जै 1·9·3; 4·7·2. —*b*) कासं 10·6 नैमिष्या वै सत्त्रमासत; कौब्रा 26·5 प्रतर्दनो नैमिषीयाणां सत्त्रमुपगम्य......; 28·4 अलीकयुर्ह वाचस्पतो नैमिषीयाणां ब्रह्मा आस; तांब्रा 25·6·4 नैमिशीयाः सर्वामृद्धिं आर्ध्नुवन्; जैब्रा 1·163 नैमिशीयाः सत्त्रिणः सत्त्रं निषेदुः. —*c*) ऋ 8·27·2 आ पशुं गासि; बृ 1·3·2–7. Cp छां 1·7·9. ( कामागान ).

आगाता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते । इत्यध्यात्मम् ॥ १४ ॥

॥ इति द्वितीयः खण्डः ॥

---

अथाधिदैवम् । य एवासौ तपति तमुद्गीथमुपासीत । उद्यन्वा एष प्रजाभ्य उद्गायति । उद्यꣳस्तमो भयमपहन्ति । अपहन्ता ह वै भयस्य तमसो भवति य एवं वेद ॥ १ ॥

Cp in general जै 1·57·7–8.

समान उ एवायं चासौ च । उष्णोऽयमुष्णोऽसौ । स्वर इतीममाचक्षते, स्वर इति प्रत्यास्वर इत्यमुम् । तस्माद्वा एतमिमममुं चोद्गीथमुपासीत ॥ २ ॥

*a*) Cp छां 1·4·3; also प्रस्वार in ऋक्प्रातिशाख्य 15·3 स ओꣳमिति प्रस्वरति विमाचः प्रस्वारः. —*b*) Only here.

अथ खलु व्यानमेवोद्गीथमुपासीत । यद्वै प्राणिति स प्राणः । यदपानिति सोऽपानः । अथ यः प्राणापानयोः संधिः स व्यानः । यो व्यानः सा वाक् । तस्मादप्राणन्ननपानन्वाचमभिव्याहरति ॥ ३ ॥

*a*) जै 2·1·16; 4·22·2–3. ऋ 10·85·12 व्यानो (?) अक्ष आहतः; अ 5·4·7 स प्राणाय व्यानाय चक्षुषे मे अस्मै मृड; 10·2·13 को अस्मिन्प्राणमवयत्को अपानं व्यानमु; ऐब्रा 2·21 प्राणस्त्रेधा विहितः प्राणोऽपानो व्यान इति; बृ 1·5·3; तै 2·2; प्र 3·6.

या वाक् सर्क् । तस्मादप्राणन्ननपानन्नृचमभिव्याहरति । यर्क् तत्साम । तस्मादप्राणन्ननपानन्साम गायति । यत् साम स उद्गीथः । तस्मादप्राणन्ननपानन्नुद्गायति ॥ ४ ॥

अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाऽग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानꣳस्तानि करोति । एतस्य हेतोर्व्यानमेवोद्गीथमुपासीत ॥ ५ ॥

*a*) शब्रा 5·1 1·15 आजिं हि सरिष्यन्तो भवन्ति; 5·1·5·10 आजिसृत्. —*b*) अ 6·66·2 आतन्वाना आयच्छन्तोऽस्यन्तो ये च धावथ; शब्रा 3·7·2·2 यथेषुः आयता अनस्ता; मुं 2·2·3. —*c*) On this idiom cp ऋ 10·34·2 अक्षस्याहं एकपरस्य हेतोः; अ 9·8·3 यस्य हेतोः; शब्रा 2·5·2·2 तयोर्वै अस्य हेतोः प्रजा न पराबभूवुः; 11·1·4·1 अश्वस्य वा हेतोः; गोब्रा 1·3·19 कस्य स्विद्धेतोः.

अथ खलूद्गीथाक्षराण्युपासीत—उद् गी थ इति। प्राण एवोत्। प्राणेन ह्युत्तिष्ठति। वाग् गीः। वाचो ह गिर इत्याचक्षते। अन्नं थम्। अन्ने हीदꣳसर्वꣳस्थितम् ॥ ६ ॥

*a*) जै 1·57·7-8. —*b*) कौ 3·3.

द्यौरेवोत्। अन्तरिक्षं गीः। पृथिवी थम्। आदित्य एवोत्। वायुर्गीः। अग्निस्थम्। सामवेद एवोत्। यजुर्वेदो गीः। ऋग्वेदस्थम्। दुग्धेऽस्मै वाग्दोहं यो वाचो दोहः। अन्नवानन्नादो भवति। य एतान्येवं विद्वानुद्गीथाक्षराण्युपास्त उद् गी थ इति ॥ ७ ॥

अथ खल्वाशीःसमृद्धिः। उपसरणानीत्युपासीत। येन साम्ना स्तोष्यन्स्यात्त त्सामोपधावेत् ॥ ८ ॥

*a*) शब्रा 1·6·2·11 यं वै नेदिष्ठमुपसर्तव्यानां मन्येत तमुपधावेत्; छां 1·3·12 उपसृत्य; छागलेय 6 उपसृत्वरः; छां 1·3·12.

यस्यामृचि तामृचं, यदार्षेयं तमृषिं, यां देवतामभिष्टोष्यन्स्यात्तां देवता-मुपधावेत् ॥ ९ ॥

*a*) A बहुव्रीहि compound (going with साम understood); cp छां 1·4·5 (यदमृत, तदमृत); कौ 2·9 (यदमृत, तदमृत). —*b*) ऋ 8·3·21 उपेष दिवि धावमानम्; ऐब्रा 7·14 वरुणं राजानमुपधाव; शब्रा 1·6·2·9 आर्षेयं देवानामद्धातमाम्। यं वा अद्धातमां मन्येत तमुपधावेत्; छागलेय 7 उपधावन्ति; आर्षेय 3.

येन च्छन्दसा स्तोष्यन्स्यात्तच्छन्द उपधावेत्। येन स्तोमेन स्तोष्यमाणः स्यात्तꣳ स्तोममुपधावेत् ॥ १० ॥

यां दिशमभिष्टोष्यन्स्यात्तां दिशमुपधावेत् ॥ ११ ॥

आत्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन्नप्रमत्तः। अभ्याशो ह यदस्मै स कामः समृध्येत यत्कामः स्तुवीतेति यत्कामः स्तुवीतेति ॥ १२ ॥

॥ इति तृतीयः खण्डः ॥

*a*) छां 2·22·2; क 6·11; मुं 2·2·4; 3·2·4; श्वे 2·9. —*b*) तांब्रा 9·5·2 योऽन्योऽभ्याशं स्यात्; ऐब्रा 3·1·3 अभ्याशमेव यत्तथा स्यात्; छां 2·1·4; 3·19·4; 5·10·7. —*c*) ऋ 10·121·10 यत्कामास्ते जुहुमः...cp ऋ 3·53·21 याच्ञ्रेष्ठाभिरूतिभिः.

ओमित्येतदक्षरमुद्गीथमुपासीत । ओमिति ह्युद्गायति । तस्योपव्याख्यानम् ॥ १ ॥

*a*) छां 1·1·1,10; 3·19·1; मां 1. Cp अनुव्याख्यान and व्याख्यान in बृ 2·4·10, 4·1·2; 4·5·11; मै 6·32.

देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशन् । ते छन्दोभिरच्छादयन् । यदेभिरच्छादयꣳ[1]स्तच्छन्दसां छन्दस्त्वम् ॥ २ ॥

1) Böhtlingk reads तानच्छादयन्.

*a*) तांब्रा 22·12·1 मृत्योरबिभयुः. —*b*) ऋ 10·90·9 छन्दांसि जज्ञिरे तस्मात्; अ 11·7·24 ऋचः सामानि छन्दांसि (where छन्दांसि = magic formulae of the अथर्ववेद); जैब्रा 1·284 तद्यदेनान्...तच्छन्दसां छन्दस्त्वम्; ऐआ 2·1·6 यच्छन्दोभिश्छन्नास्तस्माच्छन्दांसीत्याचक्षते.

तानु तत्र मृत्युर्यथा मत्स्यमुदके परिपश्येदेवं पर्यपश्यदृचि साम्नि यजुषि । ते नु वित्त्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन् ॥ ३ ॥

*a*) Cp ऋ 10·68·8 ..पर्यपश्यन्मत्स्यं न दीन उदके क्षियन्तम्. —*b*) छां 1·3·2.

यदा वा ऋचमाप्नोत्योमित्येवातिस्वरत्येवꣳ सामैवं यजुः । एष उ स्वरो यदेतदक्षरमेतदमृतमभयम् । तत्प्रविश्य देवा अमृता अभया अभवन् ॥ ४ ॥

*a*) आप्नोति = समाप्नोति i. e. *finishes*; cp तैसं 2·5·8·3 अर्धमासशः संवत्सर आप्यते; 7·5·1·1 ताः संवत्सरमाप्त्वा उदतिष्ठन्. —*b*) जै 1·18·10.

स य एतदेवं विद्वानक्षरं प्रणौत्येतदेवाक्षरꣳ स्वरममृतमभयं प्रविशति । तत्प्रविश्य यदमृता देवास्तदमृतो भवति ॥ ५ ॥

॥ इति चतुर्थः खण्डः ॥

*a*) प्रणौति, the root in प्रणव. —*b*) Compound like यदार्षेयं (साम) in छां 1·3·9.

---

अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति । असौ वा आदित्य उद्गीथ एष प्रणवः । ओमिति ह्येष स्वरन्नेति ॥ १ ॥

*a*) छां 1·3·1.

एतमु एवाहमभ्यगासिषं, तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच । रश्मीꣳस्त्वं पर्यावर्तयात् । बहवो वै ते भविष्यन्ति । इत्यधिदैवतम् ॥ २ ॥

*a*) शब्रा 2·4·3·1; बृ 3·4·1.

अथाध्यात्मम् । य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीत । ओमिति ह्येष स्वरन्नेति ॥ ३ ॥

एतमु एवाहमभ्यगासिषं, तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच । प्राणाꣳस्त्वं भूमानमभिगायताद्बहवो वै मे भविष्यन्तीति ॥ ४ ॥

1 ) v. l. प्राणम्, which seems to be a better reading.

*a* ) ऋ 1·110·2 सवितुर्स्य भूमना; 10·98·12 अपां भूमानम्; छां 7·23, 24; ब्रसू 1·3·8. —*b* ) जै 2·6·10.

अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति । होतृषदनाद्धैवापि दुरुद्गीतमनुसमाहरतीत्यनुसमाहरतीति ॥ ५ ॥

॥ इति पञ्चमः खण्डः ॥

*a* ) ऋ 2·9·1 नि होता होतृषदने असदत्; अ 7·99·1 होतृषसदनं हरितं हिरण्मयम्. —*b* ) जैब्रा 1·259 अनेतस्का ह वै पुरुषात्पुर्वतन्या गर्भा जायन्ते. —*c* ) गोब्रा 2·3·13 युवं न इमं यज्ञस्याङ्गं अनुसमाहरतम्.

---

इयमेवर्क् । अग्निः साम । तदेतदेतस्यामृच्यध्यूढꣳ साम । तस्मादृच्यध्यूढꣳ साम गीयते । इयमेव सा । अग्निरमः । तत्साम ॥ १ ॥

*a* ) जै 1·25-27. —*b* ) शब्रा 8·5·2·7 यजमानः...विराजि अध्यूढः; ऐब्रा 3·41 सैतस्मिन्नध्यूळ्हा; जैब्रा 2·30 एतस्मिन्स्वर्गे लोके अध्यूळ्हम्; ऐआ 2·3·4 यो ह वै यज्ञे यज्ञं वेद... अध्यूळ्हं स संप्रतिविद् ; 5·3·3 नाध्यूळ्हे मेघे. —*c* ) अ 14·2·71 अमोऽहमस्मि सा त्वं सामाहमस्मि; often in Brahmaṇa literature; छां 5·2·6; बृ 1·3·22; 6·4·20.

अन्तरिक्षमेवर्क् । वायुः साम । तदेतदेतस्यामृच्यध्यूढꣳ साम । तस्मादृच्यध्यूढꣳ साम गीयते । अन्तरिक्षमेव सा । वायुरमः । तत्साम ॥ २ ॥

द्यौरेवर्क् । आदित्यः साम । तदेतदेतस्यामृच्यध्यूढꣳ साम । तस्मादृच्यध्यूढꣳ साम गीयते । द्यौरेव सा । आदित्योऽमः । तत्साम ॥ ३ ॥

नक्षत्राण्येवर्क् । चन्द्रमाः साम । तदेतदेतस्यामृच्यध्यूढꣳ साम । तस्मादृच्यध्यूढꣳ साम गीयते । नक्षत्राण्येव सा । चन्द्रमा अमः । तत्साम ॥ ४ ॥

अथ यदेतदादित्यस्य शुक्लं भाः सैवर्क् । अथ यन्नीलं परः[1]कृष्णं तत्साम । तदेतदेतस्यामृच्यध्यूढꣳ साम । तस्मादृच्यध्यूढꣳ साम गीयते ॥ ५ ॥

1 ) v. l. परं कृष्णम्.

*a* ) This may be taken as one word; cp छां 3·4·3.

अथ यदेवैतदादित्यस्य शुक्लं भाः सैव सा। अथ यन्नीलं परःकृष्णं तदमः। तत्साम। अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात्सर्व एव सुवर्णः ॥ ६ ॥

*a*) = आदित्ये अन्तः; cp ब्रसू 1·1·20 अन्तस्तद्धर्मोपदेशात्. —*b*) हिरिश्मश्रु in ऋ 5·7·7; 10·46·5; हरिश्मशारु in ऋ 10·96·8. —*c*) ऋ 1·79·1. —*d*) प्रणख only here.

तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी। तस्योदिति नाम। स एष सर्वेभ्यः पाप्मभ्य उदितः। उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद ॥ ७ ॥

*a*) Only here! —*b*) ऋ 10·142·8 ह्रदाश्च पुण्डरीकाणि; तैब्रा 1·8·2·1 पुण्डरिस्रजाम्; शब्रा 5·4·5·6–12 तथैकं पुण्डरीकं प्रयच्छति; तांब्रा 18·9·6 नक्षत्राणामवकाशेन पुण्डरीकं जायते; गोब्रा 1·1·39 तस्माद्वै विद्वान् पुरुषमिदं पुण्डरीकमिति; छां 8·1·1; बृ 2·3·6. —*c*) छां 8·1·5; 8·7·1.

तस्यर्क्च साम च गेष्णौ। तस्मादुद्गीथः। तस्मात्त्वेवोद्गाता। एतस्य हि गाता। स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च। इत्यधिदैवतम् ॥ ८ ॥

॥ इति षष्ठः खण्डः ॥

*a*) ऐब्रा 5·3 यदेव्यत्वा अभिगेष्णाभरन्ति; ऐआ 2·36 यः कश्च गेष्णः स स्वर ओमिति; छां 1·7·5. —*b*) छां 1·7·6.

---

अथाध्यात्मम्। वागेवर्क्। प्राणः साम। तदेतदेतस्यामृच्यध्यूढꣳ साम। तस्मादृच्यध्यूढꣳ साम गीयते। वागेव सा। प्राणोऽमः। तत्साम ॥ १ ॥

चक्षुरेवर्क्। आत्मा साम। तदेतदेतस्यामृच्यध्यूढꣳ साम। तस्मादृच्यध्यूढꣳ साम गीयते। चक्षुरेव सा। आत्माऽमः। तत्साम ॥ २ ॥

*a*) Cp छां 8·8·1 सुवसने सुवसनः.

श्रोत्रमेवर्क्। मनः साम। तदेतदेतस्यामृच्यध्यूढꣳ साम। तस्मादृच्यध्यूढꣳ साम गीयते। श्रोत्रमेव सा। मनोऽमः। तत्साम ॥ ३ ॥

अथ यदेतदक्ष्णः शुक्लं भाः सैवर्क्। अथ यन्नीलं परःकृष्णं तत्साम। तदेतदेतस्यामृच्यध्यूढꣳ साम। तस्मादृच्यध्यूढꣳ साम गीयते। अथ यदेवैतदक्ष्णः शुक्लं भाः सैव सा। अथ यन्नीलं परःकृष्णं तदमः। तत्साम ॥ ४ ॥

अथ य एषोऽन्तरक्षिणि[a] पुरुषो दृश्यते सैवर्क् । तत्साम । तदुक्थम् । तद्यजुः । तद्ब्रह्म । तस्यैतस्य तदेव रूपं यदमुष्य रूपम् । यावमुष्य गेष्णौ तौ गेष्णौ । यन्नाम[b] तन्नाम ॥ ५ ॥

*a*) बृ 2·3·5; 5·5·2; छां 1·6·6; 4·15·1; 8·7·4. —*b*) छां 1·6·7-8.

स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां[a] चेति । तद्य इमे वीणायां गायन्त्येतं ते गायन्ति । तस्मात्ते धनसनयः[b] ॥ ६ ॥

*a*) छां 1·6·8. —*b*) अ 18·4·38 इहैव एधि धनसनिः; cp धनसाः in ऋ 2·10·6 अग्निं धनसा जोहवीमि.

अथ य एतदेवं विद्वान्साम गायत्युभौ स गायति । सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लोकास्तांश्चाप्नोति देवकामांश्च ॥ ७ ॥

अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्तांश्चाप्नोति मनुष्यकामांश्च । तस्मादु हैवंविदुद्गाता ब्रूयात् ॥ ८ ॥

कं ते काममागायानीति । एष ह्येव कामागानस्येष्टे य एवं विद्वान् साम गायति साम गायति ॥ ९ ॥

॥ इति सप्तमः खण्डः ॥

*a*) छां 1·6·8.

---

त्रयो होद्गीथे कुशला[a] बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो[b] जैवलिरिति । ते होचुरुद्गीथे वै कुशलाः स्मो हन्तोद्गीथे कथां[c] वदाम इति ॥ १ ॥

*a*) ऐब्रा 7·18 न ते कुशलं मेनिरे; शब्रा 11·4·2·1 एके कुशला मन्यमानाः; ऐआ 3·1·3 न त्वेवान्यत् कुशलाद् ब्राह्मणं ब्रूयात्; छां 4·10·2; तै 1·11; जै 3·8·3; क 2·7. —*b*) Cp in general छां 5·3–10; बृ 6·2. —*c*) जैब्रा 1·22 कथां वादयिष्यामः, कथाः …… अनुसंवादयथ; ऐआ 5·3·3 नास्मिन् कथां वदेत; जै 4·6·2.

तथेति ह समुपविविशुः । स ह प्रवाहणो जैवलिरुवाच । भगवन्तावग्रे वदताम् । ब्राह्मणयोर्[a] वदतोर्वाचं श्रोष्यामीति ॥ २ ॥

*a*) As opposed to राजन्यबन्धुः, i. e. प्रवाहण जैवलि in छां 5·3·5.

स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति। पृच्छेति होवाच ॥ ३ ॥

*a*) जैब्रा 1·337......गायन्तं ब्रह्मदत्तं चैकितानेयमनुव्याजहार। तथा त्वा अयं दाल्भ्यः श्यावाश्वमगासीत्; बृ 1·3·24; जै 1·38·1. चैकितायन in the text is from चेकित.

का साम्नो गतिरिति। स्वर इति होवाच। स्वरस्य का गतिरिति। प्राण इति होवाच। प्राणस्य का गतिरिति। अन्नमिति होवाच। अन्नस्य का गतिरिति। आप इति होवाच ॥ ४ ॥

अपां का गतिरिति। असौ लोक इति होवाच। अमुष्य लोकस्य का गतिरिति। न स्वर्गं लोकमतिनयेदिति होवाच। स्वर्गं वयं लोकꣳ सामाभिसꣳस्थापयामः। स्वर्गसꣳस्तावꣳ हि सामेति ॥ ५ ॥

*a*) ऋ 1·42·7 अति नः सश्चतो नय; 6·47·16 अन्यमन्यमतिनेनीयमानः; वासं 10·1 याभिरिन्द्रमनयन्नत्यरातीः; अ 6·110·2 अत्येनं नेष्द्दुरितानि विश्वा; ऐब्रा 1·30 अग्निर्नाष्ट्रा अत्यनयत्, शब्रा 3·6·3·8 एवं मा कनीयांसमेव बधात्कृत्वा अतिनयत; जैब्रा 2·123 एते ह वा एनमाप्यरण्यानि अतिनयतः; तांब्रा 9·9·15 यद्दृष्टावशीमतिनयेत्, अन्तर्यन्ति; गोब्रा 1·2·6 समर्पयित नयन् न ब्रह्मचारी भवति. —*b*) बृ 4·2·3 (संस्तावः); पा 3·3·31 यज्ञे समि स्तुवः.

तꣳ ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाचाप्रतिष्ठितं वै किल ते दाल्भ्य साम। यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति ॥ ६ ॥

*a*) छां 1·10·9–11; बृ 1·3·24; 3·6; 3·7·1; शब्रा 3·6·1·23 मूर्धा ह्यस्य विपतेत्; 4·4·3·4 तस्य मूर्धा उद्ववर्त; cp सुत्तनिपात 983 मुद्धा फलतु सत्तधा. वि-पत् means *to burst open; to fly off.*

हन्ताहमेतद्भगवतो वेदानीति। विद्धीति होवाच। अमुष्य लोकस्य का गतिरिति। अयं लोक इति होवाच। अस्य लोकस्य का गतिरिति। न प्रतिष्ठां लोकमतिनयेदिति होवाच। प्रतिष्ठां वयं लोकꣳसामाभिसꣳस्थापयामः। प्रतिष्ठासꣳस्तावꣳ हि सामेति ॥ ७ ॥

तꣳ ह प्रवाहणो जैवलिरुवाच। अन्तवद्वै किल ते शालावत्य साम। यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति। हन्ताहमेतद्भगवतो वेदानीति। विद्धीति होवाच ॥ ८ ॥

॥ इति अष्टमः खण्डः ॥

*a*) बृ 3·8·10; गी 7·23.

---

अस्य लोकस्य का गतिरिति । आकाश इति होवाच । सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्ति । आकाशो ह्येवैभ्यो ज्यायान् । आकाशः परायणम् ॥ १ ॥

*a* ) बृ 3·7·12; 5·1·1; छां 3·12·7–9; 4·10·5; 8·14; ब्रसू 1·1·22. —*b* ) छां 7·12·1; क 2·25; मुं 1·1·7; 2·1·1; तै 3·1; मां 6; श्वे 4·11.

स एष परोवरीयानुद्गीथः । स एषोऽनन्तः । परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेवं विद्वान्परोवरीयांसमुद्गीथमुपास्ते ॥ २ ॥

*a* ) तैसं 6·2·3·5 परोवरीयसीमिवान्तर्दीक्षामुपेयात्; कासं 24·9 परोवरीयः प्रजया ... प्रथते; ऐब्रा 1·25 परोवरीयांसो वा इमे लोकाः, अर्वाग् अंहीयांसः; ऐब्रा 2·35 वज्रमेव तत् परोवरीयांसं करोति; छां 2·7·1·2; ब्रसू 3·3·7 परोवरीयस्त्वादिवत्.

तं हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच । यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति ॥ ३ ॥

*a* ) वंशब्राह्मण ( Indische Studien 4·384 ).

तथाऽमुष्मिँल्लोके लोक इति । स य एतमेव विद्वानुपास्ते परोवरीय एव हास्यास्मिँल्लोके जीवनं भवति तथाऽमुष्मिँल्लोके लोक इति लोके लोक इति ॥ ४ ॥

॥ इति नवमः खण्डः ॥

---

मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास ॥ १ ॥

*a* ) S. K. Chatterji suggests मटची as a loan-word from Kannada: *midice*, meaning '*locust.*' —*b* ) बृ 3·4·1 ( उषस्तः चाक्रायणः ). —*c* ) ऋ 1·65·4 इभ्यान राजा; शब्रा 4·5·8·11 इभ्यतिल्विल इव. —*d*) Cp ऋ 10·55·5 विधुं दद्राणम्; पा 6·4·114 इद्दरिद्रस्य.

स हेभ्यं कुल्माषान्खादन्तं बिभिक्षे । तं होवाच । नेतोऽन्ये विद्यन्ते यच्चये[1] म इम उपनिहिता इति ॥ २ ॥

1 ) Wrongly split up as यच्च ये. Śaṅkara correctly paraphrases चये = राशौ.
*a*) नि 1·4 कुल्माषाँश्चिदाहर इति अवकुत्सिते. —*b*) अ 18·4·37 इदं कसांबु चयनेन चितम्.

एतेषां मे देहीति होवाच । तानस्मै प्रददौ । हन्तानुपानमिति । उच्छिष्टं वै मे पीतं स्यादिति होवाच ॥ ३ ॥

a ) ऐब्रा 3·38 एताभिर्वा इन्द्रस्तृतीयसवनमन्वपिबत्, तदनूपानीयानामनूपानीयत्वम्; शब्रा 9·2·3·41 यथा परिविष्य अनुपाययेत्. —b ) तैसं 7·3·20·1 उच्छिष्टाय स्वाहा; मनु 4·151 उच्छिष्टान्नं ... दूरादेव समाचरेत्; 11·148 शूद्रोच्छिष्टाश्च पीत्वापः.

न स्विदेतेऽप्युच्छिष्टा इति । न वा अजीविष्यमिमानखादन्निति होवाच । कामो म उदपानमिति ॥ ४ ॥

1 ) Is it कामे as in छां 4·9·2 or कामम् as in छां 6·7·1 ?

स ह खादित्वाऽतिशेषाञ्जायाया आजहार । साऽग्र एव सुभिक्षा बभूव । तान्प्रतिगृह्य निदधौ ॥ ५ ॥

a ) Fem. of सुभिक्ष adj.

स ह प्रातः संजिहान उवाच । यद्बतान्नस्य लभेमहि, लभेमहि धनमात्राम् । राजाऽसौ यक्ष्यते । स मा सर्वैरार्त्विज्यैर्वृणीतेति ॥ ६ ॥

1 ) I. e. अन्नस्य ( मात्राम् ) लभेमहि, लभेमहि धन स्य ) मात्राम्.

a ) ऋ 3·51·4 सं सहसे पुरुमायो जिहीते; तैसं 7·1·19·3 संजिहानाय स्वाहा संजिहानाय स्वाहा; ऐब्रा 7·15 संजिहानस्तु द्वापरः; शब्रा 1·6·3·36 स विभ्रस्तः पर्वभिः न शशाक संहातुम्; शब्रा 4·2·2·11 यदा वै तान्तः प्राणं लभते अथ स संजिहीते. —b ) ऋ 10·117 which is called धनान्नदान ( सूक्त ). —c ) Cp ऋ 1·94·6 विश्वा विद्वाँ आर्त्विज्या धीर पुष्यसि.

तं जायोवाच । हन्त पत इम एव कुल्माषा इति । तान्खादित्वाऽमुं यज्ञं विततमेयाय ॥ ७ ॥

तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोपविवेश । स ह प्रस्तोतारमुवाच ॥ ८ ॥

a ) तैसं 3·2·4·1 आस्तावः कलशः सोमः ...; शब्रा 2·2·4·11 इयमेव पृथिवी आस्तावः; शब्रा 13·5·1·16 स्तुते बहिष्पवमाने अश्वमास्तावमाक्रमयन्ति; जैब्रा 3·116 आयतनमास्तावः.

प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता, तां चेदविद्वान्प्रस्तोष्यसि, मूर्धा ते विपतिष्यतीति ॥ ९ ॥

a ) बृ 1·3·28. —b ) तांब्रा 12·10·7 मुखं हि साम्नः प्रस्तावः.

एवमेवोद्गातारमुवाच । उद्गातर्या देवतोद्गीथमन्वायत्ता, तां चेदविद्वानुद्गास्यसि, मूर्धा ते विपतिष्यतीति ॥ १० ॥

एवमेव प्रतिहर्तारमुवाच । प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता, तां चेदविद्वान्प्रतिहरिष्यसि, मूर्धा ते विपतिष्यतीति । ते ह समारतास्तूष्णीमासांचक्रिरे ॥ ११ ॥

॥ इति दशमः खण्डः ॥

*a* ) तैसं 3·3·2·1 अग्निः प्रस्तोता…मरुतः प्रतिहर्तारः; शब्रा 4·3·4·22 प्रतिहर्त्रे उत्तमाय ददाति; तांब्रा 25·15·3 ग्लावश्चाजगावश्च प्रस्तोतृप्रतिहर्तारौ. —*b* ) Only here in Vedic literature. —*c* ) ऋ 2·43·3 तूष्णीमासीनः; तैसं 2·6·4·2 तूष्णीं चतुर्थं हरति; ऐब्रा 2·31 देवा एतं तूष्णींशंसमपश्यन्; तैब्रा 2·1·2·8 यजुषा अन्यत, तूष्णीमन्यत; शब्रा 7·3·2·2 यत्तूष्णीं सर्वं वा अनिरुक्तम्; बृ 2·1·13; प्र 6·1; कौ 4·18; cp गाथा 43·15 tušnā-maitiš ( silent meditation ). Cp जोषम् from जुष्, like तूष्णीम् from तुष्.

---

अथ हैनं यजमान उवाच । भगवन्तं वा अहं विविदिषाणीति । उषस्तिरस्मि चाक्रायण इति होवाच ॥ १ ॥

स होवाच । भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषम् । भगवतो वा अहमवित्त्याऽन्यानवृषि ॥ २ ॥

1 ) Max Müller suggests अवित्त्या as in छां 1·2·9 एतमु … अवित्त्वा उत्क्रामति.

भगवांस्त्वेव मे सर्वैरार्त्विज्यैरिति । तथेति । अथ तर्ह्येत एव समतिसृष्टाः स्तुवताम् । यावत्त्वेभ्यो धनं दद्यास्तावन्मम दद्या इति । तथेति ह यजमान उवाच ॥ ३ ॥

*a* ) Only here in Vedic literature.

अथ हैनं प्रस्तोतोपससाद । प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् । कतमा सा देवतेति ॥ ४ ॥

प्राण इति होवाच । सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति । प्राणमभ्युज्जिहते । सैषा देवता प्रस्तावमन्वायत्ता । तां चेदविद्वान्प्रास्तोष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥ ५ ॥

*a* ) Cp प्राण and अन्न in बृ 5·12·1 with प्राण and अन्न here, with आदित्य added on; बृ 1·5·14; छां 6·7; तै 3·3; प्र 2·4; ब्रसू 1·1·23 and 28.

अथ हैनमुद्गातोपससाद । उद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्-गास्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् । कतमा सा देवतेति ॥ ६ ॥

*a* ) सुत्तनिपात 983 मुद्धा फलतु सत्तधा.

आदित्य इति होवाच । सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति । सैषा देवतोद्गीथमन्वायत्ता । तां चेदविद्वानुदगास्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥ ७ ॥

*a* ) छां 1·3·1 ( उद्यन् ).

अथ हैनं प्रतिहर्तोपससाद । प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् । कतमा सा देवतेति ॥ ८ ॥

अन्नमिति होवाच । सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति । सैषा देवता प्रतिहारमन्वायत्ता । तां चेदविद्वान्प्रत्यहरिष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति तथोक्तस्य मयेति ॥ ९ ॥

*a* ) तै 3·2.

॥ इत्येकादशः खण्डः ॥

---

अथातः शौव उद्गीथः । तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज ॥ १ ॥

*a* ) Here follows a satire like ऋ 7·103 ( मण्डूकसूक्त ). —*b* ) शौव from श्वस् ( tomorrow ) rather than from श्वन् ( dog ) ? Cp कात्यायन on पा 6·4·144 शुनः संकोचे उपसंख्यानम्. —*c* ) शब्रा 11·5·7·1 प्रिये स्वाध्यायप्रवचने भवतः.......य एवं विद्वान्स्वाध्यायमधीते.

तस्मै श्वा श्वेतः प्रादुर्बभूव । तमन्ये श्वान उपसमेत्योचुः । अन्नं नो भगवानागायतु । अशनायाम वा इति ॥ २ ॥

*a* ) छां 1·7·9.

तान्होवाचेहैव मा प्रातरुपसमीयातेति । तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयांचकार ॥ ३ ॥

ते ह यथैवेदं[1] बहिष्पवमानेन स्तोष्यमाणाः संरब्धाः सर्पन्तीत्येवमाससृपुः । ते ह समुपविश्य हिं चक्रुः ॥ ४ ॥

1 ) शांकरपाठ — यथैवेह.

*a* ) ऐब्रा 2·22 उभयेषां वा एष देवमनुष्याणां भक्षो यद् बहिष्पवमानः; शब्रा 4·2·5·9 तस्माद्व बहिष्पवमानेन स्तुवते; तांब्रा 6·7·24 चत्वालमवेक्ष्य बहिष्पवमानं स्तुवन्ति. —*b* ) ऋ 10·72·6 सुसंरब्धाः.

ओ३मदा३म । ओं३ पिबा३म । ओं३ देवो वरुणः प्रजापतिः सविता२ऽन्नमिहा२ऽऽहरत् । अन्नपते३ऽन्नमिहा२ऽऽहरा२ऽऽहरो३मिति ॥ ५ ॥

*a* ) वासं 11·83 अन्नपते अन्नस्य नो देहि; अ 13·3·7 यो अन्नादो अन्नपतिर्बभूव; 19·55·5 अन्नादाय अन्नपतये रुद्राय नमो अग्नये.

॥ इति द्वादशः खण्डः ॥

---

अयं वाव लोको हाउँकारः। वायुर्हाइकारः। चन्द्रमा अथँकारः। आत्मेहँकारः। अग्निरीँकारः ॥ १ ॥

*a*) तै 3·10 (हाउवु); मभा 12·285·25 (Bombay Ed.) हायिहायिहुवाहायि हावुहायि तथाऽसकृत्. —*b*) जैब्रा 3·107 एतानथकारान्. —*c*) तांब्रा 10·9·1 यदिह-कारेणाभ्यस्तं तत् षष्ठ्याह्नो रूपम्. —*d*) जैब्रा 3·109 ताभ्यः ... प्रायच्छदेतानीकारान्; दैब्रा 1·2 ईकारणिधनानि आग्नेयानि.

आदित्य ऊकारः। निहँव एकारः। विश्वे देवा औँहोयिकारः। प्रजापतिर्हिँकारः। प्राणः स्वँरः। अन्नं या। वाग्विराट् ॥ २ ॥

*a*) तांब्रा 5·8·2 निहव एतानि सामानि; षब्रा 1·2 ते देवा निहवमेवाकुर्वत ब्रह्मो३५ सुब्रह्मो३मिति; पा 3·3·72 ह्वः संप्रसारणं च न्यभ्युपविषु. —*b*) जैब्रा 1·141 अविता जरायितॄणाम् आऔ-होहायिशताम्...... —*c*) छां 1·4·4. —*d*) ऋ 10·189·3 ...., वि राजति वाक् ....

अनिरुक्तस्त्रयोदशः स्तोभः संचँरो हुंकारः ॥ ३ ॥

*a*) शब्रा 3·1·3·28 सोऽस्य संचरो भवति आ सुत्यायै; गोब्रा 2·1·21,23 पञ्चसंचराणि, षट्संचराणि हवींषि.

दुग्धेऽस्मै वाग्दोहं यो वाचो दोहः। अन्नवानन्नादो भवति। य एतामेवँ साम्नामुपनिषँदं वेदोपनिषदं वेद ॥ ४ ॥

*a*) छां 1·3·7; 2·8·3.

॥ इति त्रयोदशः खण्डः ॥

॥ इति प्रथमोऽध्यायः ॥

---

समस्तस्य खलु साम्न उपासनँ साधु। यत्खलु साधु तत्सामेत्याचक्षते। यदसाधु तदसामेति ॥ १ ॥

*a*) ऐब्रा 3·23 यः श्रेष्ठतामश्नुते स सामन् भवति। असामन् य इति हि निन्दन्ति.

तदुताप्याहुः। साम्नैनमुपागादिति साधुनैनमुपागादित्येव तदाहुः। असाम्नै-नमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः ॥ २ ॥

अथोताप्याहुः। साम नो बतेति यत्साधु भवति साधु बतेत्येव तदाहुः। असाम नो बतेति यदसाधु भवत्यसाधु बतेत्येव तदाहुः ॥ ३ ॥

स य एतदेवं विद्वान्साधु सामेत्युपास्तेऽभ्याशो[a] ह यदेनꣳ साधवो धर्मा[b] आ च गच्छेयुरुप च नमेयुः ॥ ४ ॥

*a*) छां 3·19·4. —*b*) Cp शब्रा 11·5·7·1 प्रज्ञा वर्धमाना चतुरो धर्मान्ब्राह्मणमभिनिष्पादयति ब्राह्मण्यं प्रतिरूपचर्यां यशो लोकपक्तिम्.

॥ इति प्रथमः खण्डः ॥

---

लोकेषु पञ्चविधꣳ सामोपासीत । पृथिवी हिंकारः । अग्निः प्रस्तावः । अन्तरिक्षमुद्गीथः । आदित्यः प्रतिहारः । द्यौर्निधनम् । इत्यूर्ध्वेषु[a] ॥ १ ॥

*a*) शब्रा 12·2·3·8 कथमूर्ध्वैः स्तोमैर्विषुवन्तमुपागाताावृत्तैर्मामिति.

अथाऽऽवृत्तेषु[a] । द्यौर्हिंकारः । आदित्यः प्रस्तावः । अन्तरिक्षमुद्गीथः । अग्निः प्रतिहारः । पृथिवी निधनम् ॥ २ ॥

*a*) See note on the previous section.

कल्पन्ते हास्मै लोका ऊर्ध्वाश्चाऽऽवृत्ताश्च य एतदेवं विद्वाँल्लोकेषु पञ्चविधꣳ सामोपास्ते ॥ ३ ॥

॥ इति द्वितीयः खण्डः ॥

---

वृष्टौ[a] पञ्चविधꣳ सामोपासीत । पुरोवातो हिंकारः[b] । मेघो जायते स प्रस्तावः । वर्षति स उद्गीथः । विद्योतते स्तनयति स प्रतिहारः । उद्गृह्णाति तन्निधनम् ॥ १ ॥

*a*) जै 1·12·9; 1·36·1. —*b*) अ 9·6·45 तस्या उषा हिंकृणोति सविता प्रस्तौति बृहस्पतिरूर्जया उद्गायति, त्वष्टा पुष्ट्या प्रतिहरति, विश्वे देवा निधनम् ... *et passim*.

वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान्वृष्टौ पञ्चविधꣳ सामोपास्ते ॥ २ ॥

॥ इति तृतीयः खण्डः ॥

---

सर्वास्वप्सु पञ्चविधꣳ सामोपासीत । मेघो यत्संप्लवते स हिंकारः । यद्वर्षति स प्रस्तावः । याः प्राच्यः स्यन्दन्ते स उद्गीथः । याः प्रतीच्यः स प्रतिहारः । समुद्रो निधनम् ॥ १ ॥

न हाप्सु प्रैत्यप्सुँमान्भवति य एतदेवं विद्वान्सर्वास्वप्सु पञ्चविधꣳ सामोपास्ते ॥ २ ॥

*a*) ऐब्रा 7·7 अग्नये अप्सुमते; also in शब्रा 12·4·4·4.

॥ इति चतुर्थः खण्डः ॥

---

ऋतुँषु पञ्चविधꣳ सामोपासीत । वसन्तो हिंकारः । ग्रीष्मः प्रस्तावः । वर्षा उद्गीथः । शरत्प्रतिहारः । हेमन्तो निधनम् ॥ १ ॥

*a*) Cp जै 1·12·7; 1·35.

कल्पन्ते हास्मा ऋतव ऋँतुमान्भवति य एतदेवं विद्वानृतुषु पञ्चविधꣳ सामोपास्ते ॥ २ ॥

*a*) तैब्रा 2·6·16·1 अग्निष्वात्तानृतुमतो हवामहे; तांब्रा 14·12·9 ऋतुमन्ति पूर्वाण्यहानि.

॥ इति पञ्चमः खण्डः ॥

---

पशुँषु पञ्चविधꣳ सामोपासीत । अजा हिंकारः । अवयः प्रस्तावः । गाव उद्गीथः । अश्वाः प्रतिहारः । पुरुषो निधनम् ॥ १ ॥

*a*) सप्त ग्राम्याः पशवः with the addition of गर्दभ and अश्वतर. Cp अ 3·10·6; वासं 9·32; तैसं 7·2·2·1; तांब्रा 2·14·2 (पञ्च पशवः); अ 11·2·9 तवेमे पञ्च पशवो विभक्ता गावो अश्वाः पुरुषा अजावयः.

भवन्ति हास्य पशवः पशुमान्भवति य एतदेवं विद्वान्पशुषु पञ्चविधꣳ सामोपास्ते ॥ २ ॥

॥ इति षष्ठः खण्डः ॥

---

प्राणेषुँ पञ्चविधं परोवरीयः सामोपासीत । प्राणो हिंकारः । वाक् प्रस्तावः । चक्षुरुद्गीथः । श्रोत्रं प्रतिहारः । मनो निधनम् । परोवरीयाꣳसि वा एतानि ॥ १ ॥

*a*) जै 1·13·5.

परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेवं विद्वान्प्राणेषु पञ्चविधं परोवरीयः सामोपास्ते । इति तु पञ्चविधस्य ॥ २ ॥

॥ इति सप्तमः खण्डः ॥

---

अथ सप्तविधस्य । वाचि सप्तविधꣳ सामोपासीत । यत्किंच वाचो हुमिति स हिंकारः। यत्प्रेति स प्रस्तावः। यदेति स आदिः ॥ १ ॥

यदुदिति स उद्गीथः। यत्प्रतीति स प्रतिहारः। यदुपेति स उपद्रवः। यन्नीति तन्निधनम् ॥ २ ॥

दुग्धेऽस्मै वाग्दोहं यो वाचो दोहः। अन्नवानन्नादो भवति। य एतदेवं विद्वान्वाचि सप्तविधꣳसामोपास्ते ॥ ३ ॥

*a*) छां 1·3·7; 1·13·4.

॥ इति अष्टमः खण्डः ॥

---

अथ खल्वमुमादित्यꣳ सप्तविधꣳ सामोपासीत। सर्वदा समस्तेन साम। मां प्रति मां प्रतीति सर्वेण समस्तेन साम ॥ १ ॥

*a*) जै 1·12·5. —*b*) तैसं 6·5·4·2 सर्व एव मन्यते मां प्रति उदगादिति.

तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात्। तस्य यत्पुरोदयात्स हिंकारः। तदस्य पशवोऽन्वायत्ताः। तस्मात्ते हिं कुर्वन्ति। हिंकारभाजिनो ह्येतस्य साम्नः ॥ २ ॥

*a*) जै 1·11–12.

अथ यत्प्रथमोदिते स प्रस्तावः। तदस्य मनुष्या अन्वायत्ताः। तस्मात्ते प्रस्तुतिकामाः प्रशꣳसाकामाः। प्रस्तावभाजिनो ह्येतस्य साम्नः ॥ ३ ॥

*a*) Cp शब्रा 4·5·2·17 प्रथमावशान्तेष्वंगारेषु; जैब्रा 1·5 सुव्युष्टायाम्, अस्तमिते; तांब्रा 12·6·8 व्युष्टायाम्, अनुदित आदित्ये; नि 7·23 प्रथमसमावृत्ते आदित्ये; जै 3·14·8 स यथाण्डं प्रथमनिर्भिण्णं where प्रथम means 'just.'

अथ यत्संगववेलायाꣳ स आदिः। तदस्य वयाꣳस्यन्वायत्तानि। तस्मात्तान्यन्तरिक्षेऽनारम्बणान्यादायाऽऽत्मानं परिपतन्ति। आदिभाजीनि ह्येतस्य साम्नः ॥ ४ ॥

*a*) ऋ 5·76·3 उतायातं संगवे प्रातरह्नो मध्यंदिन उदिता सूर्यस्य; तैब्रा 1·4·9·2 त्रिरह्नः पशवः प्रेरते—प्रातः संगवे सायम्; ३·1·1·3 आ संगवं मात्रा सह चराणि. —*b*) ऋ 1·116·5 अनारम्भणे तदवीरयेथाम् अनास्थाने अग्रभणे समुद्रे; 1·182·6 अनारम्भणे तमसि प्रविद्धम्; 7·104·3 अनारम्भणे तमसि प्र विध्यतम्; बृ 3·1·6.

अथ यत्संप्रति मध्यन्दिने स उद्गीथः । तदस्य देवा अन्वायत्ताः । तस्मात्ते सत्तमाः प्राजापत्यानाम् । उद्गीथभाजिनो ह्येतस्य साम्नः ॥ ५ ॥

*a* ) शब्रा 8·6·3·11 संप्रति योनौ रेतः प्रजातिं दधाति.

अथ यदूर्ध्वं मध्यन्दिनात्प्रागपराह्णात्स प्रतिहारः । तदस्य गर्भा अन्वायत्ताः । तस्मात्ते प्रतिहृता नावपद्यन्ते । प्रतिहारभाजिनो ह्येतस्य साम्नः ॥ ६ ॥

*a* ) अ 5·17·7 ये गर्भा अवपद्यन्ते.

अथ यदूर्ध्वमपराह्णात्प्रागस्तमयात्स उपद्रवः । तदस्याऽऽरण्या अन्वायत्ताः । तस्मात्ते पुरुषं दृष्ट्वा कक्षꣳ श्वभ्रमित्युपद्रवन्ति । उपद्रवभाजिनो ह्येतस्य साम्नः ॥७॥

*a* ) ऋ 6·45·31 उरुः कक्षो न गाङ्ग्यः; 10·28·4 क्रोष्टा वराहं निरतक्त कक्षात्; वासं 16·19 नमो मंत्रिणे वाणिजाय कक्षाणां पतये नमः. —*b* ) ऋ 2·27·5 परि श्वभ्रेव दुरितानि वृज्याम्; शब्रा 5·2·3·2 स यत्र स्वकृतं वेरिणं विन्दति श्वभ्रप्रदरं वा; 11·2·3·8 अथ यदूनं चक्रुर्यथा श्वभ्राः प्रदरा एवं तदास.

अथ यत्प्रथमास्तमिते तन्निधनम् । तदस्य पितरोऽन्वायत्ताः । तस्मात्तान्निदधति । निधनभाजिनो ह्येतस्य साम्नः । एवं खल्वमुमादित्यꣳसप्तविधꣳ सामोपास्ते ॥ ८ ॥

॥ इति नवमः खण्डः ॥

---

अथ खल्वात्मसंमितमतिमृत्यु सप्तविधꣳसामोपासीत । हिंकार इति त्र्यक्षरम् । प्रस्ताव इति त्र्यक्षरम् । तत्समम् ॥ १ ॥

आदिरिति द्व्यक्षरम् । प्रतिहार इति चतुरक्षरम् । तत इहैकम् । तत्समम् ॥ २ ॥

उद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवति । अक्षरमतिशिष्यते त्र्यक्षरम् । तत्समम् ॥ ३ ॥

*a* ) छां 1·10·5; 6·7·3; 8·1·4; 8·15·1.

निधनमिति त्र्यक्षरम् । तत्सममेव भवति । तानि ह वा एतानि द्वाविꣳशतिरक्षराणि ॥ ४ ॥

एकविꣳशत्याऽऽदित्यमाप्नोति । एकविꣳशो वा इतोऽसावादित्यः । द्वाविꣳशेन परमादित्याज्जयति । तन्नाकम् । तद्विशोकम् ॥ ५ ॥

*a*) शब्रा 1·3·5·11 एकविंशतिं सामिधेनीः....एकविंशो य एष तपति. —*b*) ऋ 10·121·5 येन स्वः स्तभितं येन नाकः; शब्रा 8·4·1·24 नहि तत्र गताय कस्मै चन अकम्; तांब्रा 10·1·18 तमु नाकमित्याहुः नहि प्रजापतिः कस्मै चन अकम्; नि 2·14 कमिति सुखनाम तत्प्रतिषिद्धं प्रतिषिध्येते. —*c*) छां 8·1·5; मै 6·25; बृ 5·10·1 अशोकम्.

आप्नोतीहाऽऽदित्यस्य जयम् । परो हास्याऽऽदित्यजयाज्जयो भवति य एतदेवं विद्वानात्मसंमितमतिमृत्यु सप्तविधꣳ सामोपास्ते सामोपास्ते ॥ ६ ॥

॥ इति दशमः खण्डः ॥

---

ᵃमनो हिंकारः । वाक्प्रस्तावः । चक्षुरुद्गीथः । श्रोत्रं प्रतिहारः । प्राणो निधनम् । एतद्गायत्रं प्राणेषु प्रोतम् ॥ १ ॥

*a*) Cp छां 2·7·1 with intercharge of मनः and प्राण.

स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद । प्राणी भवति । सर्वमायुरेति । ᵃज्योग्जीवति । महान्प्रजया पशुभिर्भवति । महान्कीर्त्या । महाᵇमनाः स्यात् । तद् व्रतम् ॥ २ ॥

*a*) ऋ 1·136·6 ज्योग्जीवन्तः प्रजया सचेमहि; शब्रा 10·5·6·5 तयाप्यो भूयः प्रयच्छति ता ज्योक्तमाजीवन्ति. —*b*) ऋ 10·103·9 महामनसां देवानां जगतां घोष उदस्थात्.

॥ इत्येकादशः खण्डः ॥

---

अभिमन्थति स हिंकारः । धूमो जायते स प्रस्तावः । ज्वलति स उद्गीथः । अङ्गारा भवन्ति स प्रतिहारः । उपशाम्यति तन्निधनम् । सꣳशाम्यति तन्निधनम् । एतद्रथन्तरमग्नौ प्रोतम् ॥ १ ॥

स य एवमेतद्रथन्तरमग्नौ प्रोतं वेद । ब्रह्मवर्चस्यन्नादो भवति । सर्वमायुरेति । ज्योग्जीवति । महान् प्रजया पशुभिर्भवति । महान् कीर्त्या । न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत् । तद्व्रतम् ॥ २ ॥

॥ इति द्वादशः खण्डः ॥

---

उपमन्त्रयते[a] स हिंकारः । ज्ञपयते स प्रस्तावः । स्त्रिया सह शेते स उद्गीथः । प्रति स्त्रीं सह शेते[b] स प्रतिहारः । कालं गच्छति तन्निधनम् । पारं गच्छति तन्निधनम् । एतद्वामदेव्यं मिथुने प्रोतम् ॥ १ ॥

*a*) ऋ 9·112·4 हसनामुपमंत्रिणः; शब्रा 3·2·1·19 तस्मादु स्त्री पुंसोपमंत्रिताऽऽरकादेवाग्रे असूयति; पा 1·3·47 भासन .... उपमंत्रणेषु वदः. —*b*) ऋ 10·10·7 समाने योनौ सहशेय्याय; अ 18·1·8.

स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद । मिथुनी भवति । मिथुनान्मिथुनात्प्रजायते । सर्वमायुरेति । ज्योग्जीवति । महान्प्रजया पशुभिर्भवति । महान्कीर्त्या । न[a] कांचन परिहरेत् । तद्व्रतम् ॥ २ ॥

*a*) Beginnings of तांत्रिक philosophy.

॥ इति त्रयोदशः खण्डः ॥

---

उद्यन्[a]हिंकारः । उदितः प्रस्तावः । मध्यन्दिन उद्गीथः । अपराह्णः प्रतिहारः । अस्तं यन्निधनम् । एतद्बृहदादित्ये प्रोतम् ॥ १ ॥

*a*) अ 9·6·46 तस्मा उद्यन्त्सूर्यो हिंकृणोति.

स य एवमेतद्बृहदादित्ये प्रोतं वेद । तेजस्व्यन्नादो भवति । सर्वमायुरेति । ज्योग्जीवति । महान् प्रजया पशुभिर्भवति । महान्कीर्त्या । तपन्तं न निन्देत् । तद्व्रतम् ॥ २ ॥

॥ इति चतुर्दशः खण्डः ॥

---

अभ्राणि[a] संप्लवन्ते स हिंकारः । मेघो जायते स प्रस्तावः । वर्षति स उद्गीथः । विद्योतते स्तनयति स प्रतिहारः । उद्गृह्णाति तन्निधनम् । एतद्वैरूपं पर्जन्ये प्रोतम् ॥ १ ॥

*a*) अ 9·6·47 तस्मा अभ्रो भवन् हिंकृणोति. Cp छां 2·3·4.

स य एवमेतद्वैरूपं पर्जन्ये प्रोतं वेद । विरूपांश्च सुरूपांश्च पशूनवरुन्धे । सर्वमायुरेति । ज्योग्जीवति । महान्प्रजया पशुभिर्भवति । महान् कीर्त्या । वर्षन्तं न निन्देत् । तद्व्रतम् ॥ २ ॥

॥ इति पञ्चदशः खण्डः ॥

वसँन्तो हिंकारः। ग्रीष्मः प्रस्तावः। वर्षा उद्गीथः। शरत् प्रतिहारः। हेमन्तो निधनम्। एतद्वैराजमृतुषु प्रोतम् ॥ १ ॥

*a*) शब्रा 2·2·3·9 यदैव उदेति अथ वसन्तः ... Cp छां 2·5.

स य एवमेतद्वैराजमृतुषु प्रोतं वेद। विराजति प्रजया। पशुभिर्ब्रह्मवर्चसेन। सर्वमायुरेति। ज्योग्जीवति। महान्प्रजया पशुभिर्भवति। महान् कीर्त्या। ऋतून्न निन्देत्। तद्व्रतम् ॥ २ ॥

॥ इति षोडशः खण्डः ॥

---

पृथिवी हिंकारः। अन्तरिक्षं प्रस्तावः। द्यौँरुद्गीथः। दिशः प्रतिहारः। समुद्रो निधनम्। एताः शँक्वर्यो लोकेषु प्रोताः ॥ १ ॥

*a*) ऋ 7·33·4 यच्छक्करीषु बृहता रवेण; 10·71·11 गायत्रं त्वो गायति शक्करीषु; अ 13·1·5 कामं दुहायामिह शकरीभिः; नि 1·8 शक्वर्य ऋचः शक्नोतेः.

स य एवमेताः शक्वर्यो लोकेषु प्रोता वेद। लोकी भवति। सर्वमायुरेति। ज्योग्जीवति। महान्प्रजया पशुभिर्भवति। महान्कीर्त्या। लोकान्न निन्देत्। तद्व्रतम् ॥ २ ॥

*a*) शब्रा 11·8·4·5 न मम लोकी त्वहं भविष्यामि; मुं 2·2·2.

॥ इति सप्तदशः खण्डः ॥

---

अजा हिंकारः। अवयः प्रस्तावः। गाव उद्गीथः। अश्वाः प्रतिहारः। पुरुषो निधनम्। एता रेवँत्यः पशुषु प्रोताः ॥ १ ॥

*a*) ऋ 1·30·13 रेवतीः नः सधमादः सन्तु; अ 13·1·5 तस्मै ते द्यावापृथिवी रेवतीभिः.

स य एवमेता रेवत्यः पशुषु प्रोता वेद। पशुमान्भवति। सर्वमायुरेति। ज्योग्जीवति। महान्प्रजया पशुभिर्भवति। महान्कीर्त्या। पशून्न निन्देत्। तद्व्रतम् ॥२॥

॥ इत्यष्टादशः खण्डः ॥

---

लोम हिंकारः। त्वक् प्रस्तावः। माꣳसमुद्गीथः। अस्थि प्रतिहारः। मज्जा निधनम्। एतद्यज्ञायज्ञीयमङ्गेषु प्रोतम् ॥ १ ॥

*a*) Cp ऋ 1·168·1 यज्ञायज्ञा वः समना तु तुर्वणिः; 6·48·1 यज्ञायज्ञा वो अग्नये गिरागिरा च दृक्षसे.

स य एवमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतं वेद। अङ्गी भवति। नाङ्गेन विहूर्छति। सर्वमायुरेति। ज्योग्जीवति। महान्प्रजया पशुभिर्भवति। महान्कीर्त्या। संवत्सरं मज्ज्ञो नाश्नीयात्। तद्व्रतम्। मज्ज्ञो नाश्नीयादिति वा ॥ २ ॥

*a*) कासं 25·5 यं द्विष्यात्तस्य ह्वर्छयेत्; 32·6 न यज्ञाद् ह्वर्छति, न अस्माद्यज्ञो ह्वर्छति.

॥ इत्येकोनविंशः खण्डः ॥

---

अग्निर्हिंकारः। वायुः प्रस्तावः। आदित्य उद्गीथः। नक्षत्राणि प्रतिहारः। चन्द्रमा निधनम्। एतद्राजनं देवतासु प्रोतम् ॥ १ ॥

स य एवमेतद्राजनं देवतासु प्रोतं वेद। एतासामेव देवतानाꣳ सलोकताꣳ सार्ष्टिताꣳ सायुज्यं गच्छति। सर्वमायुरेति। महान्प्रजया पशुभिर्भवति। महान्कीर्त्या। ब्राह्मणान्न निन्देत्। तद्व्रतम् ॥ २ ॥

*a*) तैब्रा 3·9·20·2 एतासामेव देवतानां सायुज्यं सार्ष्टितां समानलोकतामाप्नोति; तांब्रा 25·18·6 ब्रह्मणः सलोकतां सार्ष्टितां सायुज्यं गच्छन्ति.

॥ इति विंशः खण्डः ॥

---

त्रयी विद्या हिंकारः। त्रय इमे लोकाः स प्रस्तावः। अग्निर्वायुरादित्यः स उद्गीथः। नक्षत्राणि वयाꣳसि मरीचयः स प्रतिहारः। सर्पा गन्धर्वाः पितरस्तन्निधनम्। एतत्साम सर्वस्मिन्प्रोतम् ॥ १ ॥

Cp in general जै 1·19·2.

*a*) छां 3·15·6.

स य एवमेतत्साम सर्वस्मिन्प्रोतं वेद सर्वꣳह भवति ॥ २ ॥

*a*) बृ 3·6·1; 3·8·7; छां 2·11–16.

तदेष श्लोकः[1]।

यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति ॥ ३ ॥

1) In this verse the metrical scheme seems to be 9–11, 9–11 syllables. Bohtlingk substitutes सन्ति for the second त्रीणि.

*a*) बृ 2·3·6.

यस्तद्वेद स वेद सर्वम् । सर्वा दिशो बलिमस्मै हरन्ति । सर्वमस्मीत्युपासीत । तद्व्रतं तद्व्रतम् ॥ ४ ॥

*a*) ऋ 1·70·5 भरन्ति विश्वे बलिम् ...; 5·1·10 तुभ्यं भरन्ति क्षितयो बलिम् ; 7·18·19 बलिं जभ्रुरश्व्यानि शीर्षाणि; 7·6·5 विशश्चक्रे बलिहृतः सहोभिः.

॥ इत्येकविंशः खण्डः ॥

---

विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथः । अनिरुक्तः प्रजापतेः । निरुक्तः सोमस्य । मृदु श्लक्ष्णं वायोः । श्लक्ष्णं बलवदिन्द्रस्य । क्रौञ्चं बृहस्पतेः । अपध्वान्तं वरुणस्य । तान्सर्वानेवोपसेवेत । वारुणं त्वेव वर्जयेत् ॥ १ ॥

*a*) ऐब्रा 6·32 नी वीव नर्दत् स तासां न्यूङ्खः; तांब्रा 7·1·3 द्विरक्नर्दत् हिंकुर्यात्तृतीयम्. —*b*) जै 1·37, 51, 52. —*c*) अ 20·133·5 श्लक्ष्णायां श्लक्ष्णिकायां श्लक्ष्णमेवावगूहसि. शब्रा 4·1·5·19 श्लक्ष्णानि पात्राणि भवन्ति; 9·1·2·40 असौ वा आदित्यो हृदयं श्लक्ष्णः; तांब्रा 2·2·3 श्लक्ष्णेव तु वा ईश्वरा पशूनिमृजः; पा 2·1·33 पूर्वसदृशसमानार्थकलहनिपुणमिश्रश्लक्ष्णैः. —*d*) ऋ 8·6·13 यदस्य मन्युरध्वनीत्; 10·73·11 अप ध्वान्तं ऊर्णुहि; जै 1·52·8; पा 7·2·18 ध्वान्त...तमः.

अमृतत्वं देवेभ्य आगायानीत्यागायेत् । स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मन आगायानीत्येतानि मनसा ध्यायन्नप्रमत्तः स्तुवीत ॥ २ ॥

*a*) Is it प्रजामृतत्वम्? Cp अ 11·1·34 प्रजामृतत्वमुत दीर्घमायुः; ऋ 5·4·10 प्रजाभिरग्ने अमृतत्वमश्याम्; तैब्रा 1·5·5·6 प्रजामनु प्रजायसे तदु ते मर्त्य अमृतम्; प्र 3·11 न ह्यस्य प्रजा हीयते अमृतो भवति.

सर्वे स्वरा इन्द्रस्याऽऽत्मानः । सर्व ऊष्माणः प्रजापतेरात्मानः । सर्वे स्पर्शा मृत्योरात्मानः । तं यदि स्वरेषूपालभेत । इन्द्रꣳ शरणं प्रपन्नोऽभूवं स त्वा प्रति वक्ष्यतीत्येनं ब्रूयात् ॥ ३ ॥

*a*) ऋप्रा 1·11 अष्टौ समानाक्षराणि ...... एते स्वराः; तैप्रा 1·5 षोडश आदितः स्वराः; अप्रा 1·93 स्वरो अक्षरम्; तै 1·2; छां 1·4·3; 1·4·8; 1·8·4; बृ 1·3·25. —*b*) ऋप्रा 1·12 तत उत्तरे अष्टा ऊष्माणः. —*c*) ऋप्रा 1·12 तेषामाद्याः स्पर्शाः पञ्च ते पञ्चवर्गाः.

अथ यद्येनमूष्मसूपालभेत । प्रजापतिꣳ शरणं प्रपन्नोऽभूवं स त्वा प्रति पेक्ष्यतीत्येनं ब्रूयात् । अथ यद्येनꣳ स्पर्शेषूपालभेत । मृत्युꣳ शरणं प्रपन्नोऽभूवं स त्वा प्रति धक्ष्यतीत्येनं ब्रूयात् ॥ ४ ॥

*a*) नि 3·21 पिनाकं, प्रतिपिनष्ट्यनेन (although the etymology of यास्क is wrong).

सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं ददानीति । सर्वे ऊष्माणोऽग्रस्ता अनिरस्ता विवृता वक्तव्याः प्रजापतेरात्मानं परिददानीति । सर्वे स्पर्शा लेशेनानभिनिहिता[1] वक्तव्या मृत्योरात्मानं परिहराणीति ॥ ५ ॥

1) Böhtlingk suggests अभिनिहिताः.

*a*) जैब्रा 3·105 एते...ऐन्द्रा घोषाः; ऐआ 2·2·2 सर्वे घोषा एकैव व्याहृतिः; ऋप्रा 13·5 आहुर्वोषं घोषवतामकारम्. —*b*) तै 1·2. —*c*) अप्रा 1·31; तैप्रा 2·5. —*d*) ऋप्रा 14·5 लेशेन वा वचनं पीडनं वा; वाप्रा 10·23 लेशो वात्सप्रस्य एतयोः; अप्रा 2·24 लेशवृत्तिराधिस्पर्शं शाकटायनस्य. —*e*) ऋप्रा 2·13 अथाभिनिहितः संधिः...एकीभवति; वाप्रा 1·114 एकोदृभ्यामकारो लुगभिनिहितः; अप्रा 3·55 एकारौकारौ पदान्तौ परतः अकारं सोऽभिनिहितः.

॥ इति द्वाविंशः खण्डः ॥

---

त्रयो धर्मस्कन्धाः । यज्ञोऽध्ययनं दानमिति प्रथमः । तप एव द्वितीयः । ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्[1] । सर्व एते पुण्यलोका भवन्ति । ब्रह्मसꣳस्थोऽमृतत्वमेति ॥ १ ॥

1) Böhtlingk wants to remove अत्यन्तम्...अवसादयन् as mere gloss.

*a*) ऋ 1·32·5 स्कन्धांसीव कुलिशेना विवृक्णा; अ 6·135·1 स्कन्धानमुष्य शातयन्; 10·7·38 वृक्षस्य स्कन्धः परित इव शाखाः; तैसं 7·3·20·1 स्कन्धोभ्यः स्वाहा, शाखाभ्यः स्वाहा, पर्णेभ्यः... पुष्पेभ्यः... फलेभ्यः स्वाहा. —*b*) Cp बृ 4·4·22; बृ 6·2·15; के 4·8; क 2·15; मुं 2·1·7; छां 5·10·1; 8·15. —*c*) श्वे 6·21; ब्रसू 3·4·18–20; मनु 2·243 आत्यन्तिकं वसेत्. —*d*) शब्रा 3·6·2·15 पुण्यलोक ईजान इति; तांब्रा 12·1·22 स्वर्गलोकः पुण्यलोको भवति. —*e*) Cp श्वे 1·12 आत्मसंस्थम्. Cp ब्रह्मनिष्ठ in मुं 1·2·12; 3·2·10; प्र 1·1.

प्रजापतिर्लोकानभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रयी विद्या संप्रास्रवत् । तामभ्यतपत् । तस्या अभितप्ताया एतान्यक्षराणि संप्रास्रवन्त भूर्भुवः स्वरिति ॥ २ ॥

Cp in general ऐब्रा 5·32; शब्रा 11·5·8; छां 4·17·1–3; जै 3·15.

तान्यभ्यतपत् । तेभ्योऽभितप्तेभ्य ओंकारः संप्रास्रवत् । तद्यथा शंकुना सर्वाणि पर्णानि संतृण्णान्येवमोंकारेण सर्वा वाक्संतृण्णा । ओंकार एवेदँ सर्वमोंकार एवेदँ सर्वम् ॥ ३ ॥

*a*) ऋ 1·164·48 तस्मिन्त्साकं त्रिशता न शंकवः; शब्रा 2·1·1·10 शंकुभिश्चर्म विहन्यात्; छां 5·1·12 (पड्वीशशंकून्); बृ 6·1·13 (पड्वीशशंकून्). —*b*) Cp शब्रा 3·5·3·7 तस्मादयं पुरुष आन्तं संतृण्णः; 3·5·4·14 तस्मादिमे प्राणाः परः संतृण्णाः; 11·2·6·4 तस्मादिदं श्रोत्रमन्तः संतृण्णम्; जै 1·10·3.

॥ इति त्रयोविंशः खण्डः ॥

---

ब्रह्मवादिनो वदन्ति । यद्वसूनां प्रातःसवनम् । रुद्राणां माध्यन्दिनँ सवनम् । आदित्यानां च विश्वेषां च देवानां तृतीयसवनम् ॥ १ ॥

*a*) श्वे 2·1; 3·21; बृ 4·5·1 ब्रह्मवादिनी. —*b*) छां 3·16.

क्व तर्हि यजमानस्य लोक इति । स यस्तं न विद्यात् कथं कुर्यात् । अथ विद्वान्कुर्यात् ॥ २ ॥

*a*) छां 1·1·10 यदेव विद्यया करोति.

पुरा प्रातरनुवाकस्योपाकरणाज्जघनेन गार्हपत्यस्योदङ्मुख उपविश्य स वासवँ सामाभिगायति ॥ ३ ॥

*a*) ऐब्रा 2·15 प्रजापतौ वै स्वयंहोतरि प्रातरनुवाकं वक्ष्यति.

लो३कद्वारमपावा३र्णू ३ ३ । पश्येम त्वा वयँ रा ३ ३ ३ ३ ३ हु३म् आ ३ ३ ज्या ३ यो ३ आ ३ २ १ १ १ इति ॥ ४ ॥

*a*) Cp छां 1·12·5; 2·24·8,12,13. —*b*) I. e. राज्याय; cp वैराज्याय स्वाराज्याय. छां 2·24·8,12,13; ऐब्रा 8·14 स्वाराज्यं वैराज्यं राज्यम्.

अथ जुहोति । नमोऽग्नये पृथिवीक्षिते लोकक्षिते । लोकं मे यजमानाय विन्द । एष वै यजमानस्य लोकः । एताऽस्मि ॥ ५ ॥

अत्र यजमानः परस्तादायुषः स्वाहा । अपजहि परिघमित्युक्त्वोत्तिष्ठति । तस्मै वसवः प्रातःसवनँ संप्रयच्छन्ति ॥ ६ ॥

*a*) छां 2·24·15; पा 3·3·84 परौ घः. Cp शब्रा 10·5·2·6 अग्निं नाद्रियेत परिहन्तुम्.

पुरा माध्यन्दिनस्य सवनस्योपाकरणाज्जघनेनाऽऽग्नीध्रीयस्योदङ्मुख उपविश्य स रौद्रꣳ सामाभिगायति ॥ ७ ॥

लो३कद्वारमपावा३र्णू३३ । पश्येम त्वा वयं वैँरा ३३३३३ हु३म् आ ३३ ज्या३यो ३ आ ३२१११ इति ॥ ८ ॥

*a*) I. e. वैराज्याय.

अथ जुहोति । नमो वायवेऽन्तरिक्षक्षिते लोकक्षिते । लोकं मे यजमानाय विन्द । एष वै यजमानस्य लोकः । एताऽस्मि ॥ ९ ॥

अत्र यजमानः परस्तादायुषः स्वाहा । अपजहि परिघमित्युक्त्वोत्तिष्ठति । तस्मै रुद्रा माध्यन्दिनꣳ सवनꣳ संप्रयच्छन्ति ॥ १० ॥

पुरा तृतीयसवनस्योपाकरणाज्जघनेनाऽऽहवनीयस्योदङ्मुख उपविश्य स आदित्यꣳ स वैश्वदेवꣳ सामाभिगायति ॥ ११ ॥

लो३कद्वारमपावा३र्णू३ ३ । पश्येम त्वा वयꣳ स्वाँरा ३३३३३ हु३म् आ ३३ ज्या ३ यो ३ आ ३२१११ इत्यादित्यम् ॥ १२ ॥

*a*) I. e. स्वाराज्याय.

अथ वैश्वदेवम् । लो३कद्वारमपावा३र्णू ३३ । पश्येम त्वा वयꣳ साम्राँ ३३३३३ हु३म् आ ३३ ज्या३ यो३ आ ३२१११ इति ॥ १३ ॥

*a*) I. e. साम्राज्याय.

अथ जुहोति । नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यः । लोकं मे यजमानाय विन्दत ॥ १४ ॥

एष वै यजमानस्य लोकः । एताऽस्म्यत्र यजमानः परस्तादायुषः स्वाहा । अपहत परिघमित्युक्त्वोत्तिष्ठति ॥ १५ ॥

तस्मा आदित्याश्च विश्वे च देवास्तृतीयसवनꣳ संप्रयच्छन्ति । एष ह वै यज्ञँस्य मात्रां वेद य एवं वेद य एवं वेद ॥ १६ ॥

*a*) ऋ 10·71·11 यज्ञस्य मात्रां वि मिमीत उ त्वः.

॥ इति चतुर्विंशः खण्डः ॥

॥ इति द्वितीयोऽध्यायः ॥

———

असौ वा आदित्यो देवमधु । तस्य द्यौरेव तिरश्चीनवꣳशः । अन्तरिक्षमपूपः । मरीचयः पुत्राः ॥ १ ॥

Cp in general छां 3·1–11 with छां 1·6–7; तै 2·8; 3·10; बृ 5·5.

*a*) ऋ 10·45·9 अपूपं घृतवन्तम्; अ 18·3·68 अपूपापिहितान्कुम्भान्...स्वधावन्तो मधुमन्तो घृतश्चुतः.

तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्यः । ऋच एव मधुकृतः । ऋग्वेद एव पुष्पम् । ता अमृता आपः । ता वा एता ऋचः ॥ २ ॥

*a*) छां 3·5·4; 3·6·1.

एतमृग्वेदमभ्यतपन् । तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ ३ ॥

*a*) छां 3·13·1.

तद्व्यक्षरत् । तदादित्यमभितोऽश्रयत् । तद्वा एतद्यदेतदादित्यस्य रोहितꣳ रूपम् ॥ ४ ॥

॥ इति प्रथमः खण्डः ॥

---

अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यः । यजूꣳष्येव मधुकृतः । यजुर्वेद एव पुष्पम् । ता अमृता आपः ॥ १ ॥

तानि वा एतानि यजूꣳष्येतं यजुर्वेदमभ्यतपन् । तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥

तद्व्यक्षरत् । तदादित्यमभितोऽश्रयत् । तद्वा एतद्यदेतदादित्यस्य शुक्लꣳ रूपम् ॥ ३ ॥

॥ इति द्वितीयः खण्डः ॥

---

अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः । सामान्येव मधुकृतः । सामवेद एव पुष्पम् । ता अमृता आपः ॥ १ ॥

तानि वा एतानि सामान्येतꣳ सामवेदमभ्यतपन् । तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥

तद्व्यक्षरत् । तदादित्यमभितोऽश्रयत् । तद्वा एतद्यदेतदादित्यस्य कृष्णꣳ रूपम् ॥ ३ ॥

॥ इति तृतीयः खण्डः ॥

---

अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्यः। अथर्वाङ्गिरस एव मधुकृतः। इतिहासपुराणं पुष्पम्। ता अमृता आपः ॥ १ ॥

ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपन्। तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥

तद्व्यक्षरत्। तदादित्यमभितोऽश्रयत्। तद्वा एतद्यदेतदादित्यस्य परःकृष्णꣳ रूपम् ॥ ३ ॥

*a*) परःकृष्णम् as one word; cp छां 1·6·6; cp शब्रा 3·4·4·26 परउर्वीः वा अन्या उपसदः परोह्वीः अन्याः.

॥ इति चतुर्थः खण्डः ॥

---

अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यः। गुह्या एवाऽऽदेशा मधुकृतः। ब्रह्मैव पुष्पम्। ता अमृता आपः ॥ १ ॥

*a*) शब्रा 10·4·5·1 अथादेशा उपनिषदाम्; बृ 3·3·6; के 4·4.

ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतपन्। तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥

तद्व्यक्षरत्। तदादित्यमभितोऽश्रयत्। तद्वा एतद्यदेतदादित्यस्य मध्ये क्षोभत इव ॥ ३ ॥

ते वा एते रसानाꣳ रसाः। वेदा हि रसाः। तेषामेते रसाः। तानि वा एतान्यमृतानाममृतानि। वेदा ह्यमृताः। तेषामेतान्यमृतानि ॥ ४ ॥

*a*) बृ 2·1·20 सत्यस्य सत्यम्.

॥ इति पञ्चमः खण्डः ॥

---

तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन। न वै देवा अश्नन्ति न पिबन्ति। एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्ति। एतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति। स एतदेव रूपमभिसंविशति। एतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥

॥ इति षष्ठः खण्डः ॥

---

अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन। न वै देवा अश्नन्ति न पिबन्ति। एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्ति। एतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति। स एतदेव रूपमभिसंविशति। एतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥

॥ इति सप्तमः खण्डः ॥

---

अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन। न वै देवा अश्नन्ति न पिबन्ति। एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्ति। एतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेदाऽऽदित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति। स एतदेव रूपमभिसंविशति। एतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत्पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥

॥ इति अष्टमः खण्डः ॥

---

अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन। न वै देवा अश्नन्ति न पिबन्ति। एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्ति। एतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति। स एतदेव रूपमभिसंविशति। एतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥

॥ इति नवमः खण्डः ॥

---

अथ यत्पञ्चमममृतं तत्साध्या उपजीवन्ति ब्रह्मणा मुखेन। न वै देवा अश्नन्ति न पिबन्ति। एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्ति। एतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति। स एतदेव रूपमभिसंविशति। एतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्वमुदेताऽर्वागस्तमेता साध्यानामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥

॥ इति दशमः खण्डः ॥

---

अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता। तदेष श्लोकः ॥ १ ॥

न वै तत्र न निम्लोच[1] नोदियाय कदाचन।
देवास्तेनाहꣳ सत्येन मा विराधिषि[a] ब्रह्मणेति ॥ २ ॥

1) Read निमुम्लोच (Böhtlingk). This seems to be the correct reading which underwent the following transformations: नि निम्लोच (Cp ऐब्रा 7·16 तं स निनियोज — for नियुयोज) and secondly न निम्लोच. BR suggest the reading निमि-(मु ?) म्लोच; रंगरामानुज says: निम्लोच इति छान्दसो द्विर्वचनाभावः.

*a*) अ 1·1·4 मा श्रुतेन विराधिषि; 3·29·8 माहं प्राणेन...विराधिषि; तांब्रा 15·12·7 नाहं एकस्मादक्षराद्विराधयन्ति.

[a]न ह वा अस्मा उदेति न निम्लोचति । सकृद्दिवा[b] हैवास्मै भवति । य एतामेव ब्रह्मोपनिषदं वेद ॥ ३ ॥

*a*) ऐब्रा 3·44 स वा एष न कदाचन अस्तमेति नोदेति......न कदाचन निम्रोचति; छां 8·4·1–2; बृ 4·3·14; क 5·15; श्वे 4·18; मै 6·24. —*b*) तांब्रा 8·1·3 दिवेति निधनमुपयन्ति व्युष्टिर्वै दिवा; 12·6·8 एतद्वै न नक्तं न दिवा.

तद्धैतद् ब्रह्मा प्रजापतय उवाच । प्रजापतिर्मनवे । मनुः प्रजाभ्यः । तद्धैतदुद्दालकायाऽऽरुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच ॥ ४ ॥

इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्याय[1][a] वाऽन्तेवासिने[b] ॥ ५ ॥

1 ) v. l. प्राणाय्याय.

*a* ) Cp पा 3·1·128 प्रणाय्योऽसंमतौ. See काशिका for resolution of conflicting meanings. —*b*) शब्रा 5·1·5·17 अन्तेवासी वा ब्रह्मचारी; जैब्रा 1·296 तमु ह अन्तेवासिन ईक्षांचक्रिरे; 2·55 ह्वत्स्वाशय आल्लकेयो धौम्यस्यान्तेवासी आस; छां 4·10·1; बृ 6·3·12; तै 1·11; पा 4·3·104 कलापिवैशंपायनान्तेवासिभ्यः; 6·2·36 आचार्योपसर्जनश्चान्तेवासी.

नान्यस्मै कस्मैचन । यद्यप्यस्मा इमामद्भिः परिगृहीतां[a] धनस्य पूर्णां[b] दद्यादेतदेव ततो भूय इत्येतदेव ततो भूयँ इति ॥ ६ ॥

*a* ) ऐब्रा 8·15 पृथिव्यै समुद्रपर्यन्ताया एकराट्. —*b* ) तै 2·7. —*c* ) जैब्रा 2·75 पूर्णां पृथिवीं प्रतिगृह्णीयात्, एकमेव तस्याक्षरं ज्यायः.

॥ इति एकादशः खण्डः ॥

---

गायत्री वा इदꣳ सर्वं भूतं यदिदं किंच । वाग्वै गायत्री । वाग्वा इदꣳ सर्वं भूतं गायति[a] च त्रायते च ॥ १ ॥

Cp in general बृ 5·14.

*a* ) Popular etymology ! Really गायत्र is a formation like यजत्र, पतत्र, संस्कृतत्र, कृन्तत्र, वधत्र, अमत्र in ऋ.

या वै सा गायत्रीयं वाव सा येयं पृथिवी । अस्याꣳ हीदꣳ सर्वं भूतं प्रतिष्ठितम् । एतामेव नातिशीयते ॥ २ ॥

या वै सा पृथिवीयं वाव सा यदिदमस्मिन् पुरुषे शरीरम् । अस्मिन्हीमे प्राणाः प्रतिष्ठिताः । एतदेव नातिशीयन्ते ॥ ३ ॥

*a*) छां 1·2·1; 2·7·1 ( where प्राणाः = पञ्चेन्द्रियाणि ); 3·13·1 ( where प्राणाः are *breaths* ); 3·15·4.

यद्वै तत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे हृदयम् । अस्मिन्हीमे प्राणाः प्रतिष्ठिताः । एतदेव नातिशीयन्ते ॥ ४ ॥

सैषा चतुष्पदा षड्विधा गायत्री । तदेतदृचाऽभ्यनूक्तम् ॥ ५ ॥

तावानस्य महिमा ततो ज्यायांश्च पूरुषः ।

पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति ॥ ६ ॥

*a*) Cp ऋ 10·90·3 with slight changes. —*b*) Cp अ 9·10·19 त्रिपाद् ब्रह्म पुरुरूपं वि तष्ठे ( *sic* ).

यद्वै तद् ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशः । यो वै स बहिर्धा पुरुषादाकाशः ॥ ७ ॥

*a*) बृ 2·1·5; 3·7·12; 5·1·1; छां 3·18·1; 4·10·5; 8·1·1; कौ 4·7.

अयं वाव स योऽयमन्तः पुरुष आकाशः । यो वै सोऽन्तः पुरुष आकाशः ॥ ८ ॥

अयं वाव स योऽयमन्तर्हृदय आकाशः । तदेतत्पूर्णमप्रवर्ति । पूर्णामप्रवर्तिनीꣳ श्रियं लभते य एवं वेद ॥ ९ ॥

*a*) बृ 2·1·5; कौ 4·6.

॥ इति द्वादशः खण्डः ॥

---

तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः । स योऽस्य प्राङ् सुषिः स प्राणः । तच्चक्षुः । स आदित्यः । तदेतत्तेजोऽन्नाद्यमित्युपासीत । तेजस्व्यन्नादो भवति य एवं वेद ॥ १ ॥

*a*) बृ 1·5·3; 3·9·26; छां 3·12·4; 5·19–23; 8·6·1; तै 1·7; प्र 3·5; 4·4; मै 2·6; 6·4; 6·9; 6·33; 7·15. —*b*) ऋ 8·69·12 सूर्म्यं सुषिरामिव; कासं 19·1 एतं लोकमन्वचरत् यत्सुषिः...वैणवी सुषिरा भवति; पा 5·2·107 ऊष-सुषि-मुष्क-मधो रः.

अथ योऽस्य दक्षिणः सुषिः स व्यानः । तच्छ्रोत्रम् । स चन्द्रमाः । तदेतच्छ्रीश्च यशश्चेत्युपासीत । श्रीमान्यशस्वी भवति य एवं वेद ॥ २ ॥

अथ योऽस्य प्रत्यङ् सुषिः सोऽपानः । सा वाक् । सोऽग्निः । तदेतद्ब्रह्मवर्चसमन्नाद्यमित्युपासीत । ब्रह्मवर्चस्यन्नादो भवति य एवं वेद ॥ ३ ॥

अथ योऽस्योदङ् सुषिः स समानः । तन्मनः । स पर्जन्यः । तदेतत्कीर्तिश्च व्युष्टिश्चेत्युपासीत । कीर्तिमान् व्युष्टिमान् भवति य एवं वेद ॥ ४ ॥

अथ योऽस्योर्ध्वः सुषिः स उदानः । स वायुः । स आकाशः[a] । तदेतदोजश्च महश्चेत्युपासीत । ओजस्वी महस्वान् भवति य एवं वेद ॥ ५ ॥

*a*) Deussen rightly proposes the dropping of स आकाशः and the insertion of सा त्वक् before स वायुः; cp छां 5·23·2.

ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः । स य एतानेवं पञ्च ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान् वेदास्य कुले वीरो जायते । प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद ॥ ६ ॥

अथ यदतः परो[a] दिवो ज्योतिर्दीप्यते विश्वतःपृष्ठेषु सर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्[b]न्तः पुरुषे ज्योतिः । तस्यैषा दृष्टिर्यत्रैतदस्मिञ्छरीरे[c] सꣳस्पर्शेनोष्णिमानं विजानाति । तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथु-रिवाग्नेरि[d]व ज्वलत उपशृणोति । तदेतद् दृष्टं च श्रुतं चेत्युपासीत । चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद ॥ ७ ॥

*a*) बृ 4·3·2–7; 4·4·16; छां 8·3·4; 8·12·3; क 5·15; मुं 2·2·9–10; प्र 6·5; श्वे 6·14; जै 1·43·10; ब्रसू 1·1·24. —*b*) छां 8·1·3. —*c*) बृ 5·9. —*d*) शब्रा 8·1·4·9 स्फोटतोहं एकः पक्षयोरुपशुश्राव; ऐआ 3·2·4 अग्नेरिव प्रज्वलतो रथस्येवोपब्दिः.

॥ इति त्रयोदशः खण्डः ॥

---

सर्वं[a] खल्विदं ब्रह्म[a] तज्जलानि[b]ति शान्त उपासीत । अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति । स क्रतुं कुर्वीत ॥ १ ॥

*a*) छां 3·14·4; बृ 1·4·10; 2·5·19; 6·1; तै 2·8; ऐ 3·3; मै 4·6. —*b*) On the form जलान्–इति, cp अ 10·8·6 गुहा जरन्नाम; जरत् has become चरम् in मुं 2·2·1. Has जरत् become जलन् (ल for र) and then by प्लुत जला३न् इति ? Cp छां 4·15·2 (संयद्वाम); बृ 2·3·6 (नेति नेति); बृ 5·2 (ददद); बृ 5·12 (विरम्); बृ 6·3·5 (आमंसि आमंहि ते माहि); ऐ 1·3·14 (इदंद्र); के 4·6 (तद्वनम्); क 1·17 (ब्रह्मजज्ञम्); बृ 2·1·20 (सत्यस्य सत्यम्). —*c*) Cp in general शब्रा 10·6·3; also *Plotinus*, Enneads 5·1·2.

मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तो[b]ऽवाक्यनादरः ॥ २ ॥

*a*) छां 7·25·2; मुं 2·2·11. —*b*) Only here in Vedic literature.

एष म आत्माऽन्तर्हृदयेऽणीयान्व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा। एष म आत्माऽन्तर्हृदये ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः ॥ ३ ॥

*a*) Cp in general जै 4·24·13. —*b*) छां 3·13·7; 8·1·3; बृ 3·7·3; क 2·8; 2·20; श्वे 3·20; मुं 2·2·9; गी 8·9.

सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः। एष म आत्माऽन्तर्हृदये। एतद् ब्रह्म। एतमितः प्रेत्याभिसंभवितास्मीति यस्य स्यादद्धा न विचिकित्साऽस्ति। इति ह स्माऽऽह शाण्डिल्यः शाण्डिल्यः ॥ ४ ॥

*a*) कौ 1·6; क 3·1; 6·5. —*b*) छां 4·15·5; 5·10·3; 8·13·1; बृ 6·2·15; कौ 2·14. —*b*) ऋ 3·54·5; 10·129·6 को अद्धा वेद. —*c*) शब्रा 2·2·4·9 तद्धैतत् विचिकित्सायै जन्म; बृ 1·5·3; क 1·20; तै 1·11.

॥ इति चतुर्दशः खण्डः ॥

---

अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति।
दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलम् ॥
स[1] एष कोशो वसुधानस्तस्मिन्विश्वमिदꣳश्रितम् ॥ १ ॥

1) Omit सः *metri causa*.

*a*) Cp ऋ 7·18·17 अव स्रक्तीर्वेशयावृश्चदिंद्रः; 8·76·12 नवस्राक्तिमृतस्पृशम्. —*b*) अ 11·2·11 उरुः कोशो वसुधानस्तवायम्; 12·1·6 विश्वंभरा वसुधानी प्रतिष्ठा.

तस्य प्राची दिग्जुहूर्नाम। सहमाना नाम दक्षिणा। राज्ञी नाम प्रतीची। सुभूता नामोदीची। तासां वायुर्वत्सः। स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदꣳरोदिति। सोऽहमेतमेवं वायुं दिशां वत्सं वेद। मा पुत्ररोदꣳरुदम् ॥ २ ॥

*a*) कौ 2·8.

अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना। प्राणं प्रपद्येऽमुनाऽमुनाऽमुना। भूः प्रपद्येऽमुनाऽमुनाऽमुना। भुवः प्रपद्येऽमुनाऽमुनाऽमुना। स्वः प्रपद्येऽमुनाऽमुनाऽमुना ॥ ३ ॥

*a*) ऋ 6·54·3 पूष्णश्चक्रं न रिष्यति न कोशो अवपद्यते. —*b*) ऐ 3·12 (अयम्... अयम्...अयमावसथः).

स यदवोचं प्राणं प्रपद्य इति । प्राणो वा इदꣳ सर्वं भूतं यदिदं किंच । तमेव तत्प्रापत्सि ॥ ४ ॥

अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये दिवं प्रपद्य इत्येव तदवोचम् ॥ ५ ॥

अथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्ये वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचम् ॥ ६ ॥

अथ यदवोचꣳ स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येव तदवोचं तदवोचम् ॥ ७ ॥

॥ इति पञ्चदशः खण्डः ॥

---

[a]पुरुषो वाव यज्ञः । तस्य यानि चतुर्विꣳशतिवर्षाणि तत्प्रातःसवनम् । चतुर्विꣳशत्यक्षरा गायत्री । गायत्रं प्रातःसवनम् । तदस्य वसवोऽन्वायत्ताः । प्राणा वाव वसवः । एते हीदꣳ सर्वं वासयन्ति ॥ १ ॥

*a* ) Cp in general बृ 1·5·23; 3·1; छां 4·16; 5·11–24 ( प्राणाग्निहोत्रम् ); तै 2·5; कौ 2·5; ब्रसू 3·3·24.

तं चेदेतस्मिन्वयसि किंचिदुपतपेत् स ब्रूयात् । प्राणा वसव इदं मे प्रातःसवनं माध्यंदिनꣳ सवनमनुसंतनुतेति माऽहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेति । उद्धैव तत एत्यगदो ह भवति ॥ २ ॥

*a* ) जैब्रा 2·157 उपतापिनं पृच्छति–क्वेव ते रुजति क्वेव ते अभिषज्याम इति; बृ 4·3·36; छां 6·15·1; 8·4·2; जै 4·2·1. —*b* ) ऐब्रा 6·2 वि तथा छंदांसि लुप्येरन्; बृ 4·3·23–30 विपरिलोपः. —*c* ) ऋ 10·16·6 अग्निष्टद् विश्वादगदं कृणोतु; 10·97·2 इमं मे अगदं कृत; अ 4·17 8 अथ त्वमगदश्चर; 5·4·3 तमु मे अगदं कृधि; शब्रा 12·4·1·10 अश्वो वा गदायेत; पा 6·3·17 कारे सत्यागदस्य.

अथ यानि चतुश्चत्वारिꣳशद्वर्षाणि तन्माध्यंदिनꣳ सवनम् । चतुश्चत्वारिꣳशदक्षरा त्रिष्टुप् । त्रैष्टुभं माध्यंदिनꣳ सवनम् । तदस्य रुद्रा अन्वायत्ताः । प्राणा वाव रुद्राः । एते हीदꣳ सर्वꣳ रोदयन्ति ॥ ३ ॥

*a* ) बृ 3·9·4.

तं चेदेतस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात् । प्राणा रुद्रा इदं मे माध्यंदिनꣳ सवनं तृतीयसवनमनुसंतनुतेति माऽहं प्राणानाꣳ रुद्राणां मध्ये यज्ञो विलोप्सीयेति । उद्धैव तत एत्यगदो ह भवति ॥ ४ ॥

अथ यान्यष्टाचत्वारिꣳशद्वर्षाणि तत्तृतीयसवनम् । अष्टाचत्वारिꣳशदक्षरा जगती । जागतं तृतीयसवनम् । तदस्याऽऽदित्या अन्वायत्ताः । प्राणा वावाऽऽदित्याः । एते हीदꣳ सर्वमाददते ॥ ५ ॥

तं चेदेतस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात् । प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसंतनुतेति माऽहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीयेति । उद्धैव तत एत्यगदो हैव भवति ॥ ६ ॥

एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः । स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामिति । स ह षोडशं वर्षशतमजीवत् । प्र ह षोडशं वर्षशतं जीवति य एवं वेद ॥ ७ ॥

*a* ) ऐआ 2·1·8; 2·3·7; जै 4·2·11. Original and improved text ( ... विद्वान् ब्राह्मण उवाच महिदास ऐतरेय उपतपति ). —*b* ) ऋ 10·33·9 शतात्मा चन जीवति; कासं 34·5 शतायुर्वै पुरुषः; जै 4·2·11.

॥ इति षोडशः खण्डः ॥

---

स यदशिशिषति यत्पिपासति यन्न रमते[1] ता अस्य दीक्षाः ॥ १ ॥

1 ) Shall we read रिरंसते for न रमते ?

*a* ) अ 19·41·1 भद्रमिच्छन्त ऋषयः स्वर्विदस्तपो दीक्षामुपनिषेदुरग्रे; ऐब्रा 1·4 अग्निश्च ह वै विष्णुश्च देवानां दीक्षापालौ तौ दीक्षाया ईशाते.

अथ यदश्नाति यत्पिबति यद्रमते तदुपसदैरेति ॥ २ ॥

*a* ) उपसद = उपसद् ( cp ऐब्रा 1·23 ff ); बृ 6·3·1 ( उपसद्व्रती ).

अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति ॥ ३ ॥

*a* ) Third person sg ( Ist Conjugation ); छां 8·12·3; बृ 4·3·13.

अथ यत्तपो दानमार्जवमहिꣳसा सत्यवचनमिति ता अस्य दक्षिणाः ॥ ४ ॥

*a* ) ऋ 10·109·4 सप्त-ऋषयस्तपसे ये निषेदुः; 10·181·1 ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत; 9·113·2 ऋतवाकेन सत्येन श्रद्धया तपसा सुतः; ( cp ऋतवाक with सत्यवचनम् above ).

बृ 1·4·14; 4·1·4; 5·2; 5·5·1; 5·14·4; 6·2·15; छां 3·11·2; 4·4·5; 7·16·1; 8·15·1; तै 1·9; के 4·8; कौ 3·1; मुं 2·1·7; 3·1·5–6; श्वे 1·15.

तस्मादाहुः सोष्यत्यसोष्टेति । पुनरुत्पादनमेवास्य तत् । मरणमेवावभृथः ॥ ५ ॥

*a*) उत्पादनम् only here Vedic literature. —*b*) ऋ 8·93·23 अच्छावभृथमोजसा ( only once in ऋ ); वासं 8·59 सत्रः सिन्धुरवभृथायोद्यतः; अ 9·6·53 अवभृथमेव तदुपावैति.

तद्धैतद् घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच । अपिपास एव स बभूव । सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसꣳशितमसीति । तत्रैते द्वे ऋचौ भवतः ॥ ६ ॥

*a*) ऋषि of ऋ 3·36·10 contrasted with भिषक् आथर्वण, ऋषि of ऋ 10·97. —*b*) Note the idiom उक्त्वा उवाच; cp बृ 6·3·7. —*c*) Cp अन्तकाले in बृ 4·4·38; श्वे 3·2; गी 2·72; 8·5; cp प्रयाणकाले–गी 7·30; 8·2; 8·10. —*d*) तै 1·10. —*e*) मै 6·38.

आदित्प्रत्नस्य रेतसः । उद्वयं तमसस्परि । ज्योतिः पश्यन्त उत्तरम् । स्वः पश्यन्त उत्तरम् । देवं देवत्रा सूर्यम् अगन्म ज्योतिरुत्तममिति ज्योतिरुत्तममिति ॥ ७ ॥

*a*) ऋ 8·6·30[a]. —*b*) ऋ 1·50·10[a]. —*c*) ऋ 1·50·10[b]. —*d*) वासं 20·21[b]. —*e*) ऋ 1·50·10[cd]. Note in general उद्, उत्तर and उत्तमम् in the above.

॥ इति सप्तदशः खण्डः ॥

---

मनो ब्रह्मेत्युपासीत । इत्यध्यात्मम् । अथाधिदैवतम् । आकाशो ब्रह्म । इत्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च ॥ १ ॥

*a*) बृ 1·3·2–6; 1·4·7; 2·2·3; 4 1·6; छां 1·2·2–6; 2·7·1; 2·11·1; 3·14·2; 8·12·4-5.

तदेतच्चतुष्पाद् ब्रह्म । वाक्पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पादः । इत्यध्यात्मम् । अथाधिदैवतम् । अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः । इत्युभयमेवादिष्टं भवत्यध्यात्मं चैवाधिदैवतं च ॥ २ ॥

वागेव ब्रह्मणश्चतुर्थः पादः । सोऽग्निना ज्योतिषा भाति च तपाति च । भाति च तपाति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ३ ॥

*a*) ऋ 10·90·13 मुखात्......अग्निश्च; बृ 4·3·5; ऐ 2·4.

प्राँण एव ब्रह्मणश्चतुर्थः पादः । स वायुना ज्योतिषा भाति च तपति च । भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ४ ॥

*a* ) ऋ 10·90·13 प्राणाद्वायुरजायत; ऐ 2·4.

चक्षुरेव ब्रह्मणश्चतुर्थः पादः । स आदित्यैन ज्योतिषा भाति च तपति च । भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ५ ॥

*a* ) ऋ 10·90·13 चक्षोः सूर्यो अजायत; बृ 4·3·2; ऐ 2·4.

श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः । स दिग्भिर्ज्योतिषा भाति च तपति च । भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद य एवं वेद ॥ ६ ॥

*a* ) ऋ 10·90·14 दिशः श्रोत्रात्; ऐ. 2·4.

॥ इति अष्टादशः खण्डः ॥

---

आदित्यो ब्रह्मेत्यादेशः । तस्योपव्याख्यानम् । अँसदेवेदमग्र आसीत् । तत्सदासीत् । तत्समभवत् । तदाण्डं निरवर्तत । तत्संवत्सरस्य मात्रामशयत । तन्निरभिद्यत । ते आण्डकपाले रजतं च सुवर्णं चाभवताम् ॥ १ ॥

Cp in general ऋ 10·12·1; 10·129·3; अ 2·1·1; तैब्रा 2·2·9·1; 2·8·8·9; शब्रा 6·1·1·1–10; 11·1·6·1; बृ 2·3·1; छां 6·2·1; तै 2·7; ब्रसू 4·1·4.

*a* ) तै 2·7. —*b* ) मनु 1·12 उषित्वा परिवत्सरम्.

तद्यद्रजतꣳ सेयं पृथिवी । यत्सुवर्णꣳ सा द्यौः । यज्जरायु ते पर्वताः । यदुल्बꣳ(स)समेघो नीहारः । या धमनयस्ता नद्यः । यद्वास्तेयमुदकꣳ स समुद्रः ॥ २ ॥

*a* ) जैब्रा 3·106 अपेते मेघे अपेते नीहारे. —*b* ) अ 11·8·28 आस्तेयीश्च वास्तेयीश्च ... अपः; cp पा 4·3·56 दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्.

अथ यत्तदजायत सोऽसावादित्यः । तं जायमानं घोषा उलूलवोऽनूदतिष्ठन्त्सर्वाणि च भूतानि सर्वे च कामाः । तस्मात्तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनूत्तिष्ठन्ति सर्वाणि च भूतानि सर्वे च कामाः ॥ ३ ॥

*a* ) Semi-disjunct use of accusative; cp तैब्रा 2·7·9·4 उद्यन्तं वा एतं सर्वाः प्रजाः प्रतिनन्दन्ति; छां 1·11·7 भूतानि आदित्यमुच्चैः सन्तं गायन्ति. —*b* ) शब्दानुकृति or imitative word; cp अ 3·19·6 पृथग्घोषा उलुलयः केतुमन्त उदीरताम्.

स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्ते । अभ्याशो ह यदेनꣳ साधवो घोषा आ च गच्छेयुरुप च निम्रेडेरन्निम्रेडेरन् ॥ ४ ॥

॥ इत्येकोनविंशः खण्डः ॥

॥ इति तृतीयोऽध्यायः ॥

---

जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस । स ह सर्वत आवसथान्मापयांचक्रे सर्वत एव मेऽन्नमत्स्यन्तीति ॥ १ ॥

Cp in general छां 4·1–3 with छां 1·10–12.

1 ) Some editions drop अन्नम्.

*a* ) तै 1·11. —*b* ) अ 9·6·7 यदावसथान् कल्पयन्ति; शब्रा 2·3·1·8 श्रेयसि आगमिष्यति आवसथेन उपक्लृप्तेनोपासीत; बृ 4·3·37; ऐ 3·12; पा 4·4·74 आवसथात् ष्ठल्; 5·4·23 अनन्तावसथेतिहभेषजात् ञ्यः.

अथ ह हꣳसा निशायामतिपेतुः । तद्धैवꣳ हꣳसो हꣳसमभ्युवाद—हो होऽयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीरिति ॥ २ ॥

1 ) The reading should be प्रधाक्षीत् ( पुरुषव्यत्यय ).

तमु ह परः प्रत्युवाच कम्वर एनमेतत्सन्तꣳ सयुग्वानमिव रैक्वमात्थेति । यो नु कथꣳ सयुग्वा रैक्व इति ॥ ३ ॥

*a* ) ऋ 10·130·4 अग्नेर्गायत्र्यभवत्सयुग्वा.

यथा कृतायविजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति । यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ४ ॥

*a* ) ऋ 10·34·6 प्रतिदीव्ने दधत आ कृतानि; 10·43·5 कृतं न श्वघ्नी वि चिनोति देवने; तैसं 4·3·3·1 कृतं अयानाम्; वासं 30·18 अक्षराजाय कितवम्, कृतायादिनवदर्शम् ( Cp पाली-आदीनवदस्सावी ); अ 4·38·1 ग्लहे कृतानि कृण्वानाम्; शब्रा 5·4·4·6 एष वा अयानभिभूर्यत्कलिः where कलि is the fifth die. —*b* ) ऋ 1·92·10; 2·12·5. —*c* ) अधरे-अयाः and not अधर+इय; पा 1·1·34.

तदु ह जानश्रुतिः पौत्रायण उपशुश्राव । स ह संजिहान एव क्षत्तारमुवाचाङ्गारे ह सयुग्वानमिव रैक्वमात्थेति । यो नु कथꣳ सयुग्वा रैक्व इति ॥ ५ ॥

*a*) ऐब्रा 7·15 संजिहानस्तु द्वापरः. —*b*) अ 9·6·49 यत्क्षत्तारं ह्वयति; वासं 16·26 नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च; 30·13 निविक्त्यै क्षत्तारम्; तैब्रा 1·7 3·5 क्षत्तुर्गृहे प्रसूत्यै; शब्रा 5·3·1·7 प्रसविता वै क्षत्ता.

यथा कृतायविजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति। यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ६ ॥

स ह क्षत्ताऽन्विष्य नाविदमिति प्रत्येयाय। तꣳहोवाच यत्रारे ब्राह्मण-स्यान्वेषणा तदेनमर्च्छेति ॥ ७ ॥

*a*) ब्राह्मण a meaningful word here; cp बृ 3·3·10; 3·5·1.

सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश। तꣳहाभ्युवाद त्वं नु भगवः सयुग्वा रैक्व इति। अहꣳ ह्यरा ३ इति ह प्रतिजज्ञे। स ह क्षत्ताऽविदमिति प्रत्येयाय ॥ ८ ॥

*a*) अ 5·22·12 तक्मन् ...... पाम्ना भ्रातृव्येण सह गच्छ; तैसं 6·1·3·8 हस्तेन कण्डूयेत पामनं भावुकाः प्रजाः; कासं 23·4 अपि गर्भाः पामना जायेरन्; शब्रा 3·2·1·31 दीक्षितः पामनो भवितोः; पा 2·2·100. —*b*) पा 3·4·34 निमूलसमूलयोः कषः; 7·2·22 कृच्छ्रगहनयोः कषः.

॥ इति प्रथमः खण्डः ॥

---

तदु ह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे। तꣳहाभ्युवाद ॥ १ ॥

Cp in general छां 4·2–3 with जै 3·1 and 2.

*a*) ऋ 2·33·10 निष्कं अर्हन् यजतं विश्वरूपम् (बिभर्षि); 8·47·15 निष्कं वा घा... स्रजं वा; अ 7·99·1 निष्का एते यजमानस्य लोके; अ 20·127·3 शतं निष्कान् दश स्रजः; शब्रा 11·4·1·1 तस्य निष्क उपहित आस; 11·4·1·8 तस्मै ह निष्कं प्रददुः; ऐब्रा 8·22 आढ्यदुहितृणां...निष्ककण्ठ्यः; जैब्रा 2·103 निष्की स्रग्वी संग्रहीता भवति; शब्रा 13·4·1·8 सर्वा निष्किण्योऽलंकृताः; छां 5·13·2 (दासीनिष्क). —*b*) Proleptic accusative!

रैक्वेमानि षट् शतानि गवामयं निष्कोऽयमश्वतरीरथः। अनु म एतां भगवो देवताꣳ शाधि यां देवतामुपास्स इति ॥ २ ॥

तमु ह परः प्रत्युवाचाह हारेत्वा शूद्र तवैव सह गोभिरस्त्विति। तदु ह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे ॥ ३ ॥

1 ) Böhtlingk suggests, following विज्ञानेश्वर, अहह अरे त्वा. The text, as it is, gives हार + इत्वा.

*a* ) ऋ 1·26 तवैव वाहाः.

तꣳ हाभ्युवाद । रैक्वेदꣳ सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्से अन्वेव मा भगवः शाधीति ॥ ४ ॥

तस्या ह मुखमुपोद्गृह्णन्नुवाचाऽऽजहारेमाः[1] शूद्रानेनैव मुखेनाऽऽलापयिष्यथा इति । ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास । तस्मै होवाच ॥ ५ ॥

1 ) Böhtlingk suggests : अहह अरे इमाः.

*a* ) अ 5·22·5, 8 ओको अस्य ( तक्मनः ) महावृषाः; जैब्रा 1·234 तमु महावृषाणां दूता आसन्नुः; 3·183 विश्वामित्रो वै भरतानां...महावृषानयात्.

॥ इति द्वितीयः खण्डः ॥

---

वायुर्वाव संवर्गः । यदा वा अग्निरुद्वायति वायुमेवाप्येति । यदा सूर्योऽस्तमेति वायुमेवाप्येति । यदा चन्द्रोऽस्तमेति वायुमेवाप्येति ॥ १ ॥

*a* ) Cp Anaximenes ( doctrine of Air being θεος ). Cp in general जै 3·1–2; ऐब्रा 8·28 अयं वै ब्रह्म योऽयं पवते ( in ब्रह्मणः परिमरः ); शब्रा 10·3·3·6–8; कौ 2·12–13.

यदाऽऽप उच्छुष्यन्ति वायुमेवापियन्ति । वायुर्ह्येवैतान् सर्वान् संवृङ्क्ते । इत्यधिदैवतम् ॥ २ ॥

अथाध्यात्मम् । प्राणो वाव संवर्गः । स यदा स्वपिति प्राणमेव वागप्येति । प्राणं चक्षुः । प्राणꣳ श्रोत्रम् । प्राणं मनः । प्राणो ह्येवैतान् सर्वान् संवृङ्क्त इति ॥ ३ ॥

*a* ) Cp शब्रा 10·3·3·6; बृ 2·1·16; 4·3·19; छां 6·8·2. —*b* ) ऋ 8·75·12 संवर्गं सं रयिं जय; 10·43·5 संवर्गं यन्मघवा सूर्यं जयत्; तैसं 2·4·3·3 अग्नये संवर्गाय पुरोडाशं ...... निर्वपेत्; शब्रा 14·9 3·9 निधनमसि संवर्गोऽसि.

तौ वा एतौ द्वौ संवर्गौ । वायुरेव देवेषु प्राणः प्राणेषु ॥ ४ ॥

*a* ) Cp बृ 1·5·21 ( तस्मादेते एतेन आख्यायन्ते प्राणा इति ).

अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे । तस्मा उ ह न ददतुः ॥ ५ ॥

*a* ) जै 1·59·2; 3·1·21 ff. —*b* ) तांब्रा 10·5·7; 14·1·12. —*c* ) ऋ 10·68·6 दद्भिर्न जिह्वा परिविष्टमादत्; अ 6·122·3 यद्वां पक्वं परिविष्टमग्नौ; कासं 36·7 कनीयान् ज्यायांसं

परिवेवेष्टि; शब्रा 1·3·1·2 अथ पात्राणि निर्णेजति तैर्निर्णिज्य परिवेविषति. —*d*) Cp in general ऋ 10·117 ( भिक्षुः आंगिरसः ); अ 11·5·9 ब्रह्मचारी भिक्षामाजभार; शब्रा 11·3·3·5 अह्रीभूत्वा भिक्षते; छां 4·3·7; कौ 2·1.

स होवाच—

महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपाः ।
तं कापेय नाभिपश्यन्ति[1] मर्त्या अभिप्रतारिन् बहुधा वसन्तम्[2] ॥

यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति ॥ ६ ॥

1 ) जै 3·2·2 reads तं कापेय न विजानंत्येके. —2 ) जै 3·2·2 reads निविष्टम् for वसन्तम्.

तदु ह शौनकः कापेयः प्रतिमन्वानः[a] प्रत्येयाय—

आत्मा[1] देवानां जनिता प्रजानां हिरण्यदंष्ट्रो[2] बभसोऽनसूरिः ।
महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्ति[3] ॥

इति वै वयं ब्रह्मचारिन्नेदमुपास्महे दत्तास्मै[b] भिक्षामिति ॥ ७ ॥

1 ) अ 7·111·1 आत्मा देवानामुत मानुषाणाम्; जै 3·2·4 उत मर्त्यानाम् for जनिता प्रजानाम्. —2 ) जै 3·2·4 हिरण्यदन्तो रपसो न सूनुः ( v. l. परसो न सूनुः ). —3 ) जै 3·2·4 यददन्तमात्ति.

*a* ) वासं 23·52 एतत्त्वा अत्र प्रतिमन्वानो अस्मि. —*b* ) छां 4·3·5; कौ 2·1 & 2.

तस्मा उ ह ददुः । ते वा एते पञ्चान्ये[a] पञ्चान्ये दश सन्तस्तत्कृतम्[b] । तस्मात्सर्वासु दिक्ष्वन्नमेव दश कृतम् । सैषा विराडन्नादी । तयेदꣳसर्वं दृष्टम् । सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद ॥ ८ ॥

*a* ) Cp छां 4·3·1–3. —*b* ) Proleptic nominative.

॥ इति तृतीयः खण्डः ॥

---

सत्यकामो[a] ह जाबालो[b] जबालां मातरमामन्त्रयांचक्रे । ब्रह्मचर्यं भवति विवत्स्यामि किंगोत्रोन्वहमस्मीति ॥ १ ॥

Cp in general *Exodus* 3.

*a* ) ऐब्रा 8·7 इति ह स्माह सत्यकामो जाबालः; शब्रा 13·5·3·1 इति ह स्माह सत्यकामो जाबालः—विश्वे वै सर्वे देवाः; छां 5·2·3; बृ 4·1·6; 6·3·12. —*b* ) पा 6·2·38.

सा हैनमुवाच । नाहमेतद्वेद तात यद्गोत्रस्त्वमसि । बह्वहं चरन्ती परिचारिणी[a] यौवने त्वामलभे । साऽहमेतन्न वेद यद्गोत्रस्त्वमसि । जबाला तु नामाहमस्मि । सत्यकामो नाम त्वमसि । स सत्यकाम एव जाबालो ब्रुवीथा इति ॥ २ ॥

*a* ) तांब्रा 13·4·17 परिचारी अचरत्; शब्रा 4·6·8·17 वरीयानाकाशः असत् परिचरणाय; बृ 6·2·1 परिचारयमाणम्.

स ह हारिद्रुमतं गौतममेत्योवाच । ब्रह्मचर्यं भगवति वत्स्यामि । उपेयां भगवन्तमिति ॥ ३ ॥

तꣳ होवाच किंगोत्रो नु सोम्यासीति । स होवाच । नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि । अपृच्छं मातरम् । सा मा प्रत्यब्रवीत्—बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे । साऽहमेतन्न वेद यद्गोत्रस्त्वमसि । जबाला तु नामाहमस्मि । सत्यकामो नाम त्वमसीति । सोऽहꣳ सत्यकामो जाबालोऽस्मि भो इति ॥ ४ ॥

*a* ) गोब्रा 1·3·16 किं वास्या गोत्रम्; लामगायनसगोत्रा; जै 3·1·4·1 नाम्ना वा गोत्रेण वा प्रब्रूते; पा 4·1·162 अपत्यं पौत्रप्रभृति गोत्रम्.

तꣳ होवाच । नैतदब्राह्मणो विवक्तुमर्हति । समिधꣳ सोम्याऽऽहर । उप त्वा नेष्ये न सत्यादगा इति । तमुपनीय कृशानामबलानां चतुःशता गा निराकृत्योवाचेमाः सोम्यानुसंव्रजेति । ता अभिप्रस्थापयन्नुवाच । नासहस्रेणाऽऽवर्तेयेति । स ह वर्षगणं प्रोवास । ता यदा सहस्रꣳसंपेदुः ॥ ५ ॥

*a* ) वासं 30·22 अशूद्रा अब्राह्मणास्ते प्राजापत्याः; अ 5·17·8 उत यत्पतयो दश स्त्रियाः पूर्वे अब्राह्मणाः; 11·1·32 अब्राह्मणा यतमे त्वोपसीदान्; 12·4·44 तस्या नाश्नीयादब्राह्मणो य आशंसेत भूत्याम्; ऐब्रा 2·29 दास्याः पुत्रः कितवोऽब्राह्मणः. —*b* ) छां 5·11·7; बृ 6·2·7. —*c* ) शब्रा ( काण्व ) 2·1·2·8 निराकृतानि; ऋ 10·23·6 यदा ( यद्र आ ) पशुं न गोपाः करामहे; मैसं 4·2·11 एतैरेव जुहुयाद् गोष्वाकृतासु. —*d* ) छां 4·10·1.

॥ इति चतुर्थः खण्डः ॥

---

अथ हैनमृषभोऽभ्युवाद सत्यकाम३ इति । भगव इति ह प्रतिशुश्राव । प्राप्ताः सोम्य सहस्रꣳ स्मः । प्रापय न आचार्यकुलम् ॥ १ ॥

*a* ) छां 3·18·2 तदेतच्चतुष्पाद् ब्रह्म. —*b* ) छां 2·23·2; 8·15·1.

ब्रह्मणश्च ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाच । प्राची दिक्कला । प्रतीची दिक्कला । दक्षिणा दिक्कला । उदीची दिक्कला । एष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम ॥ २ ॥

*a* ) छां 3·12·6; 3·18·2, 3; मां 3,8; नि 2·7 पशुपादप्रकृतिः प्रभागपादः.

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवान-स्मिꣳल्लोके भवति । प्रकाशवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥ ३ ॥

॥ इति पञ्चमः खण्डः ॥

---

अग्निष्टे पादं वक्तेति । स ह श्वो[a] भूते गा अभिप्रस्थापयांचकार । ता यत्राभि[b]सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

*a*) तैसं 1·6·7·1 स एनाः श्वो भूते यजते; 2·4·10·1 यदि न वर्षेत् श्वो भूते हविर्निर्वपेत्; शब्रा 5·2·3·2 अथ श्वो भूते अनुमत्यै...; जैब्रा 3·245 श्वो ह भूते परिसस्रतुः; 3·172 स्वरेण श्वो भूते प्रतिपद्यन्ते. —*b*) Cp बृ 6·4·19 अभिप्रातर्.

तमग्निरभ्युवाद सत्यकाम३ इति । भगव इति ह प्रतिशुश्राव ॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाच । पृथिवी कला । अन्तरिक्षं कला । द्यौः कला । समुद्रः कला । एष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ॥ ३ ॥

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्तेऽनन्तवानस्मिँल्लोके भवति । अनन्तवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्त-वानित्युपास्ते ॥ ४ ॥

॥ इति षष्ठः खण्डः ॥

---

हꣳसस्ते पादं वक्तेति । स ह श्वो भूते गा अभिप्रस्थापयांचकार । ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

तꣳ हꣳस उपनिपत्याभ्युवाद सत्यकाम३ इति । भगव इति ह प्रतिशुश्राव ॥२॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाच । अग्निः[a] कला । सूर्यः कला । चन्द्रः कला । विद्युत् कला । एष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम ॥ ३ ॥

*a*) मुं 2·1·4.

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिँल्लोके भवति । ज्योतिष्मतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥ ४ ॥

॥ इति सप्तमः खण्डः ॥

---

मद्गुष्टे पादं वक्तेति । स ह श्वो भूते गा अभिप्रस्थापयांचकार । ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

*a* ) वासं 24·22 मद्गून् वरुणाय; 24·34 प्लवो मद्गुर्मत्स्यस्ते नदीपतये ( मद्गु and मत्स्य both from √मद् ); मैसं 6·34 मद्गुर्हंसः.

तं मद्गुरुपनिपत्याभ्युवाद सत्यकाम३ इति । भगव इति ह प्रतिशुश्राव ॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाच । प्राणः कला । चक्षुः कला । श्रोत्रं कला । मनः कला । एष वै सोम्य चतुष्कलः पादो ब्रह्मण आयतनवान्नाम ॥ ३ ॥

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्त आयतनवानस्मिँल्लोके भवति । आयतनवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते ॥ ४ ॥

॥ इति अष्टमः खण्डः ॥

---

प्राप हाऽऽचार्यकुलम् । तमाचार्योऽभ्युवाद—सत्यकाम ३ इति । भगव इति ह प्रतिशुश्राव ॥ १ ॥

ब्रह्मविदिव वै सोम्य भासि । को नु त्वाऽनुशशासेति । अन्ये मनुष्येभ्य इति ह प्रतिजज्ञे । भगवाꣳस्त्वेव मे कामे[1] ब्रूयात् ॥ २ ॥

1 ) v. l. कामम्. Böhtlingk suggests : भगवांस्तु एवमेको मे ब्रूयात्.

*a* ) Cp *St. Bernard* ( died 1081 AD ) I have no other masters than beeches and oaks.

श्रुतꣳ ह्येव मे भगवद्दृशेभ्य आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापतीति। तस्मै हैतदेवोवाच। अत्र ह न किंचन वीयायेति वीयायेति ॥ ३ ॥

1 ) v. l. प्रापदिति; प्रापयतीति.

*a* ) छां 7·1·3. —*b* ) ऋ 9·70·9 क्षेत्रविद्धि दिश आह विपृच्छते; 10·32·7 उत स्तुतिं विन्दत्यञ्जसीनाम्; अ 11·5·1 स (ब्रह्मचारी) आचार्यं तपसा पिपर्ति; छां 6·14·2 आचार्यवान् पुरुषो वेद; मुं 1·2·12 तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्; क 2·8 अनन्यप्रोक्ते गतिरत्र नास्ति; श्वे 6·23 यथा देवे तथा गुरौ; नि 1·4 आचार्यः आचारं ग्राहयति; तै 1·4 एवं मां ब्रह्मचारिणः धातरायन्तु सर्वतः i. e. आचार्य is one who makes pupils go to him. —*c* ) ऋ 5·35·1 साधिष्ठः क्रतुः; 7·64·3 प्र साधिष्ठेभिः पथिभिर्नयन्तु.

॥ इति नवमः खण्डः ॥

---

उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास। तस्य ह द्वादश वर्षाण्यग्नीन् परिचचार। स ह स्मान्यानन्तेवासिनः समावर्तयꣳस्तꣳ ह स्मैव न समावर्तयति ॥ १ ॥

*a* ) छां 4·4·5. —*b* ) गोब्रा 1·3·20 समावृत्ता आचार्या निषेदुः; छां 8·15·1 अभिसमावृत्य.

तं जायोवाच — तप्तो ब्रह्मचारी कुशलमग्नीन् परिचचारीत्। मा त्वाऽग्नयः परिप्रवोचन्। प्रब्रूह्यस्मा इति। तस्मै हाप्रोच्यैव प्रवासांचक्रे ॥ २ ॥

*a* ) ऋ 9·83·1 अतप्ततनूर्न तदामो अश्नुते; अ 11·5·26 ब्रह्मचारी ......तपोऽतिष्ठत्तप्यमानः. शब्रा 6·1·1·8 स तपोऽतप्यत स श्रान्तस्तेपानो ब्रह्मैव प्रथममसृजत. —*b* ) ऐब्रा 7·18 तये ज्यायांसो न ते कुशलं मेनिरे; जै 3·8·3 ताभ्यां न कुशलं कयेत्यमात्य. —*c* ) ऋ 6·52·14 मा वो वचांसि परिचक्ष्याणि वोचम्; 7·100·6 किमित्ते विष्णो परिचक्ष्यं भूत्; ऐब्रा 7·27 श्यापर्णान् परिचक्षाणः; शब्रा 3·9·4·17 यो ...... ब्राह्मणं हन्ति तं ...... परिचक्षते; तै 3·8 अन्नं न परिचक्षीत· —*d* ) छां 4·4·5 वर्षगणं प्रोवास; 5·1·8.

स ह व्याधिनाऽनशितुं दध्रे। तमाचार्यजायोवाच — ब्रह्मचारिन्नशान। किं नु नाश्नासीति। स होवाच — बहव इमेऽस्मिन् पुरुषे कामा नानात्ययाः। व्याधिभिः प्रतिपूर्णोऽस्मि। नाशिष्यामीति ॥ ३ ॥

*a* ) ऋ 1·179·5 पुलुकामो हि मर्त्यः. —*b* ) छां 6·9·1. —*c* ) षब्रा 5·40 व्याधयो वा अनेकविधाः; छां 7·10·1 व्याधीयन्ते प्राणाः; बृ 5·11·1 यद्व्याहितस्तप्यते.

अथ हाग्नयः समूदिरे। तप्तो ब्रह्मचारी कुशलं नः पर्यचारीत्। हन्तास्मै प्रब्रवामेति — तस्मै होचुः। प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ॥ ४ ॥

*a* ) छां 7·23. —*b* ) बृ 5·1·1 खं पुराणं वायुरं खम्.

स होवाच । विजानाम्यहं यत्प्राणो ब्रह्म । कं च तु खं च न विजानामीति । ते होचुः । यद्वाव कं तदेव खम् । यदेव खं तदेव कमिति । प्राणं च हास्मै तदाकाशं चोचुः ॥ ५ ॥

*a*) बृ 2·3; 5·1·1; तै 2·5; कौ 3·4. —*b*) शब्रा 10·6·3·2 मनोमयः प्राणशरीरः and बृ 4·4·6 भारूप आकाशात्मा; जैब्रा 1·17 स इमान् प्राणानाकाशानभिनिवर्तते; कौ 2·4 ते ( प्राणाः ) वायुप्राविष्टा ( v. l. वायुप्रतिष्ठाः ) आकाशात्मानः स्वरीयुः.

॥ इति दशमः खण्डः ॥

---

अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति । य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥

Cp in general छां 4·11–14 with बृ 1·4·6.

स य एतमेवं विद्वानुपास्ते । अपहते पापकृत्याम् । लोकी भवति । सर्वमायुरेति । ज्योग्जीवति । नास्यावरपुरुषाः क्षीयन्ते । उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च । य एतमेवं विद्वानुपास्ते ॥ २ ॥

*a*) जैब्रा 2·370 पाप्मानमेव तद्धते. —*b*) अ 3·31·2 वि शक्रः पापकृत्यया; शब्रा 11·2·7·33 साधुकृत्या अस्य यच्छति न पापकृत्या; 13·5·4·1 तेनेष्ट्वा सर्वां पापकृत्यां सर्वां ब्रह्महत्यां अपजघान; 13·5·4·3 अजहुः कर्म पापकं पुण्याः पुण्येन कर्मणा.

॥ इति एकादशः खण्डः ॥

---

अथ हैनमन्वाहार्यपचनोऽनुशशासाऽऽपो दिशो नक्षत्राणि चन्द्रमा इति । य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥

*a*) ऐब्रा 8·24 पुत्रोऽन्वाहार्यपचनः; शब्रा 2·2·3·18 व्यानोऽन्वाहार्यपचनः; 2·3·2·2 अथ एष एव नडो नैषिधो ( *sic* ) यदन्वाहार्यपचनः; प्र 4·3.

स य एतमेवं विद्वानुपास्ते । अपहते पापकृत्याम् । लोकी भवति । सर्वमायुरेति । ज्योग्जीवति । नास्यावरपुरुषाः क्षीयन्ते । उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च । य एतमेवं विद्वानुपास्ते ॥ २ ॥

॥ इति द्वादशः खण्डः ॥

---

अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति । य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥

स य एतमेवं विद्वानुपास्ते । अपहते पापकृत्याम् । लोकी भवति । सर्वमायुरेति । ज्योग्जीवति । नास्यावरपुरुषाः क्षीयन्ते । उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च । य एतमेवं विद्वानुपास्ते ॥ २ ॥

॥ इति त्रयोदशः खण्डः ॥

---

ते होचुः । उपकोसलैषा सोम्य तेऽस्मद्विद्याऽऽत्मविद्या च । आचार्यस्तु ते गतिं वक्तेति । आजगाम हास्याऽऽचार्यः । तमाचार्योऽभ्युवादोपकोसल ३ इति ॥ १ ॥

भगव इति ह प्रतिशुश्राव । ब्रह्मविद इव सोम्य ते मुखं भाति । को नु त्वाऽनुशशासेति । को नु माऽनुशिष्याद्भो इतीहापेव निह्नुते । इमे नूनमीदृशा अन्यादृशा इतीहाग्नीनभ्यूदे । किं नु सोम्य किल तेऽवोचन्निति ॥ २ ॥

इदमिति ह प्रतिजज्ञे । लोकान्वाव किल सोम्य तेऽवोचन् । अहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इति । ब्रवीतु मे भगवानिति । तस्मै होवाच ॥ ३ ॥

*a*) बृ 4·4·22,23; छां 8·4·1; 8·13; मुं 3·1·3; 3·2·9; तै 2·9; ई 2; कौ 1·4; 3·1; मै 2·7; 6·34; गी 5·9.

॥ इति चतुर्दशः खण्डः ॥

---

य एषोऽक्षिणि[a] पुरुषो दृश्यत एष आत्मेति होवाच । एतदमृतमभयमेतद् ब्रह्मेति । तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी[b] एव गच्छति ॥ १ ॥

*a*) बृ 2·3·5; 5·5·2; छां 1·7·5; 8·7·4. —*b*) छां 4·14·3.

एतꣳ संयद्वाम[a] इत्याचक्षते । एतꣳ हि सर्वाणि वामान्यभिसंयन्ति । सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद ॥ २ ॥

*a*) ऋ 2·4·8 अस्मे ... संयद्वीरं बृहन्तं ... रयिं धाः; तैसं 3·2·10·2 विद्द्वसुश्चक्षुष्पाः ... संयद्वसुः श्रोत्रपाः ... ; वासं 15·18 अयमुत्तरात्संयद्वसुः; cp similar formations in ऋ *e. g.* आभरद्वसु (5·79·3); क्षयद्वीर (1·114·10).

एष उ एव वामनीः । एष हि सर्वाणि वामानि नयति । सर्वाणि वामानि नयति य एवं वेद ॥ ३ ॥

एष उ एव भामनीः । एष हि सर्वेषु लोकेषु भाति । सर्वेषु लोकेषु भाति य एवं वेद ॥ ४ ॥

अथ यदु चैवास्मिञ्छव्यं[a] कुर्वन्ति यदि च नार्चिषमेवाभिसंभवन्ति । अर्चिषोऽहः । अह्न आपूर्यमाणपक्षम् । आपूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासाꣳस्तान् । मासेभ्यः[b] संवत्सरम् । संवत्सरादादित्यम् । आदित्याच्चन्द्रमसम् । चन्द्रमसो विद्युतम् । तत्पुरुषोऽमानवः । स एनान्ब्रह्म गमयति । एष देवपथो[c] ब्रह्मपथः । एतेन प्रतिपद्यमाना इमं मानवमावर्तं[d] नाऽऽवर्तन्ते नाऽऽवर्तन्ते[e] ॥ ५ ॥

*a* ) कासं 12·3 इन्द्रो वै वृत्रं हत्वा तं शवे मानवे प्रौहत्; शब्रा 12·5·1·1 यदेनं शवदह्याया इवेन्धीरन् यज्ञाय वा; ऐब्रा 7·7 यस्याग्नयः शवाग्निना संसृज्येरन्. —*b* ) शब्रा 1·3·5·11 द्वादश वै मासाः संवत्सरस्य; छां 5·10·1; 8·24. —*c* ) छां 5·10·2 देवयानः पन्थाः. —*d* ) शब्रा 12·9·2·4 अपामावर्तः स ह अवभृथः; श्वे 1·5; जै 1·2·7; 3·33·7. —*e* ) छां 8·15; बृ 6·2·15.

॥ इति पञ्चदशः खण्डः ॥

---

एष ह वै यज्ञो योऽयं पवते । एष ह यन्निदꣳ सर्वं पुनाति । यदेष यन्निदꣳ सर्वं पुनाति । तस्मादेष एव यज्ञः । तस्य मनश्च वाक् च वर्तनी[a] ॥ १ ॥

Cp in general ऐब्रा 5·32–34; जै 3·15–17.

*a* ) ऋ 7·69·3 रथः...बाधते...वर्तनिभ्याम्; शांब्रा 6·11 द्वे वा यज्ञस्य वर्तनी; गोब्रा 1·3·2 अयमु यः पवते स यज्ञः; तस्य मनश्च वाक् च वर्तनी; बृ 2·2·2 अधरया एनं वर्तन्या; जै 3·16·1.

तयोरन्यतरां मनसा सꣳस्करोति ब्रह्मा । वाचा होताऽध्वर्युरुद्गाताऽन्यतराम् । स यत्रोपाकृते[a] प्रातरनुवाके पुरा परिधानीयाया[b] ब्रह्मा व्यववदति ॥ २ ॥

*a* ) ऐब्रा 5·33·3 ते ह एके ब्रह्माण उपाकृते प्रातरनुवाके....षब्रा 1·2·9 तस्मात्प्रातरनुवाके उपाकृते विसंस्थिते च यज्ञे; बृ 4·5·1 अन्यद्वृत्तमुपाकरिष्यन्; छां 2·24·3,7,11. —*b* ) ऐब्रा 6·7 उभय्यः परिधानीया भवन्ति; शांब्रा 18·4; 26·4; जै 3·4·2.

अन्यतरामेव वर्तनीꣳ सꣳस्करोति । हीयतेऽन्यतरा । स यथैकपाद्[b] व्रजन्रथो वैकेन चक्रेण वर्तमानो रिष्यत्येवमस्य यज्ञो रिष्यति । यज्ञꣳ रिष्यन्तं यजमानोऽनु रिष्यति । स इष्ट्वा पापीयान् भवति ॥ ३ ॥

*a*) ऐब्रा 6·27 आत्मसंस्कृतिर्वाव शिल्पानि; शब्रा 7·1·2·2 प्रजापतिं संस्करवाम. —*b*) गोब्रा 1·3·2.

अथ यत्रोपाकृते प्रातरनुवाके न पुरा परिधानीयाया ब्रह्मा व्यववदत्युभे एव वर्तनी स॰स्कुर्वन्ति । न हीयतेऽन्यतरा ॥ ४ ॥

स यथोभयपाद् व्रजन् रथो वोभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठति यँज्ञं प्रतितिष्ठन्तं यजमानोऽनु प्रतितिष्ठति । स इष्ट्वा श्रेयान् भवति ॥ ५ ॥

*a*) Accusative absolute ! Cp कौब्रा 18·12 तं आप्रीतं पर्यग्निकृतमुदञ्चं नयेयुः; जैब्रा 1·240 तौ द्रवन्तौ अग्निः पर्युदतिष्ठत्; 2·142 तं विजिग्यानं सर्वे देवा आभितः समन्तं पर्यविशन्.

॥ इति षोडशः खण्डः ॥

---

प्रजाँपतिर्लोकानभ्यतपत् । तेषां तप्यमानानां॰रसान्प्राबृहत्[b] । अग्निं पृथिव्याः । वायुमन्तरिक्षात् । आदित्यं दिवः ॥ १ ॥

*a*) ऐब्रा 5·32; शब्रा 11·5·8·1; जै 3·15. —*b*) ऋ 5·29·10 प्रान्यच्चक्रमवृहः सूर्यस्य कुत्साय; शब्रा 3·8·5·8 प्रच्युते पशौ हृदयं प्रवृह्य; तांब्रा 7·5·7 तस्य (यशसः) अग्नी रौरवं प्रावृहत्; क 2·13; 6·17.

स एतास्तिस्रो देवता अभ्यतपत् । तासां तप्यमानानां॰रसान् प्राबृहत् । अग्नेर्ऋचः । वायोर्यजू॰षि । सामान्यादित्यात् ॥ २ ॥

स एतां त्रयीं विद्यामभ्यतपत् । तस्यास्तप्यमानाया रसान् प्राबृहत् । भूरित्यृग्भ्यः । भुवरिति यजुर्भ्यः । स्वरिति सामभ्यः ॥ ३ ॥

तद्यदृक्तो रिष्येद् भूः स्वाहेति गार्हपत्ये जुहुयात् । ऋचामेव तद्रसेनर्चां वीर्येणर्चां यज्ञस्य विरिष्टँ॰ संदधाति ॥ ४ ॥

*a*) अ 6·53·3 अनु नो मार्ष्टु तन्वो यद्विरिष्टम्; 7·57·1 यदात्मनि तन्वो मे विरिष्टं सरस्वती तदापृणद् घृतेन; तैसं 6·2·5·1 यद्वा अनीशानो भारमादत्ते वि वै स लिशते; गोब्रा 1·1·14.

अथ यदि यजुष्टो रिष्येद् भुवः स्वाहेति दक्षिणाग्नौ जुहुयात् । यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्ट॰ संदधाति ॥ ५ ॥

अथ यदि सामतो रिष्येत् स्वः स्वाहेत्याहवनीये जुहुयात् । साम्नामेव तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्ट॰संदधाति ॥ ६ ॥

तद्यथा लवणेन[a] सुवर्णं[b]ꣳ संदध्यात् । सुवर्णेन रजतं[c]ꣳ रजतेन त्रपु त्रपुणा[d] सीसं[e]ꣳ सीसेन लोहं लोहेन दारु दारु चर्मणा ॥ ७ ॥

Cp in general ऐब्रा 5·32; गोब्रा 1·1·14; जै 3·17·3.

*a*) अ 7·76·1 सेहोः अरसतरः लवणाद्द विक्लेदीयसीः; जैब्रा 3·236 ते सिन्धुं प्राविशन् तल्लवणमभवत्; बृ 2·4·12; छां 6·13·1; मै 7·11; पा 6·2·4 गाधलवणयोः प्रमाणम्. —*b*) तैब्रा 1·4·7·4 सुवर्णं हिरण्यं द्वेधा विच्छिद्य; 1·5·10·1 सुवर्णरजताभ्यां कुशीभ्यां परिगृहीत आसीत्; 3·12·6·5–6; शब्रा 10·4·5·2 अहोरात्राणि रजतसुवर्णानि पत्राणि; 12·7·1·7 तत्सुवर्णं हिरण्यमभवत्; छां 1·6·6. —*c*) तैसं 1·5·1·2 तस्माद्रजतं हिरण्यमदाक्षिण्यमश्रुजं हि; अ 5·28·1 हरिते त्रीणि रजते त्रीणि अयसि त्रीणि तपसा विष्ठितानि; ऐब्रा 7·12 रजतमन्तर्धाय प्रातरुद्धरेत्; षब्रा 5·6 अथ यदास्य कनकरजतवरवस्त्र...वियोगा भवन्ति; छां 3·19·1. —*d*) अ 11·3·8 त्रपु भस्म; वासं 18·13 हिरण्यं च मे......त्रपु च मे यज्ञेन कल्पन्ताम्; तैब्रा 3·12·6·5 सर्वं सीसं त्रपु; जै 3·17·3. —*e*) वासं 18·13 सीसं च मे; अ 1·16·4 तं त्वा सीसेन विध्यामः; अ 12·2·20 सीसे मलं सादयित्वा... शुद्धा भवत यज्ञियाः; शब्रा 12·7·1·7 नाभ्या एवास्य शूषोऽस्रवत् तत्सीसमभवत्, न अयो न हिरण्यम्; 12·7·2·10 उभयोर्वा एतद्रूपं अयसश्च हिरण्यस्य च यत्सीसम्.

एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टꣳ संदधाति । भेषजकृतो[a] ह वा एष यज्ञो यत्रैवंविद् ब्रह्मा भवति ॥ ८ ॥

*a*) शांब्रा 5·9 एतेषामेव वेदानां भिषज्यायै.

एष ह वा उदक्प्रवणो[a] यज्ञो यत्रैवंविद् ब्रह्मा भवति । एवंविदꣳ ह वा एषा ब्रह्माणमनु गाथा[b] । यतो यत आवर्तते तत्तद्गच्छति — ॥ ९ ॥

*a*) शांब्रा 6·10 उदीचीनप्रवणो यज्ञः; cp छां 4·15·5 उदङ्ङेति मासाꣳस्तान्. —*b*) मै 1·2 राजेमां गाथां जगाद.

मानवः । ब्रह्मैवैक ऋत्विक्कुरूनश्वा[a]ऽभिरक्षति । एवंविद्ध वै ब्रह्मा यज्ञं यजमानꣳ सर्वाꣳश्चर्त्विजोऽभिरक्षति । तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं नानेवंविदम् ॥ १० ॥

*a*) BR's illuminating suggestion अश्वा = न श्वा = श्वा इव ! अश्वा = Latin *aqua* i. e. water or river ? or can it be कुरून् आशु अभिरक्षति ? Böhtlingk suggests अक्ष्णा.

॥ इति सप्तदशः खण्डः ॥

॥ इति चतुर्थोऽध्यायः ॥

---

योह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति। प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ॥ १ ॥

Cp in general बृ 6·1·1–14; कौ 3·3; प्र 2·3.

यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति। वाग्वाव वसिष्ठः ॥ २ ॥

यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिꣳश्च लोकेऽमुष्मिꣳश्च। चक्षुर्वाव प्रतिष्ठा ॥ ३ ॥

यो ह वै संपदं वेद सꣳहास्मै कामाः पद्यन्ते दैवाश्च मानुषाश्च। श्रोत्रं वाव संपत् ॥ ४ ॥

यो ह वा आयतनं वेदाऽऽयतनꣳह स्वानां भवति। मनो ह वा आयतनम् ॥ ५ ॥

अथ ह प्राणा अꣳहꣳश्रेयसि व्यूदिरे। अहꣳश्रेयानस्म्यहꣳश्रेयानस्मीति ॥ ६ ॥

*a* ) ऋ 1·167·7 अहंयुः स्थिरा चित्; 1·181·3 मनसो जवीयानहंपूर्वः; 10·42·4 त्वां जना ममसत्येषु विह्वयन्ते समीके; अ 3·8·3 हुवे सोमं…नमोभिः अहमुत्तरत्वे; अ 3·18·4 उत्तरा अहमुत्तरे ( following ऋ 10·145·3 where अहमुत्तरे ought to be one word ); अ 4·22·1 तान् रन्धय अस्मा अहमुत्तरेषु; 12·4·50 तस्मात्तं देवाः…अवृश्चन्नहमुत्तरे; शब्रा 1·4·5·8 मनश्च ह वै वाक् अहंभद्रे ऊदाते; बृ 1·5·21; कौ 2·14; 3·3; प्र 2·2–4. Cp in general छां 5·1·6 –5·2·2 ( the most original form ); बृ 6·1·7–14.

ते ह प्राणाः प्रजापतिं पितरमेत्योचुः भगवन्को नः श्रेष्ठ इति। तान्होवाच— यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति ॥ ७ ॥

सा ह वागुच्चक्राम। सा संवत्सरं प्रोष्य पर्येत्योवाच—कथमशकतर्ते मज्जीवितुमिति। यथा कला अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति। प्रविवेश ह वाक् ॥ ८ ॥

*a* ) शब्रा 1·4·3·15 वाचात्मन आर्तिमारिष्यासि मूको भविष्यसीति; 11·5·4·13 अयमस्य वाचमादित मूको भविष्यतीति.

चक्षुर्होच्चक्राम। तत्संवत्सरं प्रोष्य पर्येत्योवाच—कथमशकतर्ते मज्जीवितुमिति। यथाऽन्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति। प्रविवेश ह चक्षुः ॥ ९ ॥

श्रोत्रꣳ होच्चक्राम । तत्संवत्सरं प्रोष्य पर्येत्योवाच — कथमशकतर्ते मज्जीवितुमिति । यथा बधिरा अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मनसैवमिति । प्रविवेश ह श्रोत्रम् ॥ १० ॥

*a*) ऋ 4·23·8 ऋतस्य श्लोको बधिरा ततर्द कर्णा; 9·73·6 अपानक्षासो बधिरा अहासत ऋतस्य पन्थां न तरन्ति दुष्कृतः; अ 11·3·33 बधिरो भविष्यसीति et passim; नि 10·41 बधिरः बद्धश्रोत्रः.

मनो होच्चक्राम । तत्संवत्सरं प्रोष्य पर्येत्योवाच—कथमशकतर्ते मज्जीवितुमिति । यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति । प्रविवेश ह मनः ॥ ११ ॥

अथ ह प्राण उच्चिक्रमिषन् स यथा सुहयः पड्वीशशङ्कून्संखिदेदेवमितरान्प्राणान्समखिदत् । तꣳ हाभिसमेत्योचुः । भगवन्नेधि । त्वं नः श्रेष्ठोऽसि । मोत्क्रमीरिति ॥ १२ ॥

*a*) ऋ 1·162·14 यच्च पड्वीशमर्वतः; 1·162·16 संदानमर्वन्तं पड्वीशम्; 10·97·16 यमस्य पड्वीशात्; अ 8·1·4 मृत्योः पड्वीशमवमुञ्चमानः; 12·5·15 मृत्योः पड्वीशे; तैब्रा 1·6·10·3 एष वा अग्नीनां पड्वीशो नाम; as पड्विंश in मंब्रा 1·3·10.

अथ हैनं वागुवाच — यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीति । अथ हैनं चक्षुरुवाच — यदहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठाऽसीति ॥ १३ ॥

अथ हैनꣳ श्रोत्रमुवाच । यदहꣳ संपदस्मि त्वं तत्संपदसीति । अथ हैनं मन उवाच — यदहमायतनमस्मि त्वं तदायतनमसीति ॥ १४ ॥

न वै वाचो न चक्षूꣳषि न श्रोत्राणि न मनाꣳसीत्याचक्षते । प्राणा इत्येवाऽऽचक्षते । प्राणो ह्येवैतानि सर्वाणि भवति ॥ १५ ॥

*a*) बृ 1·5·21; कौ 3·3.

॥ इति प्रथमः खण्डः ॥

---

स होवाच किं मेऽन्नं भविष्यतीति । यत्किंचिदिदमा श्वभ्य आ शकुनिभ्य इति होचुः । तद्वा एतदनस्यान्नम् । अनो ह वै नाम प्रत्यक्षम् । न ह वा एवंविदि किंचनानन्नं भवतीति ॥ १ ॥

Cp in general बृ 6·3.

*a*) बृ 6·1 14. —*b*) छां 5·18·1; बृ 1·3·7.

स होवाच किं मे [a]वासो भविष्यतीति । आप इति होचुः । तस्माद्वा एतद्-शिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति । लम्भुको[b] ह वासो भवति । अनग्नो ह भवति ॥ २ ॥

*a*) बृ 6·1·14. —*b*) Only here!

तद्धैतत्सत्यकामो जाबालो गोश्रुतये[a] वैयाघ्रपद्यायोक्त्वोवाच — यद्यप्येनच्छुष्काय[b] स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीति[c] ॥ ३ ॥

*a*) शांआ 9·7 गोश्रुत. —*b*) बृ 6·3·7–12. Cp Iliad I. 234f *ναὶ μὰ τόδε σκῆπτρον, τὸ μὲν οὔ ποτε φύλλα καὶ ὄζους φύσει.* —*c*) पलाश (in अपलाश) ऋ 10·27·14 बृहन्नच्छायो अपलाशो अर्वा; 10·43·4 वयो न वृक्षं सुपलाशमासदन्; 10·135·1 यस्मिन् वृक्षे सुपलाशे.... अ 6·30·3 बृहत्पलाशे सुभगे वर्षवृद्ध ऋतावरि...शमि ! शब्रा 2·6·2·8 ब्रह्म वै पलाशस्य पलाशम्; 5·2·1·17 आश्वत्थेषु पलाशेषु उपनद्धा भवन्ति; छां 4·14·3.

अथ यदि [a]महज्जिगमिषेत्, अमावास्यायां दीक्षित्वा पौर्णमास्याꣳ रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे [b]संपातमवनयेत् ॥ ४ ॥

*a*) बृ 6·3·1. —*b*) बृ 6·3·2 (संस्रव for संपात).

वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् । प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् । संपदे स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् । आयतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् ॥ ५ ॥

अथ प्रतिसृप्याञ्जलौ मन्थमाधाय जपति — [a]अमो नामासि । अमा हि ते सर्वमिदम् । स हि ज्येष्ठः श्रेष्ठो राजाऽधिपतिः । स मा ज्यैष्ठ्यꣳ श्रैष्ठ्यꣳ राज्यमाधिपत्यं गमयतु । [b]अहमेवेदꣳ सर्वमसानीति ॥ ६ ॥

*a*) बृ 1·3·22. —*b*) बृ 6·3·6 भूयासम् for असानि.

अथ खल्वेतयर्चा[a] पच्छ[b] आचामति ।

तत्सवितुर्वृणीमह[c] इत्याचामति ।

वयं देवस्य भोजनमित्याचामति ।

श्रेष्ठꣳ सर्वधातममित्याचामति ।

तुरं भगस्य धीमहीति सर्वं पिबति ।

निर्णिज्य कꣳसं चमसं वा पश्चादग्नेः संविशति । चर्मणि वा स्थण्डिले[d] वा वाचंयमोऽप्रसाहः । स यदि स्त्रियं पश्येत् समृद्धं कर्मेति विद्यात् ॥ ७ ॥

*a*) ऋक् is ऋ 5·82·1. —*b*) ऐब्रा 2·18 पच्छो अनूच्यः प्रातरनुवाकः; 6·24 पच्छः प्रथमं अर्धर्चशः द्वितीयं ऋक्शस्तृतीयम्; पा 6·3·55 ऋचः शे; शब्रा 11·5·4·15 तां वै पच्छो अन्वाह. —*c*) बृ 6·3·1; 6·4·13; 6·4·24; जै 1·25·5. —*d*) शांब्रा 6·14; गोब्रा 2·1·2 प्राग्दण्डं स्थण्डिले निदधाति; पब्रा 5·2 स्थण्डिलमुपलिप्य; पा 4·2·15 स्थण्डिलाच्छयितरि व्रते. —*e*) ऐब्रा 5·33 प्रातरनुवाके वाचंयमः स्यात्.

तदेष श्लोकः—

यदा कर्मसु काम्येषु स्त्रियꣳ स्वप्नेषु पश्यति ।

समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने तस्मिन्स्वप्ननिदर्शने ॥ ८ ॥

*a*) मनु 12·89 इह चामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते. —*b*) मनु 11·45 एके श्रुतिनिदर्शनात्; गौका 3·3 जातौ एतन्निदर्शनम्.

॥ इति द्वितीयः खण्डः ॥

---

श्वेतकेतुर्हाऽऽरुणेयः पञ्चालानाꣳ समितिमेयाय । तꣳ ह प्रवाहणो जैवलिरुवाच । कुमारानु त्वाऽशिषत्पितेति । अनु हि भगव इति ॥ १ ॥

Cp in general छां 5·3–10; बृ 6·2; कौ 1.

*a*) ऋ 9·92·6 राजा न सत्यः समितीरियानः; 10·97·6 यत्रौषधीः समग्मत राजानः समिताविव; cp परिषद् in बृ 6·2·1. —*b*) छां 1·8·1; बृ 6·2·1; जै 1·38·4.

वेत्थ यदितोऽधि प्रजाः प्रयन्तीति । न भगव इति । वेत्थ यथा पुनरावर्तन्त३ इति । न भगव इति । वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना३ इति । न भगव इति ॥ २ ॥

*a*) Cp अ 6·26·2 पथामनु व्यावर्तने अन्यं पाप्मा अनुपद्यताम्.

वेत्थ यथाऽसौ लोको न संपूर्यत३ इति । न भगव इति । वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति । नैव भगव इति ॥ ३ ॥

*a*) बृ 6·2·2.

अथानु[1] किमनु शिष्टोऽवोचथा यो हीमानि न विद्यात् । कथꣳ सोऽनुशिष्टो ब्रुवीतेति । स हाऽऽयस्तः पितुरर्धमेयाय । तꣳ होवाचाननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाऽशिषमिति ॥ ४ ॥

1) Is अथा नु Vedic?

*a*) Śankarāchārya understands किमनु = कस्मात्. —*b*) ब्रुवीत is passive. —*c*) ऋ 6·47·21 दिवेदिवे सदृशीरन्यमर्धम्; अ 8·9·1 कुतस्तौ जातौ कतमः सोऽर्धः; शब्रा 4·3·4·14 स्वैरेव रूपैर्यज्ञस्यार्धादुपायन्; 7·3·1·6 आहवनीयस्यार्धमैति; छां 5·3·6 राज्ञोऽर्धम्; प्र 1·11 दिवः परेऽर्धे. —*d*) बृ 4·1·2 न अननुशिष्य हरेत.

पञ्च मा राजन्यबन्धुः[a] प्रश्नानप्राक्षीत् । तेषां नैकंचनाशकं विवक्तुमिति । स होवाच — यथा मा त्वं तदैतानवदो यथाऽहमेषां नैकंचन वेद । यद्यहमिमानवेदिष्यं[b] कथं ते नावक्ष्यमिति ॥ ५ ॥

*a*) शब्रा 11·6·2·5 अति वै नोऽयं राजन्यबन्धुरवादीत्; बृ 6·2·3. —*b*) छां 6·1·7.

स ह गौतमो राज्ञोऽर्धमेयाय[a] । तस्मै ह प्राप्तायार्हां चकार[b] । स ह प्रातः[c] सभाग[d] उदेयाय । त\~ होवाच । मानुषस्य भगवन् गौतम वित्तस्य वरं वृणीथा इति । स होवाच — तवैव[e] राजन्मानुषं वित्तम् । यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति । स ह कृच्छ्री[f] बभूव ॥ ६ ॥

*a*) छां 5·3·4 ( above ). —*b*) छां 5·11·5 पृथगर्हाणि कारयांचकार. —*c*) छां 5·11·5 ( प्रातः संजिहानः ). —*d*) शब्रा 3·3·4·14 राजानं सभागा आगच्छन्ति; जैब्रा 1·22 अथ हैषां सभाग आवव्राज. शंकराचार्य understands this word differently as सभा-ग and स-भाग. —*e*) छां 4·5·3 तवैव सह गोभिरस्तु; क 1·26 तवैव वाहाः. —*f*) ऋ 10·52·4 मां देवा दधिरे...अप म्लुक्तं बहु कृच्छ्रा चरन्तम्; ऋ 6·75·9 कृच्छ्रेश्रितः शक्तीवन्तो गभीराः; ऐब्रा 4·4 नेच्छन्दसां कृच्छ्रादवपद्या इति; पा 3·2·130 इङ्धार्योः शत्रकृच्छ्रिणि.

त\~ ह चिरं वसेत्याज्ञापयांचकार । त\~ होवाच । यथा मा त्वं गौतमावदः । यथेयं न प्राक् त्वत्तः पुरा विद्या ब्राह्मणान् गच्छति[a] । तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति[b] । तस्मै होवाच ॥ ७ ॥

Cp बृ 5·2; कौ 1.

*a*) पा 3·3·4 यावत्पुरानिपातयोर्लट्. —*b*) बृ 3·8·9 एतस्य वा अक्षरस्य प्रशासने; ब्रसू 1·3·11 सा च प्रशासनात्.

॥ इति तृतीयः खण्डः ॥

---

असौ वाव लोको गौतमाग्निः । तस्याऽऽदित्य एव समित् । रश्मयो धूमः । अहरर्चिः । चन्द्रमा अङ्गाराः । नक्षत्राणि विस्फुलिङ्गाः ॥ १ ॥

Cp in general छां 5·4–9 with शब्रा 14·9·1·12–16 ( i. e. बृ 6·2·9–13 ).

तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति। तस्या आहुतेः सोमो राजा संभवति ॥ २ ॥

*a*) जै 3·11·4,7.

॥ इति चतुर्थः खण्डः ॥

---

पर्जन्यो वाव गौतमाग्निः। तस्य वायुरेव समित्। अभ्रं धूमः। विद्युदर्चिः। अशनिरङ्गाराः। ह्रादुनयो विस्फुलिङ्गाः ॥ १ ॥

*a*) ऋ 1·32·13 न यां मिहमकिरद् ध्रादुनिं च; 5·54·3 वातात्विषः...... ह्रादुनीवृतः स्तनयत्; तैसं 7·4·13·1 ह्रादुनीभ्यः स्वाहा; तैब्रा 3·12·7·3 सर्वा विद्युतः सर्वान्स्तनयित्नून् ह्रादुनीर्यच्च शीयते; शब्रा 11·2·7·21 ह्रादुनिर्द्वितीयः (अनुयाजः).

तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳराजानं जुह्वति। तस्या आहुतेर्वर्षꣳ संभवति ॥ २ ॥

॥ इति पञ्चमः खण्डः ॥

---

पृथिवी वाव गौतमाग्निः। तस्याः संवत्सर एव समित्। आकाशो धूमः। रात्रिरर्चिः। दिशोऽङ्गाराः। अवान्तरदिशो विस्फुलिङ्गाः ॥ १ ॥

*a*) ऋ 1·164·42 तेन जीवन्ति प्रदिशश्चतस्रः; अ 5·28·2 प्रदिशो दिशश्च; वासं 6·19 दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहा; 24·26 बभ्रुकान् अवान्तरदिशाभ्यः (आलभते); शब्रा 13·8·1·5 इतरेणात्मना अवान्तरदिक्षु; तैआ 3·9·2 चतस्रो दिशश्चतस्रोऽवान्तरदिशाः; बृ 1·1·1; 6·2·9; तै 1·7; श्वे 2·16.

तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति। तस्या आहुतेरन्नꣳ संभवति ॥ २ ॥

॥ इति षष्ठः खण्डः ॥

---

पुरुषो वाव गौतमाग्निः। तस्य वागेव समित्। प्राणो धूमः। जिह्वाऽर्चिः। चक्षुरङ्गाराः। श्रोत्रं विस्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति। तस्या आहुते रेतः संभवति ॥ २ ॥

॥ इति सप्तमः खण्डः ॥

---

योषा वाव गौतमाग्निः । तस्या उपस्थ एव समित् । यदुपमन्त्रयते स धूमः । योनिरर्चिः । यदन्तः करोति तेऽङ्गाराः । अभिनन्दा विस्फुलिङ्गाः ॥ १ ॥

*a*) बृ 1·5·16; 6·2·13; 6·4·3; छां 3·17·5; तै 1·9, 11. —*b*) शब्रा 1·7·4·2 य इत्थं स्वां दुहितरमस्माकं स्वसारं करोति.

तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति । तस्या आहुतेर्गर्भः संभवति ॥ २ ॥

॥ इति अष्टमः खण्डः ॥

---

इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति । स उल्बावृतो गर्भो दश वा नव वा मासानन्तः शयित्वा यावद्वाथ जायते ॥ १ ॥

*a*) ऋ 10·51·1 महत्तदुल्बं स्थविरं तदासीत्; अ 4·2·8 उल्ब आसीद्धिरण्ययः; तैसं 6·1·3·2 गर्भो वा एष यद्दीक्षित उल्बं वासः प्रोर्णुते; वासं 19·76 गर्भो जरायुणावृत उल्बं जहाति जन्मना; शब्रा 3·2·1·11 अन्तरं वा उल्बं जरायुणो भवति; 3·2·1·16 प्रावृता वै गर्भा उल्बेनेव जरायुणेव; 6·5·3·5 अथो गर्भ उल्बं जरायु; छां 3·19·2; गी 3·38 यथोल्बेनावृतो गर्भः. —*b*) ऐब्रा 7·13 दशमे मासि जायते.

स जातो यावदायुषं जीवति । तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः संभूतो भवति ॥ २ ॥

*a*) वासं 30·7 दिष्टाय रज्जुसर्जम्, मृत्यवे मृगयुम्, अन्तकाय श्वनिनम्; अ 10·3·16 तांस्त्वं प्रच्छिन्द्धि वरण पुरा दिष्टात् पुराऽऽयुषः; 12·3·55 दिष्टं नो अत्र जरसे नि नेषत् जरा मृत्यवे....... —*b*) छां 5·10·5; बृ 6·3·6.

॥ इति नवमः खण्डः ॥

---

तद्य इत्थं विदुः । ये चेमेऽरण्ये श्रद्धा तप इत्युपासते । तेऽर्चिषमभिसंभवन्ति । अर्चिषोऽहः । अह्न आपूर्यमाणपक्षम् । आपूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान् ॥१॥

Cp छां 5·10 with बृ 6·2·15,16; कौ 1·3.

*a*) Deussen interprets श्रद्धा as तपः. Cp छां 2·23; बृ 3·8·10;5·11; मुं 1·2·11 (तपःश्रद्धे). —*b*) छां 4·15·5; 8·13·1 ब्रह्मलोकमभिसंभवामि.

मासेभ्यः संवत्सरम् । संवत्सरादादित्यम् । आदित्याच्चन्द्रमसम् । चन्द्रमसो विद्युतम् । तत्पुरुषोऽमानवः । स एनान् ब्रह्म गमयति । एष देवयानः पन्था इति ॥ २ ॥

*a*) बृ 6·2·5 has पुरुषो मानसः. —*b*) ऋ 1·72·7 अध्वनो देवयानान्; शब्रा 1·9·3·2 स एष देवयानो वा पितृयाणो वा पन्थाः; छां 4·15·5–6.

अथ य इमे [a]ग्राम [b]इष्टापूर्ते [c]दत्तमित्युपासते । ते धूममभिसंभवन्ति । धूमाद्रात्रिम् । रात्रेरपरपक्षम् । अपरपक्षाद्यान्षड् दक्षिणैति मासाꣳस्तान् । नैते संवत्सरमभिप्राप्नुवन्ति ॥ ३ ॥

*a*) Contrast छां 8·15. —*b*) ऋ 10·14·1 संगच्छस्व...इष्टापूर्तेन परमे व्योमन्; अ 9·5·13 इष्टं पूर्तमभिपूर्तं वषट्कृतम् तद्देवा ऋतुशः कल्पयन्तु; शब्रा 13·1·5·6 अयजत इति अददादिति ब्राह्मणो गायति, इष्टापूर्तं वै ब्राह्मणस्य; क 1·8; मुं 1·2·10; पा 5·2·88 इष्टादिभ्यश्च. —*c*) Cp त्यक्तेन in ई 1.

मासेभ्यः पितृलोकम् । पितृलोकादाकाशम् । आकाशाच्चन्द्रमसम् । एष सोमो [a]राजा । तद्देवानामन्नम् । तं देवा भक्षयन्ति ॥ ४ ॥

*a*) शब्रा 1·6·4·15 एष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः.

तस्मिन्यावत्[a]संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते [b]यथेतम् । आकाशम् । आकाशाद्वायुम् । वायुर्भूत्वा धूमो भवति । धूमो भूत्वाऽभ्रं भवति ॥ ५ ॥

*a*) संपात ( residue of कर्मन् ); कासं 28·8 स्तृत्यै संपातेन प्रीणाति; 35·16 तस्य संपातमवनयेत्; छां 5·2·4 मंथे संपातमवनयेत्; 5·2·5. —*b*) ब्रसू 3·1·8.

अभ्रं भूत्वा मेघो भवति । मेघो भूत्वा प्रवर्षति । त इह [a]व्रीहियवा ओषधिवनस्[b]पतयस्तिलमाषा इति जायन्ते अतो वै खलु दुर्निष्प्र[1][c]पतरम् । यो यो ह्यन्नमत्ति, यो रेतः [d]सिञ्चति, त[e]द्भूय एव भवति ॥ ६ ॥

1) BR reads दुर्निष्प्रपतनम्; शंकराचार्य explains : दुर्निष्प्रपतरम् इति तकार एको लुप्तो द्रष्टव्यः.

*a*) अ 6·140·2 व्रीहिमत्तं यवमत्तमथो माषमथो तिलम्; 8·2·18 शिवौ ते स्ताम् व्रीहियवौ; वासं 18·12 व्रीहयश्च...यवाश्च...माषाश्च...तिलाश्च; पा 4·3·148 व्रीहेः पुरोडाशे; 4·5·149 असंज्ञायां तिलयवाभ्याम्; 5·1·7...यवमाषतिल...also 5·2·2–4. —*b*) ऐ 1·1·4; 1·2·4. —*c*) Cp पतर in ऋ 1·193·4 पतरमग्निम्; also पतरु in 1·82·7 पर्णा मृगस्य पतरोः. —*d*) ब्रसू 3·1·26 रेतःसिग्योगोऽथ. —*e*) Deussen and Senart take this as तद् भूय एव भवति, while शंकराचार्य takes it as a compound word meaning तदाकृति. On भूय-compounds, see पा 3·1·107 भुवो भावे.

तद्य इह रमणीय[a]चरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । अथ य इह कपूय[b]चरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा ॥ ७ ॥

*a* ) चरण ( a way of life, conduct ) perhaps here for the first time. —*b* ) नि 6·19 मघवा यः कत्रासखा ( ऋ 5·34·3 ) i. e. यस्य कपूयाः सखायः. —*c* ) छां 5·24·4 ( चण्डालाय ); बृ 4·3·22 ( अचाण्डाल ); अ 2·14·1 सर्वाश्चिण्डस्य नप्त्यः.

अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेति । एतत्तृतीयꣳस्थानम् । तेनासौ लोको न संपूर्यते । तस्माज्जुगुप्सेत । तदेष श्लोकः — ॥ ८ ॥

*a* ) प्र 1·9–10. —*b* ) Cp मै 1·4 दंशमशकादयः उद्भूतप्रध्वंसिनः. —*c* ) कौ 1·2 drops the words तृतीयं स्थानम्. —*d* ) तैआ 2·8·7 जुगुप्सेतानृतात्; छां 5·3·3. —*e* ) ई 6; जै 4·25·4.

स्तेनो हिरण्यस्य सुरां पिबꣳश्च गुरोस्तल्पमावसन् ब्रह्महा च ।
एते पतन्ति चत्वारः पञ्चमश्चाऽऽचरꣳस्तैरिति ॥ ९ ॥

Cp in general मनु 11·54 ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥ नि 6·27 स्तेयं तल्पारोहणं ब्रह्महत्यां भ्रूणहत्यां सुरापानं दुष्कृतकर्मणां पुनः पुनः सेवां पातके अनृतोद्यम्.

*a* ) Contrast छां 5·11·5. —*b* ) ऋ 7·55·8 नारीर्यास्तल्पशीवरीः; अ 5·17·12 कल्याणी तल्पमाशये; 14·2·31 आरोह तल्पं सुमनस्यमाना; तैसं 6·2·6·4 नैनं पात्रे न तल्पे मीमांसन्ते; तैआ 10·1·15 गुरुतल्पगः.

अथ ह य एतानेवं पञ्चाग्नीन् वेद न सह तैरप्याचरन् पाप्मना लिप्यते । शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥ १० ॥

*a* ) ऐब्रा 1·16 न पाप्मना संसृज्यते; छां 4·14·3 पापं कर्म न श्लिष्यते.

॥ इति दशमः खण्डः ॥

---

प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिंद्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमाꣳसां चक्रुः । को न आत्मा, किं ब्रह्मेति ॥ १ ॥

Cp in general छां 5·11–18 with शब्रा 10·6·1·1–11.

*a* ) शब्रा 10·3·3·1 महाशालं जाबालमुप उत्ससाद; छां 5·11·3; छां 6·4·5; मुं 1·1·3. —*b* ) अ 9·1·3 पृथङ् नरो बहुधा मीमांसमानाः; 12·4·42 तां देवा अमीमांसन्त वशेया३ मवशेति तामब्रवीन्नारदः—एषा वशानां वशतमेति; बृ 1·5·21 व्रतमीमांसा; तै 2·8 आनन्दस्य मीमांसा; के 2·1 मीमांस्यम्. Cp पा 3·1·6 मान्-बध-दान्-शान्भ्यो दीर्घश्चाभ्यासस्य; पा 8·2·97 विचार्यमाणानाम्.

ते ह संपादयांचक्रुः । उद्दालको वै भगवन्तोऽयमारुणिः संप्रतीममात्मानं वैश्वानरमध्येति । तꣳ हन्ताभ्यागच्छामेति । तꣳ हाभ्याजग्मुः ॥ २ ॥

*a*) अ 12·3·39 संपादयन्तौ सह लोकमेकम्; ऐब्रा 2·25 देवा वै ... अग्रपेये न समपादयन्; शब्रा 3·3·3·4 अर्वाङ् पणन्ते परः संपादयन्ति. —*b*) अग्नि or आत्मन् common to all creatures, good or evil. Cp Matthew 5·45.

स ह संपादयांचकार । प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियाः । तेभ्यो न सर्वमिव प्रतिपत्स्ये । हन्ताहमन्यमभ्यनुशासानीति ॥ ३ ॥

तान् होवाच । अश्वपतिर्वै भगवन्तोऽयं कैकेयः संप्रतीममात्मानं वैश्वानरमध्येति । तꣳ हन्ताभ्यागच्छामेति । तꣳ हाभ्याजग्मुः ॥ ४ ॥

*a*) शब्रा 10·6·1·2. —*b*) पा 7·3·2 (केकय).

तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयांचकार । स ह प्रातः संजिहान उवाच —

न मे स्तेनो जनपदे न कदर्यो न मद्यपः ।
नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतः ॥

यक्ष्यमाणो वै भगवन्तोऽहमस्मि । यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि । वसन्तु भगवन्त इति ॥ ५ ॥

*a*) जैब्रा 1·22 तेभ्यो ह प्रोक्तेभ्यः (for प्राप्तेभ्यः) पृथगासनानि पृथगुदकानि पृथङ् मधुपर्कान् पृथगावसथान् पृथक् पत्नीभ्यः पत्नी अपचिती-(for अर्हाणि) श्चकार; छां 5·3·6 (अर्हां चकार). —*b*) छां 4·1·5. —*c*) ऐब्रा 8·14 ये के च परेण हिमवन्तं जनपदा उत्तरकुरव उत्तरमद्रा इति; तैब्रा 2·3·9·9 आ अस्य तं जनपदं पूर्वा कीर्तिर्गच्छति; बृ 2·1·18; छां 8·1·5. —*d*) Cp कवारि in ऋ 10·107·3 न कवारिभ्यो न हि ते पृणन्ति; also कवत्नु in ऋ 7·32·9 न देवासः कवत्नवे; पा 6·3·101 कोः कत् तत्पुरुषेऽचि. —*e*) ऋ (खिल) 3·10·5 ब्रह्मवधात्सुरापाना-त्सुवर्णस्तेयात्......; छां 5·10·9 (सुरां पिबंश्च). —*f*) तैसं 2·2·2·2 य आहिताग्निः सन् अव्रत्यमिव चरेत्; शब्रा 2·2·2·20 न वा आहिताग्निना अनृतं वदितव्यम्. —*g*) Cp कात्यायन (on पा 6·1·89) स्वादीरेरिणोः.

ते होचुः — येन हैवार्थेन पुरुषश्चरेत्तꣳ हैव वदेत् । आत्मानमेवेमं वैश्वानरꣳ संप्रत्यध्येषि । तमेव नो ब्रूहीति ॥ ६ ॥

तान् होवाच — प्रातर्वः प्रतिवक्ताऽस्मीति । ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे । तान् हानुपनीयैवैतदुवाच ॥ ७ ॥

*a*) छां 8·7·2; 8·9·1; कौ 1·1; 4·19; मुं 1·2·12; प्र 1·1; cp छां 4·4·5 समिधमाहर. —*b*) Contrast with छां 8·11·3; बृ 2·1·14; 6·2·7; कौ 1·1; 4·19; प्र 1·1; मुं 1·2·12.

॥ इति एकादशः खण्डः ॥

औपमन्यव कं त्वमात्मानमुपास्स इति । दिवमेव भगवो राजन्निति होवाच । एष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते ॥ १ ॥

Cp in general छां 5·12-17 with छां 7·1·14 and बृ 4·1.

*a*) सुतेजाः haplology for सुततेजाः as in शब्रा 10·6·1·8 यो वै एतं सुततेजसं वैश्वानरं वेद.

अत्स्यन्नं, पश्यसि प्रियम् । अत्त्यन्नं, पश्यति प्रियम्, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । मूर्धा त्वेष आत्मन इति होवाच । मूर्धा ते व्यपतिष्यद्यन् मां नाऽऽगमिष्य इति ॥ २ ॥

॥ इति द्वादशः खण्डः ॥

---

अथ होवाच सत्ययज्ञं पौलुषिम्—प्राचीनयोग्य कं त्वमात्मानमुपास्स इति । आदित्यमेव भगवो राजन्निति होवाच । एष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात्तव बहु विश्वरूपं कुले दृश्यते ॥ १ ॥

*a*) बृ 2·6·2; 6·5·2; तै 1·6. —*b*) बृ 2·2·3; तै 1·4; श्वे 6·5; मै 6·8; प्र 1·7,8.

प्रवृत्तोऽश्वतरीरथो दासीनिष्कः । अत्स्यन्नं, पश्यसि प्रियम् । अत्त्यन्नं, पश्यति प्रियं, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । चक्षुष्ट्वेतदात्मन इति होवाच । अन्धोऽभविष्यो यन् मां नाऽऽगमिष्य इति ॥ २ ॥

॥ इति त्रयोदशः खण्डः ॥

---

अथ होवाचेन्द्रद्युम्नं भाल्लवेयम्—वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति । वायुमेव भगवो राजन्निति होवाच । एष वै पृथग्वर्त्माऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात्त्वां पृथग्बलय आयन्ति, पृथग्रथश्रेणयोऽनुयन्ति ॥ १ ॥

*a*) छां 5·2·3; 5·16·1; बृ 6·5·1. —*b*) छां 5·18·2; शब्रा 10·6·1·7,11.

अत्स्यन्नं, पश्यसि प्रियम् । अत्त्यन्नं, पश्यति प्रियं, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । प्राणस्त्वेष आत्मन इति होवाच । प्राणस्त उदक्रमिष्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

॥ इति चतुर्दशः खण्डः ॥

अथ होवाच जनं (शार्कराक्ष्यम्)—शार्कराक्ष्य कं त्वमात्मानमुपास्स इति । आकाशमेव भगवो राजन्निति होवाच । एष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात्त्वं बहुलोऽसि प्रजया च धनेन च ॥ १ ॥

अत्स्यन्नं, पश्यसि प्रियम् । अत्त्यन्नं, पश्यति प्रियं, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । संदेहँस्त्वेष आत्मन इति होवाच । संदेहस्ते व्यशीर्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

*a*) शब्रा 3·1·3·3 संदेघो हैवास; 10·5·3·8 इमं संदेघं अन्नसंदेहं...... शब्रा 14·7 2·17 = बृ 4·4·13 अस्मिन् संदेह्ये (v. l. संदेघे) गहने प्रविष्टः; छां 5·18·2.

॥ इति पञ्चदशः खण्डः ॥

---

अथ होवाच बुडिलमाश्वतराश्विम्—वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति । अप एव भगवो राजन्निति होवाच । एष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात्त्वꣳ रयिमान् पुष्टिमानसि ॥ १ ॥

अत्स्यन्नं, पश्यसि प्रियम् । अत्त्यन्नं, पश्यति प्रियं, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । वस्तिस्त्वेष आत्मन इति होवाच । वँस्तिस्ते व्यभेत्स्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

*a*) अ 1·3·6 यद्वस्तावधि संश्रु(श्रि)तम्; 1·3·8 विषितं ते वस्तिबिलं समुद्रस्योदधेरिव; 11·3·43 समुद्रेण वस्तिना; वासं 19·88 बस्तिर्न शेपो हरसा तरस्वी; 25·7 अपो वस्तिना; तैब्रा 2·2·9·2 तद्वास्तिमाभिनत्, स समुद्रो अभवत्, तस्मात्समुद्रस्य न पिबन्ति, प्रजननमिव हि मन्यन्ते; जैब्रा 1·297 या एव तत्र वस्तेर्भिद्यमानस्य आपो यन्ति ता एव ताः.

॥ इति षोडशः खण्डः ॥

---

अथ होवाचोद्दालकमारुणिम्—गौतम कं त्वमात्मानमुपास्स इति । पृथिवीमेव भगवो राजन्निति होवाच । एष वै प्रतिष्ठाऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ॥ १ ॥

अत्स्यन्नं, पश्यसि प्रियम् । अत्त्यन्नं, पश्यति प्रियं, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । पादौ त्वेतावात्मन इति होवाच । पादौ ते व्यम्लास्येतां यन्मां नाऽऽगमिष्य इति ॥ २ ॥

॥ इति सप्तदशः खण्डः ॥

---

तान् होवाच — एते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ। यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते। स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥ १ ॥

Cp in general ब्रह्म 1·2·29–31.

1 ) Böhtlingk suggests अतिविमानम्.

*a* ) ऐब्रा 8·5 तस्यै प्रादेशमात्राः पादाः स्युः; शब्रा 3·5·4·5 तान् प्रादेशमात्रं विना परिलिखति; तैब्रा 3·7·4·11 इयान् प्रादेशसंमितः; शब्रा 10·6·1·10 प्रादेशमात्रमिव ह वै सुविदिता अभिसंपन्नाः; cp छां 3·14; क 4·12; श्वे 5·8–9; मै 6·38.

तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥ २ ॥

*a* ) मां 3. —*b* ) Haplology for सुततेजाः ( शब्रा 10·6·1·8 ).

॥ इति अष्टादशः खण्डः ॥

---

तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम् । स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात् प्राणाय स्वाहेति । प्राणस्तृप्यति ॥ १ ॥

*a* ) पा 6·2·71 भक्ताख्यास्तदर्थेषु.

प्राणे तृप्यति चक्षुस्तृप्यति । चक्षुषि तृप्यत्यादित्यस्तृप्यति । आदित्ये तृप्यति द्यौस्तृप्यति । दिवि तृप्यन्त्यां यत्किंच द्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यति । तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

॥ इति एकोनविंशः खण्डः ॥

---

अथ यां द्वितीयां जुहुयात्तां जुहुयाद् व्यानाय स्वाहेति । व्यानस्तृप्यति ॥ १ ॥

व्याने तृप्यति श्रोत्रं तृप्यति । श्रोत्रे तृप्यति चन्द्रमास्तृप्यति । चन्द्रमसि तृप्यति दिशस्तृप्यन्ति । दिक्षु तृप्यन्तीषु यत्किंच दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति । तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

॥ इति विंशः खण्डः ॥

---

अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेति । अपानस्तृप्यति ॥ १ ॥

अपाने तृप्यति वाक् तृप्यति । वाचि तृप्यन्त्यामग्निस्तृप्यति । अग्नौ तृप्यति पृथिवी तृप्यति । पृथिव्यां तृप्यन्त्यां यत्किंच पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति । तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

॥ इति एकविंशः खण्डः ॥

---

अथ यां चतुर्थीं जुहुयात्तां जुहुयात् समानाय स्वाहेति । समानस्तृप्यति ॥ १ ॥

समाने तृप्यति मनस्तृप्यति । मनसि तृप्यति पर्जन्यस्तृप्यति । पर्जन्ये तृप्यति विद्युत्तृप्यति । विद्युति तृप्यन्त्यां यत्किंच विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति । तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

॥ इति द्वाविंशः खण्डः ॥

---

अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेति । उदानस्तृप्यति ॥ १ ॥

उदाने तृप्यति ( त्वक्तृप्यति । त्वचि तृप्यन्त्यां ) वायुस्तृप्यति । वायौ तृप्यत्याकाशस्तृप्यति । आकाशे तृप्यति यत्किंच वायुश्चाऽऽकाशश्चाधितिष्ठतस्तत्तृप्यति । तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

*a* ) Cp छां 3·13 where त्वक् etc. is lacking. Words in brackets are lacking in some editions.

॥ इति त्रयोविंशः खण्डः ॥

---

स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्, तादृक् तत् स्यात् ॥ १ ॥

अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥ २ ॥

*a* ) Cp छां 5·18·1.

तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳ हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति ॥ ३ ॥

*a* ) शब्रा 4·3·3·16 यथेषीकां मुञ्जाद्विवृहेत्......यथेषीका विमुञ्जा स्यात्; बृ 5·14·8; क 6·17; पा 6·3·65 इष्टकेषीकामालानां चिततूलभारिषु.

तस्माद्‌ हैवंविद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेत् । आत्मनि हैवास्य तद्वैश्वानरे हुतꣳ स्यादिति । तदेष श्लोकः — ॥ ४ ॥

*a* ) तैसं 7·3·20·1 उच्छिष्टाय स्वाहा.

यथेह क्षुधिता बाला मातरं पर्युपासते ।
एवꣳसर्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति ॥ ५ ॥

॥ इति चतुर्विंशः खण्डः ॥

॥ इति पञ्चमोऽध्यायः ॥

---

श्वेतकेतुर्हाऽऽरुणेय आस । तꣳह पितोवाच — श्वेतकेतो वस ब्रह्मचर्यम् । न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति ॥ १ ॥

Cp in general on the secondary role of the father and the son in छां 5.3·1 ff; cp छां 6·3·7 and 6·5·3 with बृ 3·7 and 3·9·27; cp छां 6·3·8–12 with बृ 4·6·2.

*a* ) पा 4·1·139 कुलात्खः; cp श्रोत्रियकुलीन and आढ्यकुलीन. —*b* ) Used in a derogatory sense as in ऐब्रा 7·27 यस्त्वं कथं वेत्थ ब्रह्मबन्धविति; cp राजन्यबन्धु in बृ 6·2·3.

स ह द्वादशवर्ष उपेत्य चतुर्विꣳशतिवर्षः सर्वान्वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय । तꣳह पितोवाच — ॥ २ ॥

*a* ) Cp छां 4·4·5; but मनु 2·36 गर्भाष्टमेऽब्दे. —*b* ) छां 6·7·2. —*c* ) Cp ऋ 10·103·9 महामनसाम्...घोषो देवानां जयतामुदस्थात् ( in its original good sense ). छां 2·11·2 ( in good sense ). —*d* ) मनु 8·197 स्तेनमस्तेनमानिनम्; पा 6·3·36 क्यङ्‌–मानिनोश्च ( दर्शनीयमानी ) ; also cp मुं 1·2·8 पण्डितंमन्यमानाः; पा 3·2·83 आत्ममाने खश्च ( दर्शनीयमानी, दर्शनीयंमन्य ). —*e* ) श्वे 3·9 वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः ( in its original good sense ); गी 16·17 आत्मसंभाविताः स्तब्धाः and गी 18·28 अयुक्तः प्राकृतः स्तब्धः as in the sense here.

श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽसि । उत तमादेशमप्राक्ष्यः, येनाश्रुतꣳ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति । कथं नु भगवः स आदेशो भवतीति ॥ ३ ॥

*a* ) शब्रा 10·4·5.1 अथादेशा उपनिषदाम्; बृ 2·3·6; छां 3·5 1–2; 3·18·1 आदिष्टम्; 3·19·1; तै 1·11; 2·3; के 4·4; जै 4·24·12. —*b* ) बृ 1·4·7; 2·4·5; 4·3·23–30; मुं 1·1·3.

**यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातꣳ स्यात्। वाचाऽऽरम्भणं विकारो नामधेयं, मृत्तिकेत्येव सत्यम् ॥ ४ ॥**

Cp छां 6·1·4–6 with छां 6·4·1-4.

Cp Parmenides : τῷ πάντ' ὄνομ' ἔστιν, ὅσσα βροτοὶ κατέθεντο πεποιθότες εἶναι ἀληθῆ, γίγνεσθαί τε καὶ ὄλλυσθαι. — "Therefore all that men have assumed confidently as true—all becoming and perishing is a mere name."

*a* ) ऋ 1·164·46 एकं सद्विप्रा बहुधा वदन्ति; 10·129·2 आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास; 10·82·6 अजस्य नाभावध्येकमर्पितम्; 10·90·2 पुरुष एवेदꣳसर्वम्; अ 10·7·21 असच्छाखां प्रतिष्ठन्तीं परममिव जना विदुः। उतो सन्मन्यन्तेऽवरे ये ते शाखामुपासते ॥ —*b* ) शब्रा 14·1·2·9 अथ मृत्पिण्डं परिगृह्णाति. —*c* ) ऋ 10·89·1 मृन्मयं गृहम्; वासं 11·59 कृत्वाय सा महीमुखीं मृन्मयीं योनिमग्नये; शब्रा 6·1·2·30 इयं नु एव प्रथमा मृन्मयीष्टका. Sometimes written as मृण्मय ( false analogy with हिरण्मय ); षब्रा 1·6 अथ यद्वै किंच यज्ञे मृण्मयं भिद्येत; तैआ 5·8·13 न मृण्मयेन पिबेत्. —*d* ) ऋ 10·54·2 मायेत्सा ते यानि युद्धान्याहुर्न अद्य शत्रुं ननु पुरा विवित्से; Indra's fights are unreal, because there are no enemies as such. अ 10·8·34 अपां त्वा पुष्पं पृच्छामि यत्र तन्मायया हितम्; बृ 2·3·6; 3·9·26; 4·2·4; 4·4·19; 4·4·20; 4·4·22; 4·5·15; क 2·14,18; कौ 3·8. —*e* ) मृत्तिका denotes *white earth* representing शुक्ल colour of the सत्त्वगुण, while लोह and कृष्णायस denote रोहित and कृष्ण colours of the रजोगुण and तमोगुण. Cp in this connection मृत्सा and मृत्स्ना *better earth* in पा 5·4·39 and 5·4·40.

**यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातꣳ स्यात्। वाचाऽऽरम्भणं विकारो नामधेयं, लोहमित्येव सत्यम् ॥ ५ ॥**

*a* ) लोह as copper ( red metal ); cp लोहित and रोहित; वासं 18·13 अश्मा च मे मृत्तिका च मे हिरण्यं च मे अयश्च मे श्यामं च मे लोहं च मे, where लोह represents लोहित of रजोगुण. —*b* ) छां 8·1·3 यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम् implying the definition of सर्वम्. —*c*) पा 1·4·20 अयस्मयानि च्छंदसि; 5·4·94 अनोऽश्मायःसरसां जातिसंज्ञयोः (कालायसम्, लोहितायसम् ). —*d* ) बृ 2·1·20 सत्यस्य सत्यम्.

**यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातꣳ स्यात्। वाचाऽऽरम्भणं विकारो नामधेयं, कृष्णायसमित्येव सत्यम्। एवꣳ सोम्य स आदेशो भवतीति ॥ ६ ॥**

*a* ) तैब्रा 3·12 6·5 यावत्कृष्णायसं सर्वं ... यावल्लोहायसं सर्वम्; जै 3·17·3 लोहायसेन कृष्णायसम्.

न वै नूनं भगवन्तस्त एतदवेदिषुः । यद्ध्येतदवेदिष्यन् कथं मे नावक्ष्यन् । इति भगवाꣳस्त्वेव मे ब्रवीत्विति । तथा सोम्येति होवाच ॥ ७ ॥

॥ इति प्रथमः खण्डः ॥

---

ᵃसदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयम् । तस्मादसतः सज्जायᵇत ॥ १ ॥

*a*) ऋ 10·72·2–3 देवानां पूर्व्ये युगेऽसतो सदजायत; देवानां युगे प्रथमेऽसतः सदजायत; 10·129·1 नासदासीन्नो सदासीत्तदानीम्; शब्रा 6·1·1·1 असद्वा इदमग्र आसीत्; तैब्रा 2·2·9·1 इदं वा अग्रे नैव किंचनासीत्; तै 2·7; छां 3·19·1; मै 6·17. —*b*) Queer form; see ऋ 1·128·1 अयं जायत मनुषो धरीमणि; 3·48·2 यज्जायथास्तदहरस्य कामे; 4·1·11 स जायत प्रथमः पस्त्यासु; 8·7·36 अग्निर्हि जानि पूर्व्यः; 8·89·5 यज्जायथा अपूर्व्य मघवन् वृत्रहत्याय.

कुतस्तु खलु सोम्यैवꣳ स्यादिति होवाच । कथमसतः सज्जायेतेति । ᵃसत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥ २ ॥

*a*) छां 6·8·7 तत्सत्यं स आत्मा; बृ 5·4·1 सत्यं ब्रह्म.

तदैᵃक्षत — बहु स्यां प्रजायेयेति । तत्तेᵇजोऽसृजत । तत्तेज ऐक्षत । बहु स्यां प्रजायेयेति । तदपोऽसृजत । तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते ॥ ३ ॥

*a*) मै 3·2; 6·4; क 3·15; प्र 6·4; श्वे 2·12; 6·2; बृ 1·4·7; तै 2·6; ऐ 1·1; 1·3·11. —*b*) But पञ्च महाभूतानि in तै 2·1; ऐ 3·3.

ता आप ऐक्षन्त — बह्व्यः स्याम प्रजायेमहीति । ता अन्नमसृजन्त । तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवति । अद्भ्य एव तदध्यन्नाᵃद्यं जायते ॥ ४ ॥

*a*) वासं 3·5 अग्निमन्नादमन्नाद्यायादधे; अ 12·5·10 पयश्च रसश्च अन्नं च अन्नाद्यं च.

॥ इति द्वितीयः खण्डः ॥

---

तेषां खल्वेषां भूतानां ᵃत्रीण्येव बीᵇजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति ॥१॥

*a*) कौ 1·2; मुं 2·1·5; ऐ 3·3 (also स्वेदजानि); जारुज for जीवज. जारुज in ऐ corresponds to जरायुज of अ 1·12·1. —*b*) ऋ 10·94·13 वपन्तो बीजमिव धान्याकृतः; अ 10·6·33 यथा बीजमुर्वरायां कृष्टे फालेन रोहति; पा 5·4·58 कृञो द्वितीयतृतीयशम्बबीजात्कृषौ..

सेयं देवतैक्षत — हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य[a] नामरूपे[b] व्याकरवाणीति ॥ २ ॥

*a*) तै 2·6; ऐ 1·3·11. —*b*) शब्रा 11·2·3·3–5 तत् द्वाभ्यामेव प्रत्यवैत् रूपेण चैव नाम्ना च...; ते हैते ब्रह्मणो महती अभ्वे...यक्षे... ; बृ 1·4·7; 1·6·3; छां 8·14·1; मुं 3·2·8; प्र 6·5; जै 4·22·8.

तासां त्रिवृतं[a] त्रिवृतमेकैकां करवाणीति । सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनाऽऽत्मनाऽनुप्रविश्य[b] नामरूपे व्याकरोत् ॥ ३ ॥

*a*) ऋ 1·140·2 अभि द्विजन्मा त्रिवृदन्नमृज्यते; 9·86·32 तन्तुं तन्वानस्त्रिवृतं यथा विदे; शब्रा 8·6·2·2 त्रिवृद्वै पशुः पिता माता पुत्रः, अथो गर्भ उल्बं जरायु, अथो त्रिवृद्वा अन्नं कृषिर्वृष्टि-र्बीजम्. —*b*) बृ 1·4·7 प्रविष्टः; 2·5·18 पुरः प्राविशत्; ऐ 1·3·11–12 कतरेण प्रपद्या इति.

तासां त्रिवृतं त्रिवृतमेकैकामकरोत् । यथा तु (नु ?) खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ४ ॥

॥ इति तृतीयः खण्डः ॥

---

यदग्ने रोहितꣳ रूपं तेजसस्तद्रूपम् । यच्छुक्लं तदपाम् । यत्कृष्णं तदन्नस्य । अपागादग्नेरग्नित्वम् । वाचाऽऽरम्भणं[a] विकारो नामधेयम्, त्रीणि रूपाणीत्येव सत्यम् ॥ १ ॥

*a*) शब्रा 12·2·4·1 वागेवारंभणीयम्; तांब्रा 16·3·7 एष गौः एकया विराजमतिरिक्तः आरम्भणमेव तत्; गोब्रा 1·2·15 य एष ओदनः पच्यते आरम्भणमेवैतत्क्रियते; बृ 3·1·6 अनारम्भणम्; छां 2·9·4; ब्रसू 2·1·14 तदनन्यत्वमारम्भणशब्दादिभ्यः.

यदादित्यस्य[a] रोहितꣳ रूपं तेजसस्तद्रूपम् । यच्छुक्लं तदपाम् । यत्कृष्णं तदन्नस्य । अपागादादित्यादादित्यत्वम् । वाचाऽऽरम्भणं विकारो नामधेयं, त्रीणि रूपाणीत्येव सत्यम् ॥ २ ॥

*a*) छां 3·1f.

यच्चन्द्रमसो रोहितꣳ रूपं तेजसस्तद्रूपम् । यच्छुक्लं तदपाम् । यत्कृष्णं तदन्नस्य । अपागाच्चन्द्राच्चन्द्रत्वम् । वाचाऽऽरम्भणं विकारो नामधेयं, त्रीणि रूपाणीत्येव सत्यम् ॥ ३ ॥

यद्विद्युतो रोहितꣳ रूपं तेजसस्तद्रूपम् । यच्छुक्लं तदपाम् । यत्कृष्णं तदन्नस्य । अपागाद्विद्युतो विद्युत्त्वम् । वाचाऽऽरम्भणं विकारो नामधेयं, त्रीणि रूपाणीत्येव सत्यम् ॥ ४ ॥

एतद्ध स्म वै तद्विद्वांस आहुः पूर्वे महाशाला महाश्रोत्रियाः । न[a] नोऽद्य कश्चनाश्रुतममतमविज्ञात[b]मुदाहरिष्यति[c] । इति ह्येभ्यो विदांचक्रुः ॥ ५ ॥

*a*) Aristotle, διὰ γὰρ ταῦτα καὶ ἐκ τούτων τἆλλα γνωρίζεται, ἀλλ' οὐ ταῦτα διὰ τῶν ὑποκειμένων. —*b*) मुं 1·1·3. —*c*) तैसं 6·2·9·4 यत्तृतीयं छर्दिर्हविर्धानयोरुदाह्रियते; ऐब्रा 7·12 सोऽपहतपाप्मोर्ध्वः स्वर्गं लोकमेतीति वै ब्राह्मणमुदाहरन्ति; बृ 6·2·3 प्रतीकानि उदाजहार; मै 6·30 अत्रोदाहरन्ति *et passim.*

यदु रोहितमिवा[a]भूदिति तेजसस्तद्रूपमिति तद्विदांचक्रुः । यदु शुक्लमिवाभूदित्यपां रूपमिति तद्विदांचक्रुः । यदु कृष्णमिवाभूदित्यन्नस्य[b] रूपमिति तद्विदांचक्रुः ॥ ६ ॥

*a*) Cp बृ 2·4·14 द्वैतमिव. —*b*) Shall we add तत् after this ?

यद्वविज्ञातमिवाभूदित्येतासामेव देवतानां समास[a] इति तद्विदांचक्रुः । यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं[b] प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ७ ॥

*a*) शब्रा 4·1·2·26 तस्मादिमानि वयांसि समासं पक्षौ आयुवानानि पतन्ति; 12·8·3·14 द्वौ द्वौ समासं हुत्वा; शांब्रा 5·1 चतसृणां वै पौर्णमासीनां वैश्वदेवं समासः; छां 7·15·3 समासं (णमुल्) व्यतिषंदहेत्. —*b*) Cp छां 6·8·6 तदुक्तं पुरस्तादेव; cp the expressions अधिदैव and अध्यात्म which latter in effect means as here अधिपुरुष. Cp शब्रा 11·2·6·13 तदाहुः—आत्मयाजी श्रेयान् देवयाजीति ? आत्मयाजीति ह ब्रूयात्.

॥ इति चतुर्थः खण्डः ॥

---

अन्नमशितं[a] त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति । यो मध्यमस्तन्मांसम् । योऽणिष्ठस्तन्मनः ॥ १ ॥

*a*) श्वे 2·13 मूत्रपुरीषमल्पम्.

आपः पीतास्त्रेधा विधीयन्ते । तासां यः स्थविष्ठो धातुस्तन्मूत्रं[a] भवति । यो मध्यमस्तल्लोहितम् । योऽणिष्ठः स प्राणः ॥ २ ॥

*a*) श्वे 2·13 मूत्रपुरीषमल्पम्.

तेजोऽशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तदस्थि भवति । यो मध्यमः स मज्जा । योऽणिष्ठः सा वाक् ॥ ३ ॥

अन्नमयꣳ हि सोम्य मनः । आपोमयः[a] प्राणः । तेजोमयी वागिति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥ ४ ॥

*a* ) Cp later आप्य and अम्मय; शब्रा 13·4·4·7 अथ यदापोमयं तेज आसीत्; बृ 4·4·5.

॥ इति पञ्चमः खण्डः ॥

---

दध्नः[a] सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति । तत्सर्पिर्भवति ॥ १ ॥

*a* ) तैसं 2·2·10·2 दुग्धं मथितमाज्यं भवति; ऐब्रा 1·3 आज्यं वै देवानाम् ... नवनीतं गर्भाणाम्; शब्रा 5·3·3·6 अथ आतच्य दधि ... तद्यत्स्वयमुदितं नवनीतं तदाज्यं भवति ...; तांब्रा 16·13·13 ततो यन्नवनीतमुदियात् तदाज्येऽपि कार्यं सद्यस्त्वाय; छां 5·2·4; श्वे 1·15 दधनीव सर्पिः.

एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति । तन्मनो भवति ॥ २ ॥

अपाꣳ सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति । स प्राणो भवति ॥ ३ ॥

तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति । सा वाग्भवति ॥ ४ ॥

अन्नमयꣳ हि सोम्य मनः । आपोमयः प्राणः । तेजोमयी वागिति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥ ५ ॥

॥ इति षष्ठः खण्डः ॥

---

षोडशकलः[a] सोम्य पुरुषः । पञ्चदशाहानि माऽऽशीः । काममपः पिब । आपोमयः प्राणो नपिबतो विच्छेत्स्यत इति ॥ १ ॥

*a* ) शब्रा 7·2·2·17 षोडशकलः प्रजापतिः; 11·1·6·36 षोडशकलो वै पुरुषः; 13·2·2·13 षोडशकलं वा इदं सर्वम्; षब्रा 4·6 षोडशकलो वै चन्द्रमाः; बृ 1·5·4; प्र 6·1.

स ह पञ्चदशाहानि नाऽऽश । अथ हैनमुपससाद, किं ब्रवीमि भो इति । ऋचः सोम्य यजूꣳषि सामानीति । स होवाच—न वै मा प्रतिभान्ति भो इति ॥ २ ॥

*a*) बृ 4·2·3 ( लोहितपिण्डः...अन्नम् ). —*b*) Cp क 2·6 न सांपरायः प्रतिभाति बालम्; नि 4·6 त्रितं कूपे अवहितं एतत्सूक्तं प्रतिबभौ.

तꣳ होवाच — यथा सोम्य महतोऽभ्या[a]हितस्यैकोऽङ्गारः[b] खद्योतमात्रः परिशिष्टः स्यात्। तेन ततोऽपि न बहु दहेत्। एवꣳ सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टा[c] स्यात् । तयैतर्हि वेदान्नानुभ[d]वासि । अशान । अथ मे विज्ञास्यसीति ॥ ३ ॥

*a*) बृ 2·4·10; 4·5·11; मै 6·32. —*b*) ऋ 10·34·9 दिव्या अङ्गाराः...शीताः सन्तो हृदयं निर्दहन्ति; ऐब्रा 3·34 येऽङ्गारा आसन् ते आङ्गिरसोऽभवन् ( popular etymology ); बृ 3·9·18 अङ्गारावक्षयणमकृत; छां 5·8·1 यदन्तः करोति तेऽङ्गाराः; 5·24·1 यथा अङ्गारानपोह्य भस्मनि जुहुयात्.... —*c*) षब्रा 4·6 षोडशी कला अवशिष्यते. —*d*) ऋ 5·52·11 यामनु शवसा बर्हणा भुवत्; 3·32·11 न ते महित्वं अनु भूदध द्यौः; बृ 2·5·19 सर्वानुभूः; छां 7·3·1; मुं 1·2·10; प्र 4·5.

स हाऽऽश । अथ हैनमुपससाद । तꣳ ह यत्किंच पप्रच्छ सर्वꣳ ह प्रतिपेदे ॥ ४ ॥

तꣳ होवाच । यथा सोम्य महतोऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्राज्वलयेत्, तेन ततोऽपि बहु दहेत् ॥ ५ ॥

एवꣳ सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टाऽभूत् । साऽन्नेनोपसमाहिता प्राज्वाली[1] । तयैतर्हि वेदाननुभवासि । अन्नमयꣳ हि सोम्य मनः । आपोमयः प्राणः । तेजोमयी वागिति । तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ६ ॥

1 ) प्राज्वाली ( *sic* ); Śaṅkara says that the long ई stands for इ; v. l. प्राज्वालीत्.

॥ इति सप्तमः खण्डः ॥

---

उद्दालको हाऽऽरुणिः श्वेतकेतुं पुत्रमुवाच — स्वप्नान्तं मे सोम्य विजानीहीति । यत्रैतत् पुरुषः स्वपिति नाम सता[a] सोम्य तदा संप[a]न्नो भवति । स्वम[b]पीतो भवति । तस्मादेनꣳ स्वपितीत्याचक्षते । स्वꣳ ह्यपीतो भवति ॥ १ ॥

*a*) Another derivation of स्वप् ? Cp here also छां 6·2 ( सत् ). —*b*) Cp शब्रा 10·5·2·14 which interprets differently and correctly thus : तस्यैते प्राणाः स्वाः, स यदा स्वपिति अथैनं एते प्राणाः स्वा अपियन्ति, तस्मात्स्वाप्ययः... एतं हि एते तदा अपीता भवन्ति; ब्रसू 1·1·9 स्वाप्ययात्; 4·4·16 स्वाप्ययसम्पत्त्योः.

स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा बन्धनमेवोपश्रयते। एँवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्राऽऽयतन-मलब्ध्वा प्राणमेवोपश्रयते। प्राणबन्धनꣳ हि सोम्य मन इति ॥ २ ॥

*a* ) शब्रा 10·3·3·6 यदा वै पुरुषः स्वपिति प्राणं मनः अप्येति; बृ 2·1·16; 4·3·19; छां 4·3·3.

अशनापिपासे मे सोम्य विजानीहीति। यत्रैतत् पुरुषोऽशिशिषति नामाऽऽप एव तदशितं नयन्ते। तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति। तत्रैतच्छुङ्गमुत्पतितꣳ सोम्य विजानीहि। नेदममूलं भविष्यतीति ॥ ३ ॥

*a* ) ऐ 1·2·1. —*b* ) तैआ 6·5·3 गामश्वं पुरुषं जगत्; ऐ 1·2·2–3. —*c* ) अशनायाः + इति = अशनाया इति = अशनायेति; double sandhi pointed out by शंकराचार्य. —*d* ) Only in ऋ-खिल 5·15·8 ( शुंग उत्पत ) in Vedic literature.

तस्य क्व मूलꣳ स्यादन्यत्रान्नात्। एवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छ। अद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ। तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ। सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥ ४ ॥

*a* ) Cp आपोमय above. —*b* ) Cp के 4·8; बृ 4·1·2; 6·1·14.

अथ यत्रैतत् पुरुषः पिपासति नाम तेज एव तत्पीतं नयते। तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति। तत्रैतदेव शुङ्गमुत्पतितꣳ सोम्य विजानीहि। नेदममूलं भविष्यतीति ॥ ५ ॥

*a* ) ऋ 5·57·1 तृष्णजे न दिव उत्स उदन्यवे; पा 7·4·34 अशनायोदन्यधनाया बुभुक्षा-पिपासागर्धेषु.

तस्य क्व मूलꣳ स्यादन्यत्राद्भ्यः। अद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ। तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ। सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः। यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवति। अस्य सोम्य पुरुषस्य प्रयतो वाङ् मनसि संपद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायाम् ॥ ६ ॥

*a* ) Cp छां 6·5·1–4. —*b* ) छां 6·5·4; 6·15·2.

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वम्। तत् सत्यम्। स आत्मा। तत्त्वमसि श्वेतकेतो इति। भूय एव मा भगवान् विज्ञापयत्विति। तथा सोम्येति होवाच ॥ ७ ॥

*a* ) छां 3·13·7 ( पुरुषे ज्योतिः ); 8·1·3 (सर्वं तदस्मिन् समाहितम्). —*b* ऐआ 2·2·4 ( तयोऽहं सोऽसौ योऽसौ सोऽहम् ); छां 3·14·4 ( एष आत्मा...एतद् ब्रह्म ); 3·14·1 ( सर्वं खल्विदं ब्रह्म ); बृ 1·4·10 ( अहं ब्रह्मास्मि ); बृ 2·5·19 ( अयमात्मा ब्रह्म ); बृ 6·1 ( पूर्णमदः पूर्णमिदम् ); ऐ 3·3 ( प्रज्ञानं ब्रह्म ); तै 2·8 ( स यश्चायं पुरुषे यश्चासावादित्ये स एकः ); जै 3·14·5 ( यस्त्वमसि सोऽहमस्मि; योऽहमस्मि, स त्वमसि ).

॥ इति अष्टमः खण्डः ॥

---

यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणाꣳ रसान् समवहारमेकताꣳ रसं गमयन्ति ॥ १ ॥

*a* ) ऋ 1·182·7 वृक्षो निष्ठितो मध्ये अर्णसः; 8·1·33 नळा इव सरसो निरतिष्ठन्; शब्रा 13·5·2·2 निष्ठितेषु पात्नेजनेषु ( foot-water ) महिषीमश्वाय उपनिपादयन्ति; 10·5·3·16 कृतं निष्ठितमाविर्भवति. —*b* ) छां 4·10·3 ( नानात्ययाः ). —*c* ) णमुल् of समवहृ. —*d* ) ई 7 ( एकत्वम् ); गी 6·31; 9·15.

ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीति । एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति ॥ २ ॥

*a* ) क 2·2 विविनक्ति.

त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ॥ ३ ॥

*a* ) वासं 14·9; 19·10 या व्याघ्रं विषूचिका उभौ वृकं च रक्षति, श्येनं पतत्रिणं सिंहं सेमं पात्वंहसः; अ 12·1·49 सिंहा व्याघ्रा पुरुषादश्चरन्ति. —*b* ) ऋ 10·28·4 क्रोष्टा वराहं निरतक्त कक्षात्. —*c* ) अ 9·4·16 ऊवध्यमस्य कीटेभ्यः. Cp कृमि = कीट = *कीर्तः; बृ 6·1·14; 6·2·16 ( आकीटपतंगेभ्यः ); छां 6·10·2; 7·2·1 ( आकीटपतंगपिपीलकम् ); कौ 1·2. —*d* ) मै 1·4 ( दंशमशकादयः ). —*e* ) अ 4·36·9 हस्तिनं मशका इव; 7·56·3 अर्भस्य तृप्रदंशिनो मशकस्य... ...; बृ 1·3·22. —*f* ) अ 11·4·20 आभूतो भूतः स उ जायते पुनः; बृ 3·9·28 यत्समूलमावृहेयुर्वृक्षं न पुनराभवेत्...को न्वेनं जनयेत् पुनः.

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वम् । तत्सत्यम् । स आत्मा । तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥ ४ ॥

॥ इति नवमः खण्डः ॥

---

इमाः सोम्य नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यः । ताः समुद्रात्समुद्रमेवापियन्ति । स समुद्र एव भवति । ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीति ॥ १ ॥

*a* ) छां 2·4·1; बृ 3·8·9.

एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह इति । त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ॥ २ ॥

*a* ) कौ 1·2 प्रत्याजायते.

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वम् । तत्सत्यम् । स आत्मा । तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥ ३ ॥

॥ इति दशमः खण्डः ॥

---

अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन् स्रवेद्यो मध्येऽभ्याहन्याज्जीवन् स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन् स्रवेत् । स एष जीवेनाऽऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ॥ १ ॥

*a* ) ऋ 7·77·3 चित्रामघा विश्वमनु प्रभूता; 8·58·2 एकः सूर्यो विश्वमनु प्रभूतः; शब्रा 10·6·3·2 सर्वा अनु दिशः प्रभूतम्.

अस्य यदेकाꣳ शाखां जीवो जहात्यथ सा शुष्यति । द्वितीयां जहात्यथ सा शुष्यति । तृतीयां जहात्यथ सा शुष्यति । सर्वं जहाति सर्वः शुष्यति ॥ २ ॥

एवमेव खलु सोम्य विद्धीति होवाच । जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति । स य एषोऽणिमैतदात्म्यमिदꣳ सर्वम् । तत्सत्यम् । स आत्मा । तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥ ३ ॥

*a* ) Plato, *Phaedon* 52–54.

॥ इति एकादशः खण्डः ॥

---

न्यग्रोधफलमत आहरेति । इदं भगव इति । भिन्द्धीति । भिन्नं भगव इति । किमत्र पश्यसीति । अण्व्य इवेमा धाना भगव इति । आसामङ्गैकां भिन्द्धीति । भिन्ना भगव इति । किमत्र पश्यसीति । न किंचन भगव इति ॥ १ ॥

*a*) अ 4·37·4 यत्राश्वत्था न्यग्रोधा महावृक्षाः शिखण्डिनः; वासं 23·13 न्यग्रोधश्चमसैः शल्मालिर्वृद्ध्या; तैसं 7·4·12·1; ऐब्रा 7·30 ते यन् न्यञ्चोऽरोहंस्तस्मात्...न्यग्रोहः, न्यग्रोहं सन्तं न्यग्रोध इत्याचक्षते; शब्रा 5·3·5·13 नैयग्रोधपादं भवति...पाद्भिर्वै न्यग्रोधः प्रतिष्ठितः. —*b*) अतः = न्यग्रोध-वृक्षात्? —*c*) ऋ 4·24·7 यो भृज्जाति धानाः; 3·35·7 कृता धाना अत्तवे ते हरिभ्याम्; 10·28·1 जक्षीयात् धाना उत सोमं पपीयात्; अ 18·3·69 यास्ते धाना अनुकिरामि तिलमिश्राः स्वधावतीः; वासं 19·21 धानाः करंभः सक्तवः; बृ 3·9·28 धानारुहः.

तꣳ होवाच — यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्यग्रोधस्तिष्ठति । श्रद्धत्स्व सोम्येति ॥ २ ॥

*a*) छां 6·13·2. —*b*) ऋ 2·12·5 श्रदस्मै धत्त; cp श्रद्धा कामायनी as the ऋषि of the सूक्त 10·151; पा 1·4·66 कणेमनसी श्रद्धाप्रतीघाते; 5·2·101 प्रज्ञाश्रद्धार्चाभ्यो णः.

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वम् । तत्सत्यम् । स आत्मा । तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥ ३ ॥

॥ इति द्वादशः खण्डः ॥

---

लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति । स ह तथा चकार । तꣳ होवाच । यद्दोषा लवणमुदकेऽवाधा अङ्ग तदाहरेति । तद्धावमृश्य न विवेद ॥ १ ॥

*a*) ऋ 2·8·3 दोषोषसि प्रशस्यसे; अ 6·1·1 दोषो गाय बृहद्गाय. —*b*) अ 7·64·2 इदं यत्कृष्णः शकुनिरवामृक्षत्; तैसं 3·2·6·1 यत्कृष्णशकुनः पृषदाज्यमवमृशेत्, शूद्रा अस्य प्रमायुकाः स्युः.

यथा विलीनमेव । अङ्गास्यान्तादाचामेति । कथमिति । लवणमिति । मध्यादाचामेति । कथमिति । लवणमिति । अन्तादाचामेति । कथमिति । लवणमिति । अभिप्रास्यैतदथ मोपसीदथा इति । तद्ध तथा चकार । तच्छश्वत्संवर्तते[2] । तꣳ होवाचात्र वाव किल तत्सोम्य न निभालयसेऽत्रैव किलेति ॥ २ ॥

1) v. l. अभिप्राश्य. —2) Böhtlingk inserts इति after this.

*a*) Cp अ 6·89·3 मह्यं वा मध्यं भूम्या उभावन्तौ समस्यताम्. —*b*) शब्रा 4·2·5·5 अथान्यतरत्तूर्णं चात्वालमभिप्रास्यति. —*c*) शब्रा 2·2·4·8 शश्वद्ध वा एष न संभवति.

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वम् । तत्सत्यम् । स आत्मा । तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥ ३ ॥

॥ इति त्रयोदशः खण्डः ॥

यथा सोम्य पुरुषं गन्धारेभ्यो[a]ऽभिनद्धाक्षमानीय तं ततोऽतिजने[b] विसृजेत् । स यथा तत्र प्राङ् वोदङ् वाऽधराङ् वा प्रत्यङ् वा प्रध्मायीत[c]ाभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः ॥ १ ॥

*a*) ऋ 1·126·7 गन्धारीणामिवाविका; अ 5·22·14 गन्धारिभ्यो मूजवद्भ्यो अंगेभ्यो मगधेभ्यः; ऐब्रा 7·34 भीमाय वैदर्भाय नग्नजिते गान्धाराय; शब्रा 8·1·4·10 नग्नजिद्वा गान्धारः. ( Cp उत्तराध्ययनसूत्र 18·46 गंधारेसु य नग्गई. ) —*b*) Contrast with बृ 3·2·13 सजने and जैब्रा 2·182 सजने तिस्रः, सजन्यं ताभिः; 2·183 अथ याः सजने वसेत्, राजनि हैव ता वसेत्, एतद्ध वै सजनं यद्राजा. —*c* ) जैब्रा 1·175 प्रधामितामिव वा एतत् यद्द्वयोऽनालयमिव.

तस्य यथाभिनहनं[a] प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति । स ग्रामाद् ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसंपद्येत । एवमेवेहाऽऽचार्यवान्[b] पुरुषो वेद । तस्य तावदेव[c] चिरं यावन्न विमोक्ष्ये[d]ऽथ संपत्स्य इति ॥ २ ॥

*a*) ऋ 10·67·3 अश्मन्मयानि नहना व्यस्यन्. —*b*) छां 4·9·3 आचार्याद्धैव विद्या; तै 1·11 आचार्यदेवः; क 2·7 कुशलानुशिष्टः; 2·8 न नरेणावरेण; मुं 1·2·12 गुरुमेवाभिगच्छेत्; श्वे 6·23 यथा देवे तथा गुरौ. —*c* ) शब्रा 11·5·1·2 तावज्ज्योक्. —*d* ) क 5·1 विमुक्तश्च विमुच्यते; छां 3·14·4 एतामितः प्रेत्याभिसंभवितास्मि.

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वम् । तत्सत्यम् । स आत्मा । तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥ ३ ॥

॥ इति चतुर्दशः खण्डः ॥

---

पुरुषꣳ सोम्योतोपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति । तस्य यावन्न वाङ् मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति ॥ १ ॥

अथ यदाऽस्य वाङ् मनसि संपद्यते[a] मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ[b] न जानाति ॥ २ ॥

*a*) छां 6·8·6; बृ 4·4·2 एकीभवति. —*b*) छां 6·9·2 न विदुः सति संपद्यामह इति; बृ 2·4·12 न प्रेत्य संज्ञास्ति.

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वम् । तत्सत्यम् । स आत्मा । तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्येति होवाच ॥ ३ ॥

॥ इति पञ्चदशः खण्डः ॥

---

पुरुषꣳ सोम्योत हस्तगृहीतमानयन्ति । अपहार्षीत्, स्तेयमकार्षीत्, परशुमस्मै तपतेति । स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते । सोऽनृताभिसंधोऽनृतेनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति । स दह्यते । अथ हन्यते ॥ १ ॥

*a*) अ 5·14·1 हस्तगृह्य परा णय; पा 3·4·39 हस्ते वर्तिग्रहोः. —*b*) Cp नि 3·14 तस्करः तत् करोति यत्पापकमिति नैरुक्ताः. —*c*) ऋ 1·127·3 परशुर्न द्रुहंतरः; 7·104·21 परशुर्यथा वनम्; 10·28·8 परशूँरबिभ्रन्; अ 11·9·1 असीन् परशूनायुधम्; ऐब्रा 2·35 आरंभणतो वै वज्रस्याणिमा अथो दण्डस्य अथो परशोः; शब्रा 3·4·6·10 वज्रो वै परशुः; कौ 2·11 अश्मा भव परशुर्भव. Cp Greek πέλεκυς and Skr. paraśu, probably from Babylonian and Assyrian, *pilaqqu*.

अथ यदि तस्याकर्ता भवति । तत एव सत्यमात्मानं कुरुते । स सत्याभिसन्धः सत्येनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति । स न दह्यते । अथ मुच्यते ॥ २ ॥

*a*) Cp *John* 8·32 : ... and the truth shall make you free.

स यथा तत्र नादाह्येत । ऐतदात्म्यमिदꣳ सर्वम् । तत्सत्यम् । स आत्मा । तत्त्वमसि श्वेतकेतो इति । तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ३ ॥

*a*) Is it ना दाह्येत and ना for न : as in ऋ 10·34·8 उग्रस्य चिन्मन्यवे ना नमन्ते ).

॥ इति षोडशः खण्डः ॥

॥ इति षष्ठोऽध्यायः ॥

---

अधीहि भगव इति होपससाद सनत्कुमारं नारदः । तꣳ होवाच—यद्वेत्थ तेन मोपसीद । ततस्त ऊर्ध्वं वक्ष्यामीति । स होवाच — ॥ १ ॥

Cp in general छां 7·1ff ( नारदसनत्कुमारसंवाद ) with बृ 4·2 ( जनकयाज्ञवल्क्यसंवाद ).

1 ) At छां 7·26·2 v. l. सनत्कुमार.

*a*) तै 3·1. —*b*) उप + सद् *to approach with reverence* : ऋ 6·1·6 तं त्वा वयमुप द्रुवाघो नमसा सदेम; 1·72·5 संजानाना उपसीदन्नभिज्ञु; 3·14·5 उत्तानहस्ता नमसोपसद्य. उपसद् ( *f* ) name of a ceremony ( a component of ज्योतिष्टोम in तैसं 6·2·3·4 यत्सायंप्रातरुपसद उपसद्यन्ते ). उप-सद् seems to be a favourite word of छां; cp e. g. 1·11·4; 6·7·2; 7·8·1 etc. मुं 1·1·3 ( विधिवद् उपसन्नः ); प्र 1·1. —*c*) अ 5·19·9 यो ब्राह्मणस्य सद्धनं अभि नारद मन्यते; 12·4·24 तामेतां विद्यान्नारदः सह देवैरुदाजत; ऐब्रा 7·13 तस्य ( हरिश्चन्द्रस्य ) ह पर्वतनारदौ गृह ऊषतुः, स ह नारदं पप्रच्छ.

ऋग्वेदं[a] भगवोऽध्येमि यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां[b] वेदं पित्र्यꣳ राशिं[c] दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां[d] ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यामेतद्भगवोऽध्येमि ॥ २ ॥

a) बृ 2·4·10; 4·1·2; 4·5·11. —b) वेदानां वेदं = व्याकरणम्–शांभा. Shall we read इतिहासपुराणं वेदानां पञ्चमं वेदम्? —c) पा 4·2·31 वायु–ऋतु–पितृ–उषसो यत्. —d) राशयः (groups of stars) in ऋ 8·96·8 उस्रा इव राशयो यज्ञियासः (Grassmann); मै 6·14 राशि is referred to as नवांशकम् *i. e.* $\frac{9}{4}$ नक्षत्रs. —e) शब्रा 4·6·9·20 अथ वाकोवाक्ये ब्रह्मोद्यं वदन्ति...यद्वाकोवाक्यं ब्राह्मणम्; 11·5·7·9 क्षीरौदनमांसौदनाभ्यां ह वा एष देवांस्तर्पयति य एवं विद्वान् वाकोवाक्यमितिहासपुराणमिति अहरहः स्वाध्यायमधीते... 11·5·6·8 मध्वाहुतयो ह वा एता देवानां यदनुशासनानि विद्या वाकोवाक्यमितिहासपुराणं गाथा नाराशंस्यः...; जैब्रा 2·25 ऋचः प्राचीन-मातानाः, यजूंषि तिरश्चीनं, सामान्यास्तरणं, वाकोवाक्यं अतीरोका श्रीरुपवर्हणम्...; गोब्रा 1·1·30 सवितर्कं ज्ञानमयमिति एतैः प्रश्नैः प्रतिवचनैश्च यथार्थं पदमनुविचिन्त्य...सर्वस्मिन् वाकोवाक्य इति ब्राह्मणम्. Is वाकोवाक्यम् really वाकोपवाकम् (suggested by BR)? —f) देवविद्या = निरुक्तम् (शंकराचार्य). Cp नि 7·1 अथातो दैवतम्. —g) शब्रा 13·4·3·9 सर्पविद्या वेदः; 13·4·3·10 देवजनविद्या वेदः.

सोऽहं भगवो मन्त्रविदेवास्मि नाऽऽत्मवित्[a] । श्रुतꣳ ह्येव मे भगवद्दृशेभ्य-स्तरति[b] शोकमात्मविदिति । सोऽहं भगवः शोचामि । तं मा भगवाञ्छोकस्य पारं तारयत्विति । तꣳ होवाच — यद्वै किंचैतदध्यगीष्ठा नामैवैतत् ॥ ३ ॥

a) शब्रा 10·3·2·13 सैषात्मविद्यैव, where, however, आत्मविद्या is the knowledge of the body; बृ 3·7·1; मुं 3·1·10 (आत्मज्ञम्); 2·2·10 (आत्मविदः); मै 1·2 (आत्मवित्); 2·1 (आत्मज्ञः); 6·33 (आत्मविदे); छां 4·14·1 अस्मद्विद्या (= अग्निविद्या) आत्मविद्या च; श्वे 1·16 (आत्मविद्या). —b) छां 7·26·2 (तमसस्पारम्); बृ 4·3·21 (शोकान्तरम्); 4·3·22 (शोकान् तीर्णः). Is शोकान्तरं शोकान्ऽतरम् as द्रुहन्तरं in ऋ 1·127·3 or Greek *nektar* from **nek–tar* (*meaning* one that crosses death)? छां 8·4·1; बृ 3·5·1; ई 7; क 1·12, 18 (शोकातिगः); 2·12 (हर्षशोकौ जहाति;) मुं 3·2·9 (तरति शोकम्).

नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः[a] पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या । नामैवैतत् । नामोपास्स्वेति ॥ ४ ॥

a) Note the mas. form; but neuter in शब्रा 11·5·6·8.

स यो नाम ब्रह्मेत्युपास्ते । यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति यो नाम ब्रह्मेत्युपास्ते । अस्ति भगवो नाम्नो भूय इति । नाम्नो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ ५ ॥

॥ इति प्रथमः खण्डः ॥

---

वाग्वाव नाम्नो भूयसी । वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाऽऽकाशं चाऽपश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च तृणवनस्पतीञ्श्वापदान्याकीटपतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं च । यद्वै वाङ् नाभविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञः । वागेवैतत्सर्वं विज्ञापयति वाचमुपास्स्वेति ॥ १ ॥

*a*) मै 1·4. —*b*) ऋ 10·16·6 पिपीलः सर्प उत वा श्वापदः; अ 11·10·8 श्वापदो मक्षिकाः सं रभन्ताम्; besides श्वापद्; and श्वपद्; शब्रा 5·5·4·10 शार्दूलज्येष्ठाः श्वापदाः समभवन्; बृ 1·4·16. —*c*) अ 9·4·16 ऊबध्यमस्य कीटेभ्यः श्ववर्तेभ्योऽधारयन्; छां 6·9·3; बृ 6·2·16; कौ 1·2. —*d*) श्वे 4·4. —*e*) Cp above ऋ 10·16·6; बृ 1·4·4. —*f*) Cp मनोज्ञ in पा 5·1·133 द्वंद्वमनोज्ञादिभ्यश्च. —*g*) Supply an object like आत्मानम् to get the passive sense.

स यो वाचं ब्रह्मेत्युपास्ते । यावद्वाचो गतं तत्रास्य यथाकामचारो भवति यो वाचं ब्रह्मेत्युपास्ते । अस्ति भगवो वाचो भूय इति । वाचो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

॥ इति द्वितीयः खण्डः ॥

---

मनो वाव वाचो भूयः । यथा वै द्वे वाऽऽमलके द्वे वा कोले द्वौ वाऽक्षौ मुष्टिरनुभवत्येवं वाचं च नाम च मनोऽनुभवति । स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते । कर्माणि कुर्वीयेत्यथ कुरुते । पुत्राꣳश्च पशूꣳश्चेच्छेयेत्यथेच्छते । इमं च लोकममुं चेच्छेयेत्यथेच्छते । मनो ह्यात्मा । मनो हि लोकः । मनो हि ब्रह्म । मन उपास्स्वेति ॥ १ ॥

*a*) कुवल for कोल in वासं 19·22 धानानां रूपं कुवलम्; 19·89 पक्ष्माणि गोधूमैः कुवलैरुतानि; शब्रा 5·5·4·10 कुवलं कर्कन्धुबदरमिति समभवत्; मज्झिमनिकाय 1·80 ते कोलं खादन्ति...कोलचुण्णं...कोलविकतिं परिभुंजन्ति; दशवैकालिक 5·1. —*b*) ऋ 6·47·30 इन्द्रस्य मुष्टिरासि वीळयस्व. ऐब्रा 1·3 मुष्टी कुरुते; यज्ञं...मुष्ट्योः कुरुते. —*c*) Cp तै 2·3 (मनोमयः). —*d*) छां 7·4·1 (मन्त्रेषु कर्माणि); मुं 1·2·1 (मन्त्रेषु कर्माणि).

स यो मनो ब्रह्मेत्युपास्ते। यावन्मनसो गतं तत्रास्य यथाकामचारो भवति यो मनो ब्रह्मेत्युपास्ते। अस्ति भगवो मनसो भूय इति। मनसो वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

॥ इति तृतीयः खण्डः ॥

---

संकल्पो[a] वाव मनसो भूयान्। यदा वै संकल्पयतेऽथ मनस्यति[b]। अथ वाचमीरयति। तामु नाम्नीरयति। नाम्नि मन्त्रा एकं भवन्ति। मन्त्रेषु कर्माणि ॥ १ ॥

*a*) ऋ 10·164·5 जाग्रत्स्वप्नः संकल्पः पापः; अ 3·25·2 आधीपर्णां कामशल्यामिषुं संकल्पकुल्मलाम्; 11·8·1 यन्मन्युर्जायामावहत् संकल्पस्य गृहादधि; 11·8·27 चित्तानि सर्वे संकल्पाः; 16·6·10 अनागमिष्यतो वरानावित्तेः संकल्पानमुच्या द्रुहः पाशान्; शब्रा 4·4·2·7 मनसा संकल्पयति तद्वातमपिगच्छति...10·5·2·15 स एतैः सुतः न कस्यचन वेद न मनसा संकल्पयति...... —*b*) ऋ 10·27·5 न पर्वतासो यदहं मनस्ये; 8·45·31 यद्वाविषे मनस्यासि; तैब्रा 2·3·8·3 स पितॄन् सृष्ट्वाऽमनस्यत, तदनु मनुष्यानसृजत; नि 3·7 मनुष्याः कस्मात्? ... मनस्यमानेन सृष्टाः। मनस्यतिः पुनर्मनस्वीभावे.

तानि ह वा एतानि संकल्पैकायनानि संकल्पात्मकानि संकल्पे प्रतिष्ठितानि। समक्लृपतां द्यावापृथिवी। समकल्पेतां वायुश्चाऽऽकाशं च। समकल्पन्ताऽऽपश्च तेजश्च। तेषाꣳ संक्लृप्त्यै वर्षꣳ संकल्पते। वर्षस्य संक्लृप्त्या अन्नꣳसंकल्पते। अन्नस्य संक्लृप्त्यै प्राणाः संकल्पन्ते। प्राणानाꣳ संक्लृप्त्यै मन्त्राः संकल्पन्ते। मन्त्राणाꣳ संक्लृप्त्यै कर्माणि संकल्पन्ते। कर्मणाꣳ संक्लृप्त्यै लोकः संकल्पते। लोकस्य संक्लृप्त्यै सर्वꣳसंकल्पते। स एष संकल्पः। संकल्पमुपास्स्वेति ॥ २ ॥

स यः संकल्पं ब्रह्मेत्युपास्ते। क्लृप्तान्वै स लोकान् ध्रुवान्ध्रुवः प्रतिष्ठितान्प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति। यावत्संकल्पस्य गतं तत्रास्य यथाकामचारो भवति यः संकल्पं ब्रह्मेत्युपास्ते। अस्ति भगवः संकल्पाद् भूय इति। संकल्पाद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति ॥ ३ ॥

॥ इति चतुर्थः खण्डः ॥

---

चित्तं[a] वाव संकल्पाद् भूयः। यदा वै चेतयतेऽथ संकल्पयते। अथ मनस्यति। अथ वाचमीरयति। तामु नाम्नीरयति। नाम्नि मन्त्रा एकं भवन्ति। मन्त्रेषु कर्माणि ॥ १ ॥

*a*) ऋ 1·163·11 तव चित्तं वात इव ध्रजीमान्; 5·7·9 आ चित्तं मर्त्येषु धाः; 7·59·8 तिरश्चित्तानि वसवो जिघांसति; वासं 4·19 चिदसि मनोऽसि; 34·5 यस्मिश्चित्तं सर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु; अ 3·8·6 अहं गृभ्णामि मनसा मनांसि, मम चित्तमनु चित्तेभिरेत; 5·7·8 अराते चित्तं वीर्त्सन्ति आकूतिं पुरुषस्य च; 11·9·1 चित्ताकूतं च यद्धृदि; वासं 12·58 सं वां मनांसि सं व्रता समु चित्तान्याकरम्; मुं 3·1·19; प्र 3·10; 4·8; कौ 3·3; मै 6·20; 6·34; गौका 3·44 लये संबोधयेच्चित्तं विक्षिप्तं पुनराह्वयेत्; दीघनिकाय 1·21.

तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि। तस्माद्यद्यपि बहुविदचित्तो भवति नायमस्तीत्येवैनमाहुः। यदयं वेद यद्वा अयं विद्वान्नेत्थमचित्तः स्यादिति। अथ यद्यल्पविच्चित्तवान् भवति तस्मा एवोत शुश्रूषन्ते। चित्तꣳ ह्येवैषामेकायनम्। चित्तमात्मा। चित्तं प्रतिष्ठा। चित्तमुपास्स्वेति ॥ २ ॥

*a*) तैब्रा 3·12·5·11 ये ब्राह्मणा बहुविदः, तेभ्यो यद्दक्षिणा न नयेत्, दुरिष्टं स्यात्.

स यश्चित्तं ब्रह्मेत्युपास्ते। चित्तान्वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति। यावच्चित्तस्य गतं तत्रास्य यथाकामचारो भवति यश्चित्तं ब्रह्मेत्युपास्ते। अस्ति भगवश्चित्ताद् भूय इति। चित्ताद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति ॥ ३ ॥

॥ इति पञ्चमः खण्डः ॥

---

ध्यानं वाव चित्ताद् भूयः। ध्यायतीव पृथिवी। ध्यायतीवान्तरिक्षम्। ध्यायतीव द्यौः। ध्यायन्तीवाऽऽपः। ध्यायन्तीव पर्वताः। ध्यायन्तीव देवमनुष्याः। तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापादाꣳशा इवैव ते भवन्ति। अथ येऽल्पाः कलहिनः पिशुना उपवादिनस्ते। अथ ये प्रभवो ध्यानापादाꣳशा इवैव ते भवन्ति। ध्यानमुपास्स्वेति ॥ १ ॥

*a*) कौ 3·2–4; श्वे 1·3,14; मै 6·9, 18, 24; गी 12·12; योसू 3·2 तत्र प्रत्ययैकतानता ध्यानम्. —*b*) Cp बृ 4·3·7; छां 1·3·12; मै 6·3; मुं 2·2·6; 3·1·7. —*c*) This compound occurs only here (Cp Pāli अभिञ्ञापादकं चतुत्थज्झानं). —*d*) कलह in पा 2·1·31; 3·1·17; 3·2·23. —*e*) ऋ 7·104·20 शिशीते शक्रः पिशुनेभ्यो वधम्; वासं 30·13 ऋतये स्तेनहृदयं वैरहत्याय पिशुनम्; नि 6·11 किमीदिने। किमिदं किमिदं इति वा पिशुनाय चरते। पिशुनः पिंशतेः। विपिंशतीति. —*f*) अ 15·2·1 य एवं विद्वांसं व्रात्यमुपवदति; ऐब्रा 2·1·30 स य एतं......उप वा वदेत् अनु वा व्याहरेत्; तैब्रा 2·3·9·7 ते य एनं पुरस्तादायन्तमुपवदन्ति; शब्रा 11·6·3·11 तस्मान्नोपवादी स्यात्; शांब्रा 12·3 तं हेम उपोद्दः — दास्या वै त्वं पुत्रोसि; जैब्रा 1·284 येन येन ह्येवैनं छन्दसा कुर्वन्तमुपवदति; ऐआ 3·1·3 तस्य नास्त्युपवादः.

—*g*) ऋ 1·188·9 त्वष्टा रूपाणि हि प्रभुः; 2·24·10 विभु प्रभु प्रथमम्.......अ 9·4·2 प्रभूः सर्वस्मै पृथिवीव देवी; 18·3·69 तास्ते सन्तु विभ्वीः प्रभ्वीः; वासं 18·10 विभु च मे प्रभु च मे पूर्णं च मे पूर्णतरं च मे; शब्रा 13·3·7·1 एष वै प्रभूर्नाम यज्ञः.... एष वै विभूर्नाम यज्ञः; पा 3·2·180 विप्रसंभ्यो डु असंज्ञायाम्; 4·1·47 भुवश्च.

स यो ध्यानं ब्रह्मेत्युपास्ते । यावद्ध्यानस्य गतं तत्रास्य यथाकामचारो भवति यो ध्यानं ब्रह्मेत्युपास्ते । अस्ति भगवो ध्यानाद् भूय इति । ध्यानाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

॥ इति षष्ठः खण्डः ॥

---

विज्ञानं वाव ध्यानाद् भूयः । विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजन-विद्यां दिवं च पृथिवीं च वायुं चाऽऽकाशं चाऽपश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलिकम् । धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं च लोकममुं च विज्ञानेनैव विजानाति । विज्ञानमुपास्स्वेति ॥ १ ॥

*a*) अ 7·13·3 एषामहं समासीनानां वर्चो विज्ञानमाददे; 15·2·1 विज्ञानं वासः; तैसं 3·3·8·5 एतेन ह स्म वा ऋषयः पुरा विज्ञानेन दीर्घसत्रमुपयन्ति; 3·4·4·1 विज्ञातं च विज्ञानं च; तैसं 5·7·4·8 अस्य विज्ञानमनु संरभध्वम्; शब्रा 3·3·4·11 तत्र वियात् वर्षिष्यति ऐषमः (belonging to this year) ...... इति एतदु विज्ञानम्; 10·3·5·13 आनन्द एवास्य विज्ञानम्; बृ 3·9·28; बृ 2 4·5,13; ऐ 5·2; तै 2·5; क 3·9; मुं 1·2·12; 2·2·1; 3·2·6; गी 18·42 (ज्ञानं विज्ञानम्).

स यो विज्ञानं ब्रह्मेत्युपास्ते । विज्ञानवतो वै स लोकाञ् ज्ञानवतोऽभिसिध्यति । यावद्विज्ञानस्य गतं तत्रास्य यथाकामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्ते । अस्ति भगवो विज्ञानाद् भूय इति । विज्ञानाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥२॥

॥ इति सप्तमः खण्डः ॥

---

बलं वाव विज्ञानाद् भूयः । अपि ह शतं विज्ञानवतामेको बलवानाकम्पयते । स यदा बली भवत्यथोत्थाता भवति । उत्तिष्ठन् परिचरिता भवति । परिचरन्नुपसत्ता भवति । उपसीदन् द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति । बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेन पर्वता बलेन

देवमनुष्या बलेन पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकम् । बलेन लोकस्तिष्ठति । बलमुपास्स्वेति ॥ १ ॥

*a* ) वासं 27·2 सं च इध्यस्वाग्ने प्र च बोधयैनं उच्च तिष्ठ महते सौभगाय । मा च रिषदुपसत्ता ते अग्ने; 27·4 उपसत्ता वर्धतां ते आनिष्टृतः.

स यो बलमुपास्ते । यावद्बलस्य गतं तत्रास्य यथाकामचारो भवति यो बलं ब्रह्मेत्युपास्ते । अस्ति भगवो बलाद् भूय इति । बलाद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

॥ इति अष्टमः खण्डः ॥

---

अन्नं[a] वाव बलाद् भूयः । तस्माद्यद्यपि दश रात्रीर्नाश्नीयात् । यद्यु ह जीवेत् । अथवाऽद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्ताऽविज्ञाता भवति । अथान्नस्याऽऽयै[1] द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति । अन्नमुपास्स्वेति ॥ १ ॥

1 ) v. l. अन्नस्याये.

*a*) Cp छां 7·9–12 with छां 6·5.

स योऽन्नं ब्रह्मेत्युपास्ते । अन्नवतो वै स लोकान् पानवतोऽभिसिध्यति । यावदन्नस्य गतं तत्रास्य यथाकामचारो भवति योऽन्नं ब्रह्मेत्युपास्ते । अस्ति भगवोऽन्नाद् भूय इति । अन्नाद् वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

॥ इति नवमः खण्डः ॥

---

आपो वावान्नाद् भूयस्यः । तस्माद्यदा सुवृष्टिर्न भवति[a] व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीति । अथ यदा सुवृष्टि[b]र्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यतीति । आप[c] एवेमा मूर्ता येयं पृथिवी यदन्तरिक्षं यद् द्यौर्यत्पर्वता यद्देवमनुष्या यत्पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकम् । आप एवेमा मूर्ताः । अप उपास्स्वेति ॥ १ ॥

*a* ) तांब्रा 5·5·6 नेद् व्याहितोऽसानीति; वृ 5·11·1 ( व्याहितः ); छां 4·10·3. —*b* ) अ 11·4·5 यदा प्राणो अभ्यवर्षीद् वर्षेण पृथिवीं महीम् । पशवस्तत् प्रमोदन्ते महो ( = अन्नम् ) वै नो भविष्यति· —*c* ) ऋ 10·72·6 सलिले सुसंरब्धाः; 10·82·1 घृतम्... अदद्दहन्त; 10·121·9

आपश्चन्द्राः; 10·129·3 अप्रकेतं सलिलम्; बृ 1·2·2 ( अपां शरः समहन्यत ); 1·5·13; कौ 1·7; क 4·6; ऐ 1·1.

स योऽपो[a] ब्रह्मेत्युपास्ते । आप्नोति सर्वान् कामांस्तृप्तिमान् भवति । यावदपां गतं तत्रास्य यथाकामचारो भवति योऽपो ब्रह्मेत्युपास्ते । अस्ति भगवोऽद्भ्यो भूय इति । अद्भ्यो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

*a* ) For etymology ( अप् from आप् ) cp अ 3·13·2 तदाप्नोदिन्द्रः...तस्मादापो अनु ष्ठन; 12·3·28 सर्वं व्यापुः शुचयः शुचित्वम्; नि 9·26 आपः आप्नोतेः.

॥ इति दशमः खण्डः ॥

---

तेजो वावाद्भ्यो भूयः । तद्वा एतद्वायुमागृह्याऽऽकाशमभितपति तदाऽऽहुर्निशोचति नितपति वर्षिष्यति वा इति । तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते । तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्रादाश्चरन्ति[a] तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति । तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते । तेज उपास्स्वेति ॥ १ ॥

*a* ) आह्राद only here in Vedic literature. Cp ह्रादुनयो विस्फुलिंगाः in छां 5·5·1; बृ 6·2·10.

स यस्तेजो ब्रह्मेत्युपास्ते । तेजस्वी वै स तेजस्वतो लोकान् भास्वतोऽपहततमस्कानभिसिध्यति । यावत्तेजसो गतं तत्रास्य यथाकामचारो भवति यस्तेजो ब्रह्मेत्युपास्ते । अस्ति भगवस्तेजसो भूय इति । तेजसो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

॥ इति एकादशः खण्डः ॥

---

आकाशो[a] वाव तेजसो भूयान् । आकाशे वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निः । आकाशेनाऽऽह्वयति । आकाशेन शृणोति । आकाशेन प्रतिशृणोति[b] । आकाशे रमते । आकाशे न रमते । आकाशे जायते । आकाशमभिजायते । आकाशमुपास्स्वेति ॥ १ ॥

*a* ) शब्रा 3·3·2·19 मध्य अंगुल्याकाशं करोति; कौ 1·6. —*b* ) छां 4·5·1.

स य आकाशं ब्रह्मेत्युपास्ते । आकाशवतो वै स लोकान् प्रकाशवतोऽसंबाधानुरुगायवतोऽभिसिध्यति । यावदाकाशस्य गतं तत्रास्य यथाकामचारो भवति य आकाशं

ब्रह्मेत्युपास्ते। अस्ति भगव आकाशाद् भूय इति। आकाशाद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

*a*) ऋ 2·16·8 पुरा संबाधात् अभ्याववृत्स्व नः; 3·1·11 उरौ महाँ अनिबाधे ववर्ध; 5·42·17 and 5·43·16 उरौ देवा अनिबाधे स्याम; अ 12·1·2 असंबाधं बध्यतो मानवानाम्; 18·2·20 असंबाधे पृथिव्या उरौ लोके नि धीयस्व; जैब्रा 2·25 प्रकाशं चासंबाधं च. —*b*) ऋ 6·28·4 उरुगायमभयं तस्य ता अनु; 7·35·15 ते नो रासन्तामुरुगायमद्य; 10·109·7 ऊर्जं पृथिव्या भक्त्वाय उरुगाय मुपासते; क 2·11.

॥ इति द्वादशः खण्डः ॥

---

स्म^a^रो वावाऽऽकाशाद् भूय^b^ः। तस्माद्यद्यपि बहव आसीरन्न स्मरन्तो नैव ते कंचन शृणुयुर्न मन्वीरन्न विजानीरन्। यदा वाव ते स्मरेयुरथ शृणुयुरथ मन्वीरन्नथ विजानीरन्। स्मरेण वै पुत्रान् विजानाति स्मरेण पशून्। स्मरमुपास्स्वेति ॥ १ ॥

*a*) अ 6·130·1 अप्सरसामयं स्मरः; 6·132·1 यं देवा स्मरमसिञ्चन्. —*b*) भूयः (*sic*) ought to be भूयान्, as स्मर is *mas.*

स यः स्मरं ब्रह्मेत्युपास्ते। यावत् स्मरस्य गतं तत्रास्य यथाकामचारो भवति यः स्मरं ब्रह्मेत्युपास्ते। अस्ति भगवः स्मराद् भूय इति। स्मराद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

॥ इति त्रयोदशः खण्डः ॥

---

आशा^a^ वाव स्मराद् भूयसी। आशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्रांश्च पशूंश्चेच्छत इमं च लोकममुं चेच्छते। आशामुपास्स्वेति ॥ १ ॥

*a*) अ 6·119·3 यत्संगरमभिधावाम्याशाम्; 19·4·2 यामाशामेमि केवली सा मे अस्तु; ऐब्रा 3·46 स एतेषां त्रयाणामाशां नेयात्; क 1·8 (आशाप्रतीक्षे).

स य आशां ब्रह्मेत्युपास्ते। आशयाऽस्य सर्वे कामाः समृध्यन्ति। अमोघा^a^ ह्यस्याऽऽशिषो भवन्ति। यावदाशाया गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मेत्युपास्ते। अस्ति भगव आशाया भूय इति। आशाया वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

*a*) शब्रा 1·7·3·13 तथो ह्यस्यैषोऽमोघायावाहितो भवति; 3·8·3·14 तथा ह अमोघाय देवतानां मनांसि संगतानि भवन्ति.

॥ इति चतुर्दशः खण्डः ॥

प्राणो वाव आशाया भूयान्। यथा वा अँरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वꣳ समर्पितम्। प्राणः प्राणेन याति। प्राणः प्राणं ददाति। प्राणाय ददाति। प्राणो ह पिता। प्राणो माता। प्राणो भ्राता। प्राणः स्वसा। प्राण आचार्यः। प्राणो ब्राह्मणः ॥ १ ॥

Cp in general अ 11·4; प्र 6·3–4; 6·6.

*a*) वासं 34·5 रथनाभाविवाराः; बृ 1·5·15 (नभ्यम्, प्रधिः); 2·5·15 (रथनाभौ च रथनेमौ च); कौ 3·8; मुं 2·2·6; श्वे 1·4 (एकनेमिम्); प्र 2·6.

स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाऽऽचार्यं वा ब्राह्मणं वा किंचिद् भृशमिव प्रत्याह। धिक्त्वाऽस्त्वित्येवैनमाहुः। पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति ॥ २ ॥

*a*) पा 7·2·18 क्षुब्ध–स्वान्त......फाण्ट–बाढानि मन्थ–मनस्......अनायास–भृशेषु. —*b*) शांब्रा 30·5 धिक्त्वा जाल्म अस्तु पापिष्ठां ते प्रजां करोमि; गोब्रा 1·3·20 धिगिति होचुः.

अथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यतिषंदहेत्। नैवैनं ब्रूयुः पितृहाऽसीति न मातृहाऽसीति न भ्रातृहाऽसीति न स्वसृहाऽसीति नाऽऽचार्यहाऽसीति न ब्राह्मणहाऽसीति ॥ ३ ॥

*a*) ऋ 1·162·11 अभिशूलं निहतस्यावधावति; शब्रा 3·8·5·8 अथ हृदयशूलेनावभृथं यन्ति......तस्मादु परितृद्यैव शूला कुर्यात्. Cp पा 5·4·65 शूलात्पाके; 4·2·17 शूलोखायत्; शब्रा 11·4·2·4 शूलौ त्वा अयमध्वर्युर्बाहू अकृत शूलबाहुर्भविष्यतीति; 11·7·3·2 अथ यस्यैतद्वक्रस्य सतः शूल इवाग्रं भवति स ह कपोती नाम. —*b*) Cp 1 John 3·15 : Whosoever hated his brother is a murderer.

प्राणो ह्येवैतानि सर्वाणि भवति। स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति। तं चेद् ब्रूयुरतिवाद्यसीति। अतिवाद्यस्मीति ब्रूयात्। नापह्नुवीत ॥ ४ ॥

*a*) But cp मुं 3·1·4 भवते नातिवादी.

॥ इति पञ्चदशः खण्डः ॥

---

एष तु वा अतिवदति यः सत्येनातिवदति। सोऽहं भगवः सत्येनातिवदानीति। सत्यं त्वेव विजिज्ञासितव्यमिति। सत्यं भगवो विजिज्ञास इति ॥ १ ॥

॥ इति षोडशः खण्डः ॥

---

यदा वै विजानात्यथ सत्यं वदति । नाविजानन् सत्यं वदति । विजानन्नेव सत्यं वदति । विज्ञानं त्वेव विजिज्ञासितव्यमिति । विज्ञानं भगवो विजिज्ञास इति ॥ १ ॥

॥ इति सप्तदशः खण्डः ॥

---

यदा वै मनुतेऽथ विजानाति । नामत्वा विजानाति । मत्वैव विजानाति । मतिस्त्वेव विजिज्ञासितव्येति । मतिं भगवो विजिज्ञास इति ॥ १ ॥

॥ इति अष्टादशः खण्डः ॥

---

यदा वै श्रद्दधात्यथ मनुते । नाश्रद्दधन्मनुते । श्रद्दधदेव मनुते । श्रद्धा त्वेव विजिज्ञासितव्येति । श्रद्धां भगवो विजिज्ञास इति ॥ १ ॥

॥ इति एकोनविंशः खण्डः ॥

---

यदा वै निस्तिष्ठत्यथ[a] श्रद्दधाति । नानिस्तिष्ठञ्छ्रद्दधाति । निस्तिष्ठन्नेव श्रद्दधाति । निष्ठा[b] त्वेव विजिज्ञासितव्येति । निष्ठां भगवो विजिज्ञास इति ॥ १ ॥

*a*) शब्रा 6·5·2·20 देवाः कृत्वा वाचा अदित्या निरष्ठापयन्. —*b*) Originally निःष्ठा. Cp निस्तिष्ठति earlier.

॥ इति विंशः खण्डः ॥

---

यदा वै करोत्यथ[a] निस्तिष्ठति । नाकृत्वा निस्तिष्ठति । कृत्वैव निस्तिष्ठति । कृतिस्त्वेव विजिज्ञासितव्येति । कृतिं भगवो विजिज्ञास इति ॥ १ ॥

*a*) शब्रा 10·3·5·16 कृतं निष्ठितमाविर्भवति.

॥ इति एकविंशः खण्डः ॥

---

यदा वै सुखं लभतेऽथ करोति । नासुखं लब्ध्वा करोति । सुखमेव लब्ध्वा करोति । सुखं त्वेव विजिज्ञासितव्यमिति । सुखं भगवो विजिज्ञास इति ॥ १ ॥

॥ इति द्वाविंशः खण्डः ॥

---

यो वै भूमा[a] तत्सुखम् । नाल्पे सुखमस्ति । भूमैव सुखम् । भूमा त्वेव विजिज्ञासितव्य इति । भूमानं भगवो विजिज्ञास इति ॥ १ ॥

*a*) ऋ 10·98·12 अपां भूमानमुप सृज; 10·149·3 अमर्त्यस्य भुवनस्य भूना (= भूम्ना); अ 3·24·7 स्फातिं बहुं भूमानमक्षितम्; 5·28·3 अन्नस्य भूमा पुरुषस्य भूमा पशूनां भूमा; 6·141·1 रुद्रो भूम्ने चिकित्सतु; तैसं 1·7·1·7 अक्षितिमेवोपैति भूमानमेवोपैति; 3·4·1·4 यः पशोर्भूमा या पुष्टिः; ऐब्रा 1·5 भूमाऽपरिमितः.

॥ इति त्रयोविंशः खण्डः ॥

---

यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा[a] । अथ यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम् । यो वै भूमा तदमृतम् । अथ यदल्पं[b] तन्मर्त्यम् । स भगवः कस्मिन्प्रतिष्ठित इति । स्वे[c] महिम्नि यदि वा न महिम्नीति ॥१॥

*a*) ऋ 10·149·3 अमर्त्यस्य भुवनस्य भूना (= भूम्ना); बृ 2·4·14. —*b*) Cp Aristotle, Physics 23b. —*c*) शब्रा 1·4·2·17 स्वं महिमानं आवहेति ...... वाग्वा अस्य स्वो महिमा; 2·2·4·6 तं स्वो महिमा अभ्युवाद जुहुधीति; मुं 3·1·2 ( अस्य महिमानम् ).

गोअश्वमिह[a] महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं[b] क्षेत्राण्यायतनानीति । नाहमेवं ब्रवीमि । ब्रवीमीति होवाच । अन्यो ह्यन्यस्मिन् प्रतिष्ठित इति ॥ २ ॥

*a*) शब्रा 3·3·3·1 महांस्त्वेव गोर्महिमेत्यध्वर्युः; पा 2·4·11 गवाश्वप्रभृतीनि च. —*b*) बृ 6·2·7; क 1·23–25.

॥ इति चतुर्विंशः खण्डः ॥

---

स[a] एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः । स एवेदꣳ सर्वमिति । अथातोऽहंकारादेश एव । अहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदꣳ सर्वमिति ॥ १ ॥

*a*) छां 3·14·3; मै 6·17; क 2·20; श्वे 3·20; मुं 2·2·11; गी 8·9.

अथात आत्मादेश एव । आत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदꣳ सर्वमिति । स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड[a] आत्ममिथुन आत्मानदः स स्वराड्[b] भवति । तस्य सर्वेषु लोकेषु कामचारो भवति । अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका[c] भवन्ति । तेषाꣳ सर्वेषु लोकेष्वकामचारो भवति ॥ २ ॥

*a*) मुं 3·1·4; गी 3·17 ( आत्मरतिः ); 5·24 ( अन्तःसुखः अन्तरारामः ). —*b*) ऋ 3·45·5 स्वयुरिन्द्रः स्वराडसि; 7·82·2 सम्राळन्यः स्वराळन्य उच्यते वाम्; अ 17·1·22–23 विराजे नमः स्वराजे नमः सम्राजे नमः; वासं 5·24 स्वराडसि सपत्नहा सत्रराडसि अभिमातिहा जनराडसि रक्षोहा सर्वराडसि अमित्रः. —*c*) For the formation of compound in स्वराट् & अन्यराजानः cp ऋ 10·16·9 यमराज्ञो गच्छतु रिप्रवाहः; 10·97·18–19 या ओषधीः सोमराज्ञीः; अ 18·2·46 अपरिपरेण पथा यमराज्ञः पितॄन् गच्छ; तैब्रा 1·7·4·2 एष वो भरता राजा सोमोऽस्माकं ब्राह्मणानां राजेत्याह, तस्मात्सोमराजानो ब्राह्मणाः. —*d*) तैब्रा 3·11·7·4 अन्तवन्त२ ह वा एष क्षय्यं लोकं जयति...अथ हैषो अनन्तमपारमक्षय्यं लोकं जयति. ..Cp पा 6·1·81 क्षय्य-जय्यौ शक्यार्थे.

॥ इति पञ्चविंशः खण्डः ॥

---

तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मतः आशाऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आ*a*विर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यान-मात्मतश्चित्तमात्मतः संकल्प आत्मतो मन आत्मतो वागात्मतो नामाऽऽत्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेद२ सर्वमिति ॥ १ ॥

*a*) Not found in the series above beginning with नाम and ending with प्राण. आविर्भाव in शब्रा 10·3·5·16 तस्य ह यो निरुक्तमाविर्भावं वेद...; तिरोभाव only here in Vedic literature.

तदेष श्लोकः—

न प*a*श्यो मृत्युं पश्यति न रोगं नोत दुःख*b*ताम् ।

सर्व२ह पश्यः पश्यति सर्वमाप्नोति सर्वशः ॥ इति ॥

स ए*c*कधा ( धैव ) भवति त्रिधा भवति पञ्चधा ।

सप्तधा नवधा चैव पुनश्चैकादश स्मृतः ।

शतं च दश चैकश्च सहस्राणि च विं२शतिः ॥

आहार*d*शुद्धौ सत्त्वशुद्धिः । सत्त्वशुद्धौ ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्र*e*न्थीनां विप्रमोक्षः । तस्मै मृदितकषाया*h*य तमसस्पारं दर्शयति भगवान् सनत्कुमारः । त२ स्कन्द इत्याचक्षते ॥ २ ॥

*a*) ऋ 1·148·5 अन्धा अपश्या न दभन् ...; अ 7·38·1 इदं खनामि भेषजं मांपश्यं....... अ 11·2·17 सहस्राक्षमतिपश्यं पुरस्ताद्रुद्रमस्यन्तं बहुधा विपश्चितम्; 13·4·48 नमस्ते अस्तु पश्यत;

तआ 1·8·8 कश्यपः पश्यको भवति (कश्यप read backwards !), यत्सर्वं परिपश्यतीति सौक्ष्म्यात्; जै 1·56·5–6 ततोऽजायत पश्यतः असौ वा आदित्यः पश्यतः ...... एतेन हि पश्यति; मुं 3·1·3 (यदा पश्यः पश्यति); पा 3·1·137 पाघ्राध्माधेट्दृशः शः (उत्पश्यः, विपश्यः, पश्यः). —*b*) For formation, see the following words in ऋ : देवता, बन्धुता, वसुता, पुरुषता. पा 4·2·43 ग्रामजनबन्धुसहायेभ्यस्तल्. —*c*) मै 5·2 एकस्त्रिधा.... —*d*) बृ 4·2 3 (प्रविविक्ताहारतर इव). —*e*) मुं 3·2·6 (शुद्धसत्त्वाः). —*f*) Cp लम्भुक in छां 5·2·2; गी 18·73 (स्मृतिर्लब्धा). —*g*) क 6·15 (हृदयस्येह ग्रंथयः); मुं 2 2·8; 3·2·9 (गुहाग्रंथिभ्यः). —*h*) बृ 6·4 9 (अंगकषायः); पा 6·2·10 अध्वर्युकषाययोर्जातौ. (Cp Pāli कासाव). —*i*) ऋ 7·73·1 अतारिष्म तमसस्पारमस्य. —*j*) गी 10·24.

॥ इति षड्विंशः खण्डः ॥

॥ इति सप्तमोऽध्यायः ॥

---

अथ यदिदमस्मिन् ब्रह्मपुरे[a] दहरं[b] पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः । तस्मिन्यदन्तस्तदन्वेष्टव्यं[c], तद्वाव विजिज्ञासितव्यमिति ॥ १ ॥

*a*) अ 10·2·31 देवानां पूरयोध्या। तस्यां हिरण्मयः कोशः स्वर्गो ज्योतिषावृतः; छां 8·5·4 तदपराजिता पूर्ब्रह्मणः; मुं 2·2·7 (दिव्ये ब्रह्मपुरे). —*b*) दहर = दभ्र. Cp ऋ 1·31·6 दभ्रेभिश्चित्समृता हंसि भूयसः; 4·25·5 न तं जिनंति बहवो न दभ्राः; 4·32·20 मा दभ्रं भूरि आभर; के 2·1; ब्रह्म 1·3·14 (दहर उत्तरेभ्यः). —*c*) छां 8·7·1.

[a]तं चेद् ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः, किं तदत्र[b] विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति । स ब्रूयात् — ॥ २ ॥

*a*) Note the dialogical style तं चेद् ब्रूयुः ... स ब्रूयात्. —*b*) छां 6·13·2 अत्रैव किलेति; प्र 6·2 इहैवान्तः शरीरे स पुरुषः.

यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय[a] आकाशः । उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते । उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि । यच्चास्येहास्ति[b] यच्च नास्ति[d] सर्वं तदस्मिन् समाहितमिति ॥ ३ ॥

*a*) छां 3·13·7 यदतः परो दिवो ज्योतिर्दीप्यते. —*b*) छां 8·3·1–2......सर्वं तदत्र गत्वा विन्दते.

तं चेद् ब्रूयुरस्मिꣳश्चेदं ब्रह्मपुरे सर्वꣳ समाहितꣳ सर्वाणि च भूतानि सर्वे च कामा यदैनज्जरा वाऽऽप्नोति प्रध्वꣳसते वा किं ततोऽतिशिष्यत[a] इति ॥ ४ ॥

*a*) क 5·4 किमत्र परिशिष्यते.

स ब्रूयात् —

नास्य जरयैतज्जीर्यति । न वधेनास्य हन्यते ।

एतत् सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिताः ॥

एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः । यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनम् । यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ॥ ५ ॥

*a* ) If we drop एतत् the verse reads like an अनुष्टुभ् as we print it. —*b* ) Cp छां 8·7·1; बृ 3·5·1. —*c* ) छां 1·6·7 ( सर्वेभ्यः पाप्मभ्य उदितः ). —*d* ) ऋ 10·32·7 एतद्वै भद्रमनुशासनस्य; शब्रा 11·5·6·8 मध्वाहुतयो ह वा एता देवानां यदनुशासनानि; बृ 1·5·17; 2·5·19; 4·1·2; 4·3·32; 4·5·15; छां 4·9·2; 5·3·4; क 1·20; 2·7; 6·15; तै 1·11; के 1·3; गी 8·9 ( अनुशासितारम् ). —*e* ) ऋ 1·49·3 दिवो अन्तेभ्यस्परि; 1·164·34 ( = वासं 23·61 ) पृच्छामि त्वा परमन्तं पृथिव्याः; अ 6·89·3 मह्यं त्वा मध्यं भूम्या उभावन्तौ समस्यताम्; 13·2·6 येनोभावन्तौ परियासि सद्यः; छां 6·13·2; बृ 1·3·10; 1·5·3; 3·3·1; 4·1·5; 4·3 18–19; 4·3·33. Cp the word प्रान्त and प्रत्यन्त ( Pāli पंत and पच्चंत ) in classical Skr. lit. —*f* ) तैब्रा 2·3·9·9 आ अस्य तं जनपदं पूर्वा कीर्तिर्गच्छति; ऐब्रा 8·14 ये के च परेण हिमवन्तं जनपदा उत्तरकुरव उत्तरमद्रा इति...; छां 5·11·5; बृ 2·1·18; पा 4·1·168; 4·2·124; 4·3·7; 4·3·100; 6·3·84; 7·3·12. —*g* ) पा 5·1·46 पात्रात् ष्ठन् ( पात्रिकी क्षेत्रभक्तिः ). —*h* ) तैसं 2·1·9·2 अपां च खलु वा ओषधीनां च रसमुपजीवामः; 3·2·9·7 इतःप्रदानं देवा उपजीवन्ति; अमुतःप्रदानं मनुष्या उपजीवन्ति; अ 8·10·22 तां मायामसुरा उपजीवन्ति; उपजीवनीयो भवति य एवं वेद; 10·6·32 यं देवाः पितरो मनुष्या उपजीवन्ति सर्वदा; शब्रा 12·2·3·4 पूर्ववयसे पुत्राः पितरमुपजीवन्ति...उत्तरवयसे पुत्रान् पिता उपजीवति; बृ 5·8·1 ( द्वौ स्तनौ देवा उपजीवन्ति ).

तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते । तद्य इहाऽऽत्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवति । अथ य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति ॥ ६ ॥

*a* ) बृ 1·5·16. —*b* ) छां 7·25·2 ( क्षय्यलोकाः ). —*c* ) छां 7·25·2 ( अन्यथा विदुः ); बृ 3·8·10 ( कृपणः-ब्राह्मणः ). —*d* ) मनु 12·91 ( समं पश्यन्नात्मयाजी ). —*e* ) छां 3·5·4.

॥ इति प्रथमः खण्डः ॥

---

स यदि पितृलोककामो भवति । संकल्पादेवास्य पितरः समुत्तिष्ठन्ति । तेन पितृलोकेन संपन्नो महीयते ॥ १ ॥

अथ यदि मातृलोककामो भवति । संकल्पादेवास्य मातरः समुत्तिष्ठन्ति । तेन मातृलोकेन संपन्नो महीयते ॥ २ ॥

अथ यदि भ्रातृलोककामो भवति । संकल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति । तेन भ्रातृलोकेन संपन्नो महीयते ॥ ३ ॥

अथ यदि स्वसृलोककामो भवति । संकल्पादेवास्य स्वसारः समुत्तिष्ठन्ति । तेन स्वसृलोकेन संपन्नो महीयते ॥ ४ ॥

अथ यदि सखिलोककामो भवति । संकल्पादेवास्य सखायः समुत्तिष्ठन्ति । तेन सखिलोकेन संपन्नो महीयते ॥ ५ ॥

अथ यदि गन्धमाल्यँलोककामो भवति । संकल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतः । तेन गन्धमाल्यलोकेन संपन्नो महीयते ॥ ६ ॥

*a* ) कौ 1·4 शतं माल्यहस्ताः ( अप्सरसः ); गी 11·11 ( दिव्यमाल्यांबरधरं दिव्यगंधानुलेपनम् ).

अथ यद्यन्नँपानलोककामो भवति । संकल्पादेवास्यान्नपाने समुत्तिष्ठतः । तेनान्नपानलोकेन संपन्नो महीयते ॥ ७ ॥

*a* ) ऐब्रा 8·9 प्रतितिष्ठामि अन्नपानयोः; शांब्रा 6·15 तेभ्य एतदन्नपानं ससृजे; बृ 4·3·37; मै 6·36; तै 1·4.

अथ यदि गीतवाँदितलोककामो भवति । संकल्पादेवास्य गीतवादिते समुत्तिष्ठतः । तेन गीतवादितलोकेन संपन्नो महीयते ॥ ८ ॥

*a* ) शब्रा 3·2·1·6 वीणामेव सृष्ट्वा वादयन्तो निगायन्तो निषेदुः ( Idiomatic usage : continuous action ); क 1·26 तव नृत्यगीते.

अथ यदि स्त्रीलोककामो भवति । संकल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति । तेन स्त्रीलोकेन संपन्नो महीयते ॥ ९ ॥

यं यमन्तमभिकामो भवति । यं कामं कामयते । सोऽस्य संकल्पादेव समुत्तिष्ठति । तेन संपन्नो महीयते ॥ १० ॥

॥ इति द्वितीयः खण्डः ॥

---

त इमे सत्याः[a] कामा अनृतापिधानाः[b] । तेषाꣳ सत्यानाꣳ सतामनृतमपिधानम् । यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते ॥ १ ॥

*a*) ऋ 7·49·3 सत्यानृते अवपश्यञ्जनानाम्. —*b*) ऋ 1·51·4 त्वमपामपिधानावृणोरप; 1·162·13 ऊष्मण्यापिधाना चरूणाम्; अ 7·35·30 अश्मानं ते अपिधानं कृणोमि; 11·3·11 राध्यमानस्य ओदनस्य द्यौरापिधानम्; शब्रा 11·1·1·1 चन्द्रमा एव द्वारपिधानः.

अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र[a] गत्वा विन्दते । अत्र ह्यस्यैते सत्याः कामा अनृतापिधानाः[b] । तद्यथाऽपि हिरण्यनिधिं[c] निहितमक्षेत्रज्ञा[d] उपर्युपरि[e] सञ्चरन्तो न विन्देयुः । एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं[f] न विन्दन्त्यनृतेन हि प्रत्यूढाः[g] ॥ २ ॥

*a*) बृ 1·4·10; 4·4·22; मुं 3·2·9. —*b*) छां 7·26·2. —*c*) ऋ 1·117·12 हिरण्यस्येव कलशं निखातम्; 8·66·4 निखातं चिद्यः पुरुसंभृतं वसु ...... वपति दाशुषे. —*d*) शब्रा 13·2·3·2 यथा क्षेत्रज्ञोऽञ्जसा नयेत्; for अक्षेत्रज्ञ cp पा 7·3·30 नञः शुचीश्वरक्षेत्रज्ञकुशल-निपुणानाम्; cp क्षेत्रविद्—ऋ 9·70·9 क्षेत्रविद्धि दिश आह विपृच्छते; तैसं 5·2·8·5 यथा क्षेत्रविदञ्जसा नयति; for अक्षेत्रविद्—ऋ 5·40·5 अक्षेत्रविद्यथा मुग्धः; 10·32·7 अक्षेत्रवित् क्षेत्रविदं हि अप्राट्. —*e*) पा 8·1·4 नित्यवीप्सयोः; 8·1·7 उपर्यध्यधसः सामीप्ये. —*f*) छां 8·4·2–3; 8·3·4 ( संप्रसादः ). —*g*) Cp बृ 3·9·26 ( निरुह्य प्रत्युह्य ).

स वा एष आत्मा हृदि । तस्यैतदेव निरुक्तं[a] हृद्ययमिति तस्माद्धृदयम् । अहरहर्वा एवंवित् स्वर्गं लोकमेति ॥ ३ ॥

*a*) तैआ 1·6·3 अत ऊर्ध्वं सनिर्वचनाः ( आख्यायिकाः ); cp नि 2·1 ( अथ निर्वचनम् ); मुं 1·1·5; beginnings of निर्वचन as इतिवचन in ऋ 5·2·12 अशत्र्वर्यः **समजाति** वेदः । इतीम**मग्निम**मृता अवोचन्; cp नि 7·14 **अग्निः** कस्मात् ? ... त्रिभ्य आख्यातेभ्यो जायते इति शाकपूणिः । इतात्, **अक्तात्**, दग्धाद्वा नीतात्.

अथ य एष संप्रसादो[a]ऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच । एतदमृतमभयमेतद् ब्रह्मेति । तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ॥ ४ ॥

*a*) बृ 2·1·18–19; 4·3·7; 4·3·9–18 and 19–33; छां 3·13·7; 8·6·3; 8·12·3; ऐ 1·3·12; कौ 4·20; मै 2·2; प्र 4·5–6.

तानि ह वा एतानि त्रीण्यक्षराणि सँ[a]-ती-यमिति । तद्यत्सत्तदमृतम् । अथ यत् ति तन्मर्त्यम्[b] । अथ यद् यं तेनोभे यच्छति । यदनेनोभे यच्छति तस्माद् यम् । अहरहर्वा एवंवित् स्वर्गं लोकमेति ॥ ५ ॥

*a*) Cp नि 3·13 सत्यं कस्मात् ? सत्सु तायते, सत्प्रभवं भवतीति वा; 1·13 एतेः कारितं च यकारादिं च अन्तकरणम्, अस्तेः शुद्धं च सकारादिं च ( View of शाकटायन as regards the derivation of सत्य refuted by यास्क ). —*b*) बृ 5·5·1; कौ 1·6; मर्त्यम् to be dissolved as मर्तिअम्.

॥ इति तृतीयः खण्डः ॥

---

अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय । नैतꣳ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम् । सर्वे पाप्मानोऽतो निवर्तन्ते । अपहतपाप्मा ह्येष ब्रह्मलोकः ॥ १ ॥

*a*) ऋ 9·41·2 सुवितस्य मनामहे अति सेतुं दुराव्यम्; तैसं 6·1·4·9 सेतुमेव कृत्वा अत्येति; कासं 28·4 सेतुमेव कीर्त्वा स्वर्गं लोकमेति; ऐब्रा 3·35 तमेव तत्सेतुं कृत्वा तरति; तैब्रा 2·4·2·6 त्वं नस्तन्तुरुत सेतुरग्ने त्वं पन्था भवसि देवयानः; शब्रा 13·2·10·1 सेतुमेव तं संक्रमणं यजमानः कुरुते; जैब्रा 1·5 सेतोर्वा संक्रमणम्; क 3·2; मुं 2·2·5; श्वे 6·19. —*b*) बृ 4·4·22 ( विधरणः ); मै 7·7; अ 4·35·1 यो लोकानां विधृतिर्नाभिरेषां तेनौदनेनाति मृत्युम्; 19·54·5 पुण्यांश्च लोकान् विधृतीश्च पुण्याः; तैसं 1·5·2·2 विभक्तयो भवन्ति वाचो विधृत्यै. —*c*) तैसं 6·4·1·1 असंभिन्दन्नव यति प्राणानामसंभेदाय; तैब्रा 1·6·4·2 वेदी असंभिन्ने भवतः; 3·7·5·3 दक्षिणार्धादसंभिन्दन्; शब्रा 11·8·4·12 जीवेभ्यश्चैवैतां पितृभ्यश्च मर्यादां करोति असंभेदाय; तांब्रा 18·5·16 सकृत्सकृत्सवनानामन्ततो भक्षयन्ति सवनानामसंभेदाय. —*d*) बृ 3·1·4; कौ 1·4. —*e*) छां 4·14·3.

तस्माद्वा एतꣳ सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति । विद्धः सन्नविद्धो भवति । उपतापी सन्ननुपतापी भवति । तस्माद्वा एतꣳ सेतुं तीर्त्वाऽपि नक्तमहरेवाभिनिष्पद्यते । सकृद्विभातो ह्येवैष ब्रह्मलोकः ॥ २ ॥

*a*) जैब्रा 2·157 तस्मादिदमप्येतर्हि उपतापिनं पृच्छन्ति — केव ते रुजति, केव ते अभिषज्याम ( derivation of भिषक् ? ); छां 3·16·2; 6·15·1; बृ 4·3·36. —*b*) Cp ethically गी 9·30 अपि चेत्सुदुराचारः etc. नक्तम् = सुदुराचारः, अहः = साधुः. —*c*) बृ 1·3·28; 2·3·10; 4·3·14; छां 3·11·3 3·17·7; श्वे 4·18; मै 6·24; क 5·15; गोका 4·81 ( सकृद्विभातः ).

तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकः । तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥ ३ ॥

॥ इति चतुर्थः खण्डः ॥

---

अथ यद्यज्ञ^a इत्याचक्षते ब्रह्मचर्यमेव तत् । ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दते । अथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तत् । ब्रह्मचर्येण ह्येवेष्ट्वाऽऽत्मानमनुविन्दते ॥१॥

Cp in general मै 6·7 for the etymological explanations.

*a* ) शब्रा 3·9·4·23 स यन् जायते तस्माद् यज्ञो, यज्ञो ह वै नाम एतद् यद् यज्ञ इति. The Upaniṣadic etymology is : यः ज्ञः स यज्ञः.

अथ यत् सत्त्रा^aयणमित्याचक्षते ब्रह्मचर्यमेव तत् । ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दते । अथ यन्मौ^bनमित्याचक्षते ब्रह्मचर्यमेव तत् । ब्रह्मचर्येण ह्येवाऽऽत्मानमनुविद्य मनुते ॥ २ ॥

*a* ) शब्रा 4·6·8·2 या ह दीक्षा सा निषत्, तत्सत्रम्, तदयनं तत्सत्रायणम्; ऐब्रा 6·22 नेषीति सत्रायणरूपम्; तांब्रा 25·3·4 पक्षि वा एतत्सत्रायणम्; 25·8·2 त एतत् सत्रायणमुपायन् तेनार्ध्नुवन्. —*b* ) ऋ 10·136·3 उन्मदिता मौनेयेन वाताँ आ तस्थिमा वयम्; बृ 3·5·1 अमौनं च मौनं च निर्विद्य.

अथ यदनाशकायनमित्याचक्षते^a ब्रह्मचर्यमेव तत् । एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते । अथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तत् । तदर^bश्च ह वै ण्यश्चा^bर्णवौ ब्रह्मलोके तृतीयस्यामितो दि^cवि । तदैरं^dमदीय^{ँ} सरः । तदश्वत्थ^eः सोमसवनः । तदपराजिता पूर्ब्रह्मणः, प्रभुविमित^{ँ} हिरण्मयम् ॥ ३ ॥

*a* ) शब्रा 2·4·3·3 अनाशकेन ह वा इमाः प्रजाः पराभवन्ति; 9·5·1·9 स उपवसथे अनाशकमुपैति; 14·7·2·25 ( with variants in बृ 4·4·22 ) तमेतं वेदानुवचनेन … विविदिषन्ति …… अनाशकेन. —*b* ) ऐ 1·1·2 आपः अदः अम्भः; कौ 1·3. —*c* ) अ 5·4·3 अश्वत्थो देवसदनस्तृतीयस्यामितो दिवि. *d* ) Cp इरंमद् in पा 3·2·37 उग्रंपश्य-इरंमद्-पाणिंधमाश्च. —*e* ) ऋ 1·135·8 यमश्वत्थमुपतिष्ठन्त जायवः; 10·97·5 अश्वत्थे वो निषदनम्; अ 3·6·1 पुमान् पुंसः परिजातो अश्वत्थः खदिरादधि; 3·6·6 यथाश्वत्थ वानस्पत्यानारोहन् कृणुषेऽधरान्; 6·11·1 शमीमश्वत्थ आरूढस्तत्र पुंसवनं कृतम्.

तद्य एवैतावरं च ण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकः । तेषा^{ँ} सर्वेषु लोकेषु कामचारो भवति ॥ ४ ॥

॥ इति पञ्चमः खण्डः ॥

---

अथ या एता हृदयस्य^a नाड्यस्ताः पि^bङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येति । असौ वा आदित्य^cः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः ॥ १ ॥

*a* ) Cp बृ 2·2·19; 4·2·3; 4·3·20; कौ 4·19. —*b* ) बृ 4·4·9. —*c* ) छां 3·13·1–5 ( पञ्च देवसुषयः; cp five colours in anticipation of this passage ).

तद्यथा महापथ[a] आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं च । अमुष्मादादित्यात् प्रतायन्ते ता[b] आसु नाडीषु सृप्ताः । आभ्यो नाडीभ्यः प्रतायन्ते ते[b]ऽमुष्मिन्नादित्ये सृप्ताः ॥ २ ॥

a) ऐब्रा 4·17 अथ यथा महापथः पर्याण (=परियाण *circuitous*) एवम्. —b) The word रश्मि is both mas. and femi., hence referred to here as ताः and ते.

तद्यत्रैतत् सुप्तः[a] समस्तः संप्रसन्नः स्वप्नं न विजानाति । आसु तदा नाडीषु सृप्तो भवति । तं न कश्चन पाप्मा स्पृशति । तेजसा हि तदा संपन्नो[b] भवति ॥ ३ ॥

a) बृ 2·1·18–19; 4·3·9–18, 19–31; कौ 4·20. —b) छां 6·2·3; 6·8·6; 8·11·1.

अथ यत्रैतदबलिमानं नीतो[a] भवति । तमभित आसीना आहुर्जानासि मां जानासि मामिति । स यावदस्माच्छरीरादनुत्क्रान्तो भवति । तावज्जानाति ॥ ४ ॥

a) नीतः = नि + इतः; ऋ 10·94·5 न्यङ् नि यन्ति उपरस्य निष्कृतम्; 10·161·2 यदि मृत्योरन्तिकं नीत एव; अ 6·29·1 अमून् हेतिः पतत्रिणी न्येतु; 12·2·38 आर्ति मर्त्यो नीत्य; 12·4·20 हेडं न्येति मानुषः; तैसं 7·2·4·1 ताः सृष्टाः (प्रजाः) क्षुधं न्यायन्; ऐब्रा 4·26 अणिमानमेव तत् पशुषिमाणं नियन्ति; शब्रा 1·4·3·22 आर्ति न्येति; बृ 4·3·36; 4·4·1 (न्येत्य = नि + आ + इत्य); also न्याय in प्रतिन्यायम् (बृ 4·3·15) and न्याय्यम् (गी 18·15).

अथ यत्रैतदस्माच्छरीरादुत्क्रामति । अथैतैरेव रश्मिभिरूर्ध्व[1]माक्रमते[a] । स ओमिति वा होद्वा[2] मीयते । स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छति । एतद्वै खलु लोकद्वारं विदुषां प्रपदनं[b] निरोधो[c]ऽविदुषाम् ॥ ५ ॥

1) v. l. ऊर्ध्वः. —2) Deussen reads ह ऊर्ध्वम् ईयते for होद्वा मीयते (ह–उत्–वा मीयते).

a) Cp छां 8·5·6; बृ 3·1·6; 5·10·1 where we get the Atmane. form आक्रमते (cp पा 1·3·4 आङ् उद्गमने), but Parasmai. in मुं 3·1·6 येनाक्रमन्ति ऋषयो ह्याप्तकामाः. —b) शब्रा 8·6·1·23 अवस्तात् प्रपदनो ह स्वर्गो लोकः...अवस्तात् स्वर्गं लोकं प्रापयन्त. —c) प्र 1·10.

तदेष श्लोकः[a] —

शतं[b] चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्त्युत्क्रमणे भवन्ति ॥ ६ ॥

a) क 6·16. —b) प्र 3·6 (एकशतं नाडीनाम्).

॥ इति षष्ठः खण्डः ॥

---

य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः। स सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ॥ १ ॥

*a*) छां 8·1·1; 8·1·5. —*b*) के 1·4; बृ 1·4·7; 2·4·5.

तद्धोभये देवासुरा अनुबुबुधिरे। ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामानिति। इन्द्रो हैव देवानामभिप्रवव्राज विरोचनोऽसुराणाम्। तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः ॥ २ ॥

*a*) शब्रा 9·5·1·19 तद्ध हासुरा अनुबुबुधिरे यज्ञं वै कृत्वा तद्देवाः सत्यं तन्वते. —*b*) बृ 1·5·12; ऐ 1·3·14; कौ 2·6; 3·1. —*c*) आर्षेयब्रा 8·15; बृ 2·2·3; प्र 5·3.

तौ ह द्वात्रिꣳशतं वर्षाणि ब्रह्मचर्यमूषतुः। तौ ह प्रजापतिरुवाच। किमिच्छन्ताववास्तमिति। तौ होचतुर्य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः। स सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामान् यस्तमात्मानमनुविद्य विजानातीति भगवतो वचो वेदयन्ते। तमिच्छन्ताववास्तमिति ॥ ३ ॥

तौ ह प्रजापतिरुवाच—य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच। एतदमृतमभयमेतद्ब्रह्मेति। अथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इति। एष उ एवैषु सर्वेष्वन्तेषु परिख्यायत इति होवाच ॥ ४ ॥

*a*) बृ 2·3·5; 5·5·2; छां 1·7·5; 4·15·1; योसू 2·6 दृग्दर्शनशक्त्योरेकात्मतैवास्मिता. —*b*) क 6·5.

॥ इति सप्तमः खण्डः ॥

---

उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति। तौ होदशरावेऽवेक्षांचक्राते। तौ ह प्रजापतिरुवाच—किं पश्यथ इति। तौ होचतुः—सर्वमेवेदमावां भगव आत्मानं पश्याव आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति ॥ १ ॥

*a*) तैसं 3·4·8·7 ब्रह्मौदनं चतुःशरावं पक्त्वा; तैब्रा 1·3·4·5 नैवारेण सप्तदशशरावेण; जैब्रा 3·262 तन्निर्माय शरावयोः संमार्ज न्यदधुः; पा 6·2·29 इगन्तकालकपालभगालशरावेषु द्विगौ. —*b*) बृ 1·4·7 (नखाग्रेभ्यः); छां 1·6·7 (आ प्रणखात्); कौ 4·20. —*c*) ऋ 6·47·18

रूपंरूपं प्रतिरूपो बभूव; तैब्रा 3·9·22·2 अस्य पुत्रः प्रतिरूपो जायते; शब्रा 3·2·1·5 यद्वै प्रतिरूपं तच्छिल्पम् (Cp Art is imitation of Nature); 11·5·7·1 प्रज्ञा वर्धमाना चतुरो धर्मान् ब्राह्मणमभिनिष्पादयति ब्राह्मण्यं प्रतिरूपचर्यां यशो लोकपक्तिम्; बृ 3·9·22; कौ 4·2; जैब्रा 3·264 तस्मात् स भस्मना प्रतिरूपः; क 5·9-10; जै 1·27·5.

तौ ह प्रजापतिरुवाच — साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति। तौ ह साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षांचक्राते। तौ ह प्रजापतिरुवाच — किं पश्यथ इति ॥ २ ॥

*a*) ऋ 9·43·2 सोमो गीर्भिः परिष्कृतः; 9·86·24 विश्वाभिर्मतिभिः परिष्कृतम्; 10·107·10 परिष्कृतं देवमानेव चित्रम्; अ 9·3·10 दृढा नद्धा परिष्कृता; तैब्रा 2·6·11·10 मदा मासरेण परिष्कृता; पा 6·1·137 सं-परि-उपेभ्यः करोतौ भूषणे.

तौ होचतुर्यथैवेदमावां भगवः साध्वलंकृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवः साध्वलंकृतौ सुवसनौ परिष्कृताविति। एष आत्मेति होवाच। एतदमृतमभयमेतद् ब्रह्मेति। तौ ह शान्तहृदयौ प्रवव्रजतुः ॥ ३ ॥

तौ हान्वीक्ष्य प्रजापतिरुवाच — अनुपलभ्याऽऽत्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वाऽसुरा वा ते पराभविष्यन्तीति। स ह शान्तहृदय एव विरोचनोऽसुराञ्जगाम। तेभ्यो हैतामुपनिषदं प्रोवाच — आत्मैवेह महय्य आत्मा परिचर्यः। आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमं चामुं चेति ॥ ४ ॥

*a*) क 6·12 (उपलभ्यते); 6·13 (उपलब्धव्यः); मै 4·4; 6·8; गी 15·3 (उपलभ्यते); गौका 3·31 (उपलभ्यते). —*b*) Cp similar formation in गी 14·21 (किमाचारः). —*c*) अ 8·10·22 तस्या विरोचनः प्राह्रादिर्वत्स आसीत्; तैब्रा 1·5·9·1 प्रह्रादो ह वै कायाधवः विरोचनं स्वं पुत्रमपन्यधत्त. —*d*) Cp ऋ 8·70·8 तं वो महो महाय्यमिन्द्रम्; ऋ 10·122·7 त्वां देवा महयाय्याय वावृधुः.

तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेति। असुराणां ह्येषोपनिषत्। प्रेतस्य शरीरं भिक्षया वसनेनालंकारेणेति संस्कुर्वन्ति। एतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ॥ ५ ॥

*a*) छां 4·3·7 दत्तास्मै भिक्षाम्; भिक्षा in सुभिक्षा—छां 1·10·5.

॥ इति अष्टमः खण्डः ॥

---

अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श । यथैव खल्वयमस्मिञ्छरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे[b] स्रामः परिवृक्णे परिवृक्णः[c] । अस्यैव शरीरस्य नाशमन्वेष नश्यति । नाहमत्र भोग्यं[d] पश्यामीति ॥ १ ॥

*a*) ऋ 1·189·4 मा ते भयं जरितारं...नूनं विदत्; 2·28·10 स्वप्ने भयं भीरवे मह्यमाह; 2·41·10 इन्द्रो अंग महद्भयम्; 8·61·16 आरे अस्मत्कृणुहि दैव्यं भयम्; 9·67·21 यदन्ति यच्च दूरके भयं विन्दति मामिह; 10·39·11 नांहो अश्नोति दुरितं नाकिर्भयम्; अ 8·1·10 भयं परस्ताद्भयमवस्तात्; बृ 1·4·2 द्वितीयाद्वै भयं भवति; तै 2·7; क 6·2, 3; श्वे 2·8 (भयावहानि); गी 2·40; गौका 3·39 (अभये भयदर्शिनः). —*b*) ऋ 1·117·19 उत स्रामं धिष्ण्या सं रिणीथः; अ 1·31·3 अस्रामस्त्वा हविषा यजामि; अश्लोणस्त्वा घृतेन जुहोमि; 11·3·45 स्रामो भविष्यसीति एनमाह; वासं 30·10 द्वार्भ्यः स्रामं स्वप्नायान्धं अधर्माय बधिरम्; शब्रा 11·7·2·4 अन्धो वा स्रामो वा बधिरो वा पक्षहतो भविष्यति. —*c*) शब्रा 6·7·2·8 यथा पक्षपुच्छवन्तं गर्भं परिवृश्चेत् तादृक् तत्; षब्रा 3·10 पर्येवैनं वृश्चति; तैआ 1·6·3 एतयैवेन्द्रः सलावृक्या सह असुरान् परिवृश्चति. —*d*) श्वे 1·9, 12. भोग्यम् as opposed to भयम् above.

स समित्पाणिः पुनरेयाय । तꣳ ह प्रजापतिरुवाच — मघवन् यच्छान्तहृदयः प्राव्राजीः सार्धं विरोचनेन, किमिच्छन् पुनरागम इति । स होवाच — यथैव खल्वयं भगवोऽस्मिञ्छरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णः । अस्यैव शरीरस्य नाशमन्वेष नश्यति । नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

एवमेवैष मघवन्निति होवाच । एतं त्वेव ते भूयोऽनुव्याख्यास्यामि । वसापराणि द्वात्रिꣳशतं वर्षाणीति । स हापराणि द्वात्रिꣳशतं वर्षाण्युवास । तस्मै होवाच — ॥ ३ ॥

॥ इति नवमः खण्डः ॥

---

य एष स्वप्ने महीयमानश्चरत्येष[a] आत्मेति होवाच । एतदमृतमभयमेतद् ब्रह्मेति । स ह शान्तहृदयः प्रवव्राज । स हाप्राप्यैव देवानेतद्भयं ददर्श । तद्यद्यपीदꣳ शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामः । नैवैषोऽस्य दोषेण[b] दुष्यति[c] ॥ १ ॥

*a*) ऋ 4·30·9 महान्महीयमानां उषासमिन्द्र सं पिणक्. —*b*) मै 6·18 ब्रह्मविदो दोषा नाश्रयन्ति; 6·30; क 5·11. —*c*) ऋ 3·3·1 अथ धर्माणि सनता न दूदुषत्; 7·104·9 ये वा भद्रं दूषयन्ति स्वधाभिः; अ 3·9·4–5 शुनः कपिरिव दूषणः; दृष्ट्वै हि त्वां भत्स्यामि दूषयिष्यामि काबवम्.

न वधेनास्य हन्यते । नास्य स्राम्येण स्रामः । घ्नन्ति त्वेवैनम् । विच्छाद्[1]-यन्तीव । अप्रियवेत्तेव भवति । अपि रोदितीव । नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

1 ) Max Müller, Böhtlingk and Deussen suggest the reading विच्छाययन्तीव. Cp बृ 4·3·20 and पा 3·1·28.

*a* ) जैब्रा 2·276 आचार्यप्रशिष्टो वा अहमस्मि...स ह तां रात्रिमप्रियविद्ध उवास.

स समित्पाणिः पुनरेयाय । तꣳ ह प्रजापतिरुवाच — मघवन् यच्छान्तहृदयः प्राव्राजीः, किमिच्छन् पुनरागम इति । स होवाच — तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामः । नैवैषोऽस्य दोषेण दुष्यति ॥ ३ ॥

न वधेनास्य हन्यते । नास्य स्राम्येण स्रामः । घ्नन्ति त्वेवैनम् । विच्छाद्[1]-यन्तीव । अप्रियवेत्तेव भवति । अपि रोदितीव । नाहमत्र भोग्यं पश्यामीति । एवमेवैष मघवन्निति होवाच । एतं त्वेव ते भूयोऽनुव्याख्यास्यामि । वसापराणि द्वात्रिꣳशतं वर्षाणीति । स हापराणि द्वात्रिꣳशतं वर्षाण्युवास । तस्मै होवाच ॥ ४ ॥

1 ) See note on विच्छादयन्तीव in the second कण्डिका.

॥ इति दशमः खण्डः ॥

---

तद्यत्रैतत् सुप्तः[a] समस्तः[b] संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाच । एतदमृतमभयमेतद्ब्रह्मेति । स ह शान्तहृदयः प्रवव्राज । स हाप्राप्यैव देवानेतद्भयं ददर्श । नाह खल्वयमेवꣳ संप्रत्यात्मानं जानात्ययमहमस्मीति । नो एवेमानि भूतानि । विनाशमेवापीतो[c] भवति । नाहमत्र भोग्यं पश्यामीति ॥ १ ॥

*a* ) छां 8·6·3. —*b* ) ऐब्रा 2·40 आत्मा वै समस्तः...; तैब्रा 3 8·17·3 समस्तानि वैश्वदेवानि जुहोति; छां 2·1·1. —*c* ) बृ 1·3·7; 2·1·19; 4·3·23; 4·4·4; ई 14.

स समित्पाणिः[a] पुनरेयाय । तꣳ ह प्रजापतिरुवाच — मघवन् यच्छान्तहृदयः प्राव्राजीः, किमिच्छन् पुनरागम इति । स होवाच — नाह खल्वयं भगव एवꣳ संप्रत्यात्मानं जानात्ययमहमस्मीति । नो एवेमानि भूतानि । विनाशमेवापीतो भवति । नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

*a* ) मुं 1·2·12; प्र 1·1; कौ 1·1; 4·19.

एवमेवैष मघवन्निति होवाच । एतं त्वेव ते भूयोऽनुव्याख्यास्यामि । नो एवान्यत्रैतस्मात् । वसापराणि पञ्च वर्षाणीति । स हापराणि पञ्च वर्षाण्युवास ।

तान्येकशतꣳसंपेदुः । एतत्तद्यदाहुः । एकशतꣳ ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास । तस्मै होवाच — ॥ ३ ॥

*a* ) ऐब्रा 7·18 तस्य ह विश्वामित्रस्य एकशतं पुत्रा आसुः; पञ्चाशदेव ज्यायांसो, मधुच्छन्दसः ( 51st ) पञ्चाशत् कनीयांसः.

॥ इति एकादशः खण्डः ॥

---

मघवन् मर्त्यं वा इदꣳ शरीरमात्तं मृत्युना । तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानम् । आत्तो वै सशरीरः प्रियाप्रियाभ्याम् । न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥ १ ॥

*a* ) शब्रा 10·1·3·2 प्रजापतेरर्धमेव मर्त्यमासीदर्धममृतम्; 11·1·2·12 मर्त्या ह वा अग्रे देवा आसुः. —*b* ) Cp Piprawa Vase Inscription सलिल( शरीर )निधने भगवतो बुधस. —*c* ) ऋ 10·81·2 किं स्विदासीदधिष्ठानम्; अ 12·4·23 दुर्गा तस्मा अधिष्ठाने पृथिवी सहदेवता; गी 3·40 अस्याधिष्ठानमुच्यते; 18·14 अधिष्ठानं तथा कर्ता. —*d* ) छां 7·1·5; 8·4·2.

अशरीरो वायुः । अभ्रं विद्युत् स्तनयित्नुरशरीराण्येतानि । तद्यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यन्ते ॥ २ ॥

एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते । स उत्तमपुरुषः । स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनꣳ स्मरन्निदꣳ शरीरम् । स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः ॥ ३ ॥

*a* ) छां 8·3·4; मै 2·2; ब्रसू 4·4·1 संपद्याविर्भावः स्वेनशब्दात्. —*b* ) शंकराचार्य reads उत्तमपूरुषः. —*c* ) बृ 4·3·13. —*d* ) ऋ 1·25·8 वेदा य उपजायते; नि 1·3 उप इति उपजनम्; 2·2 अथापि वर्णोपजनः; 4·7 अनर्थका उपजना भवन्ति. —*e* ) ऋ 10·106·2 प्रायोगेव श्वात्र्या शासुरेथः; अ 8·9·7 त्वं हि युक्तं युयुक्षे योग्यं च; शब्रा 1·3·1·13 योक्त्रेण योग्यं युञ्जन्ति; 3·5·1·24 युगशम्येन वै योग्यं युञ्जन्ति; बृ 4·3·10. —*f* ) ऋ 1·48·3 उवासोषा उच्छाच्च नु देवी जीरा रथानाम्, ये अस्या आचरणेषु दध्रिरे समुद्रे न श्रवस्यवः.

अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुः । अथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम् । अथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वाक् । अथ यो वेदेदꣳ शृणवानीति स आत्मा श्रवणाय श्रोत्रम् ॥ ४ ॥

*a*) Cp in general बृ 1·4·7; 2·4·12; 4·4·18; के 1·1–2.

अथ यो वेदेदं मन्वानीति स आत्मा । मनोऽस्य दैवं चक्षुः । स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके ॥ ५ ॥

*a*) For organs of sense in general, cp बृ 1·3·2–6; 1·4·7; 2·2·3; छां 1·2·2–6; 2·7·1; 2·11·1; 3·18·1–6; के 1·4–8. —*b*) ऋ 10·71·7 मनोजवेषु असमा बभूवुः; अ 10·8·14 न सर्वं मनसा विदुः.

तं वा एतं देवा आत्मानमुपासते । तस्मात्तेषाꣳ सर्वे च लोका आत्ताः सर्वे च कामाः । स सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामान् यस्तमात्मानमनुविद्य विजानाति । इति ह प्रजापतिरुवाच प्रजापतिरुवाच ॥ ६ ॥

*a*) बृ 1·4·10; 4·3·33; 5·2·1; तै 2·8; कौ 4·20. —*b*) ऋ 4·27·1 (=ऐ 2·5) गर्भे नु सन्नन्वेषामवेदम्; छां 8·1·6; 8·4·3; 8 5·1; बृ 1·4·7; 4·4·8; 4·4·9; 4·4·13.

॥ इति द्वादशः खण्डः ॥

---

श्यामाच्छबलं प्रपद्ये । शबलाच्छ्यामं प्रपद्ये । अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामीत्यभिसंभवामीति ॥ १ ॥

*a*) ऋ 10·14·10–12 (शबलौ...अति द्रव). —*b*) अ 12·1·57 अश्व इव रजो दुधुवे वि तान् जनान्; 13·2·8 विधूय देवस्तमो दिवमारुहत्; नि 1·18 (ज्ञानविधूतपाप्मा); मुं 3·1·3. —*c*) अ 19·9·10 शं नो ग्रहाश्चान्द्रमसाः शमादित्यश्च राहुणा; मै 7·6 शनिः, राहुः, केतुः. —*d*) मुं 1·2·12. —*e*) मुं 1·2·6.

॥ इति त्रयोदशः खण्डः ॥

---

आकाशो वै नाम नामरूपयोर्निर्वहिता । ते यदन्तरा तद् ब्रह्म तदमृतꣳ स आत्मा । प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशाम् । यशोऽहमनुप्रापत्सि । स हाहं यशसां यशः । श्येतमदत्कमदत्कꣳ श्येतं लिन्दु माऽभिगां लिन्दु माऽभिगाम् ॥ १ ॥

*a*) छां 8·1·3. —*b*) छां 6·3·3. —*c*) ऐब्रा 2·20 अनुब्रुवतैव अनुप्रपत्तव्यम्; शब्रा 7·5·1·20 तदेतदन्नं प्रपद्यमानं सर्वे देवा अनुप्रापद्यन्त अन्नजीवनं हि इदं सर्वम्; गी 9·21 एवं त्रयीधर्ममनुप्रपन्नाः. —*d*) ऋ 1·71·4 गुहे गुहे श्येतो जेन्यो भूत्; 5·33·8 वहन्तु मा दश श्येतासः;

7·4·3 यं मर्तासः श्येतं जगृभ्रे; अ 6·83·2 एन्येका श्येन्येका कृष्णैका रोहिणी (f. du.) द्वे; वासं 24·3 श्येतः श्येताक्षोऽरुणः; शब्रा 5·3·1·7 श्येत इव ह्येष उयंश्च अस्तं च यन् भवति. —*e*) अ 12·4·5 has विक्लिन्दु. Deussen and Böhtlingk suggest लिङ्गम्.

॥ इति चतुर्दशः खण्डः ॥

---

तद्धैतद् ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यः । आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः । स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते । न च पुनरावर्तते न च पुनरावर्तते ॥ १ ॥

*a*) छां 2·23·1; 5·10. —*b*) Cp यथाविधि in पा 3·4·4 and 46. —*c*) छां 1·10·5. —*d*) मै 6·28 (पुत्रदारकुटुम्बेषु सक्तस्य). —*e*) पा 4·4·41 धर्मं चरति. —*f*) बृ 1·5·23; मुं 3·1·8; प्र 4·1; श्वे 1·1; गी 15·3. —*g*) ऋ 1·141·5 अहिंस्यमान उर्विया वि वावृधे; 5·64·3 अस्य प्रियस्य शर्मणि अहिंसानस्य सश्चिरे; वासं 11·28 शिवं प्रजाभ्योऽहिंसन्तम्; शब्रा 2·6·2·17 अहिंसन्तः शिवोऽतीहि; ऐब्रा 1·30 आत्मनश्च यजमानस्य च अहिंसायै; छां 3·17·4. —*h*) तांब्रा 1·1·7 मृदा शिथिरा देवानां तीर्थं वेदिरसि मा मा हिंसीः; जैब्रा 2·130 तदेव तीर्थम्; तदायतनम्; बृ 6·2·7 तीर्थेन इच्छासै; पा 4·4·107 समानतीर्थे वासी; 6·3·87 तीर्थे ये. —*i*) छां 5·9·2; cp यावज्जीवम् in शब्रा 5·2·2·4 तस्य नाश्नीयात् यावज्जीवम्; पा 3·4·30 यावति विन्दजीवोः.

॥ इति पञ्चदशः खण्डः ॥

॥ इति अष्टमोऽध्यायः ॥

---

# ॥ बृहदारण्यकोपनिषत् ॥

[This Upaniṣad, one of the oldest and most important ones, forms the concluding part of the 14th Kāṇḍa of the Śatapatha Brāhmaṇa of the Śukla Yajurveda. It is both an Āraṇyaka and an Upaniṣad and as its very name suggests it is voluminous ( बृहत् ) in extent. ]

ॐ उषा वा अश्वस्य[a] मेध्यस्य शिरः । सूर्यश्चक्षुर्वातः प्राणो व्यात्तम्[b]अग्निर्वैश्वानरः संवत्सर आत्मा[c]ऽश्वस्य मेध्यस्य । द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं[d] दिशः पार्श्वे अवान्तरदिशः पर्शव[e] ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मांसानि । ऊवध्यं[f] सिकताः सिन्धवो गुदा[g] यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमानि । उद्यन्[h] पूर्वार्धो निम्लोचन्[h] जघनार्धः । यद् विजृम्भते तद् विद्योतते । यद् विधुनुते तत् स्तनयति । यन्मेहति तद्वर्षति । वागेवास्य वाक् ॥ १ ॥

This कण्डिका and the next = शब्रा 10·6·4. Cp in general ऋ 1·162; अ 9·7; वासं 22–25 for अश्वमेध; also शब्रा 10·5·3 ( अग्निरहस्य ); 10·6·1 ( वैश्वानरविद्या ); 10·6·3 ( शाण्डिल्यविद्या i. e. छां 3·14 ); also तैसं 7·5·25 and तै 1·5.

1 ) v. l. द्यौष्पृष्ठम्.

*a* ) बृ 1·2·3. —*b* ) छां 1·2·9 ( व्याददात्येवान्ततः ); पा 1·3·20 आङो दोऽनास्यविहरणे. —*c* ) वासं 19·93 आत्मानमङ्गैः समधात् सरस्वती; शब्रा 9·5·2·16 आत्मा वै यज्ञस्य यजमानः अङ्गानि ऋत्विजः; 12·2·3·6 आत्मा वै संवत्सरस्य विषुवानङ्गानि मासाः; 7·2·2 8 स वा आत्मानमेव विकृषति, न पक्षपुच्छानि; ऐआ 2·3·5 मध्यं ह्येषामङ्गानामात्मा; तै 2·1. —*d* ) ऋ 3·56·3 त्रिपाजस्यो वृषभो विश्वरूपः; वासं 25·8 इन्द्रस्य क्रोडो अदित्यै पाजस्यम्; अ 4·14·8 दिशि ध्रुवायां धेहि पाजस्यम्; 10·10·20 पाजस्याज्जज्ञे यज्ञः; बृ 1·2·3 ( इयमुरः ). —*e* ) अ 10·9·20 यास्ते ग्रीवा ये स्कन्धा या पृष्टीर्याश्च पर्शवः; षब्रा 1·3 तानि पृष्ठानि बार्हतानि तस्मात् बृहत्य एव परिशवः; शब्रा 12·2·4·13 त्रयोदशान्याः पर्शवः त्रयोदशान्याः पार्श्वे; पा 6·2·177 उपसर्गात् स्वांगं ध्रुवमपर्शु. —*f* ) ऋ 1·162·10 यदूवध्यमुदरस्याप वाति; अ 12·5·39 तस्या आहननं कृत्या मेनिराशसनं वलग ऊवध्यम्; शब्रा 12·7·1·8 ऊवध्याद्देवास्य मन्युरस्रवत्, स व्याघ्रोऽभवत् आरण्यानां पशूनां राजा; ऐब्रा 2·6 औषधं वा ऊवध्यम्. —*g* ) ऋ 10·163·3 आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि; वासं 19·86 गुदाः पात्राणि सुदुघा न धेनुः; अ 9·7·16 देवजना गुदा मनुष्या आन्त्राणि अत्रा उदरम्. —*h* ) ऋ 1·151·5 आ निम्रुच उषसस्तक्वीरिव; 8·27·19 यदद्य सूर्य उद्यति यन्निम्रुचि प्रबुधि…यद्वा मध्यंदिने दिवः; ऋ 10·151·5 श्रद्धां प्रातर्हवामहे श्रद्धां मध्यंदिनं परि। श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः; 10·52·4 अप म्लुक्तं बहु कृच्छ्रा चरन्तम्; तैब्रा

3·7·6·23 उषा च तस्मै निम्रुक् च सर्वं पापं समूहताम्; ऐब्रा 3·44 स वा एष न कदाचन निम्रोचति; छां 3·11·2; पा 3·1·58 जृस्तम्भुम्रुचुम्लुचु......श्विभ्यश्च.

**अहर्वा अश्वं पुरस्तान्महिमाऽन्वजायत । तस्य पूर्वे समुद्रे योनिः । रात्रिरेनं पश्चान्महिमाऽन्वजायत । तस्यापरे समुद्रे योनिः । एतौ वा अश्वं महिमानावभितः संबभूवतुः । हयो भूत्वा देवानवहद् वाजी गन्धर्वानर्वाऽसुरानश्वो मनुष्यान् । समुद्र एवास्य बन्धुः समुद्रो योनिः ॥ २ ॥**

*a*) शब्रा 13·2·11·1 प्रजापतिरकामयत—महान् भूयान् स्यामिति । स एतावश्वमेधे महिमानौ ग्रहौ अपश्यत्; 13·5·2·23 उदिते ब्रह्मोद्ये प्रपद्य अध्वर्युः हिरण्मयेन पात्रेण प्राजापत्यं महिमानं ग्रहं गृह्णाति. —*b*) वासं 23·2 यस्ते वायावन्तरिक्षे महिमा संबभूव. —*c*) शब्रा 13·2 2·19 = तैब्रा 3·8·4·3 अप्सुयोनिर्वा अश्वः. Cp कात्यायन ( वार्तिक ) अपो योनियन्मतिषु on पा 6·3·1 अलुगुत्तरपदे.

॥ इति प्रथमं ब्राह्मणम् ॥

---

**नैवेह किंचनाग्र आसीत् । मृत्युनैवेदमावृतमासीदशनायया । अशनाया हि मृत्युः । तन्मनोऽकुरुताऽऽत्मन्वी स्यामिति । सोऽर्चन्नचरत् । तस्यार्चत आपोऽजायन्त । अर्चते वै मे कमभूदिति । तदेवार्कस्यार्कत्वम् । कं ह वा अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद ॥ १ ॥**

Cp in general शब्रा 10·6·5.

1 ) Böhtlingk reads आत्मन्वि. Cp तैब्रा 2·2·9·1. —2 ) v. l. अर्क्यत्वम्. Cp शब्रा 10·4·1·4 & 12·3·3·14; जै 4·23·1.

*a*) शब्रा 11·3·3·1 ब्रह्म वै मृत्यवे प्रजाः प्रायच्छत्; 13·7·7·1 हन्ताहं भूतेष्वात्मानं जुहवानि, भूतानि चात्मनि. —*b*) शब्रा 10·2·6·19 अन्नाद्वा अशनाया निवर्तते, पानात् पिपासा...; 7·2·2·21 अशना वै तमः, अगन्म अस्या अशनायै पादम्; ऐब्रा 2·2 अशनाया वा अमतिः; शब्रा 11·7·3·3 सोऽशनायै रूपम्, स यो ह तादृशं रूपं कुरुते अशनायुका हास्य भार्या भवन्ति; ऐब्रा 7·15 अशनया परीतः... अरण्यमुपेयाय; तैब्रा 3·9·15·2 एको वा अमुष्मिँल्लोके मृत्युः । अशनाया मृत्युः; ऐआ 2·3·2 अथ इतरेषां पशूनामशनापिपासे एव अभिविज्ञानम्. All the four forms अशना, अशनया, अशनाय and अशनाया are available. —*c*) जै 1·3·3. —*d*) तैब्रा 1·2·6·4 सर्वेण हि आत्मना आत्मन्वी सहोत्पतन्ति; बृ 1·2·7; 2·1·13. Cp सामन्वी in जै 1·43·11. Cp आत्मन्वत् in ऋ 1·182·5 युवमेतं चक्रथुः सिन्धुषु प्लवमात्मन्वन्तम्; अ 10·8·43 तस्मिन्यद्यक्षमात्मन्वत् तद्वै ब्रह्मविदो विदुः; 14·2·14 आत्मन्वती उर्वरा नारीयम्; तैब्रा 2·1·6·1 प्रजापतिरकामयत—आत्मन्वन्मे जायेतेति. —*e*) तांब्रा 17·1·9 अदण्ड्यं दण्डेन घ्नन्तश्चरन्ति; अ 4·39·9 ( with past participle ) अग्नावग्निश्चरति प्रविष्टः. —*f*) तैसं 5·3·7·1 नास्मै अकं भवति यजमानाय; निघण्टु 3·6 शम्, कम्,... सुखनामानि; नि 1·14 कमिति सुखनाम; पा 5·2·138 कंशंभ्यां बभयुस्तितुतयसः. Cp कंयु, शंयु. —*g*) ऋ 6·4·6 आ सूर्यो न भानुमद्भिरर्कैरग्ने ततन्थ; श्वे 2·11; मै 6·8.

आपो वा अर्कः। तद्यदपां शरं आसीत् तत् समहन्यत। सा पृथिव्यभवत्। तस्यामश्राम्यत्। तस्य श्रान्तस्य तप्तस्य तेजोरसो[1] निरवर्तताग्निः ॥ २ ॥

1) Weber reads तेजो रसः.

*a*) शरस् (n.). Cp अ 11·3·6 शरो अभ्रम्; तैसं 5·4·4·3 अपां वा एतत् पुष्पम्, यद्वेतसः, अपां शर अवका; वासं 39·5 मैत्रः शरसि संताप्यमाने; ऐब्रा 5·26 मैत्रं शरोगृहीतम्; शब्रा 3·3·3·2 तस्यै शृतं तस्यै शरः, तस्यै दधि, तस्यै मस्तु, तस्या आतञ्चनम्, तस्यै नवनीतम्.... Cp मण्ड in श्वे 4·16. —*b*) Cp संहत् adj. in ऋ 3·1·7 स्तीर्णा अस्य संहतो विश्वरूपाः; ऋ 8·31·9 समूधो रोमशं हतः; तैब्रा 2·2·9·2 तदभ्रमिव समहन्यत. —*c*) शांब्रा 6·10 अथैतस्या एव त्रय्यै विद्यायै तेजोरसं प्रावृहत्.

स त्रेधाऽऽत्मानं व्यकुरुतादित्यं तृतीयं वायुं तृतीयम्। स एष प्राणस्त्रेधा विहितः। तस्य प्राची दिक् शिरोऽसौ चासौ चेर्मौ। अथास्य प्रतीची दिक् पुच्छमसौ चासौ च सक्थ्यौ। दक्षिणा चोदीची च पार्श्वे। द्यौः पृष्ठमन्तरिक्षमुदरमियमुरः। स एषोऽप्सु प्रतिष्ठितः। यत्र क्व चैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥ ३ ॥

*a*) ऋ 10·45·1 दिवस्परि प्रथमं जज्ञे अग्निः अस्मद् द्वितीयं परि जातवेदाः, तृतीयमप्सु... वासं 12·19 विद्मा ते अग्ने त्रेधा त्रयाणि; शब्रा 6·7·4·4 अग्निर्वायुरादित्यः एतानि हास्य तानि त्रेधा त्रयाणि. —*b*) ऋ 4·35·2 एकं विचक्र चमसं चतुर्धा; 1·164·15 तेषामिष्टानि विहितानि धामशः; स्थात्रे रेजन्ते विकृतानि रूपशः; अ 12·3·54 तन्वं स्वर्गो वि चक्रे; श्वे 5·3; मै 6·2. Cp विकार in छां 6·1·4. —*c*) तैसं 5·5·6·2 स त्रेधा व्यभवत् स्फ्यस्तृतीयं रथस्तृतीयं यूपस्तृतीयम्; तैब्रा 1·6·6·1 तत्त्रेधा विन्यदधात्। पशुषु तृतीयमप्सु तृतीयमादित्ये तृतीयम्; 1·7·1·2 त्रेधाऽऽत्मानं विकरिष्य इति स त्रेधात्मानं व्यकुरुत—अग्निं तृतीयं रुद्रं तृतीयं वरुणं तृतीयम्; शब्रा 4·6·7·3...द्वे इन्द्रस्तृतीये तृतीयं विष्णुः. तृतीय when it means *one-third* has acute accent on the first syllable; when it means *third*, it has acute on the second syllable. Cp also तुरीयम् i. e. *one-fourth* in अ 10·10·29 आपस्तुरीयं अमृतं तुरीयं यज्ञस्तुरीयं पशवस्तुरीयम्. Only here in the sense of *one-fourth*. —*d*) शब्रा 6·7·4·5 प्राणा वै महिषा दिवि त्वा प्राणा अवर्धन्नित्येतत्. —*e*) Is विहित originally विहृत or विभृत? Cp शब्रा 6·7·4·4 बहुधा विह्रियते; वासं 12·19 विभृता पुरुत्रा. —*f*) ईर्मौ—अ 10·10·21 ईर्माभ्यामयनं जातं सक्थिभ्यां च वशे तव; नि 5·25 ईर्म इति बाहुनाम; समीरिततरो भवति.

सोऽकामयत—द्वितीयो म आत्मा जायेतेति। स मनसा वाचं मिथुनं समभवदशनाया मृत्युः। तद्यद्रेत आसीत् स संवत्सरोऽभवत्। न ह पुरा ततः संवत्सर आस। तमेतावन्तं कालमबिभर्यावान् संवत्सरः। तमेतावतः कालस्य परस्तादसृजत। तं जातमभिव्याददात्। स भाणकरोत्। सैव वागभवत् ॥ ४ ॥

*a*) बृ 1·4·17. —*b*) बृ 1·4·4. —*c*) बृ 4·4·16. —*d*) कासं 37·14 तां शुष्णो अभिव्यादद्दात्; बृ 1·1·1 (व्यात्तम्); छां 1·2·9; पा 1·3·20. —*e*) Cp√भण् (भन् in ऋ 6·11·3 मधु च्छन्दो भनति रेभ इष्टौ).

स ऐक्षत यदि वा इममभिमँ्स्ये कनीयोऽन्नं करिष्य इति। स तया वाचा तेनात्मनेदँ् सर्वमसृजत यदिदं किंच—ऋचो यजूँषि सामानि च्छन्दाँसि यज्ञान् प्रजाः पशून्। स यद्यदेवासृजत तत्तदत्तुमध्रियत। सर्वं वा अत्तीति तददितेरदितित्वम्। सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद॥ ५॥

*a*) Cp तैसं 3·1·9·6 यज्ञे माऽऽभजाथ ते पशूनाभिमंस्ये; वासं 13·41 हरसा माऽभिमंस्थाः; ऐब्रा 7·28 विश्वरूपं त्वाष्ट्रमभ्यमंस्त, वृत्रमस्तृत; शब्रा 12·5·1·16 स हैनमीश्वरः सपुत्रं सपशुमभिमन्तोः. Cp अभिमाति—ऋ 3·24·1 अभिमातीरपास्य. —*d*) बृ 1·2·4 स मनसा वाचं मिथुनं समभवत्. —*c*) ऋ 10·90·9–10 तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे, छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत. —*d*) जैब्रा 3·246 स हास्या अन्तिकं नर्तितुं दध्रे; छां 4·10·3; बृ 1·2·6; 1·5·21; 3·1·2; 4·3·19. —*e*) ऋ 1·89·10 अदितिर्द्यौः अदितिरन्तरिक्षमादितिर्माता स पिता स पुत्रः ..; शब्रा 7·4·2·7 इयं वा अदितिरियं हि इदं सर्वं दद्ते; नि 4·22 अदितिः अदीना देवमाता; 11·23 अग्निरपि अदितिरुच्यते.

सोऽकामयत—भूयसा यज्ञेन भूयो यजेयेति। सोऽश्राम्यत्। स तपोऽतप्यत। तस्य श्रान्तस्य तप्तस्य यशो वीर्यमुदक्रामत्। प्राणा वै यशो वीर्यम्। तत् प्राणेषूत्क्रान्तेषु शरीरँ् श्वयितुमध्रियत। तस्य शरीर एव मन आसीत्॥ ६॥

सोऽकामयत—मेध्यं म इदँ्स्यादात्मन्व्यनेन स्यामिति। ततोऽश्वः समभवत्। यदश्वत् तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम्। एष ह वा अश्वमेधं वेद य एनमेवं वेद। तमनवरुध्यैवामन्यत। तँ् संवत्सरस्य परस्तादात्मन आलभत। पशून् देवताभ्यः प्रत्यौहत्। तस्मात् सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्ते। एष ह वा अश्वमेधो य एष तपति। तस्य संवत्सर आत्मा। अयमग्निरर्कः। तस्येमे लोका आत्मानः। तावेतावर्काश्वमेधौ। सो पुनरेकैव देवता भवति मृत्युरेव। अप पुनर्मृत्युं जयति। नैनं मृत्युराप्नोति। मृत्युरस्यात्मा भवति। एतासां देवतानामेको भवति॥७॥

*a*) शब्रा 6·1·1·11 अश्वुर्ह वै तमश्व इत्याचक्षते; cp पा 7·4·18 श्वयतेरः. —*b*) अ 12·2·55 प्रत्यश्वमर्कं प्रत्यर्पयित्वा; शब्रा 12·3·3·14 त्रयं सह क्रियते—अग्निरर्क्यं महदुक्थम्...... तेनास्याग्न्यर्कौ आप्तौ भवतः; ऐआ 1·4·1 अग्निर्वा अर्कः; बृ 3·2·10. —*c*) अ 11·7·7 राजसूयं वाजपेयम्...अर्काश्वमेधावुच्छिष्टे......; जैब्रा 1·25 अर्काश्वमेधाविति एव सम्राडग्निहोत्रं जुहोमि. —*d*) शब्रा 10·5·2·23 स एष एव मृत्युः... सोऽमृतो भवति। मृत्युरस्यात्मा भवति. —*e*) शब्रा 10·6·5·8 adds सर्वमायुरेति after this. —*f*) शब्रा 10·6·5·8 adds hereafter य एवं वेद.

॥ इति द्वितीयं ब्राह्मणम् ॥

द्वया[a] ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा[b] एव देवा ज्यायसा[b] असुराः। त एषु लोकेष्वस्पर्धन्त। ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति ॥ १ ॥

Cp in general : छां 1·2, 3; कौ 3; जै 1·60; 2·1–3; 2·10–11.

*a* ) ऋ 6·27·8 द्वयानग्ने रथिनो विंशतिं गाः; 9·72·3 सं द्वयीभिः स्वसृभिः क्षेति जामिभिः; अ 19·7·5 आ मे द्वया प्रोष्ठपदा सुशर्म; शब्रा 1·1·1·4 द्वयं वा इदं न तृतीयमस्ति सत्यं चैवानृतं च; ऐब्रा 7·19 ब्रह्मक्षत्रे अनु द्वय्यः प्रजा असृज्यन्त–हुतादश्च अहुतादश्च; पा 5·2·43 द्वित्रिभ्यां तयस्यायज्वा; 6·4·148 यस्येति च. कानीयस–ज्यायस occur only here for कनीयस् and ज्यायस्; ऋ 7·86·6 अस्ति ज्यायान् कनीयस उपारे; cp पा 5·3·64 युवाल्पयोः कन् अन्यतरस्याम्; 5·3·61 ज्य च.

ते ह वाचमूचुस्त्वं न उद्गायेति। तथेति तेभ्यो वागुदगायत्। यो वाचि भोगस्[b]तं देवेभ्य आगायत्। यत् कल्याणं[c] वदति तदात्मने। ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति। तमभिद्रुत्य पाप्मनाऽविध्यन्। स यः स पाप्मा यदेवेदमप्रतिरूपं[d] वदति। स एव स पाप्मा ॥ २ ॥

*a* ) Cp छां 3·18·1–6; 8·12·4–5; बृ 1·4·7 ( five organs of sense ); बृ 2·2·3 ( सप्त ऋषयः ); केन 1·4–8. —*b* ) ऋ 10·34·3 नाहं विन्दामि कितवस्य भोगम्; तैसं 2·4·12·6 तव भोगाय त्वां प्र विशेयम्; ऐब्रा 7·13 यावन्तः पृथिव्यां भोगाः; तैब्रा 2·3·10·3 तस्माद्‌ु ह स्त्रियो भोगमा एव हारयन्ते; शब्रा 3·9·3·27 तस्मादाप एतावति भोगे भुज्यमाने न क्षीयन्ते. Cp भोग्य in छां 8·9·1. —*c* ) ऋ 1·31·9 त्वं कल्याण वसु विश्वमोपिषे; 3·53·6 कल्याणीर्जाया सुरणं गृहे ते; शब्रा 11·6·1·7 स्त्रियौ कल्याणीं च अतिकल्याणीं च ते अन्तरेण पुरुषः कृष्णः पिंगाक्षो दण्डपाणिस्तस्थौ; 11·6·1·12 सा या कल्याणी सा श्रद्धा ... अथ या अतिकल्याणी सा अश्रद्धा; नि 2·3 कल्याणं कमनीयं भवति; पा 4·1·126 कल्याण्यादीनामिनङ्. —*d* ) बृ 2·1·8. Cp प्रतिरूप in शब्रा 3·2·1·5 यद्वै प्रतिरूपं तच्छिल्पम्.

अथ ह प्राणमूचुस्त्वं न उद्गायेति। तथेति तेभ्यः प्राण उदगायत्। यः प्राणे भोगस्तं देवेभ्य आगायत्। यत् कल्याणं जिघ्रति तदात्मने। ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति। मभिद्रुत्य पाप्मनाऽविध्यन्। स यः स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति। स एव स पाप्मा ॥ ३ ॥

अथ ह चक्षुरूचुस्त्वं न उद्गायेति। तथेति तेभ्यश्चक्षुरुदगायत्। यश्चक्षुषि भोगस्तं देवेभ्य आगायत्। यत् कल्याणं पश्यति तदात्मने। ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति। तमभिद्रुत्य पाप्मनाऽविध्यन्। स यः स पाप्मा यदेवेदमप्रतिरूपं पश्यति। स एव स पाप्मा ॥ ४ ॥

अथ ह श्रोत्रमूचुस्त्वं न उद्गायेति। तथेति तेभ्यः श्रोत्रमुदगायत्। यः श्रोत्रे भोगस्तं देवेभ्य आगायत्। यत् कल्याणꣳ शृणोति तदात्मने। ते विदुरनेन वै न

उद्गात्राऽत्येष्यन्तीति । तमभिद्रुत्य पाप्मनाऽविध्यन् । स यः स पाप्मा । यदेवेदमप्रतिरूपꣳशृणोति । स एव स पाप्मा ॥ ५ ॥

अथ ह मन ऊचुस्त्वं न उद्गायेति । तथेति तेभ्यो मन उदगायत् । यो मनसि भोगस्तं देवेभ्य आगायत् । यत् कल्याणꣳ संकल्पयाति तदात्मने । ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति । तमभिद्रुत्य पाप्मनाऽविध्यन् । स यः स पाप्मा । यदेवेदमप्रतिरूपꣳ संकल्पयति । स एव स पाप्मा । एवमु खल्वेता देवताः पाप्मभिरुपासृजन् । एवमेनाः पाप्मनाऽविध्यन् ॥ ६ ॥

अथ हेममासन्यं[a] प्राणमूचुस्त्वं न उद्गायेति । तथेति तेभ्य एष प्राण उदगायत् । ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति । तमभिद्रुत्य पाप्मनाऽविव्यत्सन् । स यथाऽश्मानमृत्वा[b] लोष्टो[c] विध्वꣳसेतैवꣳ हैव विध्वꣳसमाना[d] विष्वञ्चो[d] विनेशुः[d] । ततो देवा अभवन्[e], परासुराः । भवत्यात्मना, परास्य द्विषन् भ्रातृव्यो[f] भवति य एवं वेद ॥७॥

*a*) छां 1·2·7; के 1·1 ( प्रथमः ). आसन्य from आसन् as मुख्य from मुख. —*b*) छां 1·2·7-8 ( अश्मा आखणः ); जै 1·60·7 ( अश्मा आखणः ). —*c*) शब्रा 3·2·2·20 तत् कृष्णाविषाणया लोष्टं वा किंचिद्वा उपहन्ति; 4·1·5·2 तस्य कुमाराः क्रीडन्त इमं जीर्णिं कृत्यारूपमनर्थ्यं मन्यमाना लोष्टैर्विपिपिषुः; 13·8·4·12 मर्यादाया एव लोष्टमाहृत्य; गोब्रा 1·2·3 यथा कुंभे लोष्टः प्रक्षिप्तो नैव शौचार्थाय कल्पते. —*d*) Note the alliteration. —*e*) तैसं 2·4·3·3 भवत्यात्मना परास्य भ्रातृव्यो भवति; ऐब्रा 3·21 यो वै भवति यः श्रेष्ठतामश्नुते स महान् भवति; शब्रा 9·5·1·17 अथ हासुराः, आसक्त्यनृतं वदन्तः... परा ह त्वेवान्ततो भवन्ति; छां 8·8·4. —*f*) अ 5·22·10 पाप्मा भ्रातृव्येण सह गच्छ; 10·3·9 भ्रातृव्या मे सबन्धवः; तैसं 5·6·2·1 आपो वा अग्नेर्भ्रातृव्याः; कासं 27·8 तस्माद् भ्रातृव्यायानृतं वदेत्; बृ 2·2·1; तै 3·10; पा 4·1·144 भ्रातुर्व्यच्च; 145 व्यन् सपत्ने.

ते होचुः—क्व नु सोऽभूद्यो न इत्थमसक्तेति[a] । अयमास्येऽन्तरिति । सोऽयास्य[b] आङ्गिरसोऽङ्गानाꣳ हि रसः ॥ ८ ॥

*a*) ऋ 1·33·3 नि सर्वसेन इषुधीँरसक्त. —*b*) बृ 3·1·19.

सा वा एषा देवता दूर्नाम । दूरꣳ ह्यस्या मृत्युः । दूरꣳ ह वा अस्मान्मृत्युर्भवति य एवं वेद ॥ ९ ॥

सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्राऽऽसां दिशामन्तस्तद्गमयांचकार । तदासां[a] पाप्मनो[b] विन्यदधात्[c] । तस्मान्न जनमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववायानीति[d] ॥ १० ॥

*a*) यत्र—तद् : cp शब्रा 13·8·4·5 यत्रोदकं भवति तत्स्नान्ति. —*b*) अ 12·3·18 मा मा प्रापत् पाप्मा. —*c*) तैसं 2·4·12·3 स विष्णुस्त्रेधात्मानं विन्यधत्त; शब्रा 2·2·1·14 स एतास्तिस्रस्तनूः एषु लोकेषु विन्यधत्त; तांब्रा 6·5·13 ता वनस्पतयश्चतुर्धा वाचं विन्यदधुः —दुन्दुभौ वीणायामक्षे तूणवे. —*d*) शब्रा 7·2·1·13 पाप्मा वै निर्ऋतिः नेत् पाप्मानं निर्ऋतिमन्ववायामेति; 11·5·5·8 महाहिमिव वै ह्रदाद् बलीयान् अन्ववेत्य; ऐब्रा 6·14 यद्दहं चाहं चेति ह स्म देवता अन्ववयुः.

सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्याथैना मृत्युमत्यवहत्[a] ॥ ११ ॥

*a*) ऋ 6·22·7 स नो वक्षत् … सुवह्मा … विश्वान्यति दुर्गहाणि; शब्रा 13·8·4·6 अथो अग्निर्वै पथो अतिवोढा स एनानतिवहति; जै 3·9·10.

स[1] वै वाचमेव प्रथमामत्यवहत् । सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत् । सोऽयमग्निः परेण[b] मृत्युमतिक्रान्तो दीप्यते ॥ १२ ॥

Cp in general बृ 3·9· 1–9.

1) Senart reads सा for सः.

*a*) शब्रा 2·3·3·9 तदेतं मृत्युमतिमुच्यते सैषाग्निहोत्रे मृत्योरतिमुक्तिः; ऐब्रा 3·14 स सर्वान् पाशान्, सर्वान् स्थाणून् मृत्योरतिमुच्य स्वस्त्येव उदमुच्यत; तैब्रा 3·1·6·2 अति ह वा अहोरात्रे मुच्यते; बृ 3·1·3,6; के 1·2. —*b*) अ 10·1·16 परेणेहि नवतिं नाव्या अति दुर्गाः; ऐब्रा 3·37 अवरेण वै देवान्…परेणैव पितॄन्…; 8·14 ये केच परेण हिमवन्तं जनपदा उत्तरकुरव उत्तरमद्रा इति; शब्रा 7·1·1·24 तद्याश्चेतं परेणापो याश्चावरेण ता एतदाह; ऐ 1·2; पा 2·3·8 कर्मप्रवचनीययुक्ते द्वितीया; 2·3·31 एनपा द्वितीया.

अथ प्राणमत्यवहत् । स यदा मृत्युमत्यमुच्यत स वायुरभवत् । सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते ॥ १३ ॥

अथ चक्षुरत्यवहत् । तद्यदा मृत्युमत्यमुच्यत स आदित्योऽभवत् । सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति ॥ १४ ॥

अथ श्रोत्रमत्यवहत् । तद्यदा मृत्युमत्यमुच्यत ता दिशोऽभवन् । ता इमा दिशः परेण मृत्युमतिक्रान्ताः[a] ॥ १५ ॥

*a*) An appropriate verb is lacking as in the preceding and the following; e. g. दीप्यते, पवते, तपति and भाति.

अथ मनोऽत्यवहत् । तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत् । सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भाति । एवꣳ ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद ॥ १६ ॥

अथात्मनेऽन्नाद्यमागायत् । यद्धि किंचान्नमद्यतेऽनेनैव तदद्यते । इह प्रतितिष्ठति ॥ १७ ॥

*a* ) अनेन a pronominal form; but शंकराचार्य takes it as अन = प्राण. Cp बृ 1·5·3; 6·1·14; छां 5·2·1.

ते देवा अब्रुवन् । एतावद्वा इद॰ सर्वं यदन्नम् । तदात्मन आगासीः । अनु नोऽस्मिन्नन्न आभज[a]स्वेति । ते वै माऽभिसंवि[b]शतेति । तथेति त॰ समन्तं[c] परिण्य-वि[d]शन्त । तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्ति । एव॰ ह वा एन॰ स्वा अभिसंविशन्ति भर्ता स्वाना॰ श्रेष्ठः पु[e]रएता भवत्यन्नादोऽधिपतिर्य एवं वेद । य उ हैवंविद॰ स्वेषु प्र[f]तिर्बुभूषति न हैवालं भा[g]र्येभ्यो भवति । अथ य एवैतमनु भवति यो वैतमनु भार्यान् बुभूर्षति स हैवालं भार्येभ्यो भवति ॥ १८ ॥

*a* ) ऋ 4·32·21 आ नो भजस्व राधसि; अ 4·22·2 एमं भज ग्रामे अश्वेषु गोषु; ऐब्रा 3·20 हन्तेमानस्मिन्नुक्थ आ भजै. —*b* ) अ 3·3·4 इमं सजाता अभिसंविशध्वम्; वासं 32·11 आत्मानमात्मना अभिसंविवेश; तैब्रा 2·7·16·3 मां गोपतिमभिसंविशन्तु; तै 3·1. —*c* ) अ 6·8·1 यथा वृक्षं लिबुजा समन्तं परिषस्वजे; ऐब्रा 2·19 तं सरस्वती समन्तं पर्यधावत्; बृ 3·3·2. —*d* ) शब्रा 4·3·4·11 त एनमाभितः परिणिविशन्ते; 14·1·1·7 तं देवा अनभिधृष्णुवन्तः समन्तं परिण्य-विशन्त. —*e* ) ऋ 5·46·1 विद्वान् पथः पुरएत ऋजु नेषति; 6·47·7 पुरएताऽइव. —*f* ) ऋ 4·17·19 यद्ध वृत्रा भूरीण्येको अप्रतीनि हन्ति; 8·32·16 न सोमो अप्रता पपे; शब्रा 8·7·3·8 इन्द्रो वै सर्वान् देवान् प्रतिप्रतिः; 13·5·2·3 नेयजमानं प्रतिप्रतिः कश्चिदसदिति; शांब्रा 6·12 ( quoted in नि 13·10 ) एतद्ध वा एतदक्षरं यत्सर्वां त्रयीं विद्यां प्रतिप्रति; पा 1·4·92 प्रतिः प्रतिनिधिप्रतिदानयोः. —*g* ) शब्रा 2·3·4·7 भर्ता भार्यं नानुबुध्यते; ऐब्रा 1·29 अनग्नंभावुका ह होतुश्च यजमानस्य च भार्या भवन्ति; जैब्रा 3·23 एतेषां नो भार्याणामध्यक्षः स्या इति; छां 7·24·2 ( दासभार्यम् ); पा 3·1·112 भृञो असंज्ञायाम्.

सोऽया[a]स्य आङ्गिरसोऽङ्गानां हि रसः । प्राणो वा अङ्गाना॰ रसः । प्राणो हि वा अङ्गाना॰ रसः । तस्माद्यस्मात् कस्माच्चाङ्गात् प्राण उत्क्रामति तदे[b]व तच्छुष्यति । एष हि वा अङ्गाना॰ रसः ॥ १९ ॥

*a* ) ऋ 10·67·1 अयास्य उक्थमिन्द्राय शंसन्; 10·108·8 एह गमन्नृषयः सोमशिता अयास्यो अंगिरसो नवग्वाः; गोब्रा 1·1·7 सो अंगरसोऽभवत् तं वा एतं अंगरसं सन्तं आंगिरा इत्याचक्षते; नि 3·17 अंगारेषु अंगिराः; जै 2·11·8–9. —*b* ) तदा + इव ?

एष[a] उ ए[a]व बृहस्पतिः । वाग्वै बृह[b]ती । तस्या एष पतिस्तस्मादु बृहस्पतिः ॥२०॥

*a* ) पा 1·1·17 उञः ( विभाषासंधिः ). —*b* ) शांकरभाष्य quotes : प्राणो वृहती प्राण ऋच इत्येव विद्यात् from some Vedic work.

एष उ[1] एव ब्रह्मणस्पतिः । वाग्वै ब्रह्म । तस्या एष पतिस्तस्मादु ब्रह्मणस्पतिः ॥ २१ ॥

1 ) Weber adds ह after उ.

एष उ एव साम। वाग्वै सामैष सा चामश्चेति तत् साम्नः सामत्वम्। यद्वेवं समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्वेव साम। अश्नुते सा नः सायुज्यꣳ सलोकतां य एवमेतत् साम वेद ॥२२॥

*a*) अ 14·2·71 अमोऽहमस्मि सा त्वम्; छां 1·6·7; 5·2·6; जै 1·53·5. —*b*) पा 1·1·17 उञः (विभाषासंधिः). —*c*) ऋ 1·191·1 द्वाविति प्लुषी इति; वासं 24·29 प्रजापतये पुरुषान् हस्तिन आलभते, वाचे प्लुषीन्, चक्षुषे मशकान्; अ 4·36·9 हस्तिनं मशका इव; जैब्रा 2·182 ते पशव आतपं वर्ष दशान् (*sic*) मशकान् न धारयन्ति; शब्रा 11·2·7·12 कं स्विदेव अपरीषु महानागमिव अभिसंसारं दिदृक्षितारः; ऐब्रा 8·22 दशनागसहस्राणि दश दासीसहस्राणि; सुत्तनिपात 20 अंधकमकसा न विज्जरे; पा 4·1·42...नाग...स्थौल्य.... —*d*) तैसं 5·7·5·7 अथो एतासां देवतानां सायुज्यतां गच्छति; कासं 37·11 एताभिर्वै देवताभिः सायुज्येन देवा असुराणां राष्ट्रमाददत; ऐब्रा 2·24 एतासामेव तद्देवतानां यजमानं सायुज्यं सरूपतां सलोकतां गमयति; तैब्रा 3·9·20 9 अश्वेनैव मेध्येन प्रजापतेः सायुज्यं सलोकतामाप्नोति; तांब्रा 25·18·6 ब्रह्मणः सलोकतां सार्ष्टितां सायुज्यं गच्छन्ति य एतदुपयन्ति; छां 2·20·2; छां 8·14·1 (सायुज्य from सयुज् in ऋ.)

एष उ वा उद्गीथः। प्राणो वा उत्। प्राणेन हीदꣳ सर्वमुत्तब्धम्। वागेव गीथा। उच्च गीथा चेति स उद्गीथः॥ २३ ॥

*a*) अ 11·7·5 ऋक्साम यजुरुच्छिष्ट उद्गीथः प्रस्तुतं स्तुतम्; 15·3·6 सामासाद् उद्गीथोऽपाश्रयः; तैसं 3·2·9·5 उद्गीथ एव उद्गातॄणाम्; ऐब्रा 5·32–33 स ऋचेव हौत्रमकरोत् यजुषाध्वर्यवं साम्ना उद्गीथम्; जैब्रा 1·234 तस्य ह सोमशुष्मः सात्ययज्ञिरुद्गीथायोढ आस; तांब्रा 6·6·18 एष वै सोमस्योद्गीथो यत्पवते सोमोद्गीतमेव साम गायति; जै 1·12·4 माध्यंदिन उद्गीथः; cp उद्गाता—ऋ 2·43·1–2 उभे वाचौ वदति सामगाइव, गायत्रं च त्रैष्टुभं चानु राजति, उद्गातेव शकुने साम गायसि ...; शब्रा 13·2·3·2 यद् उद्गाता उद्गायेत् यथाक्षेत्रज्ञो अन्येन पथा नयेत् तादृक् तत्, अथ यदुद्गातारमवरुध्य अश्वमुद्गीथाय वृणीते, यथा क्षेत्रज्ञोऽञसा नयेत्; पा 5·1·129 प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्. —*b*) छां 1·3 6 (प्राण एव उत् ... वाग्गीः ... अन्नं थम् ...).

तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाच। अयं त्यस्य राजा मूर्धानं विपातयताद्यदितोऽयास्य आङ्गिरसोऽन्येनोदगायदिति। वाचा च ह्येव स प्राणेन चोदगायदिति॥ २४ ॥

*a*) ऋ 6·75·18 मर्माणि ते वर्मणा छादयामि, सोमस्त्वा राजामृतेनानु वस्ताम्; 10·109·2 सोमो राजा प्रथमो ब्रह्मजायां पुनः प्रायच्छदहृणीयमानः; वासं 9·40 एष वोऽमी (Vocative!) राजा सोमोऽस्माकं ब्राह्मणानां राजा; शब्रा 5·3·3·12 तस्माद् ब्राह्मणोऽनाद्यः सोमराजा हि भवति; ऐब्रा 1·14 ते सोमं राजानमक्रुर्वन्; छां 5·10·4 एष सोमो राजा। तद्देवानामन्नम्। तं देवा भक्षयन्ति. —*b*) बृ 2·3·1; 2·3·3; 3·9·9; तै 2·6; कौ 1·6. —*c*) सुत्तनिपात 983 मुद्धा फलतु सत्तधा; 987 मुद्धनि मुद्धपाते वा ञाणं तस्स न विज्जति.

तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वम् । तस्य वै स्वर एव स्वम् । तस्मादार्त्विज्यं करिष्यन् वाचि स्वरमिच्छेत । तया वाचा स्वरसम्पन्नयार्त्विज्यं कुर्यात् । तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एव । अथो यस्य स्वं भवति । भवति हास्य स्वं य एवमेतत् साम्नः स्वं वेद ॥ २५ ॥

*a* ) ऋ 1·94·6 विश्वा विद्वाँ आर्त्विज्या धीर पुष्यसि; अ 11·3·14 ऋचा कुम्भ्यधिहितार्त्विज्येन प्रेषिता; ऐब्रा 3·46 ... आर्त्विज्यं कारयते उत वा मे दद्यात्, उत वा मा वृणीतेति; शब्रा 1·9 1·29 अमानुष एव वा एतद्भवति यदार्त्विज्ये प्रवृतः; शब्रा 12·3·3·2 अस्य त्रय्या विद्ययाऽऽर्त्विज्यं कृतं भवति; छां 1·10·6; ब्रसू 3·4·45 आर्त्विज्यमिति औडुलोमिः, तस्मै हि परिक्रीयते. —*b* ) ऋ 2·4·4 अस्य रण्वा स्वस्येव पुष्टिः; 6 28 2 उपेद्ददाति न स्वं मुषायति; 7·82·6 ओजो मिमाते ध्रुवमस्य यत् स्वम्; अ 6·107·1 त्रायमाणे द्विपाच्च सर्व नो रक्ष चतुष्पाद्यच्च नः स्वम्; 12·4·10 तदाहुः स्वस्य गोपनम्; तैसं 1·5·9·1 यदेव किञ्च यजमानस्य स्वं तस्यैव तद्रेतः सिञ्चति प्रजनने.

तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णम् । तस्य वै स्वर[a] एव सुवर्णम् । भवति हास्य सुवर्णं य एवमेतत् साम्नः सुवर्णं वेद ॥ २६ ॥

*a* ) Cp तै 1·2 ( वर्णः स्वरः ); reference to अकारादिः वर्णः ?

तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति । तस्य वै वागेव प्रतिष्ठा । वाचि हि खल्वेष एतत् प्राणः प्रतिष्ठितो गीयते । अन्न[a] इत्यु हैक आहुः ॥ २७ ॥

*a* ) i. e. अन्ने as opposed to वाचि above.

अथातः पवमानानामेवाभ्यारोहः[a][b] । स वै खलु प्रस्तोता साम प्रस्तौति । स यत्र प्रस्तुयात् तदेतानि जपेत् । असतो मा सद्गमय, तमसो मा ज्योतिर्गमय, मृत्योर्माऽमृतं गमयेति । स यदाहासतो मा सद्गमयेति । मृत्युर्वा असत् सदमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह । तमसो मा ज्योतिर्गमयेति । मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह । मृत्योर्माऽमृतं गमयेति । नात्र तिरोहितमिवास्ति । अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत् । तस्मादु तेषु वरं वृणीत । यं कामं कामयेत् तम् । स एष एवंविदुद्गातात्मने वा यजमानाय वा यं कामं कामयते तमागायति । तद्धैतल्लोकजिदेव । न हैवालोक्यताया आशाऽस्ति य एवमेतत् साम वेद ॥ २८ ॥

*a* ) तैसं 3·2·1·1 यो वै पवमानानामन्वारोहान् विद्वान् यजते... " अनु त्वाऽऽरभे...." Cp पा 3·2·128 पूङ्यजोः शानन् ( पवमानः; यजमानः ). —*b* ) शब्रा 3·3·4·9 श्रेयान् व

एषोऽभ्यारोहाद् भवति; 12·2·3·10 अथ वातो अह्नामभ्यारोहः. —*c*) ऐब्रा 2·38 होतृजपं जपति रेतस्तत् सिञ्चति । उपांशु जपति, उपांशु इव वै रेतसः सिक्तिः; ऐब्रा 6·14 प्रशास्ता जपं जपित्वा...; शब्रा 11·5·5·10 उच्चैर्होता शंसति—शनैरितरः, जञ्जप्यमान इव अन्वाह; बृ 6·3·6; 6·4·9; छां 5·2·6; कौ 2·8;2·11; गी 10·25 यज्ञानां जपयज्ञोऽस्मि; पा 7·4·86 जप-जभ-दह-दश-भञ्ज-पशां च. —*d*) वासं 1·5 इदमहमनृतात् सत्यमुपैमि; शब्रा 1·1·1·2 द्वयं वा इदं न तृतीयमस्ति, सत्यं चैवानृतं च—सत्यमेव देवाः, अनृतं मनुष्याः. —*e*) ऋ 3·9·5...अग्निमित्था तिरोहितम् । ऐनं नयन् मातरिश्वा; शब्रा 1·1·1·2 इति नात्र तिरोहितामिवास्ति; ऐब्रा 8 27 एष ह वै पुरोहितो य एवं वेद, अथ स तिरोहितो य एवं न वेद; ब्रसू 3·2·5 पराभिध्यानात् तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ; बृ 1·4·4; छां 7·26; के 3·11. —*f*) बृ 1·5·17 तस्मात् पुत्रमनुशिष्टं लोक्यमाहुः. Cp सोम्य—पा 4·4·137 सोममर्हति यः.

## ॥ इति तृतीयं ब्राह्मणम् ॥

---

आत्मैवेदमग्र आसीत् पुरुषविधः[a] । सोऽनुवीक्ष्य[b] नान्यदात्मनोऽपश्यत् । सोऽहमस्मीत्यग्रे व्याहरत्[c] । ततोऽहंनामाभवत्[d] । तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र[e] उक्त्वाऽथान्यन्नाम प्रब्रूते यदस्य भवति । स यत् पूर्वोऽस्मात् सर्वस्मात् सर्वान् पाप्मन औषत् तस्मात् पुरुषः[f] । ओषति ह वै स तं योऽस्मात् पूर्वो बुभूषति य एवं वेद ॥ १ ॥

*a*) शब्रा 6·7·4·3 यदेनमदो द्वितीयं पुरुषविधोऽजनयत्; 10·6·1·11 स यो हैतमेवाग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद;...तै 2·2-5 (एष पुरुषविध एव). —*b*) वासं 13·30 अच्छिन्नपत्राः प्रजा अनुवीक्षस्व; शब्रा 6·2·2 6 प्रजापतिः प्रजाः सृष्ट्वा अनुव्यैक्षत तस्यात्यानन्देन रेतः परापतत्; 7·5·1·8 ता अरिष्टा अनार्ता अनुवीक्षस्व (आन्वीक्षिकी from अनु + वि + ईक्ष्) कौटिलीय अर्थशास्त्र, अ 2—प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् । आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता. Cp अनुविलोकन in बुद्धधर्मदेशनानुविलोकन— गण्डव्यूह 98·23. —*c*) ऐब्रा 2·33 स वाचमयच्छत् स संवत्सरस्य परस्ताद् व्याहरत्; तैब्रा 2·2·4·2 स भूरिति व्याहरत्; गी 8·18 ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्. Cp व्याहृति in तै 1·5 and मै 6·2. —*d*) Cp असौनामा and इदंरूपः बृ 1·4·7; छां 7·25·1; श्वे 5·8; प्र 4·8; मै 2·5; 3·2; 6·5. —*e*) शब्रा 5·2·1·10 स रोक्ष्यन् जायामामन्त्रयते—जाये, एहि स्वो रोहावेति; शब्रा 1·4·1·10 तस्मै ह स्म आमन्त्र्यमाणो न प्रतिशृणोति; तैब्रा 2·3·11·1 आत्मन्नात्मन्निति आमन्त्रयत; पा 3·3·161 विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्. —*f*) अ 10·2·28 पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते; शब्रा 13·6·2·1 इमे वै लोकाः पूः, अयमेव पुरुषो योऽयं पवते, सोऽस्यां पुरि शेते तस्मात् पुरुषः; तैआ 1·23·4 पूर्वमेवाहमिहासमिति तत् पुरुषस्य पुरुषत्वम्; नि 2·3 पुरुषः पुरिषादः पुरिशयः पूरयतेर्वा; श्वे 3·9.

सोऽबिभेत् तस्मादेकाकी बिभेति । स हायमीक्षांचक्रे, यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति । तत एवास्य भयं वीयाय[a] । कस्माद्ध्यभेष्यत्[b] । द्वितीयाद्वै भयं भवति[b] ॥२॥

*a*) छां 4·9·3 (अत्र ह न किंचन वीयाय). —*b*) Conditional in a simple interrogative sentence: cp ऋ 2·30·2 यो वृत्राय सिनमत्राभरिष्यत्. —*b*) तै 2·4; 2·7; क 4·5.

स वै नैव रेमे। तस्मादेकाकी न रमते। स [a]द्वितीयमैच्छत्। स हैतावानास यथा स्त्री[b]पुमांसौ संपरि[c]ष्वक्तौ। स इममेवाऽऽत्मानं द्वेधा[d]ऽपातयत्। ततः पतिश्च पत्नी चाभवताम्। तस्मादिदमर्धबृ[f]गलमिव स्वः[g] इति ह स्माऽऽह याज्ञवल्क्यः। तस्मादयमाकाशः[h] स्त्रिया पूर्यत एव। तां समभवत्[i]। ततो मनुष्या अजायन्त ॥ ३ ॥

*a*) बृ 1·4·17. —*b*) पा 5·4·77 .... स्त्रीपुंस .... Cp तैआ 1·10·1 सरमा इति स्त्रीपुमस् (?). —*c*) बृ 4·3·21. —*d*) Plato, Symposium 189 C. —*e*) नि 10·11–12 पाता वा पालयिता वा. —*f*) Cp ऐब्रा 4·22 विदलसंहित इव वै पुरुषः; ऐआ 3·1·2 पुरुषो ह वा अयं सर्व आन्दम् द्वे विदले भवतः (cp विदल–मंचक in Pāli). —*g*) Deussen takes स्वे = आत्मनि. Hume, following शंकर, takes स्वः = आत्मनः; but स्वः being unaccented is first pers. dual of अस्. Cp Böhtlingk. —*h*) Cp अन्तरिक्षप्रामुर्वशीम् in ऋ 10·95·17; के 3·12 स तस्मिन्नेवाकाशे स्त्रियमाजगाम in a mystical or Tāntrik sense. —*i*) तैसं 2·5·1·5 ऋत्वियात् प्रजां विन्दामहै काममाविजनितोः संभवाम इति; 7·5·9·4 अन्तर्वेदि मिथुनौ संभवतः; अ 14·2·32 प्रजावती पत्या संभवेह; 14·2·71 ताविह संभवाव प्रजामा जनयावहै; शब्रा 1·7·4·1 प्रजापतिर्ह वै स्वां दुहितरमभिदध्यौ, दिवं वा उषसं वा, मिथुन्येनया स्यामिति तां संबभूव.

[a]सो हेयमीक्षांचक्रे—कथं नु माऽऽत्मन एव जनयि[b]त्वा संभवति। हन्त तिरो[c]ऽसानीति। सा गौरभवदृ[1]षभ[d] इतरः। तां समेवाभवत्। ततो गावोऽजायन्त। वडवे[e]तराऽभवदश्ववृष इतरः। गर्दभीतरा गर्दभ इतरः। तां समेवाभवत्। तत एकशफ[f]मजायत। अजेतराऽभवद्बस्त[g] इतरः। अवि[h]रितरा[2] मेष[i] इतरः। तां समेवाभवत्। ततोऽजावयोऽजायन्त। एवमेव यदिदं किंच मिथुनमा पिपीलि[j]काभ्यस्तत् सर्वमसृजत ॥ ४ ॥

1) v. l. ऋषभः. —2) v. l. इतरो = इतरा + उ.

*a*) सा + उ. —*b*) ऋ 10·61·7 पिता यत् स्वां दुहितरमधिष्कन्. See शब्रा 1·7·4·1 above. —*c*) पा 6·3·94 तिरसस्तिर्यलोपे. —*d*) Cp अश्ववृषः below. —*e*) तैसं 7·1·1·2 अथो आहुर्वडबायां न्यर्माडिति; जैब्रा 1·67 तस्माद्वडवा द्विरेताः. —*f*) वासं 13·38 इमं मा हिंसीरेकशफं पशुम्; 14·30 एकशफाः पशवोऽसृज्यन्त; अ 5·31·3 यां ते चक्रुरेकशफे ... गर्दभे ...; शब्रा 12·7·1·5 तदेकशफमभवत्, अश्वोऽश्वतरो गर्दभः. —*g*) ऋ 1·161·13 श्वानं बस्तो बोधयितारमब्रवीत्. Cp बस्तश्च श्रोत्रियश्च स्त्रीकामतमौ ( ). —*h*) For अवि (fem.) cp अ 12·2·19 अव्यां रामायां; 12·2·20 अव्यामसिक्न्याम्; 12·2·53 अविः कृष्णा; 5·31·2 अजे वा ...... अव्यां ते; पा 5·1·8 अजाविभ्यां थ्यन्. —*i*) ऋ 8·2·40 मेषो भूतो अभि यन्नयः; नि 3·16 मेषो मिषतेः. —*j*) ऋ 10·16·6 पिपीलः सर्प उत वा श्वापदः; तांब्रा 5·6·10 यो वै दीक्षितानां पापं कीर्तयति तृतीयमेवांशं पाप्मनो हरति, अन्नादस्तृतीयम्, पिपीलिकास्तृतीयम्; ऐआ

1·3·8 तस्मात् सर्वाणि भूतानि आ पिपीलिकाभ्यः आतान्येव जायन्ते; छां 7·2·1; नि 7·13 पेलते-र्गतिकर्मणः.

सोऽवेदहं वाव सृष्टिरस्म्यहꣳ हीदꣳ सर्वमसृक्षीति । ततः सृष्टिरभवत् । सृष्ट्याꣳ हास्यैतस्यां भवति य एवं वेद ॥ ५ ॥

अथेत्यभ्यमन्थत्[a] । स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत । तस्मादेत-दुभयमलोमकमन्तरतः[b] । अलोमका हि योनिरन्तरतः । [c]तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिः । एष उ ह्येव सर्वे देवाः[c] । [d][e] अथ यत्किंचेदमार्द्रं[f] तद्रेतसोऽसृजत । तदु सोमः । एतावद्वा इदꣳ सर्वमन्नं चैवान्नादश्च । सोम एवान्नमग्निरन्नादः । सैषा ब्रह्मणोऽतिसृष्टिः । यच्छ्रेयसो[h] देवानसृजताथ यन्मर्त्यः सन्नमृतानसृजत तस्मादतिसृष्टिः । अतिसृष्ट्याꣳ हास्यैतस्यां भवति य एवं वेद ॥ ६ ॥

*a*) ऋ 3·9·5 अग्निमित्था तिरोहितं...देवेभ्यो मथितं परि; छां 2·12·1; श्वे 2·6. —*b*) शब्रा 2·2·4·4 स उदमृष्ट...तद्यदुदमृष्ट...तस्मादिदं चालोमकमिदं च; शब्रा 9·3·1·5 अलोमकमिव हि अन्तरिक्षम् ( अन्तरिक्ष corresponding to मुख in the microcosm). —*c* – –*c*) Deussen proposes this part ( विसृष्टिः ) as the begenning of this कण्डिका. —*d*) गी 7·20–23; 9·53. —*e*) ऐआ 2·1·4 अथातो रेतसः सृष्टिः प्रजापते रेतो देवाः; बृ 2·1·20; क 4·9; ऐ 1·1. —*f*) ऋ 1·116·4 समुद्रस्य धन्वन्नार्द्रस्य पारे; 2·13·6 आर्द्राद् शुष्कम् मधुमद्दुदोहिथ; तैसं 6·4·1·4 शुष्कस्य च आर्द्रस्य च संधौ उद्वासयति उभयस्य शान्त्यै; अ 1·32·3 आर्द्रं तदद्य सर्वदा समुद्रस्येव स्रोत्याः; शब्रा 1·3·4·1 एतद्ध्येषां जीवमेतेन सतेजस एतेन वीर्यवन्त-स्तस्मादार्द्राः स्युः; 9·2·2·3 एतद्वै वनस्पतीनामनार्तं जीवं यदार्द्रम्. —*g*) मै 6·10. —*h*) श्रेयसः ( abl. sg. of श्रेयस् ); मैसं 1·9·3 ऊर्ध्व उदतृणत्, पूर्वपक्षः पञ्चदशः, तेन देवानसृजत.

तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यामेव व्याक्रियतासौनामाऽयमिदꣳरूप इति । तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामाऽयमिदꣳरूपं इति । स एष इह प्रविष्ट[b] आ नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वंभरो[d] वा विश्वंभरकुलाये । तं न पश्यन्ति । अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति । वदन्[f] वाक् पश्यꣳश्चक्षुः शृण्वञ्श्रोत्रं मन्वानो मनः । तान्यस्यैतानि कर्मनामान्येव । स योऽत एकैकमुपास्ते न स वेद । अकृत्स्नो ह्येषोऽत एकैकेन भवति । आत्मेत्येवोपासीत । अत्र ह्येते सर्व एकं भवन्ति । तदेतत्पदनीयमस्य सर्वस्य यदयमात्मा । अनेन ह्येतत् सर्वं वेद । यथा ह वै पदेनानुविन्देदेवं कीर्तिꣳ श्लोकं विन्दते[h] य एवं वेद ॥ ७ ॥

*a* ) Böhtlingk, followed by Max Müller, reads असौ नाम separately. Cp बृ 1·4·1 ( अहंनामाऽभवत् ); 4·4·5 ( इदंमयः, अदोमयः ). —*b* ) ऋ 10·81·1 प्रथमच्छदाँ आविवेश; बृ 2·5·18; छां 6·3·3; तै 2·6; ऐ 1·3; मै 2·6; OT (Genesis) 2·7—He breathed into his nostrils the breath of life and the man became a living soul. —*c* ) Cp सोमधान ( ऋ 6·69·6 समुद्रः स्थः कलशः सोमधानः ). —*d* ) ऋ 4·1·19 विश्वभरसमग्निम्; also ऋ 6·15·16 कुलायिनं घृतवन्तं सवित्रे ( योनिम् ); कौ 4·19; श्वे 1·15 ( अरणीषु चाग्निः ). —*e* ) छां 8·12·4 ( स चाक्षुषः पुरुषः दर्शनाय चक्षुः... ); बृ 1·3·2—6 ( five organs of sense ). —*f* ) बृ 2·4·11; 4·4·18; के 1·2; मै 6·31. —*g* ) पदनीयम् पदम् ( शंकराचार्य on क 2·15 ). —*h* ) Shall we read अनुविन्दते ?

तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मादन्तरतरं यदयमात्मा। स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात् प्रियं रोत्स्यतीतीश्वरो ह तथैव स्यात् । आत्मानमेव प्रियमुपासीत। स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति ॥८॥

*a* ) Origin of बृ 2·4·5 ( आत्मनस्तु कामाय सर्वं प्रियं भवति ). —*b* ) तैसं 2·6·8·5 तत् पूषा प्राश्य दतोऽरुणत् ( *lost his teeth* ); शब्रा 12·4·1·4 ज्येष्ठगृह्यं रोत्स्यति; 12·4·3·6 अयं यजमानस्य प्राणान् प्रारौत्सीत्—मरिष्यत्ययं यजमान इति; 12·4·3·8 प्रियतमं रोत्स्यतीतीश्वरो ह तथैव स्यात्. —*c* ) तैसं 6·5·6·5 यदन्वीक्षेत चक्षुरस्य प्रमायुकं स्यात्; शब्रा 12·2·2·4 एष ह वै प्रमायुको यो अन्धो वा बधिरो वा; षब्रा 4·1 ततो वै यजमानस्य चित्तं प्रमायुर्भवति ( *sic* ); जैब्रा 1·87 ईश्वरो ह तु प्रमायुको भवितोः; शांआ 12·4 प्रमायुकं तस्य द्विषन्तमाहुः.

तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते। किमु तद् ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति ॥ ९ ॥

ब्रह्म वा इदमग्र आसीत्। तदात्मानमेवावेत्। अहं ब्रह्मास्मीति। तस्मात् तत् सर्वमभवत्। तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्। तथर्षीणाम्। तथा मनुष्याणाम्। तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवꣳ सूर्यश्चेति । तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदꣳ सर्वं भवति। तस्य ह न देवाश्चनाभूत्या ईशते। आत्मा ह्येषाꣳ स भवति। अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद। यथा पशुरेवꣳ स देवानाम्। यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान् भुनक्ति। एकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु। तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः ॥ १० ॥

*a* ) छां 6·8·7 ( तत्त्वमसि ); बृ 2·5·19 ( अयमात्मा ब्रह्म ). —*b* ) बृ 4·4·13 ( प्रतिबुद्ध आत्मा ); के 2·4 ( प्रतिबोधविदितं मतम् ). —*c* ) मुं 3·2·9 ( ब्रह्म वेद ब्रह्मैव भवति ). —*d* ) ब्रसू 1·1·30 शास्त्रदृष्ट्या तूपदेशो वामदेववत्. See also ऋ 4·27·1; ऐ 2·5. —*e* ) ऋ 4·26·1; गी 4·1 अहं विवस्वते योगं ... विवस्वान्मनवे प्राह. —*f* ) अ 11·8·21 भूतिश्च वा

अभूतिश्च... शरीरमनु प्राविशन्; वासं 30·17 भूत्यै जागरणम्, अभूत्यै स्वपनम्; ऐआ 2·1·8 स एष भूतिश्चाभूतिश्च... अभूतिरिति असुराः ते पराबभूवुः. —*g*) Is अन्यो = अन्या + उ? —*h*) ऋ 10·89·17 भुञ्जतीनां विद्याम सुमतीनां नवानाम्; तैसं 2·1·4·8 भुञ्जत्येनं विट् एनमुपतिष्ठते; तैब्रा 2·4·12·6 यन्मां प्रविशेः किं मां भुञ्ज्या इत्यब्रवीत्; शब्रा 9·1·2·17 तथो हैनं एता उभयोर्लोकयोर्भुंजन्ति; 9·4·1·11 यज्ञो सर्वाणि भूतानि भुनक्ति; 11·5·7 1 लोकः पच्यमानश्चतुर्भिर्धर्मैः ब्राह्मणं भुनक्ति; ऐब्रा 3·46 यथा गीर्णं न हैव तद्यजमानं भुनक्ति; नि 2·4 तथैव तान् न भुनक्ति श्रुतं तत्; बृ 1·4·5 स एनमविदितो भुनक्ति; कौ 4·20 यथा वा स्वाः श्रेष्ठिनं भुञ्जन्ति—भुज् here means *to be of use* or *service to*.

**ब्रह्म वा इदमग्र आसीदेकमेव । तदेकꣳ सन्न व्यभवत् । तच्छ्रेयोरूपमत्यसृजत क्षत्रम्, यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति । तस्मात् क्षत्रात् परं नास्ति । तस्माद् ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये । क्षत्र एव तद्यशो दधाति । सैषा क्षत्रस्य योनिर्यद् ब्रह्म । तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्ततं उपनिश्रयति स्वां योनिम् । य उ एनꣳ हिनस्ति स्वाꣳ स योनिमृच्छति । स पापीयान् भवति यथा श्रेयाꣳसꣳ हिꣳसित्वा ॥ ११ ॥**

*a*) ऋ 1·164·46 एकं सद्विप्रा बहुधा वदन्ति. Is सत् = तत्? एकम् (neu.) is referred to as सः (mas.) below in 1·4·14. Similar phenomenon in ई 8 (सः...शुक्रम् both in apposition). —*b*) अ 4·8·1· तस्य मृत्युश्चराति राजसूयम्; 11·7·7 राजसूयं वाजपेयमग्निष्टोमस्तदध्वरः। अर्काश्वमेधौ ...; शब्रा 6·6·1·1 तेषामग्निचित्या राजसूयो वाजपेयोऽश्वमेधः; ऐब्रा 7·15 तस्मा एतं राजसूयं यज्ञक्रतुं प्रोवाच; तैब्रा 2·7·6·1 यो वै वाजपेयः स सम्राट् सवः। यो राजसूयः स वरुणसवः; गोब्रा 1·5·7 पशुबन्धादग्निष्टोमः, अग्निष्टोमाद्राजसूयः, राजसूयाद्वाजपेयः. —*c*) ऐब्रा 8·14 सर्वेषां देवानां श्रैष्ठ्यमतिष्ठां परमतामगच्छत्; शब्रा 2·2·3·5 तस्मिन्नेतान्युभयानि रूपाणि दृश्यन्ते परमता वै सा; 11·5·7·2 स्वाध्यायो हैव तेषां (श्रमाणाम्) परमता काष्ठा ...; बृ 5·12·1; मै 6·38. —*d*) अ 14·1·64 ब्रह्मान्ततो ब्रह्म मध्यतो ब्रह्म सर्वतः; ऐब्रा 1·1 अन्तत एव तद्देवानृध्नुवन्ति; छां 1·2·9; 1·3·12; बृ 1·4·15; 1·5·21; तै 2·2. —*e*) शब्रा 3·1·2·17 तस्माद्‌ गावः सुवासमुपैव निश्रयन्ते; शांब्रा 9·4 स प्राच्यं दाक्षिणस्य हविर्धानस्य उत्तरं वर्त्मोपनिश्रयेत; शिक्षासमुच्चय (Buddhist)—सर्वसत्त्वा बुद्धोपनिश्रयविहारिणो भवन्तु. —*f*) ऋच्छति = हिनस्ति; ऋ 10·87·15 वाचास्तेनं शरव ऋच्छन्तु मर्मन्; 10·164·5 यं द्विष्मस्तं स ऋच्छतु, यो नो द्वेष्टि तमृच्छतु. Cp the phrase आर्तिमृच्छ where आर्ति is the cognate object and goes with the root ऋ (ऋच्छ्) meaning 'to come to danger,' 'to injure'; ऐब्रा 2·31 स ह वाव तामार्तिमृच्छति.

**सँ नैव व्यभवत् । स विशमसृजत । यान्येतानि देवजातानि गणशँ आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ॥ १२ ॥**

*a*) ई 8 (स पर्यगाच्छुक्रम्) लिंगव्यत्ययः. —*b*) अ 1·16·3 अनेन विश्वा ससहे या जातानि पिशाचाः; 10·4·23 येषां जातानि बहुधा महान्ति तेभ्यः सर्पेभ्यो नमसा विधेम; शब्रा

9·1·1·19 अथ जातेभ्यो जुहोति । एतानि ह जातानि एते रुद्रा अनुप्रविविशुः...देवानां वै विधामनु मनुष्याः.. तस्मादु हेमानि मनुष्याणां जातानि यथाजातम्... —*c* ) Cp श्रेणिशः in ऋ 1·163·10 हंसाइव श्रेणिशो यतन्ते; तैसं 2·2·11·1 सप्तगणाः वै मरुतः, गणश एवास्मै सजातानवरुन्धे; तैत्रा 1·6·2·3 गणश एवास्मै विशं कल्पयन्ति.

स नैव व्यभवत् । स शौद्रं वर्णमसृजत पूषणम् । इयं वै पूषा । इयꣳ हीदꣳ सर्वं पुष्यति यदिदं किंच ॥ १३ ॥

*a* ) ऋ 10·90·12 पद्भ्यां शूद्रो अजायत; 2·12·4 यो दासं वर्णमधरं गुहा कः; 1·179·6 उभौ वर्णौ ऋषिरुग्रः पुपोष; 3·34·9 हत्वी दस्यून् प्रार्यं वर्णमावत्; वासं 4·2 भद्रं वर्णं पुष्यन्; शब्रा 3·1·2·20 पापं वा एषो अग्रे वर्णं पुष्यति यममुमदीक्षितः, अथात्र भद्रम्....

स नैव व्यभवत् । तच्छ्रेयोरूपमत्यसृजत धर्मम् । तदेतत् क्षत्रस्य क्षत्रं यद्धर्मः । तस्माद्धर्मात् परं नास्ति । अथो अबलीयान् बलीयाꣳसमाशꣳसते धर्मेण । यथा राज्ञैवम् । यो वै स धर्मः सत्यं वै तत् । तस्मात् सत्यं वदन्तमाहुर्धर्मं वदतीति । धर्मं वा वदन्तꣳ सत्यं वदतीति । एतद्ध्येवैतदुभयं भवति ॥ १४ ॥

*a* ) Cp ई 15 ( सत्यधर्माय दृष्टये = सत्यधर्मं द्रष्टुम्; attraction of cases ); सत्यधर्मः = सत्यमेव धर्मः; cp शब्रा 1·8·1·1 यथेदं पाणिभ्यामवनेजनाय = पाणी अवनेक्तुम्.

तदेतद् ब्रह्म क्षत्रं विट् शूद्रः । तदग्निनैव देवेषु ब्रह्माभवद् ब्राह्मणो मनुष्येषु, क्षत्रियेण क्षत्रियः, वैश्येन वैश्यः, शूद्रेण शूद्रः । तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येषु । एताभ्याꣳ हि रूपाभ्यां ब्रह्माभवत् । अथ यो ह वा अस्माल्लोकात् स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतम् । यदिह[1] वा अप्यनेवंविन्महत् पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एव । आत्मानमेव लोकमुपासीत । स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते । अस्माद्ध्येवात्मनो यद्यत् कामयते तत् तत्सृजते ॥ १५ ॥

1 ) v. l. यदु ह.

*a* ) ऋ 10·90·12 ब्राह्मणोऽस्य मुखमासीत् etc. —*b* ) बृ 1·4·11 ( क्षत्रात् परं नास्ति ) विनयापिटक 13·239 खत्तिया ब्राह्मणा वेस्सा सुद्दा; दीघनिकाय 1·199 खत्तियो सेट्ठो जने. —*c* ) By parity of reasoning ब्राह्मणो should be ब्राह्मणेन. The portion क्षत्रियेण...शूद्रः is unnecessary as it hardly makes any sense; and therefore it is an interpolation. As to the identity of अग्नि and ब्राह्मण, cp क 1·7 वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान्. —*d* ) बृ 3·8·10. —*e* ) नि 2·4 तथैव तान्न भुनक्ति श्रुतं तत्. —*f* ) Cp बृ 4·4·22 वेदानुवचनेन; तै 1·10 इति त्रिशंकोर्वेदानुवचनम्. —*g* ) छां 1·3·12; 8·2·10; क 2·16 ...ब्रह्म...परं...ज्ञात्वा यो यदिच्छति तस्य तत्.

अथो अयं वा आत्मा सर्वेषां भूतानां लोकः। स यज्जुहोति यद्यजते तेन देवानां लोकः। अथ यदनुब्रूते[b] तेन ऋषीणाम्। अथ यत् पितृभ्यो निपृणाति, यत् प्रजामिच्छते तेन पितृणाम्। अथ यन्मनुष्यान् वासयते, यदेभ्योऽशनं ददाति, तेन मनुष्याणाम्। अथ यत् पशुभ्यस्तृणोदकं विन्दति, तेन पशूनाम्। यदस्य गृहेषु श्वापदा वयाꣳस्या पिपीलिकाभ्य उपजीवन्ति, तेन तेषां लोकः। यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेवꣳ हैवंविदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति। तद्वा एतद्विदितं मीमाꣳसितम्[f] ॥ १६ ॥

*a*) For these यज्ञs, see मनु 3·70 अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्, होमो दैवो बलिर्भौतः नृयज्ञोऽतिथिपूजनम्. —*b*) ऋ 5·44·13 अनुब्रुवाणो अध्येति न स्वपन्; तैसं 6·1·4·4 यदि विसृजेत् वैष्णवीमृचमनुब्रूयात्; ऐब्रा 1·1 सप्तदश सामिधेनीरनुब्रूयात्; तैब्रा 1·4·6·6 होता प्रथमः... यामीरनुब्रुवत्; शब्रा 1·5·1·19 तद्धि समृद्धं यो जुष्टं ब्राह्मणेभ्योऽनुब्रुवत्; cp अनु-वच् and अनुवाक in ऋ 8·58·1 योऽनूचानो ब्राह्मणो युक्त आसीत् and अ 19·22·1 पञ्चानुवाकैः स्वाहा; बृ 1·5·17 (अनूक्तम्); 2·1·1; 3·1·1; छां 6·1·2; तै 1·11. —*c*) अ 18·2·28 = वासं 2·30: परापुरो निपुरो ये भरन्ति; cp नि 2·11 पुत्रः ... निपरणाद्वा; अ 18·2·30 यां ते धेनुं निपृणामि; 18·4·42 यं ते मन्थ यमोदनं यन्मांसं निपृणामि ते. —*d*) ऋ 2·21·6 पोषं रयीणामरिष्टिं तनूनाम्, स्वाद्मानं वाचः सुदिनत्वमह्नाम्; वासं 30·13 अरिष्ट्यै अश्वसादम्; शब्रा 6·4·4·1 रात्र्या एवैतामरिष्टिं स्वस्तिमाशास्ते; 11·5·4·4 तदेनं सर्वेभ्यो भूतेभ्यः परिददात्यरिष्ट्यै तथा हास्य ब्रह्मचारी न कांचनार्तिमार्च्छति. —*e*) माध्यंदिन adds सर्वदा after एवंविदे. —*f*) के 2·1.

आत्मैवेदमग्र आसीदेक एव। सोऽकामयत जाया मे स्यादथ प्रजायेय। अथ वित्तं मे स्यादथ कर्म कुर्वीयेति। एतावान् वै कामः। नेच्छꣳश्चनातो भूयो विन्देत्। तस्मादप्येतर्ह्येकाकी कामयते—जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति। स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न[b] एव तावन्मन्यते। तस्यो कृत्स्नता। मन एवास्यात्मा। वाग्जाया। प्राणः प्रजा। चक्षुर्मानुषं वित्तम्। चक्षुषा हि तद्विन्दते[1]। श्रोत्रं दैवम्। श्रोत्रेण हि तच्छृणोति। आत्मैवास्य कर्म। आत्मना हि कर्म करोति। स एष पाङ्क्तो यज्ञः। पाङ्क्तः पशुः। पाङ्क्तः पुरुषः। पाङ्क्तमिदꣳ सर्वं यदिदं किंच। तदिदꣳ सर्वमाप्नोति[2] य एवं वेद ॥ १७ ॥

1) v. l. विन्दति. —2) माध्यंदिन adds after this यदिदं किंच.

*a*) शब्रा 10·5·3·8 अकृत्स्नं वै कर्म ऋते प्राणेभ्यः, अकृत्स्ना उ वै प्राणा ऋते कर्मणः; 13·2·2·12...अकृत्स्नं च त्वै (= तु + वै) प्रजापतिः संस्करोति; गोब्रा 2·2·17 अकृत्स्ना वा एषा देवयज्या यद्धविर्यज्ञः, अथ हैषैव कृत्स्ना देवयज्या यत् सौम्योऽध्वरः; ऐआ 2·3·5 अकृत्स्नो ह्येष

आत्मा यद्ब .... —*b*) To be taken in passive sense, cp बृ 1·5·17 यदा प्रैष्यन्मन्यते. —*c*) शब्रा 7·4·2·13 सा स्यात् समूला साग्रा कृत्स्नतायै; जैब्रा 2·183 सा सपुच्छा कृत्स्नत्वाय. —*d*) बृ 1·2·4. —*e*) के 2·4; क 3·4. —*f*) अ 11·2·9 तवेमे पञ्च पशवो विभक्ता गावो अश्वाः पुरुषा अजावयः; शब्रा 1·2·3·6 पुरुषं ह वै देवा अग्रे पशुमालेभिरे... सोऽश्वं प्रविवेश, स गाम्...सोऽविम्...सोऽजम्...अत्रो सा सम्पद् यदाहुः पाङ्क्तः पशुः. —*g*) तै 1·7 चक्षुः श्रोत्रं मनो वाक् त्वक्।...पांक्तं वा इदं सर्वम्.

॥ इति चतुर्थं ब्राह्मणम् ॥

---

यत् सप्तान्नाँनि मेधया तपसाऽजनयत् पिता।
एकमस्य साधारणं द्वे देवानभाजयत् ॥
त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छत्।
तस्मिन् सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न ॥
कस्मात् तानि न क्षीयन्ते अद्यमानानि सर्वदा।
यो वै तामक्षितिं[b] वेद सोऽन्नमत्ति प्रतीकेँन ॥
स देवानपिगच्छति स ऊर्जमुपजीवति ॥
इति श्लोकाः[d] ॥ १ ॥

Cp बृ 1·5·1–13 with बृ 1·2.

*a*) तैब्रा 1·3·8·1 सप्त वा अन्नानि. —*b*) ऋ 1·40·4 स धत्ते आक्षिति श्रवः; 9·68·3 साकंवृधा पयसा पिन्वदक्षिता. Is अक्षिता instr. sg. of अक्षित or loc. sg. of अक्षिति? Cp यज्ञायज्ञा in ऋ 1·168·1; 6·48·1; तैसं 2·4·14·1 यमक्षितमाक्षितयः पिबन्ति. —*c*) ऋ 10·118·8 स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्यः; cp अनीकेन in ऋ 2·9·6; नि 7·31 प्रत्यक्तं भवति, प्रतिदर्शनामिति वा. —*d*) बृ 2·4·10; 4·1·2, 4·5·11 उपनिषदः श्लोकाः सूत्राणि; मै 6·32.

यत् सप्तान्नानि मेधँया तपसाऽजनयत् पितेति। मेधया हि तपसाऽजनयत् पिता। एकमस्य साधारँणमिति। इदमेवास्य तत् साधारणमन्नं यदिदमद्यते। स य एतदुपास्ते न स पाप्मनो व्यावर्तते। मिश्रँ ह्येतत्। द्वे देवानभाजयदिति। हुतं च प्रहुतं च। तस्माद्देवेभ्यो जुह्वति च प्र च जुह्वति। अथो आहुर्दर्शपूर्णमासाविति। तस्मान्नेष्टियाँजुकः स्यात्। पशुभ्य एकं प्रायच्छदिति। तत् पयः। पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति। तस्मात् कुमारं जातं घृतं वैवाऽग्रे प्रतिलेँहयन्ति स्तनं वाऽनुधापयन्ति। अथ वत्सं जातमाहुरतृणाद इति। तस्मिन् सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेति। पयसि हीदँ

सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न। तद्यदिदमाहुः संवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयतीति। न तथा विद्यात्। यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं[h] विद्वान्। सर्वꣳ हि देवेभ्योऽन्नाद्यं प्रयच्छति। कस्मात्तानि न क्षीयन्ते अद्यमानानि सर्वदेति। पुरुषो वा अक्षितिः। स हीदमन्नं पुनः पुनर्जनयते। यो वैतामक्षितिं वेदेति। पुरुषो वा अक्षितिः। स हीदमन्नं धियाधिया जनयते कर्मभिः। यद्धैतन्न कुर्यात् क्षीयेत ह। सोऽन्नमत्ति प्रतीकेनेति। मुखं प्रतीकं मुखेनेत्येतत्। स देवानपिगच्छति स ऊर्जमुपजीवतीति प्रशꣳसा ॥ २ ॥

*a*) ऋ 4·33·10 ये हरी मेधयोक्था मदन्त इंद्राय चक्रुः; अ 6·108 is मेधासूक्त; अ 5·11·4 न त्वदन्यः कवितरो न मेधया धीरतरः; मुं 1·1·9; ऐ 3·2; तै 1·4. —*b*) ऋ 1·167·4 साधारण्येव मरुतो मिमिक्षुः; 4·32·13 यच्चिद्धि शश्वतामसि इन्द्र साधारणस्त्वम्; 7·63·1 साधारणः सूर्यो मानुषाणाम्; तैसं 2·6·1·7 कथा पुत्रस्य केवलं कथा साधारणं पितुः; ऐब्रा 7·1 गृहपतेर्भार्यायै व्रतप्रदस्यौष्ठ एनयोः साधारणो भवति. —*c*) तैसं 1·6·7·1 यथा ह वै समृतसोमा एवं वा एते समृतयज्ञा यद्दर्शपूर्णमासौ; अ 7·81·3–4 अनूनं दर्श मा कृधि प्रजया च धनेन च; दर्शोऽसि दर्शतोऽसि समग्रोऽसि समन्तः; शब्रा 11·2·4 1 एष वै पूर्णमाः। य एष तपति अहरहर्हि एवैष पूर्णः। अथ एष एव हि दर्शो यच्चन्द्रमा ददृश इव ह्येषः. —*d*) Cp ऋ 1·166·14 एभिर्यज्ञेभिस्तदभीष्टिमश्याम्; 10·169·2 यासामग्निरिष्ट्या नामानि वेद; षब्रा 4·1 इष्टिपशुबन्धयोः (इष्टि from यज्, accent on इ in इष्टि). But पा 3·3·96 मंत्रे वृषेषपचमनविदभूवीरा उदात्ताः where the accent is on the last syllable; for याजुक cp पा 3·2·154 लषपदपतस्था...... सृभ्यः उकञ्. —*e*) Cp पयो हि एवाग्रे above. —*f*) प्रतिलेह्य and अनुधापय only here in the Brāhmaṇa literature. —*g*) छां 5·19–24; बृ 6·1·14; मै 6·9. —*h*) ऋ 10·72·9 प्रजायै मृत्यवे त्वत् पुनर्मार्ताण्डमाभरत्; शब्रा 11·5·6·9 अति ह वै पुनर्मृत्युं मुच्यते गच्छति ब्राह्मणः सात्मताम्; शब्रा 10·4·3·9–10 मृत्वा पुनः संभवान्ति ते संभवन्त एव अमृतत्वमभिसंभवन्ति...; शांब्रा 25·1 अशनायां च पुनर्मृत्युं च जयन्ति; बृ 1·2·7; 3·2·10; 3·3·2. —*i*) Note that धियाधिया is here explained by कर्मभिः; cp धियंधियम् in ऋ 1·168·1; 6·49·8. —*j*) शब्रा 11·5·7·1 अथातः स्वाध्यायप्रशंसा; बृ 1·5·16; 3·2·13; 3·8·9.

त्रीण्यात्मनेऽकुरुतेति। मनो वाचं प्राणं तान्यात्मनेऽकुरुत। अन्यत्रमना[a] अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसा ह्येव पश्यति, मनसा शृणोति[b]। कामः संकल्पो[c] विचिकित्सा[d] श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्[f] सर्वं मन एव। तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति। यः कश्च शब्दो वागेव सा। एषा ह्यन्तमायत्तैषा[h] हि न। प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत् सर्वं प्राण एव। एतन्मयो वा अयमात्मा। वाङ्मयो मनोमयः प्राणमयः ॥ ३ ॥

*a*) मै 6·30 (मनसा ह्येव पश्यति); this forms a counterpart to the verse of Epicharmes νοῦς ὁρῇ καὶ νοῦς ἀκούει τἄλλα κωφὰ καὶ τυφλά. —*b*) ऋ 10·10·7

यमस्य मा यम्यं काम आगन्; 10·34·6 अक्षासो अस्य वि तिरन्ति कामम्; 10·129·4 कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्; तैसं 1·5·9·3 पशून् वित्त्वा कामाँ अकुर्वत. —*c*) ऋ 10·164·5 जाग्रत्-स्वप्नः संकल्पः पापः; अ 11·8·1 यन्मन्युर्जायामावहत् संकल्पस्य गृहादधि; अ 16·6·10 अनागमिष्यतो वरानवित्तेः संकल्पानमुच्या द्रुहः पाशान्; छां 7·4·1; ऐ 3·2; के 4·5. —*d*) तैब्रा 2·1·2·2 and शब्रा 2·1·3·2 तद्विचिकित्सायै जन्म; छां 3·14·4; मै 6·30. —*e*) वासं 19·77 दृष्ट्वा रूपे व्याकरोत्, सत्यानृते प्रजापतिः। अश्रद्धामनृते अदधात्, श्रद्धां सत्ये प्रजापतिः; अ 11·8·22 शरीरं श्रद्धा दक्षिणा अश्रद्धा चानु प्राविशन्; तै 1·11. —*f*) वासं 8·51 इह धृतिः इह स्वधृतिः स्वाहा; 34·3 यत् प्रज्ञानं चेतो धृतिश्च. —*g*) वासं 24·35 ह्रियै शल्यकः; तैआ 3·13·2 ह्रीश्च ते लक्ष्मीश्च पत्न्यौ; तै 1·11. —*h*) ऋ 10·125·5 अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः.

त्रयो लोका एत एव। वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥ ४ ॥

त्रयो वेदा एत एव। वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः ॥ ५ ॥

देवाः पितरो मनुष्या एत एव। वागेव देवा मनः पितरः प्राणो मनुष्याः ॥ ६ ॥

पिताँ माता प्रजैत एव। मन एव पिता वाङ् माता प्राणः प्रजा ॥ ७ ॥

*a*) The order should rather be माता, पिता, प्रजा and then correspondingly वाङ् माता etc.

विज्ञातं विजिज्ञास्यमविज्ञातमेत एव। यत् किंच विज्ञातं वाचस्तद्रूपम्। वाग्धि विज्ञाता। वागेनं तद् भूत्वाऽवति ॥ ८ ॥

यत् किंच विजिज्ञास्यं मनसस्तद्रूपम्। मनो हि विजिज्ञास्यम्। मन एनं तद् भूत्वाऽवति ॥ ९ ॥

यत् किंचाविज्ञातं प्राणस्य तद्रूपम्। प्राणो ह्यविज्ञातः। प्राण एनं तद् भूत्वाऽवति ॥ १० ॥

तस्यै वाचः पृथिवी शरीरम्। ज्योतीरूपमयमग्निः[1]। तद्यावत्येव वाक् तावती पृथिवी तावानयमग्निः ॥ ११ ॥

1) The sense demands ज्योतीरूपम् as a compound but the accent requires splitting of the compound into two ( Weber ).

अथैतस्य मनसो द्यौः शरीरम्। ज्योतीरूपमसावादित्यः। तद्यावदेव मनस्तावती द्यौस्तावानसावादित्यः। तौ[a] मिथुनꣳ समैताम्। ततः प्राणोऽजायत।

स इन्द्रः । स एषोऽसपत्नः । द्वितीयो वै सपत्नः[b] । नास्य सपत्नो भवति य एवं वेद ॥ १२ ॥

*a* ) तौ stands for ते ( i. e. for वाक् and मनस् ); for similar use cp क 2·2 ( श्रेयश्च प्रेयश्च मनुष्यमेतः तौ संपरीत्य विविनक्ति धीरः )— a case of grammatical anacoluthon ! —*b* ) ऋ 10·166·1 ऋषभं मा समानानां सपत्नानां विषासहिम्, हन्तारं शत्रूणां कृधि. Cp अ 12·2·46 सर्वानग्ने ऐषामूर्जं रयिमस्मासु धेहि; तै 3·10.

अथैतस्य प्राणस्याऽऽपः[a] शरीरम् । ज्योतीरूपमसौ चन्द्रः । तद्यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रः । त एते सर्व एव समाः सर्वेऽनन्ताः । स यो हैतानन्तवत उपास्तेऽन्तवन्तꣳ स लोकं जयति । अथ यो हैताननन्तानुपास्तेऽनन्तꣳ स लोकं जयति ॥ १३ ॥

*a* ) आपः ( Waters ) as the first principle; ऋ 10·72·6 यद्देवा अदः सलिले सुसंरब्धा अतिष्ठत; 10·82·1 घृतमेने अजनन्नम्नमाने; 10·121·9 यश्चापश्चन्द्रा बृहतीर्जजान; 10·129·3 अप्रकेतं सलिलं सर्वमा इदम्; छां 7·10·1; कौ 1·7; क 4·6; ई 4.

स एष संवत्सरः प्रजापतिः षोडशकलः । तस्य रात्रय[a] एव पञ्चदश कलाः । ध्रुवैवास्य षोडशी कला । स रात्रिभिरेवा च पूर्यतेऽप च क्षीयते । सोऽमावास्याꣳ रात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य[b] ततः प्रातर्जायते । तस्मादेतां रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्यैतस्या[c] एव देवताया अपचित्यै ॥ १४ ॥

In general cp छां 6·7.

*a* ) Cp Greek νυχθήμερον ( lasting a day and night ); ऋ 1·116·24 दश रात्रीरशिवेना नव द्यून्...; ऐब्रा 5·21 बहु वा एतस्मिन्नवरात्रे किञ्च किञ्च वारणं क्रियते; छां 7·9·1; क 1·9. —*b* ) छां 1·11·5; ·7·15; 7·23; प्र 2·4,6; 6·1–4; ब्रसू 1·3·8 भूमा संप्रसादादध्युपदेशात् ( where संप्रसाद = प्राण ). —*c* ) वासं 24·40 कृकलासः पिप्पका शकुनिस्ते शरव्यायै.

यो वै स संवत्सरः प्रजापतिः षोडशकलोऽयमेव स योऽयमेवंवित् पुरुषः । तस्य वित्तमेव पञ्चदश कलाः । आत्मैवास्य षोडशी कला । स वित्तेनैवा च पूर्यतेऽप च क्षीयते । तदेतन्नभ्यं यदयमात्मा । प्रधिर्वित्तम्[a] । तस्माद्यद्यपि सर्वज्यानिं[b] जीयत आत्मना चेज्जीवति प्रधिनाऽगादित्येवाहुः[1] ॥ १५ ॥

1 ) Some interpolate इति between एव and आहुः, which is obviously wrong.

*a*) ऋ 1·164·48 द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत; 2·39·4 नावेव नः पारयतं युगेव नभ्येव न उपधीव प्रधीव; अ 6·70·3 यथा प्राधिर्यथोपधिर्यथा नभ्यं प्रधावधि; ऐब्रा 4·15 परि यद्वा एतद्देवचक्रं यदभिप्लवः षळहः तस्य यावभितो अग्निष्टोमौ तौ प्रधी, ये चत्वारो मध्य उक्थ्यास्तन्नभ्यम्. —*b*) सर्वज्यानिम् is cognate object of the intran. verb ज्या (used here in passive, which is allied to the latter, etymologically, i. e. जीयते). Cp ऋ 7·57·3 समानमञ्जिमञ्जते; अ 11·3·55–56 न च प्राणं रुणद्धि सर्वज्यानिं जीयते, न च सर्वज्यानिं जीयते न पुरैनं जरसः प्राणो जहाति; शब्रा 10·5·5·8 श्रीर्वै शिरः, श्रियमस्य निरौहीत्, सर्वज्यानिं ज्यास्यते; तांब्रा 6·7·15 यदि सर्ववेदसं न ददाति सर्वज्यानिं जीयते; 25·10·20 यदा सर्वज्यानिं जीयन्ते अथ उत्थानम्; गोब्रा 1·3·13 क्षिप्रं गृहपतिः सर्वज्यानिं जीयते यो अविद्वाञ्जुहोति.

अथ त्र॒यो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति। सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा। कर्मणा पितृलोकः। विद्यया देवलोकः। देवलोको वै लोकानाꣳ श्रेष्ठः। तस्माद्विद्यां प्रशꣳसन्ति ॥ १६ ॥

*a*) अ 9·2·19 नैनं देवा आपुः पितरो न मर्त्याः; 10·6·32 यं देवाः पितरो मनुष्या उपजीवन्ति सर्वदा; 11·1·5 त्रेधा भागो निहितो यः पुरा वो देवानां पितॄणां मर्त्यानाम्. —*b*) ऐ 2·4; तै 1·9. —*c*) ऋ 10·88·15 द्वे स्रुती अशृणवम् पितॄणाम् देवानामुत मर्त्यानाम्; छां 5·10·3; बृ 6·2·15–16; मुं 1·2·10–11; प्र 1·9–10.

अथातः संप्रत्तिः। यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह—त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति। स पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति। यद्वै किंचानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता। ये वै के च यज्ञास्तेषाꣳ सर्वेषां यज्ञ इत्येकता। ये वै के च लोकास्तेषाꣳ सर्वेषां लोक इत्येकता। एतावद्वा इदꣳ सर्वम्। एतन्मा सर्वꣳ सन्नयमितोऽभुनजदिति[1]। तस्मात् पुत्रमनुशिष्टं लोक्यमाहुः। तस्मादेनमनुशासति। स यदैवंविदस्माल्लोकात् प्रैत्यथैभिरेव प्राणैः सह पुत्रमाविशति। स यद्यनेन किंचिदक्ष्णयाऽकृतं[2] भवति तस्मादेनꣳ सर्वस्मात् पुत्रो मुञ्चति तस्मात् पुत्रो नाम। स पुत्रेणैवास्मिँल्लोके प्रतितिष्ठति। अथैनमेते दैवाः प्राणा अमृता आविशन्ति ॥ १७ ॥

1) The reading भुनजत् given by Weber and Böhtlingk fits in well as it is the subjunctive. —2) v. l. अक्ष्णयाकृतम्.

*a*) Cp in general कौ 2·15 (संप्रदानम्). —*b*) मन्यते is passive; cp बृ 1·4·17 (अकृत्स्न एव तावन्मन्यते). —*c*) सन् + अयम्; but as Śaṅkarāchārya seems to interpret it, it is संनयम् (also संनायम्) the gerundial form from सं + नी *to ward off debt*. Cp ऋ 8·47·17 यथा कलां यथा शफं यथ ऋणं सं नयामसि; अ 19·45·1 ऋणादृणमिव संनयन्; ऐब्रा 7·13 ऋणमस्मिन् संनयति अमृतत्वं च गच्छति; मनु 9·107 यस्मिन्नृणं संनयति; पा 6·4·93 चिण्णमुलोर्दीर्घोऽन्यतरस्याम् (नयम् or नायम्). —*d*) For the sense of भुज्

here ( i. e. ) *to be of use to*, cp बृ 1·4·15 above. —*e*) बृ 1·3·28. —*f*) ऋ 1·122·9 अपो न वां सुनोत्यक्ष्णयाध्रुक्; 8·7·35 आक्ष्णयावानो वहन्ति अन्तरिक्षेण पततः; शब्रा 3·5·4·14 तानक्ष्णया संतृन्दति यदक्ष्णया न शक्नुयादपि समीचः. —*g*) गोब्रा 1·1·2 पुन्नाम नरकम्...तस्मात् त्राति इति पुत्रः तत् पुत्रस्य पुत्रत्वम्; नि 2·11 पुत्रः पुरु त्रायते, निपरणाद्वा, पुन्नरकं ततस्त्रायते; मनु 9·128 पुंनाम्नो नरकायस्मात् त्रायते पितरं सुतः। तस्मात् पुत्र इति प्रोक्तः...

पृथिव्यै[a] चैनमग्नेश्च दैवी वागाविशति। सा वै दैवी वाग् यया यद्यदेव वदति तत् तद्भवति ॥ १८ ॥

*a*) Dat. sg. fem. used as ablative; cp तै 1·11 भूत्यै न प्रमदितव्यम्.

दिवश्चैनमादित्याच्च दैवं मन आविशति। तद्वै दैवं मनो येनानन्द्येव भवत्यथो न शोचति ॥ १९ ॥

अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति। स वै दैवः प्राणो यः संचरंश्चासंचरंश्च न व्यथतेऽथो न रिष्यति। स[1] एवंवित् सर्वेषां भूतानामात्मा भवति। यथैषा देवतैवं सः। यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्ति। यदु किंचेमाः प्रजाः शोचन्त्यमैवासां[a] तद्भवति। पुण्यमेवामुं गच्छति। न ह वै देवान् पापं गच्छति ॥ २० ॥

1) शब्रा 14·4·3·29 adds एष after this.

*a*) ऋ 2·38·6 विश्वेषां कामश्चरताममाऽभूत्; 6·51·15 कर्ता नो अध्वन्ना सुगं गोपा अमा. 10·63·16 सा नो अमा सो अरणे नि पातु. Also अमात् : ऋ 5·53·8 आ यात मरुतो दिव आन्तरिक्षादमादुत; 9·97·8 अमादस्तं वृषगणा अयासुः; अमा ( locative ): cp अरणे above and अरण्ये; see निघण्टु 3·4·11–12 अमा। दमे. Does the author suggest अमा ( loc. ) by its juxta-position with दमे ?

अथातो व्रतमीमांसा[a]। प्रजापतिर्ह कर्माणि[b] ससृजे। तानि सृष्टान्यन्योन्येनास्पर्धन्त। वदिष्याम्येवाहमिति वाग्दध्रे[c]। द्रक्ष्याम्यहमिति चक्षुः। श्रोष्याम्यहमिति श्रोत्रम्। एवमन्यानि कर्माणि यथाकर्म। तानि मृत्युः श्रमो भूत्वोपयेमे[d]। तान्याप्नोत्। तान्याप्त्वा मृत्युरवारुन्ध। तस्माच्छ्राम्यत्येव वाक्। श्राम्यति चक्षुः। श्राम्यति श्रोत्रम्। अथेममेव नाप्नोद्योऽयं मध्यमः[e] प्राणः। तानि ज्ञातुं दध्रिरे। अयं वै नः श्रेष्ठो यः संचरंश्चासंचरंश्च न व्यथते[f]ऽथो न रिष्यति। हन्तास्यैव सर्वे रूपमसामेति[g]। त एतस्यैव सर्वे रूपमभवन्। तस्मादेत एतेनाख्यायन्ते प्राणा इति। तेन ह वाव तत् कुलमाचक्षते[1] यस्मिन् कुले भवति य एवं वेद। य उ हैवंविदा स्पर्धतेऽनुशुष्यति[2]। अनुशुष्य हैवान्ततो म्रियत इत्यध्यात्मम् ॥ २१ ॥

1) शब्रा 14·4·3·32 reads आख्यायते — 2) Dropped in शब्रा 14·4·3·32.

*a*) तै 2·8 (आनन्दस्य मीमांसा). —*b*) बृ 1·4·7 (कर्मनामानि). —*c*) छां 4·10·3; बृ 1·2·5; 1·5·21; 3·1·2. —*d*) पा 1·3·56 उपायमः स्वकरणे; 1·2·16 विभाषोपयमने. —*e*) मध्यम = मुख्य, आसन्य. —*f*) बृ 3·9·26. —*g*) शब्रा 14·4·3·32 reads भ्राम for असाम, which seems to be better; cp ऋ 3·52·8 रूपंरूपं मघवा बोभवीति.

अथाधिदैव[a]तम् । ज्वलिष्याम्येवाहमित्यग्निर्दध्रे । तप्स्याम्यहमित्यादित्यः । भास्याम्यहमिति चन्द्रमाः । एवमन्या देवता यथादैवतम्[b] । स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वा[c]युः । म्लोच[d]न्ति ह्यन्या देवता न वायुः । सैषाऽनस्तमिता देवता यद्वायुः ॥ २२ ॥

*a*) More frequently अधिदेवतम्; यथादेवतम् as also for यथादैवतम् below. —*b*) ऐब्रा 4·29 यथादेवतमेनेन यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद; शब्रा 1·5·3·23 अथ यथादेवतम्. But यथादैवं only in जैब्रा 2·239. —*c*) बृ 3·3·2; 3·7·2. —*d*) Both म्रुच् & म्लुच्; cp पा 3·1·58 जॄ...म्रुचुम्लुचु...श्विभ्यः; ऋ 1·161·10 आ निम्रुचः शकृदेकोऽपाभरत्; 8·27·19 यन्निम्रुचि प्रबुधि... यद्वा मध्यंदिने दिवः; छां 3·11·2–3; बृ 1·1·1.

अथैष श्लोको भवति—
य[a]तश्चोदेति सूर्योऽस्तं यत्र च गच्छतीति ।
प्राणाद्वा एष उदेति प्राणेऽस्तमेति ॥
तं[b] देवाश्चक्रिरे धर्मꣳ स एवाद्य स उ श्व इति ॥

यद्वा एतेऽमु[c]र्ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति । तस्मादेकमेव व्रतं चरेत् प्राण्या[d]च्चैवापान्याच्च । नेन्मा पाप्मा मृत्युराप्नवदि[1]ति । यद्यु चरेत् समापिपयिषेत्तेनो एतस्यै देवतायै सायुज्यꣳ सलोकतां जयति[2] ॥ २३ ॥

1) Some texts read आप्नुवत् erroneously. — 2) शब्रा 14·4·3·34 adds य एवं वेद after this.

*a*) ऋ 10·121·6 यत्राधि सूर उदितो विभाति; अ 10·8·16 यतः सूर्य उदेत्यस्तं यत्र च गच्छति; जैब्रा 2·28 यदेवोदेति सूर्यः...; क 4·9. —*b*) क 4·12. —*c*) Cp शब्रा 6·2·2·40 अमुर्हि एव दद्याद्दस्योपकल्पेत. Cp कर्हि, एतर्हि; पा 5·3·16 इदमो र्हिल्; 5·3·4 एतेतौ रथोः. —*d*) छां 8·15 आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्य; मुं 1·3·8; 3·2·7; क 6·10; मै 6·30.

॥ इति पञ्चमं ब्राह्मणम् ॥

---

त्रयं वा इदं नाम रूपं कर्म । तेषां नाम्नां वागित्येतदेषामुक्थम् । अतो हि सर्वाणि नामान्युत्तिष्ठन्ति । एतदेषाꣳ साम । एतद्धि सर्वैर्नामभिः समम् । एतदेषां ब्रह्म । एतद्धि सर्वाणि नामानि बिभर्ति ॥ १ ॥

*a*) शब्रा 11·2·3·3 तद् द्वाभ्यामेव प्रत्यवैत् रूपेण चैव नाम्ना च. —*b*) जैब्रा 2·24 तानुक्थैरुत्थापयति तदुक्थानामुक्थत्वम्. —*c*) शब्रा 10·4·1·4 एष उ एव उक्‌ तस्यैतदन्नं थं तदुक्थम्; 10·5·2·20 उक्थमिति बह्वृचा एष ह्रीदं सर्वमुत्थापयति; बृ 5·13·1; for correct etymology see नि 11·31 उक्थ्यं वक्तव्यप्रशंसम्. —*d*) शब्रा 10·5·2·20 सामेति छन्दोगा एतस्मिन् हीदं सर्वं समानम्; सामविधानब्राह्मण 1·1·13 साम्यादिति तत् साम्नः सामत्वम्; जै 1·12·5. —*e*) नि 1·8 ब्रह्म परिवृढं सर्वतः; जै 4·24·11.

अथ रूपाणां चक्षुरित्येतदेषामुक्थम् । अतो हि सर्वाणि रूपाण्युत्तिष्ठन्ति । एतदेषाꣳ साम । एतद्धि सर्वैः रूपैः समम् । एतदेषां ब्रह्म । एतद्धि सर्वाणि रूपाणि बिभर्ति ॥ २ ॥

अथ कर्मणामात्मेत्येतदेषामुक्थम् । अतो हि सर्वाणि कर्माण्युत्तिष्ठन्ति । एतदेषाꣳ साम । एतद्धि सर्वैः कर्मभिः समम् । एतदेषां ब्रह्म । एतद्धि सर्वाणि कर्माणि बिभर्ति । तदेतत् त्रयꣳ सदेकमयमात्मा । आत्मो एकः सन्नेतत् त्रयम् । तदेतदमृतꣳ सत्येन चछन्नम् । प्राणो वा अमृतम् । नामरूपे सत्यम् । ताभ्यामयं प्राणश्छन्नः ॥ ३ ॥

*a*) ऋ 10·81·1 प्रथमच्छद् अवराँ आविवेश; छां 8·3·1–2 ( अनृतापिधानाः ); 6·1·3; 7·1·2–3; 8·3·5; बृ 2·3·6; 2·1·20; 2·4·12; 4·5·13; 5·5·1; तै 2·6; कौ 1·6.

॥ इति षष्ठं ब्राह्मणम् ॥

॥ इति प्रथमोऽध्यायः ॥

---

दृप्तबालाकिर्हानूचानो गार्ग्य आस । स होवाचाजातशत्रुं काश्यम् — ब्रह्म ते ब्रवाणीति । स होवाचाजातशत्रुः—सहस्रमेतस्यां वाचि दद्मः, जनको जनक इति वै जना धावन्तीति ॥ १ ॥

Cp in general बृ 2·1·2–8 with बृ 2·5·1–10. Also कौ 4.

*a*) छां 6·2·1 ( महामनाः—अनूचानमानी—स्तब्धः ). —*b*) Perhaps a conscious effort at alliteration !

स होवाच गार्ग्यः — य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुः — मा मैतस्मिँन् संवदिष्ठाः[a] । अतिष्ठाः[b] सर्वेषां भूतानां मूर्धा राजेति वा अहमेतमुपास इति । स य एतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा राजा[c] भवति ॥ २ ॥

*a*) Use of locative with सं-वद्. Cp बृ 4·5·1 (अग्निहोत्रे समदाते). —*b*) अ 3 22·6 हस्ती मृगाणां सुषदां अतिष्ठावान् बभूव ह; शब्रा 13·5·1·9 अतिष्ठा अश्वमेधो यज्ञानाम्. —*c*) In accordance with the principle in शब्रा 13·5·2·20 तं यथा यथोपासते तदेव भवति; गी 17·3 यो यच्छ्रद्धः स एव सः.

स होवाच गार्ग्यः — य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुः — मा मैतस्मिन् संवदिष्ठाः । बृहन् पाण्डरवासाः[1] सोमो[a] राजेति वा अहमेतमुपास इति । स य एतमेवमुपास्तेऽहरहर्ह सुतः प्रसुतो भवति । नास्यान्नं क्षीयते ॥ ३ ॥

1) v.l. पाण्डुरवासाः (Weber).

*a*) कौ 4·4 adds अन्नस्यात्मा. Cp the फल here at the end (नास्यान्नं क्षीयते).

स होवाच गार्ग्यः — य एवासौ विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुः — मा मैतस्मिन् संवदिष्ठाः । तेजस्वीति वा अहमेतमुपास इति । स य एतमेवमुपास्ते तेजस्वी ह भवति । तेजस्विनी हास्य प्रजा भवति ॥ ४ ॥

स होवाच गार्ग्यः — य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुः—मा मैतस्मिन् संवदिष्ठाः । पूर्णमप्रवर्तीति[a] वा अहमेतमुपास इति । स य एतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नास्यास्माल्लोकात् प्रजोद्वर्तते ॥ ५ ॥

*a*) छां 3·12·9.

स होवाच गार्ग्यः — य एवायं वायौ पुरुष एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुः—मा मैतस्मिन् संवादिष्ठाः । इन्द्रो वैकुण्ठो[a]ऽपराजिता[b] सेनेति वा अहमेतमुपास इति । स य एतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी[c] ॥ ६ ॥

*a*) Name of a Rishi ऋ 10·48-50; जै 4·5·1. —*b*) छां 8 5·3 (अपराजिता पूर्ब्रह्मणः). —*c*) Solitary occurrence in Vedic lit. अन्यतस्त्य = अन्य + तः + त्य; cp पा 4·2·98 दक्षिणापश्चात्पुरसस्त्यक्; 4·2 104 अव्ययात् त्यप्. The word इतस्त्य is comparable to अन्यतस्त्यः.

स होवाच गार्ग्यः — य एवायमग्नौ पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुः — मा मैतस्मिन् संवदिष्ठाः। विषासहिरिति वा अहमेतमुपास इति। स य एतमेवमुपास्ते विषासहिर्ह भवति। विषासहिर्हास्य प्रजा भवति ॥ ७ ॥

*a* ) ऋ 10·166·1 सपत्नानां विषासहिम्; 10·174·5 अभिराष्ट्रो विषासहिः; अ 17·1·1 विषासहिं सहमानं सासहानं सहीयांसम्.

स होवाच गार्ग्यः — य एवायमप्सु पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुः — मा मैतस्मिन् संवदिष्ठाः। प्रतिरूप इति वा अहमेतमुपास इति। स य एतमेवमुपास्ते प्रतिरूपꣳ हैवैनमुपगच्छति, नाप्रतिरूपम्। अथो प्रतिरूपोऽस्माज्जायते ॥८॥

*a* ) कौ 4·11.

स होवाच गार्ग्यः — य एवायमादर्शे पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुः — मा मैतस्मिन् संवदिष्ठाः। रोचिष्णुरिति वा अहमेतमुपास इति। स य एतमेवमुपास्ते रोचिष्णुर्ह भवति। रोचिष्णुर्हास्य प्रजा भवति। अथो यैः संनिगच्छति सर्वाꣳस्तानतिरोचते ॥ ९ ॥

*a* ) बृ 3·9·15; छां 8 7·4; क 6·5. —*b* ) नि 3·14 रुक्मवक्षसः रोचिष्णूरस्काः; पा 3·2·136 अलंकृञ्...रुचि...चरयिष्णु च.

स होवाच गार्ग्यः — य एवायं यन्तं पश्चाच्छब्दोऽनूदेत्येतमेवाहं[1] ब्रह्मोपास इति। स होवाचाजातशत्रुः — मा मैतस्मिन् संवदिष्ठाः। असुरिति वा अहमेतमुपास इति। स य एतमेवमुपास्ते सर्वꣳ हैवास्मिँल्लोक आयुरेति। नैनं पुरा कालात् प्राणो जहाति ॥१०॥

1 ) v. l. अनूदैति.

*a* ) ऋ 10·117·7 यन्नध्वानमप वृंक्ते चरित्रैः. —*b* ) Is this a gloss on the preceding ?

स होवाच गार्ग्यः — य एवायं दिक्षु पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुः — मा मैतस्मिन् संवदिष्ठाः। द्वितीयोऽनपग इति वा अहमेतमुपास इति। स य एतमेवमुपास्ते द्वितीयवान् ह भवति। नास्माद्गणश्छिद्यते ॥ ११ ॥

स होवाच गार्ग्यः — य एवायं छायामयः पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुः — मा मैतस्मिन् संवदिष्ठाः। मृत्युरिति वा अहमेतमुपास इति। स य एतमेवमुपास्ते सर्वꣳ हैवास्मिँल्लोक आयुरेति। नैनं पुरा कालान्मृत्युरागच्छति ॥ १२ ॥

स होवाच गार्ग्यः — य एवायमात्मनि पुरुष एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुः — मा मैतस्मिन् संवदिष्ठाः । आत्मन्वीति वा अहमेतमुपास इति । स य एतमेवमुपास्त आत्मन्वी ह भवति । आत्मन्विनी हास्य प्रजा भवति । स ह तूष्णीमास गार्ग्यः ॥ १३ ॥

स होवाचाजातशत्रुः — एतावन्नू ३ इति । एतावद्धीति । नैतावता विदितं भवतीति । स होवाच गार्ग्यः — उप त्वाऽ[a]यानीति ॥ १४ ॥

a ) The root is उप + इ; cp बृ 2·1·15 उपेयात्.

स होवाचाजातशत्रुः — प्रति[a]लोमं चैत[1]द्यद् ब्राह्मणः क्षत्रियमुपेयाद् ब्रह्म मे वक्ष्यतीति । व्येव त्वा ज्ञपयिष्यामीति । तं पाणावादायोत्तस्थौ । तौ ह पुरुषꣳ सुप्तमाजग्मतुः । तमेतैर्नामभिरामन्त्रयांचक्रे बृहन् पाण्डरवासः सोम राजन्निति । स नोत्तस्थौ । तं पाणिना[b]पेषं बोधयांचकार । स होत्तस्थौ ॥ १५ ॥

1 ) v. l. वै तत् for चैतत्.

a ) तैसं 3·5·1·3 य एनयोरनुलोमं च प्रतिलोमं च विद्यात्; पा 5·4·75 अच्-प्रत्यन्वव-पूर्वात् सामलोम्नः; कौ 4·19. —b ) अ 20·133·1 तौ आ पिनाष्टि पूरुषः; वासं 19·11 यदा पिपेष मातरं पुत्रः प्रमुदितो धनम्; कौ 4·19; पा 3·4·35 शुष्कचूर्णरूक्षेषु पिषः; 3·4·38 स्नेहने पिषः.

स होवाचाजातशत्रुः — यत्रैष एत[a]त् सुप्तोऽभूद्य एव विज्ञानमयः पुरु[b]षः क्वैष तदाऽभूत् कुत एत[a]दागादिति । तदु ह न मेने गार्ग्यः ॥ १६ ॥

a ) एतत् adverbial use; ऋ 1·162·21 न वा उ एतन् म्रियसे; 4·18·2 नाहमतो निरया दुर्गहैतत्. —b ) बृ 3·4·5; बृ 4·3·19; छां 6·2·8; 6·8-16.

स होवाचाजातशत्रुः — यत्रैष एतत् सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते । तानि यदा गृह्णा[1]त्यथ हैतत् पुरुषः स्वपिति[a] नाम । तद् गृहीत एव प्राणो भवति । गृहीता वाक् । गृहीतं चक्षुः । गृहीतꣳ श्रोत्रम् । गृहीतं मनः ॥ १७ ॥

Cp in general बृ 2·1·17-20 with बृ 4·3·23.

1 ) v. l. निगृह्णाति.

a ) शब्रा 10·3·3·6 यदा वै पुरुषः स्वपिति…यदा प्रबुध्यते…प्राणादेवाधि पुनर्जायन्ते; छां 4·3·3; 6·8·1.

स यत्रैतत् स्वप्न्यॅया[a] चरति ते[b] हास्य लोकाः । तदुतेव महाराजो भवत्युतेव महाब्राह्मणः । उतेवोच्चावॅचं[c] निगच्छति । स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेतैवमेवैष एतत् प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते ॥ १८ ॥

Cp in general बृ 2·1·18–19 with बृ 4·3·9–18; 19–35; also कौ 4·20.

*a*) Cp स्वप्नया in अ 5·7·8 उत नग्ना बोभुवति स्वप्नया सचसे जनम्; cp पा 7·1·39 सुपां सुलुक्. —*b*) Looks like a parenthesis. —*c*) शब्रा 2·3·4·32 उच्चावचै-श्छन्दोभिरुपतिष्ठते, उच्चावचा इव हि पशवः; 13·5·1·7 बहु खलु वा एतदेतास्मिन्नहनि उच्चावचमिव कर्म क्रियते; नि 1·3 उच्चावचाः पदार्था भवन्तीति गार्ग्यः; 1·4 अथ निपाता उच्चावचेष्वर्थेषु निपतन्ति; 7·3 एवमुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति; पा 2·1·72 मयूरव्यंसकादयः.

अथ यदा सुषुप्तो[a] भवति । यदा न कस्य चन वेद । हिता[1] नाम नाड्यो[b] द्वासप्ततिः सहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते[c] । ताभिः प्रत्यवसृप्य पुरीतति शेते । स यथा कुमारो[d] वा महाराजो[2] वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य[e] गत्वा शयीत । एवमेवैष एतच्छेते ॥ १९ ॥

1) हिराः instead of हिताः ? Cp अ 1·17·1 हिरा लोहितवाससः; 1·17·3 शतस्य धमनीनां सहस्रस्य हिराणाम्; 7·35·2 इमा यास्ते शतं हिराः; cp वासं 22·8. —2) Dropped by माध्यंदिन.

*a*) छां 8·3·4 (संप्रसादः); 8·6·3. —*b*) बृ 4·2·3; 4·3·20; कौ 4·19. —*c*) वासं 25·8 अन्तरिक्षं पुरीतता...हिराभिः स्रवन्तीः. —*d*) पा 6·2·58 आर्यो ब्राह्मण-कुमारयोः. —*e*) अ 11·7·16 तृषा भूम्यामतिघ्न्यः; बृ 4·3·33 (अथैष एव परम आनन्दः).

स यथोर्णवाभिस्तन्तुनोच्चरेद्यथाऽग्नेः[1][a] क्षुद्रा विस्फुलिङ्गा[2] व्युच्चरन्त्येवमे-वास्मादात्मनः[b] सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि[3] व्युच्चरन्ति । तस्योपनिषत्[c] सत्यस्य सत्यमिति । प्राणा वै सत्यं तेषामेष सत्यम् ॥ २० ॥

1) v. l. ऊर्णनाभिः. —2) v. l. विष्फुलिंगाः (माध्यंदिन). —3) माध्यंदिन adds सर्वे आत्मानः after this.

*a*) कासं 8·1 सोऽयमूर्णवाभिः स्वैरान्त्रैः संतितंसति; तैब्रा 1·1·2·5 त ऊर्णावभयोऽभवन्; see the proper name और्णवाभः in नि 6·13 and 7·15; cp मुं 1·1·7; 2·1·1; श्वे 6·10; मै 6·22. —*b*) बृ 3·4–5; बृ 5·4; छां 6·8–16. —*c*) बृ 1·4·7; 1·6·3; 2·3·6; मै 6·32.

॥ इति प्रथमं ब्राह्मणम् ॥

यो ह वै शिशुꣳ साधानꣳ सप्रत्याधानꣳ सस्थूणꣳ सदामं वेद, सप्त ह द्विषतो भ्रातृव्यानवरुणाद्धि[a] । अयं वाव शिशुर्योऽयं मध्यमः प्राणः । तस्येदमेवाधानमिदं प्रत्याधानं प्राणः स्थूणान्नं दाम ॥ १ ॥

*a* ) पा 4·1·144 भ्रातुर्व्यच्च; 145 व्यन् सपत्ने.

तमेताः सप्ताक्षितय[a] उपतिष्ठन्ते । तद्या इमा अक्षन् लोहिन्यो राजयस्ताभिरेनꣳ रुद्रोऽन्वायत्तः । अथ या अक्षन्नापस्ताभिः पर्जन्यः । या कनीनका तयाऽऽदित्यः । यत् कृष्णं[1] तेनाग्निः । यच्छुक्लं[1] तेनेन्द्रः । अधरयैनं वर्तन्या[b c] पृथिव्यन्वायत्ता । द्यौरुत्तरया । नास्यान्नं क्षीयते य एवं वेद ॥ २ ॥

1 ) माध्यंदिन reads यच्छुक्लं तेनाग्निः यत्कृष्णं तेनेन्द्रः.

*a* ) बृ 1·5·1. —*b* ) छां 4·16·1.

तदेष श्लोको[a] भवति —

अर्वाग्बिलश्चमस[b] ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम् ।
तस्याऽऽसत[c] ऋषयः सप्त तीरे[d] वागष्टमी[e] ब्रह्मणा संविदाना[e]इति ॥

अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति । इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्व-बुध्नः । तस्मिन् यशो निहितं विश्वरूपमिति । प्राणा वै यशो[1] विश्वरूपम् । प्राणानेतदाह । तस्याऽऽसत ऋषयः सप्त तीर इति । प्राणा वा ऋषयः । प्राणानेतदाह । वागष्टमी ब्रह्मणा संविदानेति । वाग्घ्यष्टमी ब्रह्मणा संवित्ते ॥ ३ ॥

1 ) माध्यंदिन reads विहितम् after यशः.

*a* ) अ 10·8·9 with some variants. —*b* ) In the अथर्ववेद-तिर्यक् for अर्वाक्. —*c* ) तत् for तस्य in अ. —*d* ) साकम् for तीरे in अ. —*e*—*e* ) अ substitutes for this : ये अस्य गोपा महतो बभूवुः.

इमावेव गोतमभरद्वाजौ[a b] । अयमेव गोतमोऽयं भरद्वाजः । इमावेव विश्वामित्र-[c] जमदग्नी । अयमेव विश्वामित्रोऽयं जमदग्निः । इमावेव वसिष्ठकश्यपौ[d] । अयमेव वसिष्ठोऽयं कश्यपः । वागेवात्रिः[e] । वाचा[f] ह्यन्नमद्यते । अत्तिर्ह वै नामैतद्यदत्रिरिति । सर्वस्यात्ता भवति । सर्वमस्यान्नं भवति य एवं वेद ॥ ४ ॥

*a* ) गोतम's son वामदेव is the ऋषि of the fourth Maṇḍala of ऋ. —*b* ) ऋषि of the 6th मण्डल of ऋ. —*c* ) ऋषि of the 3rd मण्डल of ऋ, विश्वामित्र and जमदग्नि mentioned together in ऋ 10·167·4; also in तैसं 3·1·7·3 which =

5·4·11·3 विश्वामित्रजमदग्नी वसिष्ठेनास्पर्धेताम्. —*d* ) ऋषि of the 7th मण्डल of ऋ. —*e* ) ऋषि of the 5th मण्डल of ऋ. —Cp for *a*—*e* ) दीघनिकाय 1·104; अंगुत्तरनिकाय 3·224 : अट्ठक, वामक, वामदेव, वेस्सामित्त, यमतग्गि ( or यमदग्गि ), अंगिरस, भरद्वाज, वासेट्ठ, कस्सप, भगु-ब्राह्मणानं पुब्बका इसयो मंतानं कत्तारो पवत्तारो ( ब्राह्मणानाम् पूर्वे ऋषयः मंत्राणाम् कर्तारः प्रवक्तारः ). —*f* ) शब्रा 8·5·4·1 तस्मात् सर्वेषामंगानां वाचैवान्नस्य रसं विजानाति. —*g* ) छां 5·2·1; 5·18·1; 5·24·2,4; बृ 1·3·17; 6·1·14.

॥ इति द्वितीयं ब्राह्मणम् ॥

---

द्वे वाव ब्रह्मणो रूपे । मूर्तं चैवामूर्तं च । मर्त्यं चामृतं च । स्थितं च यच्च । सच्च त्यं[1] च ॥ १ ॥

1 ) Some Mss read त्यच्च; cp तै 2, 6; elsewhere बृ 5·5·1 तदेतत् त्र्यक्षरं सत्यमिति ( स-ति-यम् ).

*a* ) मै 6·3.

तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्च । एतन्मर्त्यम् । एतत् स्थितम् । एतत् सत् । तस्यैतस्य मूर्तस्यैतस्य स्थितस्यैतस्य सत एष रस य एष तपति । सतो ह्येष रसः ॥ २ ॥

*a* ) छां 4·10·5 ( प्राणो ब्रह्म, कं ब्रह्म, खं ब्रह्म ); बृ 3·7·2 वायुर्वै गौतम तत् सूत्रम्.

अथामूर्तम् । वायुश्चान्तरिक्षं च । एतदमृतम् । एतद्यत् । एतत् त्यम्[1] । तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन् मण्डले पुरुषः । त्यस्य ह्येष रसः । इत्याधिदैवतम्[2] ॥ ३ ॥

1 ) Some Mss read त्यत् ( for त्यम् ) ; cp बृ 3·9·9 त्यादित्याचक्षते. —2 ) v. l. आधिदेवतम्.

अथाध्यात्मम् । इदमेव मूर्तं यदन्यत् प्राणाच्च यश्चायमन्तरात्मन्नाकाशः । एतन्मर्त्यम् । एतत् स्थितम् । एतत् सत् । तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो यच्चक्षुः । सतो ह्येष रसः ॥ ४ ॥

*a* ) Case of pendant nominative; तस्मात् after आकाश is understood.

अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्नाकाशः । एतदमृतम् । एतद्यत् । एतत् त्यत् । तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो योऽयं दक्षिणेऽक्षन् पुरुषः । त्यस्य ह्येष रसः ॥ ५ ॥

तस्य हैतस्य पुरुषस्य रूपम् । यथा माँहारजनं वासो यथा पाण्ड्वाविकं[b] यथेन्द्रगोपो यथाऽग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्तम्[c] । सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति य एवं वेद । अथात आदेशो[d] नेति नेति[e] । न ह्येतस्मादिति नेत्यन्यत् परमास्ति । अथ नामधेयꣳ सत्यस्य सत्यमिति । प्राणा वै सत्यम् । तेषामेष सत्यम् ॥ ६ ॥

*a* ) Cp कात्यायन on पा 4·2·24 हरिद्रामहारजनाभ्यामञ् वक्तव्यः. —*b* ) The word is पाण्ड्व and not पाण्डु; शब्रा 5·3·5·21 अथैनं पाण्ड्वं परिधापयति; cp वेस्सन्तर-जातक 6·500 इन्दगोपकवण्णाभा गन्धारा पण्डुकम्बला; cp पा 4·2·11 पाण्डुकम्बलादिनिः. —*c*) Cp के 4·4; छां 8·4·2 सकृद्विभातः. —*d* ) बृ 3·9·26; 4·2·4; 4·4·22; 4·5·15; के 1·5. —*e* ) बृ 2·1·20.

॥ इति तृतीयं ब्राह्मणम् ॥

---

मैत्रेयीति होवाच याज्ञवल्क्यः — उद्यास्यन् वा अरेऽहमस्मात् स्थानादस्मि । हन्त तेऽनया कात्यायन्याऽन्तं[a] करवाणीति ॥ १ ॥

Cp in general बृ 2·4 with बृ 4·5 for the general motive; cp बृ 2·4·1-4 with क 1·26-29 and मै 1.

*a* ) अन्त ( *settlement* ); is it used in the same sense in अप्वन्त in बृ 4·1·1; वेदान्त in मुं 3·2·6; श्वे 6·22; गी 15·15 ?

सा होवाच मैत्रेयी—यन्नु[1] म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात् कथं तेनामृता[2] स्यामिति । नेति होवाच याज्ञवल्क्यः । यथैवोपकरणवतां[a] जीवितं तथैव ते जीवितꣳ स्यात् । अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेनेति ॥ २ ॥

1 ) नु Dropped in माध्यंदिन. —2 ) बृ 4·5·3 adds आहो नेति after अमृता.

*a* ) मनु 2·105 वेदोपकरणे चैव स्वाध्याये चैव नैत्यके.

सा होवाच मैत्रेयी—येनाहं नामृता स्यां किमहं तेन कुर्याम् । यदेव भगवान् वेद[1] तदेव मे ब्रूहीति[2] ॥ ३ ॥

1 ) v. l. भगवन् वेत्थ. —2 ) v. l. विब्रूहि.

स होवाच याज्ञवल्क्यः — प्रिया बतारे नः सती प्रियं भाषसे । एह्यास्स्व । व्याख्यास्यामि ते । व्याचक्षाणस्य तु मे निदिध्यासस्वेति[2] ॥ ४ ॥

1 ) v. l. आस्व ( माध्यंदिन ). —2 ) माध्यंदिन adds ब्रवीतु भगवानिति.

*a* ) ऐब्रा 3·2 कुमारं जातं संवदन्त उप वै शुश्रूषते नि वै ध्यायतीति; बृ 2·4·5 निदिध्यासितव्यः.

स होवाच[1]—न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति । न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति । न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति । न वा अरे ब्रह्मणः कामाय ब्रह्म[a] प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति । न वा अरे क्षत्रस्य कामाय क्षत्रं[a] प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति । न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति । न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति । न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति । [2]आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेयि । आत्मनो वा अरे दर्शनेन[b] श्रवणेन मत्या विज्ञानेनेदꣳ सर्वं विदितम्[c] [2] ॥ ५ ॥

1 ) माध्यंदिन adds याज्ञवल्क्यः after उवाच. —2 – – 2 ) Deussen proposes to place this concluding portion at the end of the 6th कण्डिका.

*a* ) ब्रह्म-क्षत्र; cp ऋ 1·157·2 घृतेन नो मधुना क्षत्रमुक्षतम्; अस्माकं ब्रह्म पृतनासु जिन्वतम् ( the first occurrence of the pair ब्रह्म-क्षत्र although in a different sense ); अ 9·7·9 ब्रह्म च क्षत्रं च श्रोणी; 12·5·8 ब्रह्म च क्षत्रं च राष्ट्रं च विशश्च; वासं 30·5 ब्रह्मणे ब्राह्मणं क्षत्राय राजन्यं मरुद्भ्यो वैश्यं तपसे शूद्रम्; ऐब्रा 7·19 यज्ञं सृष्टेमनु ब्रह्मक्षत्रे असृज्येताम्; क 2·25 यस्य ब्रह्म च क्षत्रं च. —*b* ) Cp बृ 4·5·6 ( आत्मनि खल्वरे दृष्टे etc. —locative absolute construction ). —*c* ) छां 6·1·3; 8·7·1; बृ 3·7·3; 4·3·23; मुं 1·1·3.

ब्रह्म तं परादा[a]द्योऽन्यत्राऽऽत्मनो ब्रह्म वेद । क्षत्रं तं परादाद्योऽन्यत्राऽऽत्मनः क्षत्रं वेद । लोकास्तं परादुर्योऽन्यत्राऽऽत्मनो लोकान् वेद । देवास्तं परादुर्योऽन्यत्राऽऽत्मनो देवान् वेद । भूतानि तं परादुर्योऽन्यत्राऽऽत्मनो भूतानि वेद । सर्वं तं परादाद्योऽन्यत्राऽऽत्मनः सर्वं वेद । इदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदꣳ सर्वं यदयमात्मा ॥ ६ ॥

*a* ) ऋ 8·1·15 महे चन त्वामद्रिवः परा शुल्काय देयाम्.

स यथा दुन्दुभेर्[a] हन्यमानस्य[b] न बाह्याञ्शब्दाञ्शक्नुयाद् ग्रहणाय[1] । दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य[c] वा शब्दो गृहीतः ॥ ७ ॥

Contrast the similes in बृ here with those of छां 6·1 ( मृत्पिण्ड, लोहमणि and नखनिकृन्तन ).

*a* ) ऋ 6·47·31 केतुमद्दुन्दुभिर्वावदीति. —*b* ) Cp बृ 2·4·12 न हास्योद्ग्रहणायेव स्यात्. —*c* ) वासं 30·19 शब्दायाडम्बराघातम्, महसे वीणावादम्...अवरस्पराय शंखध्मम्. The saṁhitā seems to be the source of the दृष्टान्तs here !

स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्शब्दाञ्शक्नुयाद् ग्रहणाय, शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ ८ ॥

स यथा वीणायै वाद्यमानायै न बाह्याञ्शब्दाञ्शक्नुयाद् ग्रहणाय, वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ ९ ॥

स यथाऽऽर्द्रैधाग्नेरभ्याहितात् पृथग्धूमा[a] विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य[b] निश्वसितमेतद्[1] यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस[c] इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि । अस्यैवैतानि[2] निश्वसितानि ॥ १० ॥

1 ) v. l. निःश्वसितम्. —2 ) माध्यंदिन adds सर्वाणि after एतानि.

*a* ) बृ 4·5·11; मै 6·32. —*b* ) बृ 2·4·12. —*c* ) बृ 5·13·1–4; 6·4·14–16; 6·4·18; छां 7·1·2; मुं 1·1·5.

स यथा सर्वासामपाꣳ समुद्र[a] एकायनम्[b] । एवꣳ सर्वेषाꣳ स्पर्शानां त्वगेकायनम् । एवꣳ सर्वेषां गन्धानां नासिके एकायनम् । एवꣳ सर्वेषां रसानां जिह्वैकायनम् । एवꣳ सर्वेषाꣳ रूपाणां चक्षुरेकायनम् । एवꣳ सर्वेषाꣳ शब्दानाꣳ श्रोत्रमेकायनम् । एवꣳ सर्वेषाꣳ संकल्पानां मन एकायनम् । एवꣳ सर्वासां विद्यानाꣳ[1] हृदयमेकायनम् । एवꣳ सर्वेषां कर्मणाꣳ हस्तावेकायनम्[2] । एवꣳ सर्वेषामानन्दानामुपस्थ एकायनम् । एवꣳ सर्वेषां विसर्गाणां पायुरेकायनम् । एवꣳ सर्वेषामध्वनां पादावेकायनम्[2] । एवꣳ सर्वेषां वेदानां[1] वागेकायनम् ॥ ११ ॥

1 ) विद्या and वेद interchange their place in the माध्यंदिन. —2 ) पादौ follows हस्तौ in माध्यंदिन.

*a* ) ऋ 2·35·3 समानमूर्वं नद्यः पृणन्ति; 7·49·2 समुद्रार्था आपः; छां 6·10·1; मुं 3·2·8; प्र 6·5; गी 2·71 समुद्रमापः प्रविशन्ति यद्वत्. —*b* ) In this series, which is

long enough, आत्मन् as the एकायनम् of all the इन्द्रियs is left to be inferred, which, however, is made explicit in the following : बृ 1·4·7; छां 8·12·4–5; कौ 3·4; के 1·2.

स यथा सैन्धवखिल्य[a] उदके प्रास्त उदकमेवानुविलीयेत[b] न [1]हास्योद्ग्रहणायेव स्यात्। यतो यतस्त्वाददीत लवणमेव। एवं वा अर इदं महद् भूतमनन्तमपारं विज्ञानघन[c] एव। एतेभ्यः भूतेभ्यः समुत्थाय तान्येवानु विनश्यति। न प्रेत्य संज्ञा[d]ऽस्तीत्यरे ब्रवीमि। इति होवाच याज्ञवल्क्यः ॥ १२ ॥

1 ) माध्यंदिन reads न अह अस्य etc.

*a* ) ऋ 6·28·2 अभित्रे खिल्ये निदधाति देवयुम्; 10·142·3 उत खिल्या उर्वराणां भवन्ति. —*b* ) छां 6·13 ( लवणम्...यथा विलीनमेव ); बृ 4·5·13. —*c* ) Cp जीवघन in प्र 5·5. —*d* ) Cp छां 6·9·2 ( ते यथा तत्र...न विवेकं लभन्ते...सति संपद्य न विदुः... ); मनु 1·49 अन्तःसंज्ञा भवन्त्येते.

सा होवाच मैत्रेयी—अत्रैव मा भगवानमूमुहन्[a] न प्रेत्य[b] संज्ञाऽस्तीति। स होवाच[1] —न वा अरेऽहं मोहं ब्रवीमि। अलं वा अर इदं विज्ञानाय ॥ १३ ॥

1 ) माध्यंदिन adds याज्ञवल्क्यः after होवाच.

*a* ) बृ 3·5·1; 4·5·14; ई 7; क 2·6; प्र 2·3. —*b* ) छां 8·11·1.

यत्र हि द्वैत[a]मिव भवति तदितर इतरं जिघ्रति[1], तदितर इतरं पश्यति[1], तदितर इतरꣳ[2] शृणोति, तदितर इतरमभिवदति[2] तदितर इतरं मनुते, तदितर इतरं विजानाति। यत्र वा अस्य सर्वमात्मैवाभूत् तत् केन कं जिघ्रेत् तत् केन कं पश्येत् तत् केन कꣳ शृणुयात् तत् केन कमभिवदेत् तत् केन कं मन्वीत तत् केन कं विजानीयात्। येनेदꣳ सर्वं विजानाति तं केन विजानीयात्। विज्ञातारमरे केन विजानीयादिति ॥ १४ ॥

1 ) माध्यंदिन interchanges जिघ्रति and पश्यति. —2 ) माध्यंदिन interchanges शृणोति and जिघ्रति.

*a* ) बृ 3·4·2; 4·3·7; 4·3·31; 4·4·19.

॥ इति चतुर्थं ब्राह्मणम् ॥

---

इयं पृथिवी सर्वेषां भूतानां मधु। अस्यै पृथिव्यै सर्वाणि भूतानि मधु। यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा। इदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १ ॥

Cp in general तै 2·1; ऐ 1·1; also cp बृ 2·5·1–10 with बृ 2·1·2–8; and also with बृ 3·7.

इमा आपः सर्वेषां भूतानां मधु। आसामपाꣳ सर्वाणि भूतानि मधु। यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा। इदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ २ ॥

अयमग्निः सर्वेषां भूतानां मधु। अस्याग्नेः सर्वाणि भूतानि मधु। यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा। इदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ३ ॥

अयं वायुः सर्वेषां भूतानां मधु। अस्य वायोः सर्वाणि भूतानि मधु। यश्चायमस्मिन् वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा। इदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ४ ॥

अयमादित्यः सर्वेषां भूतानां मधु। अस्यादित्यस्य सर्वाणि भूतानि मधु। यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं चाक्षुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा। इदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ५ ॥

[1]इमा दिशः सर्वेषां भूतानां मधु। आसां दिशाꣳ सर्वाणि भूतानि मधु। यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ श्रौत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा। इदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ६ ॥

1 ) माध्यंदिन interchanges this section with the next.

अयं चन्द्रः सर्वेषां भूतानां मधु। अस्य चन्द्रस्य सर्वाणि भूतानि मधु। यश्चायमस्मिꣳश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा। इदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ७ ॥

इयं विद्युत् सर्वेषां भूतानां मधु। अस्यै विद्युतः सर्वाणि भूतानि मधु। यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा। इदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ८ ॥

अयꣳ स्तनयित्नुः सर्वेषां भूतानां मधु। अस्य स्तनयित्नोः सर्वाणि भूतानि मधु। यश्चायमस्मिन् स्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा। इदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ९ ॥

अयमाकाशः[1] सर्वेषां भूतानां मधु । अस्याकाशस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा । इदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १० ॥

1 ) This section occurs between अग्नि and वायु in माध्यंदिन. See above.

अयं धर्मः सर्वेषां भूतानां मधु । अस्य धर्मस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन् धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा । इदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ११ ॥

इदꣳ सत्यꣳ सर्वेषां भूतानां मधु । अस्य सत्यस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन् सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ सात्यस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा । इदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १२ ॥

इदं मानुषꣳ सर्वेषां भूतानां मधु । अस्य मानुषस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन् मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा । इदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १३ ॥

अयमात्मा सर्वेषां भूतानां मधु । अस्यात्मनः सर्वाणि भूतानि मधु । यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा । इदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १४ ॥

स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानाꣳ राजा । तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिताः । एवमेवास्मिन्नात्मनि सर्वाणि भूतानि[1] सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः[1] सर्व एत आत्मानः समर्पिताः ॥ १५ ॥

1 ) भूतानि and प्राणाः interchange places in माध्यंदिन.

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत्[a]—
तद्वां नरा सनये दꣳस उग्रमाविष्कृणोमि तन्यतुर्न[b] वृष्टिम् ।
दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेति ॥ १६ ॥

*a*) ऋ 1·116·12. —*b*) ऋ 1·38·14 मिमीहि श्लोकमास्ये पर्जन्य इव ततनः; ऋ 6·38·2 घोषादिन्द्रस्य तन्यति ब्रुवाणः; 8·21·18 पर्जन्य इव ततनद्धि वृष्ट्या.

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत्[a]—
आथर्वणायाश्विनौ दधीचेऽश्व्यꣳ शिरः प्रत्यैरयतम् ।
स वां मधु प्र वोचदृतायन् त्वाष्ट्रं यद्दस्रावपिकक्ष्यं वामिति ॥ १७ ॥

*a*) ऋ 1·117·22.

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत्—
पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः ।
पुरः स पक्षी[b] भूत्वा पुरः पुरुष आविशदिति ॥

स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः । नैनेन किंचनानावृतम् । नैनेन किंचनासंवृतम् ॥ १८ ॥

*a*) Source? —*b*) तैब्रा 3·12·9·7 हिरण्मयः शकुनिर्ब्रह्म नाम. —*c*) छां 6·3·3; ऐ 1·3·12; 3·3; मुं 2·1·7.

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत्—
रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ।
इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेति ॥

अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च । तदेतद्ब्रह्मा[b]पूर्वमनपरमनन्तरमबाह्यम् । अयमात्मा ब्रह्म सर्वानुभूः । इत्यनुशासनम् ॥ १९ ॥

*a*) ऋ 6·47·18. —*b*) Cp बृ 3·8·8; 4·2·4; छां 7·25; मै 6·17. —*c*) तैब्रा 3·12·9·7 नावेदविन्मनुते तं बृहन्तं सर्वानुभूमात्मानं संपराये.

॥ इति पञ्चमं ब्राह्मणम् ॥

---

अथ वंशः । पौतिमाष्यो गौपवनात् । गौपवनः पौतिमाष्यात् । पौतिमाष्यो गौपवनात् । गौपवनः कौशिकात् । कौशिकः कौण्डिन्यात् । कौण्डिन्यः शाण्डिल्यात् । शाण्डिल्यः कौशिकाच्च गौतमाच्च । गौतमः— ॥ १ ॥

आग्निवेश्यात् । आग्निवेश्यः शाण्डिल्याच्चानभिम्लाताच्च । अनभिम्लात आनभिम्लातात् । आनभिम्लात आनभिम्लातात् । आनभिम्लातो गौतमात् । गौतमः सैतवप्राचीनयोग्याभ्याम् । सैतवप्राचीनयोग्यौ पाराशर्यात् । पाराशर्यो भारद्वाजात् । भारद्वाजो भारद्वाजाच्च गौतमाच्च । गौतमो भारद्वाजात् । भारद्वाजः पाराशर्यात् । पाराशर्यो वैजवापायनात् । वैजवापायनः कौशिकायनेः । कौशिकायनिः— ॥ २ ॥

घृतकौशिकात् । घृतकौशिकः पाराशर्यायणात् । पाराशर्यायणः पाराशर्यात् । पाराशर्यो जातूकर्ण्यात् । जातूकर्ण्य आसुरायणाच्च यास्काच्च । आसुरायणस्त्रैवणेः ।

त्रैवणिरौपजन्धनेः । औपजन्धनिरासुरेः । आसुरिर्भारद्वाजात् । भारद्वाज आत्रेयात् । आत्रेयो माण्टेः । माण्टिर्गौतमात् । गौतमो गौतमात् । गौतमो वात्स्यात् । वात्स्यः शाण्डिल्यात् । शाण्डिल्यः कैशोर्यात् काप्यात् । कैशोर्यः काप्यः कुमारहारितात् । कुमारहारितो गालवात् । गालवो विदर्भीकौण्डिन्यात् । विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवात् । वत्सनपाद्बाभ्रवः पथः सौभरात् । पन्थाः सौभरोऽयास्यादाङ्गिरसात् । अयास्य आङ्गिरस आभूतेस्त्वाष्ट्रात् । आभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्रात् । विश्वरूपस्त्वाष्ट्रोऽश्विभ्याम् । अश्विनौ दधीच आथर्वणात् । दध्यङ्ङाथर्वणोऽथर्वणो दैवात् । अथर्वा दैवो मृत्योः प्राध्वꣳसनात् । मृत्युः प्राध्वꣳसनः प्रध्वꣳसनात् । प्रध्वꣳसन एकर्षेः । एकर्षिर्विप्रचित्तेः । विप्रचित्तिर्व्यष्टेः । व्यष्टिः सनारोः । सनारुः सनातनात् । सनातनः सनगात् । सनगः परमेष्ठिनः । परमेष्ठी ब्रह्मणः । ब्रह्म स्वयंभु । ब्रह्मणे नमः ॥ ३ ॥

Proper names differ in the माध्यंदिन version of the वंश.

॥ इति षष्ठं ब्राह्मणम् ॥

॥ इति द्वितीयोऽध्यायः ॥

---

जनको[a] ह वैदेहो बहुदक्षिणेन यज्ञेनेजे । तत्र ह कुरुपञ्चालानां[b] ब्राह्मणा अभिसमेता बभूवुः । तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव — कः स्विदेषां ब्राह्मणानामनूचानतम इति । स ह गवाꣳ सहस्रमवरुरोध । दशदश पादा एकैकस्याः शृङ्गयोराबद्धा बभूवुः ॥ १ ॥

Cp in general शब्रा 10·6·1; जैब्रा 2·76f; छां 1·10–11; 5·11–24.

*a*) शब्रा 11·6·2·1 जनको ह वै वैदेहो ब्राह्मणैर्धावयाद्भिः समाजगाम श्वेतकेतुनारुणेयेन सोमशुष्मिणा सात्ययज्ञिना याज्ञवल्क्येन । तान् होवाच—कथं कथं अग्निहोत्रं जुहुथेति; बृ 2·1·1; 5·14·8. —*b*) जैब्रा 2·76 कुरुपञ्चालानां ब्राह्मणा अभिसमाजग्मुः; बृ 3·9·20; कौ 4·1; जै 3·30·6; 4·6·2. —*c*) ऋ 10·75·1 प्र सप्तसप्त त्रेधा हि चक्रमुः; 10·55·3 पञ्च देवान् ऋतुशः सप्तसप्त; 3·55·18 षोळ्हा युक्ताः पञ्चपञ्चा वहन्ति.

तान् होवाच—ब्राह्मणा भगवन्तो यो वो[a] ब्रह्मिष्ठः स एता गा उदजतामिति[b] । ते ह ब्राह्मणा न दधृषुः । अथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाच[c] — एताः सोम्योदज सामश्रवा३ इति । ता होदाचकार[d] । ते ह ब्राह्मणाश्चुक्रुधुः — कथं[1] नो ब्रह्मिष्ठो ब्रुवीतेति । अथ ह जनकस्य वैदेहस्य होताऽश्वलो बभूव । स हैनं पप्रच्छ — त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ इति । स होवाच — नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयꣳ स्म इति । तꣳ ह तत एव प्रष्टुं दध्रे होताऽश्वलः ॥ २ ॥

1 ) माध्यंदिन adds नु after कथम्.

*a* ) तैसं 2·6·8·7 नहि ब्राह्मणस्योदरं किञ्चन हिनस्ति बृहस्पतेर्ब्रह्मणेति स हि ब्रह्मिष्ठः; प्र 3·2; comparative ब्रह्मीयान् : तैसं 2·5·8·3 नृमेधश्च परुच्छेपश्च ब्रह्मवाद्यमवदेताम्—अस्मिन् दारावार्द्रे अग्निं जनयाव—यतरो नौ ब्रह्मीयान् इति ब्रह्मवाद्यमवदेताम्. —*b* ) बृ 3·7·1 ब्रह्मगवीरुदजसे; cp प 3·3·69 समुदोरजः पशुषु. —*c* ) छां 4·3·5; 4·4·5; 8·15·1. —*d* ) ऋ 10·67·4 बृहस्पतिस्तमसि ज्योतिरिच्छन् उदुस्रा आकर्वि हि तिस्र आवः.

याज्ञवल्क्येति होवाच — यदिदꣳ सर्वं मृत्युनाऽऽप्तꣳ सर्वं मृत्युनाऽभिपन्नं केन यजमानो मृत्योराप्तिमतिमुच्यत इति । होत्रर्त्विजाऽग्निना वाचा । वाग् वै यज्ञस्य होता । तद्येयं वाक् सोऽयमग्निः । स होता स[1] मुक्तिः साऽतिमुक्तिः ॥ ३ ॥

In general cp बृ 3·1·3–6 with छां 3·13·1–6; छां 5·19–23; तै 1·7.

1 ) v. l. सा.

*a* ) छां 4·16·2 वाचा होताऽध्वर्युरुद्गाता अन्यतराम्.

याज्ञवल्क्येति होवाच — यदिदꣳ सर्वमहोरात्राभ्यामाप्तꣳ सर्वमहोरात्राभ्यामभिपन्नं केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत इति । अध्वर्युणर्त्विजा चक्षुषादित्येन । चक्षुर्वै यज्ञस्याध्वर्युः । तद्यदिदं चक्षुः सोऽसावादित्यः । सोऽध्वर्युः स मुक्तिः सातिमुक्तिः ॥ ४ ॥

याज्ञवल्क्येति होवाच — यदिदꣳ सर्वं पूर्वपक्षापरपक्षाभ्यामाप्तꣳ सर्वं पूर्वपक्षापरपक्षाभ्यामभिपन्नं केन यजमानः पूर्वपक्षापरपक्षयोराप्तिमतिमुच्यत इति । [1]उद्गात्रर्त्विजा वायुना प्राणेन । प्राणो वै यज्ञस्योद्गाता । तद्योऽयं प्राणः स वायुः स उद्गाता । स मुक्तिः साऽतिमुक्तिः ॥ ५ ॥

1 ) माध्यंदिन changes the order of उद्गाता and ब्रह्मा, काण्व practice is borne out by ऋ 10·71·11 ऋचां त्वः...गायत्रं त्वः...ब्रह्मा त्वः...यज्ञस्य मात्राम् .. उ त्वः.

याज्ञवल्क्येति होवाच — यदिदमन्तरिक्षमनारम्बणमिव[a] केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमत इति । ब्रह्मणर्त्विजा[b] मनसा[b] चन्द्रेण । मनो वै यज्ञस्य ब्रह्मा । तद्यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा स मुक्तिः साऽतिमुक्तिरित्यतिमोक्षाः[c] । अथ संपदः ॥ ६ ॥

*a* ) छां 2·9·4 तान्यन्तरिक्षेऽनारम्बणानि. —*b* ) छां 4·16·2. —*c* ) बृ 3·1·3; के 1·2.

याज्ञवल्क्येति होवाच—कतिभिरयमद्यर्ग्भिर्होतास्मिन् यज्ञे करिष्यतीति। तिसृभिरिति। कतमास्तास्तिस्र इति। पुरोनुवाक्या च याज्या च शस्यैव तृतीया। किं ताभिर्जयतीति। [1]यत्किंचेदं प्राणभृदिति ॥ ७ ॥

1) माध्यंदिन reads पृथिवीलोकमेव पुरोनुवाक्यया जयति, अन्तरिक्षलोकं याज्यया, द्युलोकं शस्यया.

*a*) वासं 20·12 पुरोनुवाक्या याज्याभिः, याज्या वषट्कारैः; ऐब्रा 1·4 आग्नावैष्णवस्य हविषो याज्यानुवाक्ये भवतः.

याज्ञवल्क्येति होवाच—कत्ययमद्याध्वर्युरस्मिन् यज्ञ आहुतीर्होष्यतीति। तिस्र इति। कतमास्तास्तिस्र इति। या हुता उज्ज्वलन्ति या हुता [1]अतिनेदन्ते या हुता अधिशेरते। किं ताभिर्जयतीति। या हुता उज्ज्वलन्ति देवलोकमेव ताभिर्जयति। दीप्यत इव हि देवलोकः। या हुता अतिनेदन्ते पितृलोकमेव ताभिर्जयति। अतीव हि [2]पितृलोकः। या हुता अधिशेरते [2]मनुष्यलोकमेव ताभिर्जयति। अध एव हि मनुष्यलोकः ॥ ८ ॥

1) माध्यं reads अतिनेदन्ति. —2) पितृलोक and मनुष्यलोक interchanged in माध्यंदिन.

*a*) तैसं 1·6·8·1 तदाहुरति वा एता वर्त्रं नेदन्ति, अति वाचं मनो वावैता नातिनेदन्तीति; ऐब्रा 6·32 छन्दसां वै षष्ठेनाह्नाप्तानां रसोऽत्यनेदत्.

याज्ञवल्क्येति होवाच—कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गो-[1]पायतीति। एकयेति। कतमा सैकेति। मन एवेति। अनन्तं वै मनोऽनन्ता विश्वे देवाः। अनन्तमेव स तेन लोकं जयति ॥ ९ ॥

1) माध्यंदिन reads गोपायिष्यतीति.

याज्ञवल्क्येति होवाच—कत्ययमद्योद्गातास्मिन् यज्ञे स्तोत्रियाः स्तोष्यतीति। तिस्र इति। कतमास्तास्तिस्र इति। पुरोनुवाक्या च याज्या च शस्यैव [1]तृतीया। कतमास्ताः। या अध्यात्ममिति। प्राण एव पुरोनुवाक्याऽपानो याज्या व्यानः शस्या। किं ताभिर्जयतीति। [2]पृथिवीलोकमेव पुरोनुवाक्यया जयत्यन्तरिक्षलोकं याज्यया द्युलोकꣳ [2]शस्यया। ततो ह होताऽश्वल उपरराम ॥ १० ॥

1) माध्यंदिन adds, after तृतीया, इत्यधिदेवतम्। अथाध्यात्मम्. —2) माध्यंदिन substitutes यत्किञ्चेदं प्राणभृदिति for this.

॥ इति प्रथमं ब्राह्मणम् ॥

अथ हैनं जारत्कारव आर्तभागः पप्रच्छ । याज्ञवल्क्येति होवाच कति ग्रहाः[a] कत्यतिग्रहा[b] इति । अष्टौ[c] ग्रहा अष्टावतिग्रहा इति[1] । ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे त इति ॥ १ ॥

1 ) Omitted by माध्यंदिन.

*a* ) छां 7·26·2 ( ग्रह = ग्रंथि ); क 6·15. —*b* ) अतिग्रह is the same as अतिग्राह in the following paragraphs; पा 5·4·46 अतिग्रहाव्यथनक्षेपेषु... —*c* ) Ten indriyas, cp बृ 2·4·11.

प्राणो वै ग्रहः । सोऽपानेना[1]तिग्राहेण गृहीतः । अपानेन[2] हि गन्धाञ्जिघ्रति ॥ २ ॥

1 ) माध्यंदिन reads गन्धेन. —2 ) माध्यंदिन reads प्राणेन. Cp शब्रा 10·5·2·15 न प्राणेन गन्धं विजानाति.

वाग्वै[1] ग्रहः । स नाम्नाऽतिग्राहेण गृहीतः । वाचा हि नामान्यभिवदति ॥ ३ ॥

1 ) माध्यंदिन interchanges 3·2·3 with 3·2·4.

जिह्वा वै ग्रहः । स रसेनातिग्राहेण गृहीतः । जिह्वया हि रसान् विजानाति ॥ ४ ॥

चक्षुर्वै ग्रहः । स रूपेणातिग्राहेण गृहीतः । चक्षुषा हि रूपाणि पश्यति ॥ ५ ॥

श्रोत्रं वै ग्रहः । स शब्देनातिग्राहेण गृहीतः । श्रोत्रेण हि शब्दाञ्शृणोति ॥ ६ ॥

मनो वै ग्रहः । स कामेनातिग्राहेण गृहीतः । मनसा हि कामान् कामयते ॥ ७ ॥

हस्तौ वै ग्रहः । स कर्मणाऽतिग्राहेण गृहीतः । हस्ताभ्याꣳ हि कर्म करोति ॥ ८ ॥

त्वग्वै ग्रहः । स स्पर्शेनातिग्राहेण गृहीतः । त्वचा हि स्पर्शान् वेदयते । इत्येते[1]ऽष्टौ ग्रहा अष्टावतिग्रहाः ॥ ९ ॥

1 ) माध्यंदिन drops एते.

याज्ञवल्क्येति होवाच—यदिदꣳ सर्वं मृत्योरन्नं का स्वित् सा देवता यस्या मृत्युरन्नमिति । अग्निर्वै मृत्युः सोऽपामन्नम् । अप पुनर्मृत्युं जयति[1] ॥ १० ॥

1 ) माध्यंदिन adds after this य एवं वेद as in बृ 1·2·7 and 3·3·2.

*a* ) शब्रा 10·6·1·4ff; बृ 1·2·7.

याज्ञवल्क्येति[1] होवाच — यत्रायं पुरुषो म्रियत उदस्मात् प्राणाः क्रामन्त्याहो३[2] नेति । नेति होवाच याज्ञवल्क्यः । अत्रैव[3] समवनीयन्ते[4] । स उच्छ्वयति । आध्मायति । आध्मातो मृतः शेते ॥ ११ ॥

1) The कण्डिकाs 11 & 12 interchange places in माध्यंदिन. —2 ) The प्लुत mark absent in माध्यंदिन. —3 ) माध्यंदिन has, before अत्रैव, न तस्मात् प्राणा उत्क्रामन्ति. —4 ) माध्यंदिन adds after this ब्रह्मैव सन् ब्रह्माप्येति. Contrast this with बृ 4·4·2 तमुत्क्रामन्तं प्राणोऽनूत्क्रामति.

याज्ञवल्क्येति होवाच — यत्रायं पुरुषो म्रियते किमेनं न जहातीति । नामेति[a] । अनन्तं वै नामानन्ता विश्वे देवाः । अनन्तमेव स तेन लोकं जयति ॥ १२ ॥

*a* ) बृ 1·6·1; छां 7·1·3.

याज्ञवल्क्येति होवाच—यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं[a] प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीꣳ शरीरमाकाशमात्मौषधीर्लोमानि[b] वनस्पतीन्केशा अप्सु लोहितं च रेतश्च निधीयते क्वायं तदा पुरुषो भवतीति । आहर सोम्य[1] हस्तमार्तभाग[2] । आवामेवैतस्य[3c] वेदिष्यावो[4] न नावेतत् सजन इति । तौ होत्क्रम्य मन्त्रयांचक्राते । तौ ह यदूचतुः कर्म[de] हैव तदूचतुः । अथ[5] यत् प्रशशꣳसतुः कर्म हैव तत् प्रशशꣳसतुः । पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति । ततो ह जारत्कारव आर्तभाग उपरराम ॥ १३ ॥

1) माध्यंदिन reads सौम्य. —2 ) माध्यंदिन adds इति होवाच. —3 ) माध्यंदिन reads आवम्. Cp शब्रा 4·1·5·10 केनावमसर्वौ स्वः; जैब्रा 1·145 आवञ्जु निधनाभ्यां विवहावहा इति; cp युवम् in ऋ. —4 ) माध्यंदिन reads एतत् for एतस्य. —5 ) माध्यंदिन reads अथ ह यत्.

*a* ) ई 17. —*b* ) Cp Buddhist extinction of individuality. —*c* ) आवम्... वेदिष्यावः; cp अ 4·16·2 द्वौ संनिषद्य यन्मन्त्रयेते राजा तद्वेद वरुणस्तृतीयः; काशिका on पा 5·4·7 अषडक्षीणो मन्त्रः । यो द्वाभ्यामेव क्रियते न बहुभिः. —*d* ) Origin of the Buddhist theory of *kamma*. —*e* ) Upaniṣadic theory of good and evil ( based on *karman* ); cp ऋ 10·117·9 यमयोश्चित् न समा वीर्याणि; बृ 4·4·3, 5 यथाकारी यथाचारी तथा भवति; छां 5·10·5; क 3·7 संसारं चाधिगच्छति; श्वे 6·16 संसारमोक्षस्थितिबन्धहेतुः; मै 1·4; गी 6·40 न हि कल्याणकृत्...दुर्गतिं तात गच्छति; 6·43 बुद्धिसंयोगं लभते पौर्वदेहिकम्.

॥ इति द्वितीयं ब्राह्मणम् ॥

अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ — याज्ञवल्क्येति होवाच — मद्रेषु चरकाः पर्यव्रजाम। ते पतञ्चलस्य काप्यस्य गृहानैम। तस्यासीद् दुहिता गन्धर्वगृहीता। तमपृच्छाम कोऽसीति। सोऽब्रवीत् सुधन्वाऽऽङ्गिरस इति। तं यदा लोकानामन्तानपृच्छाम। अथैनमब्रूम—क्व पारिक्षिता[b] अभवान्निति[1]। क्व पारिक्षिता अभवन्। स[2] त्वा पृच्छामि याज्ञवल्क्य। क्व पारिक्षिता अभवन्निति ॥ १ ॥

1) माध्यंदिन transfers इति after the repeated sentence (क्व पारिक्षिता अभवन्) and rightly. —2) माध्यंदिन substitutes तत् for सः; बृ 3·3 and 7 appear to be two versions of the same original; cp cosmography in बृ 3·3 with that in छां 3·19.

*a*) बृ 3·7·1. —*b*) ऐब्रा 8·21 तुरः कावषेयो जनमेजयं पारिक्षितमभिषिषेच.

स होवाच — उवाच वै सः[1]। अगच्छन् वै ते तद्[2]यत्राश्वमेधयाजिनो गच्छन्तीति। क्व न्वश्वमेधयाजिनो गच्छन्तीति। द्वात्रि[a]ंशतं वै देवरथाह्न्यान्ययं लोकः। तꣳ सम[3]न्तं पृथिवी द्विस्तावत् पर्येति। ताꣳ सम[4]न्तं पृथिवीं द्विस्तावत् समुद्रः पर्येति। तद्यावती क्षुरस्य धा[b]रा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाशस्तानिन्द्रः सुपर्णो भूत्वा वायवे[c] प्रायच्छत्। तान् वायुरात्मनि धित्वा तत्रागमयद्यत्राश्वमेधया[5]जिनोऽभवन्निति। एवमिव वै स वायुमेव प्रशशꣳस तस्माद्वा[d]युरेव व्यष्टिर्वायुः समष्टिः। अप पुनर्मृत्युं जयति[6] य एवं वेद। ततो ह भुज्युर्लाह्यायनिरुपरराम ॥ २ ॥

1) माध्यंदिन reads तत् after सः. —2) माध्यंदिन reads तत्र for तत्. —3) माध्यंदिन reads समन्तं लोकं द्विस्तावत् पृथिवी. —4) माध्यंदिन drops समन्तम्. —5) माध्यंदिन substitutes पारिक्षिताः for अश्वमेधयाजिनः. —6) माध्यंदिन reads सर्वमायुरेति after जयति.

*a*) Three concentric circles having each the diameters 32, 128 and 256 units make altogether the diameter 416 units.

The calculations are to be made thus:—

अयं लोकः has the diameter of 32 (i. e. the radius is 16); beyond this the पृथिवी is double the diameter of अयं लोकः i. e. $2 \times 32 = 64$ (i. e. the diameter of the पृथिवी would be $2 \times (16 + 64) = 160$); beyond the पृथिवी the समुद्र extends twice the size of पृथिवी i. e. $2 \times 64 = 128$; so the diameter of the world will be $2 \times (16 + 64 + 128) = 416$ units.

—*b*) क 3·14. —*c*) बृ 5·10 (स वायुमागच्छत्); 5·15; ई 15-18. —*d*) बृ 3·7·2 (वायुर्वै गौतम तत् सूत्रम्).

॥ इति तृतीयं ब्राह्मणम् ॥

अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ[1]। याज्ञवल्क्येति होवाच — यत् साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेति। एष त आत्मा सर्वान्तरः। यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः। योऽपानेनापानीति[2][b] स त आत्मा सर्वान्तरः। यो व्यानेन व्यानीति[2] स त आत्मा सर्वान्तरः। य उदानेनोदानिति[2] स त आत्मा सर्वान्तरः[3]। एष त आत्मा सर्वान्तरः॥ १ ॥

1) माध्यंदिन interchanges बृ 3·4 and बृ 3·5. —2) माध्यंदिन reads (correctly) अपानिति, व्यनिति and उदनिति. —3) माध्यंदिन adds after this यः समानेन समनिति सः; स instead of एष above.

*a*) बृ 3·5.

स होवाचोषस्तश्चाक्रायणः — यथा[1] विब्रूयादसौ गौरसावश्व इत्येवमेवैतद् व्यपदिष्टं भवति। यदेव[2] साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेति। एष त आत्मा सर्वान्तरः। कतमो याज्ञवल्क्य सर्वान्तरः। न दृष्टेर्द्रष्टारं[b] पश्येः। न श्रुतेः श्रोतारꣳ शृणुयाः। न मतेर्मन्तारं मन्वीथाः। न विज्ञातेर्विज्ञातारं विजानीयाः। एष त आत्मा सर्वान्तरः। अतोऽन्यदार्तम्[c]। ततो होषस्तश्चाक्रायण उपरराम॥ २ ॥

1) माध्यंदिन reads यथा वै ब्रूयात् instead of यथा विब्रूयात्. —2) Omitted in माध्यंदिन.

*a*) बृ 2·4·14; 4·2·4; छां 6·8-16. —*b*) बृ 3·7·23; 3 8·11; 4·4·2. —*c*) Therefore आर्तम् means शोकम्, मोहम्, जराम् and मृत्युम्. Cp बृ 3·5·1; 3·7·23.

॥ इति चतुर्थं ब्राह्मणम् ॥

---

अथ हैनं कहोलः[1] कौषीतकेयः पप्रच्छ — याज्ञवल्क्येति होवाच। यदेव[2] साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेति। एष त आत्मा सर्वान्तरः। कतमो याज्ञवल्क्य सर्वान्तरः। यो[b]ऽशनायापिपासे शोकं[c] मोहं जरां मृत्युमत्येति[b]। एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ[d] भिक्षाचर्यं चरन्ति। या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणा। उभे ह्येते एषणे एव भवतः। तस्माद्[3] ब्राह्मणः पाण्डित्यं[e] निर्विद्य बाल्येन[f] तिष्ठासेत्। बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः। अमौनं च मौनं च निर्विद्याथ ब्राह्मणः। स ब्राह्मणः

केन स्याद् येन स्यात् तेनेदृश एवं[4]। [5]अतोऽन्यदार्तम्[5] । ततो ह कहोलः कौषीतकेय उपरराम ॥ १ ॥

1 ) माध्यंदिन reads कहोडः. —2 ) एव dropped in माध्यंदिन. —3 ) माध्यंदिन reads पण्डितः. —4 ) माध्यंदिन adds भवति after एव. —5 ) Dropped in माध्यंदिन, which reads य एवं वेद instead.

*a* ) बृ 3·4·1. —*b* ) Basis of छां 8·1·5 एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः and of छां 8·5·1. —*c* ) ई 7. —*d* ) बृ 4·4·22; गौका 1·9 आप्तकामस्य का स्पृहा. —*e* ) For explanation of एषणा ( काम ), see बृ 1·4·17 ( सोऽकामयत…नेच्छंश्चन अतो भूयो विन्देत् ); एषणा in पा 8·1·43 नन्वित्यनुज्ञैषणायाम्. —*f* ) Cp the pairs पाक and धीर in ऋ 1·164·21 स मा धीरः पाकमत्रा विवेश; बाल and धीर in क 4·2 पराचः कामाननुयन्ति बालाः…अथ धीरा अमृतत्वं विदित्वा…; बाल and पण्डित in गी 5·4 सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ; Matthew 18·3 " Become as little children. " बृ 4·4·21; तै 2·4; क 2·23; मुं 1·1·4-5. —*g* ) बृ 3·8·10 अथ य एतदक्षरं गार्गि विदित्वास्माल्लोकात् प्रैति स ब्राह्मणः; छां 2·23·1; 4·1·7.

॥ इति पञ्चमं ब्राह्मणम् ॥

---

अथ हैनं गार्गी वाचक्नवी पप्रच्छ — याज्ञवल्क्येति होवाच । यदिदꣳ सर्वमप्स्वोतं[a] च प्रोतं[a] च कस्मिन्नु खल्वाप[1] ओताश्च प्रोताश्चेति । वायौ गार्गीति । कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेति[2] । अन्तरिक्षलोकेषु गार्गीति । कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति । गन्धर्वलोकेषु[3] गार्गीति । कस्मिन्नु खलु गन्धर्वलोका[4] ओताश्च प्रोताश्चेति । आदित्यलोकेषु गार्गीति । कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति । चन्द्रलोकेषु गार्गीति । कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति । नक्षत्रलोकेषु गार्गीति । कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति । देवलोकेषु गार्गीति । कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेति । इन्द्रलोकेषु[5] गार्गीति । कस्मिन्नु खल्विन्द्रलोका[6] ओताश्च प्रोताश्चेति । प्रजापतिलोकेषु गार्गीति । कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति । ब्रह्मलोकेषु गार्गीति । कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति । स होवाच — गार्गि माऽतिप्राक्षीः । मा ते मूर्धा व्यपप्तत्[7] । [b]अनतिप्रश्न्यां[8] वै देवतामतिपृच्छसि[b][8] । गार्गि माऽतिप्राक्षीरिति । ततो ह गार्गी वाचक्नव्युपरराम ॥ १ ॥

1 ) माध्यंदिन drops खलु. —2 ) माध्यंदिन reads आकाश एव गार्गीति । कस्मिन्नु आकाश ओतश्च प्रोतश्चेति after this. —3 ) माध्यंदिन reads द्यौर्लोकेषु. —4 ) द्यौर्लोकाः

( माध्यंदिन ). —5 ) गंधर्वलोकेषु ( माध्यंदिन ). —6 ) गन्धर्वलोकाः ( माध्यंदिन ). —7 ) Böhtlingk reads विपप्तत्. —8 ) माध्यंदिन reads अनतिप्रश्न्याः देवताः; बृ 3·6 and 3·8 appear to be two versions of the same original.

*a* ) अ 10·8·37 यस्मिन्नोता इमाः प्रजाः; शब्रा 13·3·4·2 मणिरिव सूत्र ओतानि भविष्यन्ति, सूत्रमिव वा मणाविति; तांब्रा 20·16·6 यथा वा अदो मणौ सूत्रमोतम्; मुं 2·2·5; 3·1·9; मै 6·3. —*b* ) जै 2·77 अनतिप्रश्न्यां वै मा देवतामत्यप्राक्षीः.

## ॥ इति षष्ठं ब्राह्मणम् ॥

---

अथ हैनमुद्दालक आरुणिः पप्रच्छ — याज्ञवल्क्येति होवाच । मद्रेष्ववसाम पतञ्चलस्य काप्यस्य गृहेषु यज्ञमधीयानाः । तस्यासीद्भार्या गन्धर्वगृहीता । तमपृच्छाम— कोऽसीति । सोऽब्रवीत् कबन्ध आथर्वण इति । सोऽब्रवीत् पतञ्चलं काप्यं याज्ञिकांश्च[a] — वेत्थ नु त्वं काप्य तत् सूत्रं[b] येनायं[1] च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्तीति । सोऽब्रवीत् पतञ्चलः काप्यो नाहं तद्भगवन् वेदेति । सोऽब्रवीत् पतञ्चलं काप्यं याज्ञिकांश्च । वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमं च लोकं परं च लोकं सर्वाणि च भूतानि यो[2]ऽन्तरो यमयति । सोऽब्रवीत् पतञ्चलः काप्यो नाहं तं भगवन् वेदेति । सोऽब्रवीत् पतञ्चलं काप्यं याज्ञिकांश्च । यो वै तत् काप्य सूत्रं विद्यात् तं चान्तर्यामिणमिति[3] । स ब्रह्मवित् स लोकवित् स देववित् स वेदवित्[4] स आत्मवित् स सर्ववित् । इति तेभ्योऽब्रवीत् । तदहं वेद । तच्चेत् त्वं याज्ञवल्क्य सूत्रमविद्वांस्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे[d] मूर्धा ते विपतिष्यति । वेद वा अहं गौतम तत् सूत्रं तं चान्तर्यामिणमिति । यो वा इदं कश्चिद् ब्रूयाद्वेद वेदेति यथा वेत्थ तथा ब्रूहीति ॥ १ ॥

Cp in general बृ 3·3 and 3·7; they appear to be two versions of the same original.

1 ) माध्यंदिन reads यस्मिन्, but येन is justified by वायुना in बृ 3·7·2. —2 ) माध्यंदिन omits यः. —3 ) Dropped in माध्यंदिन. —4 ) माध्यंदिन adds after वेदवित्— स यज्ञवित्.

*a* ) पा 4·3·129 छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः. —*b* ) अ 10·8·38 सूत्रस्य सूत्रं यो विद्यात्. —*c* ) बृ 3·8·9 एतस्य वा अक्षरस्य प्रशासने.... —*d* ) बृ 3·1·2 ( स एता गा उदजताम् ); पा 3·3·69 समुदोरजः पशुषु.

स होवाच — वायुर्वै गौतम तत् सूत्रम् । वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति । तस्माद्वै गौतम पुरुषं प्रेतमाहुर्व्यस्रꣳसिषतास्याङ्गानीति । वायुना हि गौतम सूत्रेण संदृब्धानि भवन्तीति । एवमेवैतद्याज्ञवल्क्य । अन्तर्यामिणं ब्रूहीति ॥ २ ॥

1 ) माध्यंदिन drops स होवाच.

*a* ) छां 4·3·4; 4·15·4; तै 1·1; कौ 2·1; प्र 2·13.

यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष[1] त आत्माऽन्तर्याम्यमृतः[b] ॥ ३ ॥

Cp बृ 3·7·3–14 with बृ 2·5·1-10.

1 ) स instead of एष ( माध्यंदिन ).

*a* ) बाष्कल 12 विश्वं विचक्षे यमयन्नभीकः. —*b* ) बृ 4·4·22 ( सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः ); मां 6 ( एष सर्वेश्वरः ..एषोऽन्तर्यामी.. ).

योऽप्सु[a] तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं योऽपोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ४ ॥

*a* ) बृ 2·1·8 ( अप्सु पुरुषः ).

योऽग्नौ[a] तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ५ ॥

*a* ) बृ 2·1·7 ( अग्नौ पुरुषः ).

योऽन्तरिक्षे[1][a] तिष्ठन्नन्तरिक्षादन्तरो यमन्तरिक्षं न वेद यस्यान्तरिक्षꣳ शरीरं योऽन्तरिक्षमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ६ ॥

1 ) माध्यंदिन reads आकाश for अन्तरिक्ष.

*a* ) बृ 2·1·5 ( आकाशे पुरुषः ).

यो वायौ[a] तिष्ठन् वायोरन्तरो यं वायुर्न वेद यस्य वायुः शरीरं यो वायुमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ७ ॥

*a* ) बृ 2·1·6 ( वायौ पुरुषः ).

यो[1] दिवि तिष्ठन् दिवोन्तरो यं द्यौर्न वेद यस्य द्यौः शरीरं यो दिवमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ८ ॥

1 ) The whole कण्डिका is absent in माध्यंदिन.

य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ९ ॥

यो[1] दिक्षु तिष्ठन् दिग्भ्योऽन्तरो यं दिशो न विदुर्यस्य दिशः शरीरं यो दिशोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १० ॥

1 ) माध्यंदिन interchanges the 10th and 11th कण्डिकाs.

यश्चन्द्रतारके तिष्ठꣳश्चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद यस्य चन्द्रतारकꣳ शरीरं यश्चन्द्रतारकमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ११ ॥

य[1] आकाशे[a] तिष्ठन्नाकाशादन्तरो यमाकाशो न वेद यस्याकाशः शरीरं य आकाशमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १२ ॥

1 ) For the three कण्डिकाs ( य आकाशे; यस्तमसि, यस्तेजसि ), माध्यंदिन substitutes ( यो विद्युति, यः स्तनयित्नौ, यः सर्वेषु लोकेषु the last preceded by अथाधिलोकम् ).

*a* ) बृ 3·8·11; 4·4·17; 4·4·20.

यस्तमसि तिष्ठꣳस्तमसोऽन्तरो यं तमो न वेद यस्य तमः शरीरं यस्तमोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १३ ॥

यस्तेजसि तिष्ठꣳस्तेजसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ इत्यधिदैवतम् ॥ १४ ॥[1]

1 ) माध्यंदिन adds two more कण्डिकाs—यः सर्वेषु वेदेषु, यः सर्वेषु यज्ञेषु preceded by अथाधिवेदम् and अथाधियज्ञम् respectively.

अथाधिभूतम् । यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यꣳ सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ इत्यधिभूतम् ॥ १५ ॥

अथाध्यात्मम् । यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १६ ॥

यो वाचि तिष्ठन् वाचोऽन्तरो यं वाङ् न वेद यस्य वाक् शरीरं यो वाचमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १७ ॥

यश्चक्षुषि तिष्ठꣳश्चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १८ ॥

यः श्रोत्रे तिष्ठञ्छ्रोत्रादन्तरो यꣳ श्रोत्रं न वेद यस्य श्रोत्रं शरीरं यः श्रोत्रमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १९ ॥

यो मनसि तिष्ठन् मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ २० ॥

यस्त्वचि[1] तिष्ठꣳस्त्वचोऽन्तरो यं त्वङ् न वेद यस्य त्वक् शरीरं यस्त्वचमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ २१ ॥

1 ) माध्यंदिन adds between कण्डिकाs 21 and 22 two more कण्डिकाs ( यस्तेजसि..., यस्तमसि ).

यो विज्ञाने[1] तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ २२ ॥

1 ) माध्यंदिन substitutes आत्मन् for विज्ञान.

यो रेतसि तिष्ठन् रेतसोऽन्तरो यꣳ रेतो न वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता । नान्योऽतो[1]ऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता । एष त आत्माऽन्तर्याम्यमृतः । अतोऽन्यदार्तम् । ततो होद्दालक आरुणिरुपरराम ॥ २३ ॥

1 ) माध्यंदिन drops अतः everywhere.

॥ इति सप्तमं ब्राह्मणम् ॥

---

अथ ह वाचक्नव्युवाच — ब्राह्मणा भगवन्तो हन्ताहमिमं[1] द्वौ प्रश्नौ प्रक्ष्यामि । तौ चेन् मे वक्ष्यति[2] । न वै जातु युष्माकमिमं कश्चिद् ब्रह्मोद्यं[a] जेतेति[3] । पृच्छ गार्गीति ॥ १ ॥

Cp in general बृ 3·8 with 3·6. They appear to be two versions of the same original.

1 ) माध्यंदिन adds याज्ञवल्क्यम् after इमम्. —2 ) विवक्ष्यति ( माध्यंदिन ). —3 ) माध्यंदिन adds—तौ चेन्मे न विवक्ष्यति मूर्धास्य विपतिष्यतीति. Cp बृ 3·9·26.

*a* ) ऐब्रा 2·25 अथ ब्रह्मोद्यं वदन्ति अग्निर्गृहपतिरिति; शब्रा 4·6·9·20 अथ वाकोवाक्ये ब्रह्मोद्यं वदन्ति; 11·4·1·2 हन्तैनं ब्रह्मोद्यमाह्वयामहै; जै 3·8·2 अथ ह स्म वै यः पुरा ब्रह्मवाद्यं वदति.

सा होवाच — अहं वै त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ[1] हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहं त्वा द्वाभ्यां प्रश्नाभ्यामुपोदस्थाम् । तौ मे ब्रूहीति । पृच्छ गार्गीति ॥ २ ॥

1) v. l. अधिव्याधिनौ.

सा होवाच — यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद् भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति ॥ ३ ॥

स होवाच — यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद् भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाशे तदोतं च प्रोतं चेति ॥ ४ ॥

सा होवाच — नमस्तेऽस्तु[1] याज्ञवल्क्य यो म एतं व्यवोचो[a]ऽपरस्मै धारयस्वेति । पृच्छ गार्गीति ॥ ५ ॥

1) माध्यंदिन drops अस्तु.

*a*) Cp विवक्ष्यति in बृ 3·8·1.

सा होवाच — यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद् भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति ॥ ६ ॥

स होवाच — यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद् भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं च प्रोतं चेति । कस्मिन्नु खल्वाकाश[1] ओतश्च प्रोतश्चेति ॥ ७ ॥

Cp in general बृ 3·8·3.

1) माध्यंदिन drops खलु.

स होवाच — एतद्वै तदक्षरं[a] गार्गि ब्राह्मणा अभिवदन्त्यस्थूलम[b]नण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गम[1]रसम[2]गन्धम[2]चक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखम[3]गात्रमनन्तरमबाह्यम् । न तदश्नाति[4] किंचन । न तदश्नाति कश्चन ॥ ८ ॥

1) माध्यंदिन adds अस्पर्शम् after असंगम्. —2) Order reversed in माध्यंदिन. —3) माध्यंदिन further adds after अमुखम्—अनाम, अगोत्रम्, अजरम्, अमरम्, अभयम्, अमृतम्, अरजः, अशब्दम्, अविवृतम्, असंवृतम्, अपूर्वम्, अनपरम्.— 4) माध्यंदिन reads अश्नोति.

*a*) बृ 2·5·19; मुं 1·1·5; क 3·15; ई 8. —*b*) मुं 1·1·6; ई 8.

एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ[1] विधृतौ तिष्ठतः। एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ[1] विधृते तिष्ठतः। एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा[2] मुहूर्ता[2] अहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा इति[2] विधृतास्तिष्ठन्ति। एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दिशमनु[2]। एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो[3] मनुष्याः प्रशंसन्ति यजमानं देवा दर्वीं[4] पितरोऽन्वायत्ताः ॥ ९ ॥

1 ) These interchange places in माध्यंदिन. —2 ) Dropped in माध्यंदिन. —3 ) माध्यंदिन reads ददतम्. —4 ) दर्व्यम् ( माध्यंदिन ).

*a* ) ऋ 10·121·2 यस्य विश्व उपासते प्रशिषं यस्य देवाः; छां 5·3·7; ब्रसू 1·3·11.

यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते[1] तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति[2]। यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति, स कृपणः। अथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात् प्रैति, स ब्राह्मणः ॥ १० ॥

1 ) माध्यंदिन reads ददाति तपस्यति अपि instead of यजते तपस्तप्यते. —2 ) v. l. अन्तवानेवास्य स लोको भवति·

*a* ) Artificially induced penances here rated lower than sufferings of life and death, termed तपः as in बृ 5·11 ( एतद्वै परमं तपः... ) and बृ 4·4·22 ( तमेतं वेदानुवचनेन .. ). —*b* ) बृ 1·4·15 ( अन्ततः क्षीयत एव ). —*c* ) ऋ 10·99·9 कुत्साय शुष्णं कृपणे परादात्; 8·39·4 तत्तदग्निर्वयो दधे यथायथा कृपण्यति; ऐब्रा 7·13 सखा ह जाया कृपणं ह दुहिता ज्योतिर्ह पुत्रः...; शब्रा 11·4·2·9 अथ हैतत् कृपणं ... कृपणन् वा अयमध्वर्युरकत; जैब्रा 2·183 यस्त्वाव (तु+वाव) पुत्राणां कृपणतमो भवति स पितुर्हृदयमप्येति। कृपणतामिव एष न्येति; मनु 4·185 दुहिता कृपणं परम् ( an echo of ऐब्रा ); गी 2·49 कृपणाः फलहेतवः. —*d* ) गी 2·46 ब्राह्मणस्य विजानतः.

तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतꣳ श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ। नान्यदतो[1]ऽस्ति द्रष्टृ। नान्यदतो[1]ऽस्ति श्रोतृ। नान्यदतो[1]ऽस्ति मन्तृ। नान्यदतो[1]ऽस्ति विज्ञातृ। एतस्मिन्नु[2] खल्वक्षरे गार्ग्याकाश[2] ओतश्च प्रोतश्चेति ॥ ११ ॥

1 ) अतः omitted in माध्यंदिन. —2 ) माध्यंदिन reads : एतद्वै तदक्षरं गार्गि यस्मिन्.

*a* ) बृ 3·7·23; 4·3·23–31.

सा होवाच—ब्राह्मणा भगवन्तस्तदेव बहु मन्येध्वं[1] यदस्मान्नमस्कारेण मुच्येध्वम्[2] । न वै जातु युष्माकमिमं कश्चिद् ब्रह्मोद्यं जेतेति । ततो ह वाचक्नव्युपरराम ॥ १२ ॥

1) मन्यध्वम् ( माध्यंदिन )· —2 ) मुच्याध्वै ( माध्यंदिन ).

॥ इति अष्टमं ब्राह्मणम् ॥

---

अथ हैनं विदग्धः शाकल्यः पप्रच्छ — कति देवा याज्ञवल्क्येति । स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते । त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति । ओमिति होवाच । कत्येव देवा याज्ञवल्क्येति । त्रयस्त्रिंशदिति । ओमिति होवाच । कत्येव देवा याज्ञवल्क्येति । षडिति । ओमिति होवाच । कत्येव देवा याज्ञवल्क्येति । त्रय इति । ओमिति होवाच । कत्येव देवा याज्ञवल्क्येति । द्वाविति । ओमिति होवाच । कत्येव देवा याज्ञवल्क्येति । अध्यर्ध इति । ओमिति होवाच । कत्येव देवा याज्ञवल्क्येति । एक इति । ओमिति होवाच । कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ १ ॥

Cp in general शब्रा 11·6·3 and जैब्रा 2·76–77.

*a* ) ऋ 1·89·3 तान् पूर्वया निविदा हूमहे वयम्; 1·175·6 तामनु त्वा निविदं जोहवीमि; वासं 19·25 अर्धऋचैरुक्थानां रूप पदैराप्नोति निविदः; अ 5·26·1 प्रैषा यज्ञे निविदः स्वाहा; 11·7·19 चतुर्होतार आप्रियः चातुर्मास्यानि नीविदः.

स होवाच — महिमान एवैषामेते । त्रयस्त्रिंशत्त्वेव देवा इति । कतमे ते त्रयस्त्रिंशदिति । अष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति ॥ २ ॥

*a* ) शब्रा 11·6·3·5 त्रयस्त्रिंशौ; 4 5·7·2 द्यावापृथिवी त्रयस्त्रिंश्यौ.

कतमे वसव इति । अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसवः । एतेषु हीदं सर्वं वसु[1] हितमिति[2] तस्माद्वसव इति ॥ ३ ॥

1 ) Some Mss drop the vital word वसु. —2 ) माध्यंदिन drops इति and adds एते हीदं सर्वं वासयन्ते । तद्यदिदं सर्वं वासयन्ते. Cp छां 3·16·1.

कतमे रुद्रा इति । दशेमे पुरुषे प्राणा आत्मैकादशः । ते यदास्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति । तद्यद्रोदयन्ति तस्माद् रुद्रा इति ॥ ४ ॥

कतम आदित्या इति । द्वादश वै[1] मासाः संवत्सरस्यैत आदित्याः । एते हीदꣳ सर्वमाददाना यन्ति । ते[2] यदिदꣳ सर्वमाददाना यन्ति तस्मादादित्या इति ॥ ५ ॥

1 ) माध्यंदिन omits वै. —2 ) माध्यंदिन rightly reads तत् for ते.

कतम इन्द्रः कतमः प्रजापतिरिति । स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति । कतमः स्तनयित्नुरिति । अशनिरिति । कतमो यज्ञ इति । पशव इति ॥ ६ ॥

कतमे षडिति । अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चाऽऽदित्यश्च द्यौश्चैते षट्[1] । एते हीदꣳ[2] सर्वꣳ षडिति ॥ ७ ॥

1 ) माध्यंदिन adds इति after षट्. —2 ) माध्यंदिन reads ह्येवेदम्.

कतमे ते त्रयो देवा इति । इम एव त्रयो लोकाः । एषु हीमे सर्वे देवा इति । कतमौ तौ द्वौ देवा इति । अन्नं[a] चैव प्राणश्चेति । कतमोऽध्यर्ध[b] इति । योऽयं पवत इति ॥ ८ ॥

*a* ) बृ 5·12·1 अन्नं ब्रह्म...प्राणो ब्रह्म. —*b* ) मनु 9·117 एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्धं ततोऽनुजः; पा 5·1·28 अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्.

तदाहुर्यदयमेक इवैव[1] पवते । अथ कथमध्यर्ध इति । यदस्मिन्निदꣳ सर्वमध्यार्ध्नोत्तेनाध्यर्ध इति । कतम एको देव इति । प्राण[2] इति । स ब्रह्म[a] त्यदित्याचक्षते ॥ ९ ॥

1 ) माध्यंदिन drops इव. —2 ) माध्यंदिन omits प्राण इति.

*a* ) के 4·1 सा ब्रह्मेति होवाच.

पृथिव्येव यस्याऽऽयतनमग्निर्लोको[1] मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्याऽऽत्मनः परायणꣳ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्याऽऽत्मनः परायणं यमात्थ । य एवायꣳ शारीरः पुरुषः स एषः । वदैव शाकल्य तस्य का देवतेति । अमृतमिति होवाच ॥ १० ॥

The following table elucidates the differences between the काण्व and the माध्यंदिन recensions of बृ 3·9·10–15·

| माध्यंदिन | | | काण्व |
|---|---|---|---|
| 10 पृथिवी ( स्त्रिय इति ) | ... | ... | पृथिवी ( अमृतमिति ) |
| 11 रूपाणि ( चक्षुरिति ) | ... | ... | कामः ( स्त्रिय इति ) |
| 12 आकाशः ( प्राण इति ) | ... | ... | रूपाणि ( सत्यमिति ) |
| 13 कामः ( मन इति ) | ... | ... | आकाशः ( दिश इति ) |
| 14 तेजः ( वागिति ) | ... | ... | तमः ( मृत्युरिति ) |
| 15 तमः ( मृत्युरिति ) | ... | ... | रूपाणि ( असुरिति ). |

1 ) चक्षुर्लोकः ( माध्यंदिन ).

*a* ) Should the दण्ड after स्यात् be placed after याज्ञवल्क्य ?

काम एव यस्याऽऽयतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्याऽऽत्मनः परायणꣳ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्याऽऽत्मनः परायणं यमात्थ । य एवायं काममयः पुरुषः स एषः । वदैव शाकल्य तस्य का देवतेति । स्त्रिय इति होवाच ॥ ११ ॥

रूपाण्येव यस्याऽऽयतनं चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्याऽऽत्मनः परायणꣳ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्याऽऽत्मनः परायणं यमात्थ । य एवासावादित्ये पुरुषः स एषः । वदैव शाकल्य तस्य का देवतेति । सत्यमिति होवाच ॥ १२ ॥

आकाश एव यस्याऽऽयतनꣳ श्रोत्रं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्याऽऽत्मनः परायणꣳ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्याऽऽत्मनः परायणं यमात्थ । य एवायꣳ श्रौत्रः प्रातिश्रुत्कः पुरुषः स एषः । वदैव शाकल्य तस्य का देवतेति । दिश इति होवाच ॥ १३ ॥

तम एव यस्याऽऽयतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्याऽऽत्मनः परायणꣳ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्याऽऽत्मनः परायणं यमात्थ । य एवायं छायामयः पुरुषः स एषः । वदैव शाकल्य तस्य का देवतेति । मृत्युरिति होवाच ॥ १४ ॥

रूपाण्येव यस्याऽऽयतनं चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्याऽऽत्मनः परायणꣳ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्याऽऽत्मनः परायणं यमात्थ । य एवायमादर्शे पुरुषः स एषः । वदैव शाकल्य तस्य का देवतेति । असुरिति होवाच ॥ १५ ॥

आप एव यस्याऽऽयतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्याऽऽत्मनः परायणꣳ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्याऽऽ-

त्मनः परायणं यमात्थ । य एवायमप्सु पुरुषः स एषः । वदैव शाकल्य तस्य का देवतेति । वरुण इति होवाच ॥ १६ ॥

रेत एव यस्याऽऽयतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्याऽऽत्मनः परायणꣳ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्याऽऽत्मनः परायणं यमात्थ । य एवायं पुत्रमयः पुरुषः स एषः । वदैव शाकल्य तस्य का देवतेति । प्रजापतिरिति होवाच ॥ १७ ॥

शाकल्येति होवाच याज्ञवल्क्यः । त्वाꣳ स्विदिमे ब्राह्मणा अङ्गारावक्षयण[a]मक्रता ३ इति ॥ १८ ॥

a) शब्रा 11·6·3·3; जैब्रा 2·76 उल्मुकावक्षयणम् in both.

याज्ञवल्क्येति होवाच शाकल्यः । यदिदं कुरुपञ्चालानां ब्राह्मणानत्यवादीः किं ब्रह्म विद्वानिति । दिशो वेद सदेवाः सप्रतिष्ठा इति । यद्दिशो वेत्थ सदेवाः सप्रतिष्ठाः ॥ १९ ॥

किंदेवतोऽस्यां प्राच्यां[a] दिश्यसीति । आदित्यदेवत इति । स आदित्यः कस्मिन् प्रतिष्ठित इति । चक्षुषीति । कस्मिन्नु चक्षुः प्रतिष्ठितमिति । रूपेष्विति । चक्षुषा हि रूपाणि पश्यति । कस्मिन्नु रूपाणि प्रतिष्ठितानीति । हृदय इति होवाच । हृदयेन हि रूपाणि जानाति । हृदये[b] ह्येव रूपाणि प्रतिष्ठितानि भवन्तीति । एवमेवैतद्याज्ञवल्क्य ॥ २० ॥

a) Four quarters in छां 4·5·2; six quarters with the addition of ऊर्ध्वा and अवाची in बृ 4·2·4; and with addition of अधस्तात् and उपरिष्टात् in छां 7·25·1; eight quarters with चतस्र उपादिशः in मै 6·2. —b) बृ 2·1·17; 4·4·1.

किंदेवतोऽस्यां दक्षिणायां दिश्यसीति । यमदेवत इति । स यमः कस्मिन् प्रतिष्ठित इति । [1]यज्ञ इति । कस्मिन्नु यज्ञः प्रतिष्ठित इति[-1] । दक्षिणायामिति । कस्मिन्नु दक्षिणा प्रतिष्ठितेति । श्रद्धा[2]यामिति । यदा ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति । श्रद्धा[a]याꣳ ह्येव दक्षिणा प्रतिष्ठितेति । कस्मिन्नु श्रद्धा प्रतिष्ठितेति । हृदय इति होवाच । हृदयेन हि श्रद्धां[3] जानाति । हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीति । एवमेवैतद्याज्ञवल्क्य ॥ २१ ॥

1- -1) Dropped in माध्यंदिन. —2) Böhtlingk substitutes throughout सत्य for श्रद्धा. —3) माध्यंदिन reads श्रद्धत्ते.

a) क 1·2 दक्षिणासु नीयमानासु श्रद्धाविवेश.

किंदेवतोऽस्यां प्रतीच्यां दिश्यसीति । वरुणदेवत इति । स वरुणः कस्मिन् प्रतिष्ठित इति । अप्स्विति । कस्मिन्न्वापः प्रतिष्ठिता इति । रेतसीति । कस्मिन्नु रेतः प्रतिष्ठितमिति । हृदय इति । तस्मादपि प्रतिरूपं जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्मित इति । हृदये ह्येव रेतः प्रतिष्ठितं भवतीति । एवमेवैतद्याज्ञवल्क्य ॥ २२ ॥

किंदेवतोऽस्यामुदीच्यां दिश्यसीति । सोमदेवत इति । स सोमः कस्मिन् प्रतिष्ठित इति । दीक्षायामिति । कस्मिन्नु दीक्षा प्रतिष्ठितेति । सत्य इति । तस्मादपि दीक्षितमाहुः सत्यं वदेति । सत्ये ह्येव दीक्षा प्रतिष्ठितेति । कस्मिन्नु सत्यं प्रतिष्ठितमिति । हृदय इति होवाच । हृदयेन हि सत्यं जानाति । हृदये ह्येव सत्यं प्रतिष्ठितं भवतीति । एवमेवैतद्याज्ञवल्क्य ॥ २३ ॥

किंदेवतोऽस्यां ध्रुवायां दिश्यसीति । अग्निदेवत इति । सोऽग्निः कस्मिन् प्रतिष्ठित इति । वाचीति । कस्मिन्नु वाक् प्रतिष्ठितेति[1] । हृदय इति । कस्मिन्नु हृदयं प्रतिष्ठितमिति ॥ २४ ॥

1 ) माध्यंदिन adds after प्रतिष्ठितेति—मनसीति । कस्मिन्नु मनः प्रतिष्ठितमिति.

अहल्लिकेति होवाच याज्ञवल्क्यः । यत्रैतदन्यत्रास्मन्मन्यासै । यद्ध्येतदन्यत्रास्मत् स्याच्छ्वा[a]नो वैनदद्युर्वयांꣳसि वैनद्विमथ्नी[a]रन्निति ॥ २५ ॥

*a* ) ऋ 4·38·5 उत स्मैनं वस्त्रमथिं न तायुम्; 8·66·8 वृकश्चिदस्य पारण उरामथिः; 10·95·14 अधैनं वृका रभसासो अद्युः; 10·95 15 मा त्वा वृकासो अशिवास उ क्षन्; तैसं 3·1·3·2 ये पशुं विमथ्नीरन्; 3·5·4·2–3 यज्ञहनो वै देवा यज्ञमुषः सन्ति तमेषु लोकेष्वासत आददाना विमथ्नाना यो ददाति यो यजते तस्य; अ 5·8·4 अविं वृक इव मथ्नीत; ऐब्रा 7·1 अथ येऽन्यथा तद्यथा सेळगा ( i. e. शैलगाः तस्कराः ) वा पापकृतो वा पशुं विमथ्नीरंस्तादृक् तत्; शब्रा 11·5·1·8 तदेनं वृका वा श्वानो वा अद्युरिति.

कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थ इति । प्राण इति । कस्मिन्नु प्राणः प्रतिष्ठित इति । अपान इति । कस्मिन्न्वपानः प्रतिष्ठित इति । व्यान इति । कस्मिन्नु व्यानः प्रतिष्ठित इति ।उदान इति । कस्मिन्नूदानः प्रतिष्ठित इति । समान इति । स एष नेति नेत्यात्मा । अगृह्यो न हि गृह्यते । अशीर्यो न हि शीर्यते । [1–]असङ्गो न हि सज्यते । असितो न व्यथ[a]ते[–1] । न रिष्य[a]ति । एतान्यष्टावा[b]यतनान्यष्टौ लोका [2]अष्टौ देवा[2] अष्टौ पुरुषाः । स यस्तान् पुरुषान्निरुह्य[3] प्रत्युह्यात्यक्रा[4]मत्, तं त्वौपनिष[c]दं पुरुषं पृच्छामि । तं चेन्मे न विवक्ष्यासि, मूर्धा ते विपतिष्यतीति । तꣳ ह न मेने शाकल्यः । तस्य ह मूर्धा विपपात । अपि हास्य परिमोषि[d]णोऽस्थीन्यपजह्रुरन्यन्मन्यमानाः ॥ ॥ २६ ॥

1- -1 ) माध्यंदिन reads असंगोऽसितो न सज्यते न व्यथते. —2 ) माध्यं drops अष्टौ देवाः. —3 ) माध्यं reads व्युदुह्य. —4 ) माध्यं reads अत्यक्रामीत्.

*a* ) ऋ 6·54·3 पूष्णश्चक्रं न रिष्यति.. नो अस्य व्यथते पविः. —*b* ) Eight abodes as mentioned in बृ 3·9·10–17. —*c* ) मुं 2·2·3 औपनिषदं महास्त्रम्; मनु 6·29 विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः. —*d* ) ऋ 1·42·3 परिपन्थिनं मुषीवाणम्; तैसं 6·1·11·5 ...सोमं... गन्धर्वः...पर्यमुष्णात्...अपरिमोषाय यजमानस्य; शब्रा 11·6·3·11 तस्य हाप्यन्यन्मन्यमानाः परिमोषिणोऽस्थीन्यपजह्रुः; 13·2·4·2 ऋक्षीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिन्यस्तस्करा अरण्येष्वाजायेरन्.

**अथ होवाच[1]—ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु । सर्वे वा मा पृच्छत । यो वः कामयते तं वः पृच्छामि[2] सर्वान् वा वः पृच्छामीति । ते ह ब्राह्मणा न दधृषुः ॥ २७ ॥**

1 ) माध्यं adds याज्ञवल्क्यः between ह and उवाच. —2 ) माध्यं reads पृच्छानि.

*a* ) Cp बृ 4·3·1 स ह कामप्रश्नमेव वव्रे.

**तान् हैतैः श्लोकैः पप्रच्छ—**
**यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा[a] ।**
**तस्य लोमानि पर्णानि[b] त्वगस्योत्पाटिका[b] बहिः ॥**
**त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः ।**
**तस्मात् तदातृण्णात्[1] प्रैति रसो[c] वृक्षादिवाहतात् ॥**
**मांसान्यस्य शकराणि[d] किनाटं स्नाव तत् स्थिरम् ।**
**अस्थीन्यन्तरतो दारूणि[2] मज्जा मज्जोपमा कृता ॥**
**यद्वृक्षो[f] वृक्णो रोहति मूलान्नवतरः[g] पुनः ।**
**मर्त्यः[f] स्विन्मृत्युना वृक्णः कस्मान्मूलात् प्ररोहति**
**रेतस इति मा वोचत जीवतस्तत्[h] प्रजायते ।**
**धानारुह[3] इव[4] वै वृक्षोऽञ्जसा[5] प्रेत्य सम्भवः ॥**
**यत् समूलमावृहेयुर्वृक्षं[6] न पुनराभवेत् ।**
**मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात् प्ररोहति ॥**
**जात एव न जायते को न्वेनं जनयेत् पुनः ।**
**विज्ञानमानन्दं ब्रह्म[j] रातिर्दातुः[7] परायणं तिष्ठमानस्य तद्विद इति ॥ २८ ॥**

1 ) माध्यं reads आतुन्नात्. —2 ) Read दारु; cp मधु ( pl. ) in ऋ 8·7·10 त्रीणि सरांसि....मधु ( = मधूनि ); ऋ 6·48·15 आविर्गूळ्हा वसू करत्; however पदपाठ reads वसु. —3 ) Read धानारुहेव वै वृक्षः m. c. —4 ) माध्यं reads उ for इव. —5 ) माध्यं reads अन्यतः for अञ्जसा. —6 ) माध्यं reads उद्वृहेयुः. —7 ) माध्यं reads रातेः.

*a* ) For मृषा see ऋ 1·179·3 न मृषा श्रान्तं यदवन्ति देवाः. —*b* ) मज्झिमनिकाय 72·9 तचपपटिका ( त्वचा-प्रपाटिका ); cp उत्पट in the next verse. —*c* ) शब्रा 7·4·2·13 प्राणं रसं...अदधुः...इयं वै स्वयमातृण्णा. —*d* ) शकराणि = शकलानि; शकल, शंकु, शक्ति and शाखा all derived from the Indo-Germanic root शक् ( शंक् ). तैसं 6·3·3·2 वृक्षस्य विम्यतः प्रथमेन शकलेन सह तेजः परापतति; शब्रा 1·2·4·1 अथ यत्र प्राहरत् तच्छकलोऽशीर्यत; 1·5·1·3 इध्मस्य वा शकलमपच्छिद्य; पा 8·2·59 भित्तं शकलम्. —*e* ) Only here in Vedic literature. —*f* ) Cp and contrast : Old Testament, *Job* : 14·7–10 ( Tree and Man ). —*g* ) जैब्रा 2·425 अथो यथाऽन्यौ नवतरौ चक्रौ; बृ 4·4·4. —*h* ) मुं 1·1·7 सतः पुरुषात्. —*i* ) पा 4·4·88 मूलमस्यावर्हि ( मूल and आ-वृह used by Pāṇini in juxta-position ). *j*– –*j* ) तै 2·1 सत्यं ज्ञानमनन्तं ब्रह्म.

॥ इति नवमं ब्राह्मणम् ॥

॥ इति तृतीयोऽध्यायः ॥

---

जनको ह वैदेह आसांचक्रे । अथ ह याज्ञवल्क्य आवव्राज । तं[1] होवाच[1]— याज्ञवल्क्य किमर्थमचारीः पशूनिच्छन्नण्वन्तानिति । उभयमेव सम्राडिति होवाच ॥ १ ॥

1 ) माध्यं reads स होवाच जनको वैदेहः.

*a* ) Cp वेदान्त in मुं 3·2·6 वेदान्तविज्ञानसुनिश्चितार्थाः; श्वे 6·22 वेदान्ते परमं गुह्यम्; गी 15·15 वेदान्तकृत्; also कृतान्त in गी 18·13 सांख्ये कृतान्ते प्रोक्तानि; cp Buddhist सुत्तन्त ( सूत्रान्त ).

यत्ते कश्चिदब्रवीत् तच्छृणवामेति । अब्रवीन्मे जित्वा शैलिनिः[1]—वाग्वै[2] ब्रह्मेति । यथा मातृमान् पितृमानाचार्यवान् ब्रूयात् तथा तच्छैलिनिरब्रवीद्वाग्वै ब्रह्मेति । अवदतो हि किं स्यादिति । अब्रवीत् तु ते तस्याऽऽयतनं प्रतिष्ठाम् । न मेऽब्रवीदिति । एकपाद्वा एतत् सम्राडिति । स वै नो ब्रूहि याज्ञवल्क्य । वागेवाऽऽयतनमाकाशः प्रतिष्ठा प्रज्ञेत्येनदुपासीत । का प्रज्ञता याज्ञवल्क्य । वागेव सम्राडिति होवाच । वाचा वै सम्राड् बन्धुः प्रज्ञायते । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या

उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टंॅ हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतानि वाचैव सम्राट् प्रज्ञायन्ते । वाग्वै सम्राट् परमं ब्रह्म । नैनं वाग्जहाति । सर्वाण्येनं भूतान्यभिक्षरन्ति । देवो भूत्वा देवानप्येति । य एवं विद्वानेतदुपास्ते । हस्त्यृषभंॅ सहस्रं ददामीति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः — पिता मेऽमन्यत नाननुशिष्य हरेतेति[4] ॥ २ ॥

1 ) माध्यं reads शैलिनः. —2 ) वाक् in this section interchanged with प्राणः in the next section. 3– –3 ) माध्यंदिन drops this. —4 ) After हरेत, माध्यं adds क एव ते किमब्रवीदिति at the end of every section except the last.

*a* ) Use of the plural वयम् for sg. अहम्; cp बृ 3·1·2 गोकामा एव वयम्. —*b* ) वासं 7·46 ब्राह्मणमद्य विदेय पितृमन्तं पैतृमत्यम्; तै 1·11 मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव; छां 6·14·2 आचार्यवान् पुरुषो वेद. —*c* ) के 4·8. —*d* ) बृ 3·9·28; तै 2·1. —*e* ) बृ 2·4·10; 4·5·11. —*f* ) बृ 2·1·1; कौ 4·1 ब्रह्म ते ब्रवाणि; छां 5·11·1 को न आत्मा किं ब्रह्मेति; श्वे 1·1 किंकारणं ब्रह्म; प्र 1·1 परं ब्रह्मान्वेषमाणाः. —*g* ) छां 4·4·5 नासहस्रेणावर्तयेति; 4·5·1 अथैनमृषभोऽभ्युवाद...प्राप्ताः सोम्य सहस्रं स्मः.

यदेव ते कश्चिदब्रवीत्तच्छृणवामेति । अब्रवीन्म उदङ्कः शौल्बायनः । प्राणो[a] वै ब्रह्मेति । यथा मातृमान् पितृमानाचार्यवान् ब्रूयात् तथा तच्छौल्बायनोऽब्रवीत् प्राणो वै ब्रह्मेति । अप्राणतो हि किंॅस्यादिति । अब्रवीत् तु तस्याऽऽयतनं प्रतिष्ठाम् । न मेऽब्रवीदिति । एकपाद्वा एतत् सम्राडिति । स वै नो ब्रूहि याज्ञवल्क्य । प्राण[1] एवाऽऽयतनमाकाशः प्रतिष्ठा । प्रियमित्येनदुपासीत । का प्रियता याज्ञवल्क्य । प्राण एव सम्राडिति होवाच । प्राणस्य वै सम्राट् कामायायाज्यं याजयति[b] । अप्रतिगृह्यस्य[c] प्रतिगृह्णाति । अपि तत्र वधाशङ्कं[2][d] भवति यां दिशमेति प्राणस्यैव सम्राट् कामाय । प्राणो वै सम्राट् परमं ब्रह्म । नैनं प्राणो जहाति । सर्वाण्येनं भूतान्यभिक्षरन्ति । देवो भूत्वा देवानप्येति । य एवं विद्वानेतदुपास्ते । हस्त्यृषभंॅ सहस्रं ददामीति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः—पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ३ ॥

1 ) माध्यं reads सः instead of प्राणः. —2 ) माध्यं reads वधाशंका.

*a* ) तै 3·3 प्राणो ब्रह्मेति व्यजानात्. —*b* ) मनु 3·65 अयाज्ययाजनैश्चैव...कुलान्याशु विनश्यन्ति. —*c* ) पा 3·1·118 प्रत्यपिभ्यां ग्रहेश्छन्दसि, where प्रतिगृह्य means an 'acceptable thing', but here it means a person from whom प्रतिग्रह can be accepted तैसं 2·5·1·6 अभ्यञ्जनं एव न प्रतिगृह्यं काममन्यदिति; तैब्रा 1·3·2·7 तस्माद् गायतश्च मत्तस्य च न प्रतिगृह्यम्. —*d* ) पा 6·2·21 आशङ्काबाधनेदीयस्सु संभावने.

यदेव ते कश्चिदब्रवीत्तच्छृणवामेति । अब्रवीन्मे बर्कुर्वार्ष्णः । चक्षुर्वै ब्रह्मेति । यथा मातृमान् पितृमानाचार्यवान् ब्रूयात् तथा तद्वार्ष्णोऽब्रवीच्चक्षुर्वै ब्रह्मेति । अपश्यतो हि किꣲ स्यादिति । अब्रवीत् तु ते तस्याऽऽयतनं प्रतिष्ठाम् । न मेऽब्रवीदिति । एकपाद्वा एतत् सम्राडिति । स वै नो ब्रूहि याज्ञवल्क्य । चक्षुरेवायतनमाकाशः प्रतिष्ठा । सत्यँमित्येनदुपासीत । का सत्यता याज्ञवल्क्य । चक्षुरेव सम्राडिति होवाच । चक्षुषा वै सम्राट् पश्यन्तमाहुरद्राक्षीरिति । स आहाद्राक्षमिति तत् सत्यं भवति । चक्षुर्वै सम्राट् परमं ब्रह्म । नैनं चक्षुर्जहाति । सर्वाण्येनं भूतान्याभिक्षरन्ति । देवो भूत्वा देवानप्येति । य एवं विद्वानेतदुपास्ते । हस्त्यृषभꣲ सहस्रं ददामीति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः—पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ४ ॥

*a* ) तै 2·1 सत्यं ज्ञानमनन्तं ब्रह्म.

यदेव ते कश्चिदब्रवीत् तच्छृणवामेति । अब्रवीन्मे गर्दभीविपीतो भारद्वाजः । श्रोत्रं वै ब्रह्मेति । यथा मातृमान् पितृमानाचार्यवान् ब्रूयात् तथा तद् भारद्वाजोऽब्रवीच् छ्रोत्रं वै ब्रह्मेति । अशृण्वतो हि किꣲ स्यादिति । अब्रवीत् तु ते तस्यायतनं प्रतिष्ठाम् । न मेऽब्रवीदिति । एकपाद्वा एतत् सम्राडिति । स वै नो ब्रूहि याज्ञवल्क्य । श्रोत्रमेवायतनमाकाशः प्रतिष्ठाऽनन्तँ इत्येनदुपासीत । काऽनन्तता याज्ञवल्क्य । दिश एव सम्राडिति होवाच । तस्माद्वै सम्राडपि[1] यां कां च दिशं गच्छति नैवास्या अन्तं गच्छति । अनन्ता हि दिशः । दिशो[2-] वै सम्राट् श्रोत्रम्[-2] । श्रोत्रं वै सम्राट् परमं ब्रह्म । नैनं श्रोत्रं जहाति । सर्वाण्येनं भूतान्यभिक्षरन्ति । देवो भूत्वा देवानप्येति । य एवं विद्वानेतदुपास्ते । हस्त्यृषभꣲ सहस्रं ददामीति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः—पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ५ ॥

1 ) Weber and Böhtlingk drop अपि. 2- -2 ) माध्यं reads, instead of this, श्रोत्रं हि दिशः.

*a* ) तै 2·1 सत्यं ज्ञानमनन्तं ब्रह्म.

यदेव ते कश्चिदब्रवीत् तच्छृणवामेति । अब्रवीन्मे सत्यकामो जाबालः—मँनो वै ब्रह्मेति । यथा मातृमान् पितृमानाचार्यवान् ब्रूयात् तथा तज्जाबालो[1]ऽब्रवीन्मनो वै ब्रह्मेति । अमनसो हि किꣲ स्यादिति । अब्रवीत् तु ते तस्यायतनं प्रतिष्ठाम् । न मेऽब्रवीदिति । एकपाद्वा एतत् सम्राडिति । स वै नो ब्रूहि याज्ञवल्क्य । मन एवायतनमाकाशः प्रतिष्ठाऽऽनन्द[b] इत्येनदुपासीत । काऽऽनन्दता याज्ञवल्क्य । मन एव सम्राडिति होवाच मनसा वै सम्राट् स्त्रियमभि[2] हर्यति[d] तस्यां प्रतिरूपः पुत्रो जायते

स आनन्दः । मनो वै सम्राट् परमं ब्रह्म । नैनं मनो जहाति । सर्वाण्येनं भूतान्यभिक्षरान्ति । देवो भूत्वा देवानप्येति । य एवं विद्वानेतदुपास्ते । हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः — पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ६ ॥

1 ) माध्यं reads सत्यकाम contrary to the usual metronymic elsewhere; cp पा 6·2·38. —2 ) काण्व reads wrongly अभिहार्यते.

*a* ) तै 3·4 मनो ब्रह्मेति व्यजानात्. —*b* ) बृ 3·9·28; तै 1·6 मनआनन्दं शान्तिसमृद्धममृतम्. —*c* ) छां 7·3·1 पुत्राꣳश्च पशूꣳश्चेच्छेयेति अथेच्छते. —*d* ) ऋ 10·112·6 यं विश्वमिदभिहर्यन्ति देवाः; अ 3·30·1 अन्योन्यमभिहर्यत; तैब्रा 2·5·4·5 कामं नो अग्ने अभि हर्य दिग्भ्यः; नि 7·17 हर्यतिः प्रेप्साकर्मा; also हर्यत in अविहर्यतक्रतो ( ऋ 1·63·2 ).

यदेव ते कश्चिदब्रवीत् तच्छृणवामेति । अब्रवीन्मे विदग्धः शाकल्यः । हृदयं वै ब्रह्मेति । यथा मातृमान् पितृमानाचार्यवान् ब्रूयात् तथा तच्छाकल्योऽब्रवीद्धृदयं वै ब्रह्मेति । अहृदयस्य हि किꣳ स्यादिति । अब्रवीत् तु ते तस्यायतनं प्रतिष्ठाम् । न मेऽब्रवीदिति । एकपाद्वा एतत् सम्राडिति । स वै नो ब्रूहि याज्ञवल्क्य । हृदयमेवायतनमाकाशः प्रतिष्ठा । स्थितिरित्येनदुपासीत । का स्थितता[1] याज्ञवल्क्य । हृदयमेव सम्राडिति होवाच । [2]हृदयं वै सम्राट् सर्वेषां भूतानामायतनम्[2] । हृदयं वै सम्राट् सर्वेषां भूतानां प्रतिष्ठा । हृदये[3] ह्येव सम्राट् सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति । हृदयं वै सम्राट् परमं ब्रह्म । नैनꣳ हृदयं जहाति । सर्वाण्येनं भूतान्यभिक्षरन्ति । देवो भूत्वा देवानप्येति । य एवं विद्वानेतदुपास्ते । हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः — पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ७ ॥

1 ) माध्यं reads स्थितिता. 2- -2 ) माध्यं drops this sentence. —3 ) माध्यं reads हृदयेन perhaps wrongly.

॥ इति प्रथमं ब्राह्मणम् ॥

---

[1]जनको ह वैदेहः कूर्चा[a]दुपावसर्पन्नुवाच—नमस्तेऽस्तु[2] याज्ञवल्क्य । अनु मा शाधीति । स होवाच यथा वै सम्राण्महान्तमध्वानमेष्यन् रथं वा नावं वा समा[b]ददीतैवमेवैताभिरुपनिषद्भिः समाहितात्माऽसि । एवं वृन्दा[d]रक आढ्यः[e] स[f]न्नधीतवेद उक्तोपनिषत्क इतो विमुच्यमानः क्व गमिष्यसीति । नाहं तद्भगवन् वेद यत्र गमिष्यामीति । अथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति । ब्रवीतु भगवानिति ॥ १ ॥

1 ) माध्यं reads अथ ह जनको वैदेहः. 2 ) माध्यं drops अस्तु rightly; cp पा 2·3·16 नमःस्वस्ति...योगाच्च.

*a* ) तैसं 7·5·8·5 आसन्दीमुद्गाताऽऽरोहति प्रेंखꣳ होता कूर्चावध्वर्युः; शब्रा 13·4·3·1 दक्षिणेन होतारꣳ हिरण्मये कूर्चे यजमानः...अध्वर्युर्हिरण्मये वा कूर्चे हिरण्मये वा फलके. —*b* ) We propose समादधीत as the correct form; cp below समाहितात्मा ( सम् + आ + $\sqrt{\text{धा}}$ ) असि; बृ 4·3·35 यथानः सुसमाहितमुत्सर्जयायात्; पा 8·4·8 वाहनमाहितात्. —*c* ) के 4·7 उक्ता त उपनिषत्; the Upanisads ( = उपासाs ) are contained in बृ 4·1·2–7 ( प्रज्ञा इत्येनदुपासीत प्रियमिति ..सत्यमिति...अनन्त इति...आनन्द इति...प्रतिष्ठा इति... ); cp also उपासा in मुं 2·2·3 शरं ह्युपासानिशितं संधयीत; ब्रसू 1·1·31 उपासात्रैविध्यात्. —*d* ) नि 6·34 वृन्दं वुन्देन व्याख्यातम्; वृन्दारकश्च; पा 2 1·62 वृन्दारकनागकुञ्जरैः पूज्यमानम्. —*e* ) शब्रा 9·5·1·17 आसाक्ति अनृतं वदन्त ऊष इव पिपिसुराढ्या इवासुः; ऐब्रा 8·22 सर्वासामाढ्यदुहितॄणाम्; पा 3·2·56 आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु...; गी 16·15 आढ्योऽभिजनवानस्मि. --आढ्य from * आर्द्ध्य ( from ऋद्धि ). —*f* ) नि 1·19 अधीत्य वेदम्; छां 6·1·2 सर्वान् वेदानधीत्य; 8·15·1 आचार्यकुलाद्वेदमधीत्य.

इन्धो[1][a] ह[2] वै नामैष योऽयं दक्षिणेऽक्षन्[b] पुरुषः । तं वा एतमिन्धꣳ सन्तमिन्द्र इत्याचक्षते परोक्षेणैव[3] । परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ॥ २ ॥

1 ) माध्यं adds स होवाच in the beginning. —2 ) माध्यं drops ह. —3 ) माध्यं reads परोक्षेणेव; cp ए 3·14 which drops इव ( एव ) altogether. इव is to be preferred.

*a* ) शब्रा 6·1·1·2 इन्धो ह वै तमिन्द्र इत्याचक्षते. —*b* ) मै 7·11 has three verses beginning with पुरुषश्चाक्षुषो योऽयम्.

अथैतद्वामेऽक्षणि[1] पुरुषरूपमेषाऽस्य पत्नी विराट् । तयोरेष संस्तावो[a] य एषोऽन्तर्हृदय आकाशः । अथैनयोरेतदन्नं य एषोऽन्तर्हृदये लोहितपिण्डः । अथैनयोरेतत् प्रावरणं[b] यदेतदन्तर्हृदये जालकमिव[c] । अथैनयोरेषा सृतिः[2] संचरणी यैषा हृदयादूर्ध्वा[d] नाड्युच्चरति ।[3]— यथा केशः सहस्रधा भिन्न एवमस्यैता हिता[e] नाम नाड्योऽन्तर्हृदये प्रतिष्ठिता भवति । एताभिर्वा[f] एतदास्रवदास्रवति—[3] । तस्मादेष प्रविविक्ताहारतर[g] इवैव[4] भवत्यस्माच्छारीरादात्मनः ॥ ३ ॥

1 ) माध्यं reads अक्षिणि. Cp छां 1·7·5; 4·15 1; कौ 4·2. Also अक्षन् ( बृ 2·2·2 इमा अक्षन् लोहिन्यो राजयः ). —2 ) माध्यं adds सती after सृतिः. —3 ) माध्यं reads ता वा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्न एताभिर्वा एतमास्रवदास्रवति. —4 ) माध्यं drops एव.

*a* ) छां 1·8·5 स्वर्गसंस्तावं हि साम; 1·8·7 प्रतिष्ठासंस्तावं हि साम; पा 3·3·31 यज्ञे समि स्तुवः ( संस्तावश्छन्दोगानाम्—काशिका ). —*b* ) ऋ 1·162·2 यन्निर्णिजा रेक्णसा प्रावृतस्य; 10·82·2 नीहारेण प्रावृता जल्प्या च. —*c* ) अ 8·8·7 बृहद्धि जालं ... तेन शत्रूनभि सर्वान्

न्युब्ज यथा न मुच्याते कतमश्चनैषाम्; जैब्रा 1·135 रथन्तरेण वै देवा असुरान् संविच्य बृहता जालेन इव अभिन्यौब्जन्; श्वे 3·1 जालवान्; 5·3 एकैकं जालम्; मै 3·2; 6·30 जालेनेव खचरः; नि 6·27 मत्स्यानां जालमापन्नानामेतदार्षं वेदयन्ते; पा 3·3·124 जालमानायः (for आनाय *net*, cp ऋ 10·109·2 अग्निर्होता हस्तगृह्या निनाय). —*d*) छां 8·6·6; क 6·16. —*e*) बृ 2·1·19; 4·3·20; कौ 4·19. —*f*) मां 4 प्रविविक्तभुक्.

तस्य[1] प्राची दिक् प्राञ्चः प्राणाः । दक्षिणा दिग् दक्षिणे[2] प्राणाः । प्रतीची दिक् प्रत्यञ्चः प्राणाः । उदीची दिगुदञ्चः प्राणाः । ऊर्ध्वा दिगूर्ध्वाः प्राणाः । अवाची दिगवाञ्चः प्राणाः । सर्वा दिशः सर्वे प्राणाः । स एष नेति[a] नेत्यात्मा । अगृह्यो न हि गृह्यते । अशीर्यो न हि शीर्यते । [2-]असङ्गो न हि सज्यते । असितो न व्यथते[-2] । न रिष्यति । [b]अभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः । स होवाच जनको वैदेहोऽभयं त्वा[3] गच्छ[b]ताद्याज्ञवल्क्य यो नो भगवन्नभयं वेदय[d]से । नमस्तेऽस्तु[4] । इमे[e] विदेहा अयमहमस्मि ॥ ४ ॥

1) माध्यं adds वा पुरुषस्य after तस्य. —2) माध्यं reads दक्षिणाः. Cp पा 1·1·34 पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्. 2- -2) माध्यं reads असङ्गोऽसितो न सज्जते न व्यथते. —3) माध्यं reads त्वा आगच्छतात्. —4) माध्यं drops अस्तु.

*a*) बृ 2·3·6; 3·9·26; 4·4·22; 4·5·15. —*b*) बृ 4·4·5 अभयं वै ब्रह्म; तै 2·7 अथ सोऽभयं गतो भवति. —*c*) For (अ) भय with गम्, see ऋ 1·32·14 हृदि यत्ते जघ्नुषो भीरगच्छत्. —*d*) For the idiom, see ऋ 10·146·1 न त्वा भीरिव विन्दति, contaminated idiom in तै 2·7 अभयं प्रतिष्ठां विन्दते and तत्त्वेव भयं विदुषोऽमन्वानस्य. —*e*) बृ 4·4·23 सोऽहं भगवते विदेहान् ददामि मां चापि सह दास्याय; गी 2·71 निर्ममो निरहंकारः.

## ॥ इति द्वितीयं ब्राह्मणम् ॥

---

जनकꣳह वैदेहं याज्ञवल्क्यो जगाम । [1]समेनेन वदिष्य इति । अथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे[a] समूदाते[2] । तस्मै ह याज्ञवल्क्यो वरं ददौ । स ह काम[b]प्रश्नमेव वव्रे । तꣳहास्मै ददौ । तꣳह सम्राडेव पूर्वं[3] पप्रच्छ ॥ १ ॥

1) The variant स मेने न वदिष्य इति should be rejected; the text means एनेन संवादिष्य इति. —2) माध्यं reads समूदतुः. —3) माध्यं reads पूर्वः.

*a*) शब्रा 11·3 1·2 तद्धैतज्जनको वैदेहो याज्ञवल्क्यं पप्रच्छ-वेत्थाग्निहोत्रं याज्ञवल्क्या ३ इति; जै 1·19. —*b*) शब्रा 11·6·2·10 कामप्रश्न एव मे त्वयि याज्ञवल्क्य असत् इति ततो ब्रह्मा जनक आस. Cp धर्मप्रश्न in मभा 2·61·54 (CE) धर्मप्रश्नमथो ब्रूयात् and क्रियाप्रश्न in पा 8·1·44 किंक्रियाप्रश्ने अनुपसर्गमप्रतिषिद्धम्.

याज्ञवल्क्य किंज्योतिरयं पुरुष इति। आदित्यज्योतिः सम्राडिति होवाच। आदित्येनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति[1]। एवमेवैतद्याज्ञवल्क्य ॥ २ ॥

1) माध्यं reads विपर्येति; पा 8·2·18 कृपो रो लः; 19 उपसर्गस्यायतौ.

अस्तमित आदित्ये याज्ञवल्क्य किंज्योतिरेवायं पुरुष इति। [1-]चन्द्रमा एवास्य ज्योतिर्भवतीति[-1]। चन्द्रमसैवायं[2] ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति। एवमेवैतद्याज्ञवल्क्य ॥ ३ ॥

1– –1) माध्यं reads चन्द्रज्योतिः सम्राडिति होवाच. —2) माध्यं reads चन्द्रेण instead of चन्द्रमसा.

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते किंज्योतिरेवायं पुरुष इति ॥ [1-]अग्निरेवास्य ज्योतिर्भवतीति[-1]। अग्निनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति। एवमेवैतद्याज्ञवल्क्य ॥ ४ ॥

1– –1) माध्यं reads अग्निज्योतिः सम्राडिति होवाच.

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ किंज्योतिरेवायं पुरुष इति। [1-]वागेवास्य ज्योतिर्भवतीति[-1]। वाचैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति। तस्माद्वै सम्राडपि यत्र स्वः[a] पाणिर्न विनिर्ज्ञायते[b]ऽथ यत्र वागुच्चरत्युपैव तत्र न्येतीति[2]। एवमेवैतद्याज्ञवल्क्य ॥ ५ ॥

1– –1) माध्यं reads वाग् ज्योतिः सम्राडिति होवाच. —2) माध्यं reads ण्येति; cp पा 8·4·7ff for the change of नि to णि.

*a*) ऋ 6·11·2 अग्ने यजस्व तन्वं तव स्वाम्; 7·23·2 नहि स्वमायुश्चिकिते जनेषु. —*b*) Solitary occurrence of वि + निस् + ज्ञा in Vedic literature.

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरवायं पुरुष इति। [1-]आत्मैवास्य ज्योतिर्भवतीति[a][-1]। आत्मनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति ॥ ६ ॥

1– –1) माध्यं reads आत्मज्योतिः सम्राडिति होवाच.

*a*) बृ 4·3·7 हृद्यन्तर्ज्योतिः पुरुषः; 4·4·16 ज्योतिषां ज्योतिः; छां 3·13·7; 8·3·4; 8·12·3 परं ज्योतिरुपसंपद्य; क 5·15; श्वे 6·14; मुं 2·2·9–10.

कतम आत्मेति—योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः[1] । स समानः सन्नुभौ लोकावनु[2]संचरति ध्यायतीव[b] लेलायतीव[c] । स हि[3] स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि[4] ॥ ७ ॥

1 ) माध्यं places this word after विज्ञानमयः. —2 ) माध्यं drops अनु. —3 ) माध्यं reads सधीः instead of स हि. —4 ) माध्यं drops मृत्यो रूपाणि.

*a* ) गी 8·12 सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च; 14·11 सर्वद्वारेषु ... प्रकाश उपजायते । ज्ञानम् .... —*b* ) छां 7·6·1 ध्यायतीव पृथिवी. —*c* ) श्वे 3·18 हंसो लेलायते बहिः.

स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः[a] पाप्मभिः संसृज्यते[b] । स उत्क्रामन्म्रियमाणः[c] पाप्मनो विजहाति[1] ॥ ८ ॥

1 ) माध्यं inserts मृत्यो रूपाणि after विजहाति.

*a* ) शरीरमभिसंपद्यमानः is the explanation of जायमानः. —*b* ) Plato, Phaedon ( p. 66 b ) ξυμπεφυρμένη; cp संजर्भुराणः in ऋ 5·44·5; शब्रा 14·5·3·7 अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा, मात्रासंसर्गस्त्वस्य भवति. —*c* ) म्रियमाणः = उत्क्रामन्.

तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवतः । इदं च परलोकस्थानं च । सन्ध्यं तृतीयं स्वप्नस्थानम् । तस्मिन् सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदं च परलोकस्थानं च । अथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान्[a] पाप्मन आनन्दांश्च पश्यति । स यत्र[1] प्रस्वपित्यस्य लोकस्य सर्वावतो[b] मात्रामपादाय[c] स्वयं विहत्य[d] स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति । अत्रायं पुरुषः स्वयंज्योतिर्भवति ॥ ९ ॥

1 ) माध्यं adds अयम् after यत्र.

*a* ) बृ 4·4·3 अन्यमाक्रममाक्रम्य. —*b* ) Cp सब्बावन्त ( दीघनिकाय 1·73; 2·51; 3·224 ). —*c* ) शब्रा 14·1·2·17 मृत्पिण्डमपादाय महावीरं करोति; बृ 4·4·4 पेशसो मात्रामपादाय; बृ 6·2·7 हिरण्यस्यापात्तम्. —*d* ) ऋ 1·173·5 ववव्रुषश्चित्तमसो विहन्ता; वा 10 विजघ्नुषः.

न तत्र रथा न रथयोगा[a] न पन्थानो भवन्ति । अथ रथान् रथयोगान् पथः सृजते । न तत्रानन्दा[b] मुदः[b] प्रमुदो[b] भवन्ति । अथानन्दान्मुदः प्रमुदः सृजते । न तत्र वेशान्ताः[c] पुष्करिण्यः[d] स्रवन्त्यो भवन्ति । अथ वेशान्तान् पुष्करिणीः स्रवन्तीः सृजते । स हि कर्ता ॥ १० ॥

*a*) For योग in रथयोग, cp छां 8·12·3 स यथा प्रयोग्य आचरणे युक्तः; पा 5·1·102 योगाद्यच्. Cp रथयुज् in ऋ 8·33·14 वहन्तु त्वा रथेष्ठामा हरयो रथयुजः; अ 6·91·1 इमं यवमष्टायोगैः षड्योगेभिरचर्कृषुः. —*b*) ऋ 9·113·11 यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते। कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधि; अ 11·7·26 आनन्दा मोदाः प्रमुदो ऽभीमोदमुदश्च ये; तै 2·5. —*c*) अ 11·6·10 समुद्रा नद्यो वेशन्ताः; 20·128·8–9 अप्रपाणा च वेशन्ता, सुप्रपाणा च वेशन्ता; वासं 30·16 वैशन्ताभ्यो बैन्दम्; तैब्रा 3·4·12·1 सरोभ्यो धैवरं वेशन्ताभ्यो दाशम्; also वेशन्ती in अ 1·3·7 वत्रं वेशन्त्या इव; शब्रा 5·3·4·14 अथ वैशन्तीर्गृह्णाति (वैशन्तीरापः); पा 4·4·112 वेशन्तहिमवद्भ्यामण्. —*d*) ऋ 5·78·7 यथा वातः पुष्करिणीं समिङ्गयति सर्वतः; ऋ 10·107·10 भोजस्येदं पुष्करिणीव वेश्म; अ 4·34·5 उप त्वा तिष्ठन्तु पुष्करिणीः समन्ताः; पा 5·2·135 पुष्करादिभ्यो देशे. —*e*) ऋ 1·32·14 नव च यन्नवतिं च स्रवन्तीः; —*f*) बृ 3·4·2; 3·7·23; 3·8·11; 4·3·23–31; 4·4·2.

**तदेते श्लोका भवन्ति —**

**स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति ।**
**शुक्रमादाय पुनरैति स्थानꣳ हिरण्मयःपुरुष एकहꣳसः ॥ ११ ॥**

1) माध्यं reads पौरुषः; पूरुषः will also be metrically faultless.

*a*) बृ 4·3·9 स्वयं विहत्य स्वयं निर्माय. —*b*) क 5·8 य एष सुप्तेषु जागर्ति. —*c*) ऋ 4·40·5 हंसः शुचिषद्वसुः (= क 5·2); श्वे 1·6; 3·18; 6·15; मै 6·8; 7·7.

**प्राणेन रक्षन्नवरं[1] कुलायं बहिष्कुलायादमृतश्चरित्वा ।**
**स ईयतेऽमृतो यत्रकामꣳ हिरण्मयः पुरुष एकहꣳसः ॥ १२ ॥**

1) माध्यं reads अपरम्.

*a*) प्र 4·2 प्राणाग्नय एवैतस्मिन् पुरे जाग्रति. —*b*) ऋ 6·15·16 योनिं कुलायिनं घृतवन्तम्; 7·50·1 कुलाययद् विश्वयन्मा न आ गन्; अ 9·3·20 कुलाये अधि कुलायं कोशे कोशः समुब्जितः 20·127·8 कुलायं कृण्वन् कौरव्यः; शब्रा 6·6·1·23–24 मुञ्जकुलायेनावस्तीर्णा भवति, शणकुलायमन्तरं भवति. —*c*) अ 9·3·24 वधूमिव त्वां शाले यत्रकामं भरामसि. —*d*) See note *c* on the eleventh verse.

**स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि ।**
**उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन् ॥ १३ ॥**

*a*) बृ 2·1·18 उतेवोच्चावचं निगच्छति. —*b*) जक्षत् from √हस्; cp ऋ 1·33·7 त्वमेतान् रुदतो जक्षतश्च अयोधयो रजस इन्द्र पारे (hapax legomenon in ऋ); छां 8·12·3 जक्षत् क्रीडन् रममाणः स्त्रीभिः.

आराममस्य[a] पश्यन्ति न[1] तं पश्यति कश्चनेति ।

तं नायतं[b] बोधयेदित्याहुः ॥

दुर्भिषज्यꣳहास्मै भवति यमेष न प्रतिपद्यते । अथो खल्वाहुर्जागरितदेश एवास्यैष इति । यानि ह्येव जाग्रत् पश्यति तानि सुप्त इति । अत्रायं पुरुषः स्वयंज्योतिर्भवति[2] । सोऽहं भगवते सहस्रं ददामि । अत ऊर्ध्वं[c] विमोक्षाय[3] ब्रूहीति ॥१४॥

1 ) माध्यं reads न तं कश्चन पश्यति. —2 ) माध्यं adds hereafter एवमेवैतद्याज्ञवल्क्य. —3 ) माध्यं adds एव after विमोक्षाय.

*a* ) शब्रा 11·5·7·1 एकारामता; तै 1·6 प्राणारामम्; गी 3·16 इन्द्रियारामः; 5·24 अन्तरारामः. —*b* ) आयतम् ( adv. ) ' violently '; शब्रा 1·7·3·3 स आयतया उत्तरत उपोत्पेदे; आयत–या ( cp साधु–या ऋ 1·46·11; आशु–या ऋ 4·4·2 etc. ) used adverbially like आयतम्. —*c* ) बृ 4·4·8 इत ऊर्ध्वं विमुक्ताः.

स[1] वा एष एतस्मिन् संप्रसादे[a] रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं[b] प्रतियोन्याद्रवति स्वप्नायैव । स यत् तत्र किंचित् पश्यत्यनन्वागतस्तेन भवति । असङ्गो ह्ययं पुरुष इति । एवमेवैतद्याज्ञवल्क्य । सोऽहं भगवते सहस्रं ददामि । अत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १५ ॥

1 ) माध्यं drops this whole कण्डिका.

*a* ) छां 8·15·3 एवमेवैष संप्रसादः.... —*b*) Hapax legomenon.

स वा एष एतस्मिन् स्वप्ने[1] रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव । स यत् तत्र[2] किंचित् पश्यत्यनन्वागतस्तेन भवति । असङ्गो ह्ययं पुरुष इति । एवमेवैतद्याज्ञवल्क्य । सोऽहं भगवते सहस्रं ददामि । अत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १६ ॥

Cp in general this कण्डिका with बृ 4·3·34.

1 ) माध्यं reads स्वप्नान्ते. – 2 ) माध्यं reads अत्र for तत्र.

स[1] वा एष एतस्मिन् बुद्धान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नान्तायैव ॥ १७ ॥

1 ) माध्यं drops this whole कण्डिका.

तद्यथा महामत्स्य उभे कूले[a] अनुसंचरति पूर्वं चापरं च । एवमेवायं पुरुष एतावुभावन्तावनुसंचरति स्वप्नान्तं च बुद्धान्तं च ॥ १८ ॥

*a* ) ऋ 8·47·11 आदित्या अव हि ख्यत अधि कूलादिव स्पशः; नि 6 1 रोधः कूलं निरुणद्धि स्रोतः, कूलं रुजतेर्विपरीतात्, लोष्टो अविपर्ययेण; पा 3·2·31 उदि कूले रुजिवहोः ( note the

juxtaposition of कूल and रुज् in कूलमुद्रुज (रघुवंश 4·22) which perhaps shows that पाणिनि knew Yāska's etymology; पा 3·2·42 सर्वकूलाभ्रकरीषेषु कषः for कूलंकष.

तद्यथास्मिन्नाकाशे श्येनो[a] वा सुपर्णो वा विपरिपत्य श्रान्तः सꣳहत्य[b] पक्षौ संलयायैव[c] ध्रियते[d]। एवमेवायं पुरुष एतस्मा अन्ताय धावति। यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति ॥ १९ ॥

a) ऋ 10·144·4 यं सुपर्णः परावतः श्येनस्य पुत्र आभरत्. —b) ऋ 3·1·7 स्तीर्णा अस्य संहतः (pl. of संहत्) विश्वरूपाः. —c) Shall we read संव्लयाय? Cp अ 11·9·19 प्रव्लीनो मृदितः शयाम्, where शयाम् = शयताम् (3rd Sg.); तैसं 5·2·3·4 तेषां सुवर्गं लोकं यतां दिशः समव्लीयन्त; शब्रा 1·6·3·16 स यथा दृतिर्निष्पीत एवं संव्लीनः शिश्ये; तैब्रा 1·5·4·2 स निर्मितो नाध्रियत समव्लीयत ... यज्ञस्य धृत्यै असंव्लयाय. —d) For the idiom cp बृ 1·2·5 तत्तदत्तुमध्रियत; 1·3·6 शरीरं श्वयितुमध्रियत; 1·5·21 तानि ज्ञातुं दध्रिरे; 3·1·2 प्रष्टुं दध्रे होताश्वलः; छां 4·10·3 स ह व्याधिनानशितुं दध्रे.

ता वा अस्यैता हिता[a] नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताऽणिम्ना तिष्ठन्ति। शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णाः। अथ यत्रैनं घ्नन्तीव[b] जिनन्तीव[c] हस्तीव विच्छाययति[d] गर्तमिव पतति। यदेव जाग्रद्भयं पश्यति तदत्राविद्यया[1] मन्यते। अथ यत्र देव इव राजेवाहमेवेदꣳ सर्वोऽस्मीति[2] मन्यते। सोऽस्य परमो लोकः[3] ॥ २० ॥

1) माध्यं adds भयम् after अविद्यया. —2) माध्यं reads सर्वम्. —3) माध्यं adds अथ यत्र सुप्तः...पश्यति as in बृ 4·3·19 after लोकः.

a) बृ 4·2·3. —b) छां 8·10·2,4 घ्नन्ति त्वेवैनम्, विच्छाय(द)यन्तीव अप्रियवेत्तेव भवति अपि रोदितीव. —c) ऋ 3·59·2 न हन्यते न जीयते त्वोतः; 4·25·5 न तं जिनन्ति बहवो न दभ्राः; बृ 1·5·15 यद्यपि सर्वज्यानिं जीयते. —d) पा 3·1·28 गुपूधूपविच्छिपणिपनिभ्य आयः.

तद्वा अस्यैतदतिच्छन्दा[1][a] अपहतपाप्माऽभयꣳ रूपम्। तद्यथा प्रियया स्त्रिया संपरिष्वक्तो[b] न बाह्यं किंचन वेद नान्तरम्। एवमेवायं पुरुषः प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्। तद्वा अस्यैतदाप्तकाममात्मकाममकामꣳ रूपꣳ शोकान्तरम्[2][c] ॥ २१ ॥

1) माध्यं reads अतिच्छन्दः. —2) माध्यं reads अशोकान्तरम्.

a) शब्रा 13·5·1·9 अतिष्ठा वा एषा छन्दसां यदतिच्छन्दाः. —b) बृ 1·4·3 यथा स्त्रीपुमांसौ संपरिष्वक्तौ. —c) Is it शोकान्-तरम्? अलुक् compound with pl. of the first member. Cp ऋ 1·139·11 अप्सु-क्षितः; बृ 4·3·22 तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति. Can it be शोकं-तरम्? Cp दुहंतर in ऋ 1·127·3.

अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदाः[1]। अत्र स्तेनोऽस्तेनो भवति भ्रूणहा[a]ऽभ्रूणहा चाण्डालो[b]ऽचाण्डालः पौल्कसो[c]ऽपौल्कसः श्रमणो[d]ऽश्रमणस्तापसो[e]ऽतापसः। अनन्वागतं पुण्येनानन्वागतं[f 2] पापेन। तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति ॥ २२ ॥

1 ) माध्यं adds hereafter यज्ञा अयज्ञाः. —2 ) माध्यं reads अनन्वागतः.

*a* ) कौ 3·1 मातृवधेन...न भ्रूणहत्यया. —*b* ) चाण्डाल ( the same as चण्डाल ) in वासं 30·21 वायवे चाण्डालम्; छां 5·10·7 चण्डालयोनिम्; 5·24·4 यद्यपि चण्डालायोच्छिष्टं दद्यात्. —*c* ) वासं 30·17 बीभत्सायै पौल्कसम्; मैसं 1·6·11 यथा वृषलो निजः पुल्ककश्चिकित्सेत्; अंगुत्तरनिकाय 1·62; 3·214 चण्डालपुक्कुसा. —*d* ) तैआ 2·7·1 वातरशना ह वा ऋषयः श्रमणा ऊर्ध्वमन्थिनः बभूवुः; पा 2·1·70 कुमारः श्रमणादिभिः ( पतञ्जलि refers to श्रमणब्राह्मणम् on पा 2·4·12 येषां च विरोधः शाश्वतिकः ); उदान pp 66–67 संबहुला नानातित्थिया समण-ब्राह्मणा परिब्बाजका नानादिट्ठिनिस्सयनिस्सिता; अंगुत्तरनिकाय 1·110 समणब्राह्मणा; अत्याश्रमिन् in श्वे 6·21. —*e* ) छां 2·23·1 तप एव द्वितीयः; पा 5·2·102 तपःसहस्राभ्यां विनीनी ( तपस्विन् ); 5·2·103 अण् च ( तापसः ). —*f* ) बृ 4·3·15–16 अनन्वागतस्तेन भवति.

यद्वै[a] तन्न पश्यति पश्यन् वै तन्न[1] पश्यति। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत् ॥ २३ ॥

Cp बृ 4·3·23–31 with बृ 2·4·14.

1 ) माध्यं reads द्रष्टव्यम् after तत्.

*a* ) बृ 4·4·19; क 4·10–11 नेह नानास्ति किंचन.

यद्वै तन्न जिघ्रति जिघ्रन् वै तन्न[1] जिघ्रति। न हि घ्रातुर्घ्रातेर्[2]विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत् ॥ २४ ॥

1 ) माध्यं reads घ्रातव्यं after तत्. —2 ) माध्यं reads घ्राणात् instead of घ्रातेः.

यद्वै तन्न रसयते रसयन्[1] वै तन्न रसयते। न हि रसयितू रसयतेर्[2]विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत् ॥ २५ ॥

1 ) माध्यं drops रसयन् and substitutes विजानन् वै तद्रसम्. —2 ) माध्यं reads रसात् for रसयतेः.

यद्वै तन्न वदति वदन् वै तन्न[1] वदति। न हि वक्तुर्वक्तेर्[2]विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत् ॥ २६ ॥

1 ) माध्यं adds वक्तव्यम् after तत्. —2 ) माध्यं substitutes वचः for वक्तेः, Böhtlingk reads उक्तेः.

यद्वै तन्न शृणोति शृण्वन् वै तं[1]न्न शृणोति । न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात् ॥ २७ ॥

1 ) माध्यं adds श्रोतव्यम् after तत्.

यद्वै तन्न मनुते मन्वानो वै तं[1]न्न मनुते । न हि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत ॥ २८ ॥

1 ) माध्यं reads मन्तव्यम् after तत्.

यद्वै तन्न स्पृशति स्पृशन् वै तं[1]न्न स्पृशति । न हि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् स्पृशेत् ॥ २९ ॥

1 ) माध्यं reads स्प्रष्टव्यम् after तत्.

यद्वै तन्न विजानाति विजानन् वै तं[1]न्न विजानाति । न हि विज्ञातुर्वि[2]ज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् ॥ ३० ॥

1 ) माध्यं reads विज्ञेयम् after तत्. —2 ) माध्यं reads विज्ञानात् instead of विज्ञातेः.

य[1]त्र वा अन्यदिव स्यात् तत्रान्योऽन्यत् पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्रसयेदन्योऽन्यद्वदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत् स्पृशेदन्योऽन्यद्विजानीयात् ॥३१॥

1 ) माध्यं drops this कण्डिका entirely.

सलिल एको द्रष्टा[a]ऽद्वैतो भवति । एष ब्रह्मलोकः सम्राट् । इति हैनमनु[1]शशास याज्ञवल्क्यः । [2–]एषाऽस्य परमा गतिः[–2] । एषाऽस्य परमा संपत् । एषोऽस्य परमो लोकः । एषोऽस्य परम आनन्[b]दः । एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रा[c]मुपजीवन्ति ॥ ३२ ॥

1 ) माध्यं reads उवाच for अनुशशास. 2– –2 ) माध्यं drops this.

*a* ) प्र 6·5 परिद्रष्टुः; श्वे 6·11 साक्षी; गी 9·18 साक्षी. —*b* ) तै 2·7–8; मां 5. —*c* ) छां 1·10·6 धनमात्राम्; बृ 4·3·9 सर्वावतो मात्रामपादाय; बृ 4·4·4 पेशसो मात्रामपादाय; मां 8 पादा मात्रा मात्राश्च पादाः; मभा ( CE ) 5·3·9 यथाशक्ति धर्ममात्रां चरन्तः; सुश्रुत 2·50·18 प्रातः प्रातः मात्रां पाययेत.

स यो मनुष्याणाꣳ राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्य[a]कैर्भोगैः[1] संपन्नतमः स मनुष्याणां परम आनन्दः । अथ ये शतं मनुष्याणामानन्दाः स एकः पितृणां जितलोकानामानन्दः । अथ ये शतं पितृणां जितलोकानामानन्दाः स एको

गन्धर्वलोक आनन्दः । अथ ये शतं गन्धर्वलोक आनन्दाः स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसंपद्यन्ते । अथ ये शतं कर्मदेवानामानन्दाः स एक आजान[b]देवानामानन्दः । यश्च श्रोत्रियोऽवृजिनोऽकामहतः । अथ ये शतमाजानदेवानामानन्दाः स एकः प्रजापतिलोक आनन्दः । यश्च श्रोत्रियोऽवृजिनोऽकामहतः । अथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दः । यश्च श्रोत्रियोऽवृजिनोऽकामहतः । [2-]अथैष एव परम आनन्दः[-2] । एष ब्रह्मलोकः सम्राट् । इति होवाच याज्ञवल्क्यः । सोऽहं भगवते सहस्रं ददामि । अत ऊर्ध्वं विमोक्षायैव ब्रूहीति । अत्र ह याज्ञवल्क्यो बिभयांचकार—मेधावी राजा सर्वेभ्यो मान्तेभ्य उदरौत्सीदिति ॥ ३३ ॥

1 ) माध्यं reads कामैः for भोगैः. 2--2 ) dropped in माध्यं.

*a* ) मभा ( CE ) 5·75·8 कृतं मानुष्यकं कर्म दैवेनापि विरुध्यते; 17·3·33 ( Vulgate ) किं त्वं मानुष्यकं स्नेहमद्यापि परिकर्षसि. —*b* ) वासं 31·17 तन्मर्त्यस्य देवत्वमाजानमग्रे; शब्रा 5·1·3·4 पुरुषाजानो हि हस्ती; तै 2·8.

स[1] वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव ॥ ३४ ॥

1 ) माध्यं drops this कण्डिका entirely.

त[1]द्यथाऽनः सुसमाहितमुत्स[a]र्जद्यायादेवमेवायं शारीर आत्मा प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जन् याति । यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३५ ॥

1 ) माध्यं interchanges बृ 4·3·35 and बृ 4·3·36.

*a* ) ऋ 10·146·3 उतो अरण्यानिः सायं शकटीरिव सर्जति; तैसं 5·2·2·3 यदन उत्सर्जति अक्रन्ददित्यन्वाह; 6·2·9·1 स यदुत्सर्जेत् यजमानस्य गृहानभ्युत्सृजेत्; शब्रा 3·5·3·17 समुद्गृह्येव प्रवर्तयेयुर्यथा नोत्सर्जेताम्; 6·8·1·10 स यदा अक्ष उत्सर्जेदथैतद्यजुर्जपेत्—असुर्या वा एषा वा याक्षस्य.......

स यत्रायमणिमानं न्येति जरया वो[a]पतपता वाऽणिमानं निगच्छति । तद्यथाऽऽम्रं[b] वोदुम्बरं[c] वा पिप्पलं[d] वा बन्धनात् प्रमुच्यते[1] । एवमेवायं पुरुष[2] एभ्योऽङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैव ॥ ३६ ॥

1 ) माध्यं reads प्रमुच्येत. —2 ) माध्यं reads शारीर आत्मा instead of पुरुषः.

*a* ) अ 6·32·1 अग्ने न नो गृहाणा उपतीतपासि; छां 3·16·2; 6·15·1; 8·4·2; उपताप in पा 5·2·128 द्वंद्वोपतापगर्ह्यात् प्राणिस्थादिनिः; 7·3·61 भुजन्युब्जौ पाण्युपतापयोः. —*b* ) पा 8·4·5. —*c* ) तैसं 2·1·1·6 औदुम्बरो यूपो भवति; ऐब्रा 7·15 चरन् वै मधु विन्दति चरन् स्वादुमुदुम्बरम्. —*d* ) ऋ 1·164·20 तयोरन्यः पिप्पलं स्वाद्वत्ति = मुं 3·1·1 = श्वे 4·6;

ऋ 1·164·22 तस्येदाहुः पिप्पलं स्वाद्वग्रे; 5·54·12 रुशात्पिप्पलं मरुतो विधूनुथ; 7·101·5 मयोभुवो वृष्टयः सन्त्वस्मे सुपिप्पला ओषधीर्देवगोपाः. —*e* ) कासं 30·9 पशूनामेवैषा संप्रमुक्तिः.

तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्तेऽयमायात्ययमागच्छतीति । एवꣳ हैवंविदꣳ सर्वाणि भूतानि प्रतिकल्पन्त इदं ब्रह्मायातीदमागच्छतीति ॥ ३७ ॥

1 ) माध्यं reads आयन्तम्.

*a* ) ऋ 10·34·8 उग्रस्य चिन्मन्यवे ना ( = न ) नमन्ते, राजा चिदेभ्यो नम इत् कृणोति; 10·97·12 उग्रो मध्यमशीरिव. —*b* ) कासं 8·4 ये वै देवानां राजानस्ते राजन्यस्य प्रत्येनसः; पा 6·2·27; 6·2·60. —*c* ) ऋ 10·62·11 सहस्रदा ग्रामणीर्मा रिशन्मनुः; 10·107·5 दक्षिणावान् ग्रामणीरग्रमेति; कासं 8·4 मनोस्त्वा ग्रामण्यो व्रतेनादध इति. —*d* ) बृ 1·5·20; तै 1·5; कौ 2·1; छां 2·21·4.

तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभिसमायन्ति । एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति । यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३८ ॥

1 ) माध्यं reads उपसमायन्ति for अभिसमायन्ति. —2– –2 ) माध्यं reads एवं हैवंविदं सर्वे प्राणा उपसमायन्ति.

*a* ) श्वे 3·2 संचुकोचान्तकाले; गी 2·72; 8·5; cp अन्तवेलायाम् in छां 3·17·6 सोऽन्तवेलायामेतत् त्रयं प्रतिपद्येत.

## ॥ इति तृतीयं ब्राह्मणम् ॥

---

स यत्रायमात्माऽबल्यं न्येत्य संमोहमिव न्येति । अथैनमेते प्राणा अभिसमायन्ति । स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति । स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्तते । अथारूपज्ञो भवति ॥ १ ॥

1 ) माध्यं reads अयं शारीर आत्मा. —2 ) v. l. आबल्यम्. —3 ) माध्यं rightly has नीत्य ( = नि + इ + त्य ).

*a* ) छां 8·6·4 अबालिमानं नीतः ( नि + इतः ); कौ 3·3 आर्तो मरिष्यन्नाबल्यं न्येत्य संमोहं न्येति. —*b* ) बृ 2·1·17–20; 4·3·23–31. —*c* ) प्र 4·8 तेजश्च तेजोमात्रा च.

एकीभवति न पश्यतीत्याहुः । एकीभवति न जिघ्रतीत्याहुः । एकीभवति न रसयत इत्याहुः । एकीभवति न वदतीत्याहुः । एकीभवति न शृणोतीत्याहुः ।

एकीभवति न मनुत इत्याहुः। एकीभवति न स्पृशतीत्याहुः। एकीभवति न विजानातीत्याहुः। तस्य हैतस्य हृदयस्याग्रं प्रद्योतते। तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो[b] वाऽन्येभ्यो वा शरीरदेशेभ्यः। तमुत्क्रामन्तं[c] प्राणोऽनूत्क्रामति। प्राणमनूत्क्रामन्तꣳ सर्वे प्राणा अनूत्क्रामन्ति[2]। सविज्ञानो भवति। सविज्ञानमेवान्ववक्रामति। तं विद्याकर्मणी[d] समन्वारभेते पूर्वप्रज्ञा[e] च ॥ २ ॥

1 ) माध्यं reads रसयति. —2 ) माध्यं reads संज्ञानमेवान्ववक्रामति स एष ज्ञः after this.

*a* ) कौ 3·3. —*b* ) Contrast this with छां 8·6·6 and क 6·16 मूर्धानमभिनिःसृतैका. —*c* ) Contrast this with बृ 3·2·11 अत्रैव समवनीयन्ते. —*d* ) क 5·7 यथाकर्म यथाश्रुतम्; कौ 1·2 प्रत्याजायते यथाकर्म यथाविद्यम्. —*e* ) ऐआ 2·3·2 यथाप्रज्ञं हि संभवाः. Cp ऋ 10·117·9 यमयोश्चिन्न समा वीर्याणि pointing to inborn character as the result of previous actions.

तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽ[1]न्यमाक्रमम[a]क्रम्या[-1]ऽऽत्मानमुपसꣳहरति। एवमेवायमात्मे[2]दꣳ शरीरं निहत्या[3]विद्यां गमयित्वाऽन्यमाक्रममाक्रम्याऽऽत्मानमुपसꣳहरति ॥ ३ ॥

1- -1 ) Dropped in माध्यं. —2 ) माध्यं substitutes पुरुषः for आत्मा. —3 ) Is the reading निहत्य correct ? Cp बृ 4·3·9 ( विहत्य ); 4·3·11 ( अभिप्रहत्य ).

*a* ) बृ 4·3·9.

तद्यथा पेशस्कारी[a] पेशसो मात्रामपादायान्यन्नवतरं[b] कल्याणतरꣳ[c] रूपं तनुते। एवमेवायमात्मे[1]दꣳ शरीरं निहत्याविद्यां[d] गमयित्वाऽ[e]न्यन्नवतरं कल्याणतरꣳ रूपं कुरुते[2]। पित्र्यं वा गान्धर्वं वा दैवं[3-] वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम्[f][-3] ॥ ४ ॥

1 ) माध्यं reads पुरुषः for आत्मा. —2 ) माध्यं reads तनुते for कुरुते. —3- -3 ) माध्यं reads ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं वा अन्येभ्यो वा भूतेभ्यः.

*a* ) पेशस्कारी is the fem. of पेशस्कार ! and not nom. sg. as शंकराचार्य takes. Cp वासं 30·9 निष्कृत्यै पेशस्कारीम्, संज्ञानाय स्मरकारीम्......... —*b* ) बृ 4·3·9. —*c* ) ई 16 कल्याणतमं रूपम्. —*d* ) बृ 4·3·20; मुं 1·2·8; 2·1·10; प्र 6·8; श्वे 5·1. —*e* ) अविद्यां गमयित्वा is the explanation of निहत्य ( रंगरामानुज ). —*f* ) क 5·7 स्थाणुमन्येऽनुसंयन्ति; छां 6·9·3; 6·10·2 यद्यद् भवन्ति तदा भवन्ति.

स वा अयमात्मा ब्रह्म वि[1]ज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममयः सर्वमयः । तद्यदेतादिदंमयोऽदोमय इति[1] । यथाकारी यथाचारी तथा भवति । साधुकारी साधुर्भवति । पापकारी पापो भवति । पुण्यः पुण्येन कर्मणा पापः पापेन । अथो खल्वाहुः । काममय एवायं पुरुष इति । स यथाकामो भवति तत्क्रतुर्भवति[2] । यत्क्रतुर्भवति[3] तत् कर्म कुरुते । यत् कर्म कुरुते तदभिसंपद्यते ॥ ५ ॥

1- -1 ) माध्यं reads : विज्ञानमयो मनोमयो वाङ्मयः प्राणमयश्चक्षुर्मयः श्रोत्रमय आकाशमयो वायुमयस्तेजोमय आपोमयः पृथिवीमयः क्रोधमयोऽक्रोधमयो हर्षमयोऽहर्षमयो धर्ममयोऽधर्ममयः सर्वमयस्तद्यद्दे ( दि ? ) दंमयोऽदोमय इति. —2 ) माध्यं reads तथाक्रतुः. —3 ) माध्यं reads यथाक्रतुः.

*a* ) ऋ 4·35·4 किंमयः स्विच्चमस एष आस. —*b* ) Note the distinction between यथाकारि and यथाचारि i. e. between कर्म and चरण ( चरित ); तै 1·11 यानि अनवद्यानि कर्माणि......यानि अस्माकं सुचरितानि....... छां 5·10·7 तद्य इह रमणीयचरणाः......य इह कपूयचरणाः...... —*c* ) शब्रा 10·6·3·1 अथ खलु क्रतुमयोऽयं पुरुषः; छां 3·14·1.

तदेष श्लोको भवति—

तदेव सक्तः[1] सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य ।
प्राप्यान्तं कर्मणस्तस्य यत् किंचेह करोत्ययम् ।
तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मणे ॥

इति नु कामयमानः । अथाकामयमानो योऽकामो निष्काम आप्तकाम[2] आत्मकामो[2] न तस्य[3] प्राणा उत्क्रामन्ति[4] । ब्रह्मैव सन् ब्रह्माप्येति ॥ ६ ॥

1 ) माध्यं reads सत् तत्. —2 ) माध्यं interchanges these and adds भवति. —3 ) माध्यं reads तस्मात् for तस्य. —4 ) माध्यं adds after this : अत्रैव समवनीयन्ते.

*a* ) क 6·8 व्यापकोऽलिङ्ग एव च; मुं 3·2·4; मै 6·31 तस्यैताल्लिंगमालिंगस्य; 6·35; 7·2. —*b* ) Contrast बृ 4·4·3 तृणस्यान्तं गत्वा. —*c* ) क 5·1 विमुक्तश्च विमुच्यते.

तदेष श्लोको भवति—

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः[1] ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति ॥

तद्यथाऽहिनिर्ल्वयनी[2] वल्मीके[b] मृता प्रत्यस्ता शयीत । एवमेवेदꣳ शरीरꣳ शेते । [3]अथायमशरीरोऽमृतः प्राणो[-3] ब्रह्मैव तेज[4] एव[5] । सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः ॥ ७ ॥

1 ) माध्यं reads स्थिताः. —2 ) The reading अहिनिर्व्लयनी seems to be better; cp मैसं 1·10·10 यद्वै तद्वरुणगृहीता अवेव्लीयन्त इव; आश्रौसू 7·22·7–8 गुदं मा निर्व्लेषीरिति संप्रेष्यति, मा विपर्यास्त इत्यर्थो भवति; सांख्यसूत्र 4·6 अहिनिर्ल्वयनीवत्; पा 7·3·36 अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ. —3– –3 ) माध्यं reads अनस्थिकोऽशरीरः प्राज्ञ आत्मा. —4 ) माध्यं reads लोकः. —5 ) माध्यं adds hereafter सम्राडिति.

*a* ) क 6·14. —*b* ) तैसं 5·1·2·5 तस्या एतच्छ्रोत्रं यद्वल्मिकः; तैब्रा 1·1·3·4 ऊर्जं वा एतं रसं पृथिव्या उपदीका उद्दिहन्ति यद्वल्मीकः; शब्रा 2·6·2·17 यदि वृक्षं वा स्थाणुं वा वेणुं वा वल्मीकं वा विन्देत् तस्मिन्नासजति....

तदेते[1] श्लोका भवन्ति—

अणुः[a] पन्था विततः[2] पुराणो माꣳ स्पृष्टोऽनुवित्तो[b] मयैव ।

तेन धीरा अपियन्ति ब्रह्मविदः [3]स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः[-3] ॥ ८ ॥

1 ) v. l. तदप्येते. —2 ) v. l. विततः. —3– –3 ) माध्यं reads उत्क्रम्य स्वर्गं लोकमितो विमुक्ताः.

*a* ) क 1·21; 2·8; 2·13; मुं 2·2·2; 3·1·9. —*b* ) Active use of the participle.

तस्मिञ्छुक्लमुत[a] नीलमाहुः[b] पिङ्गलꣳ हरितं लोहितं च ।

एष पन्था ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित्[1] पुण्यकृत् तैजसश्च ॥ ९ ॥

1 ) Omit ब्रह्मवित् and read तेन एति m. c.

*a* ) For colours see बृ 4·3·20. —*b* ) आहुः shows that this verse is probably a quotation from छां 8·6·1–2 पिंगलस्य...शुक्लस्य...but पीत instead of हरित.

[a]अन्धं तमः प्रविशन्ति येऽविद्यामुपासते[1] ।

ततो भूय[2] इव ते तमो य उ विद्यायाꣳ[3] रताः[-a] ॥ १० ॥

1 ) माध्यं reads असंभूतिम् for अविद्याम्. —2 ) Read भूयेव ( double saṁdhi ) m. c. ? —3 ) माध्यं reads संभूत्याम्.

*a*– –*a* ) = ई 9. Cp also के 1·3.

अनन्दा[1] नाम ते लोका अन्धेन तमसाऽऽवृताः ।

ताꣳस्ते प्रेत्याभिगच्छन्त्यविद्वाꣳसो[2]ऽबुधो[3] जनाः ॥ ११ ॥

1 ) माध्यं reads असुर्याः. —2 ) माध्यं reads अपिगच्छन्ति. —3 ) अबुधाः ( माध्यं ).

*a* ) क 1·3 अनन्दा नाम ते लोकाः; ई 3; मुं 1·2·8–10.

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्[1] ॥ १२ ॥

1 ) माध्यं reads अनुसंचरेत्.

यस्यानुवित्तः प्रतिबुद्ध[a] आत्माऽस्मिन् संदेह्ये[1] गहने[b] प्रविष्टः ।
स विश्वकृत् स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव ॥ १३ ॥

1 ) माध्यं reads संदेहे ( some Mss read संदेघे; cp शत्रा 3·1·3·3 संदेघो हैवास ).

*a* ) बृ 1·4·10 प्रत्यबुध्यत; के 2·4 प्रतिबोधविदितम्; क 3·14 जाग्रत...निबोधत. —*b* ) ऋ 10·129·1 अम्भः किमासीद् गहनं गभीरम्; मै 7 1 गभीरो गुप्तः...गहनः; cp गह्वर in अ 12·2·53 अरण्यान्या गह्वरं सचस्व; वासं 5·8 या ते अग्ने अयःशया तनूर्वर्षिष्ठा गह्वरेष्ठा; क 2·12 गुहाहितं गह्वरेष्ठम्.

[a]—[1]—इहैव सन्तोऽथ विद्मस्तद्वयं न चेदवेदिर्महती विनष्टिः[a]—[1] ।
ये[b]— तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापि[2]यन्ति—[b] ॥ १४ ॥

1– –1 ) शब्रा 14·7·2·15 तदेव सन्तः । तद्रु तद्भवामः । न चेद्वेदी महती विनष्टिः where अवेदी is अवेदि ( Aorist, 3rd per. sg. ). —2 ) माध्यं reads उप for अपि.

*a*– –*a* ) के 2·5. —*b*– –*b* ) श्वे 3·10.

यदैतमनुपश्यत्यात्मानं देवमञ्जसा ।
[a]—ईशानं भूतभव्यस्य न ततो[1] विजुगुप्सते—[a] ॥ १५ ॥

1 ) माध्यं reads तदा विचिकित्सति for ततो विजुगुप्सते.

*a*– –*a* ) क 4·5,12.

यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्तते ।
तद्देवा ज्योतिषां [b]ज्योतिरायुर्हो[1]पासतेऽमृतम् ॥ १६ ॥

1 ) माध्यं reads ह्योपासते.

*a* ) शब्रा 2·3·3·11–12; कौ 1·4; मै 6·28. —*b* ) मुं 2·2·9.

यस्मिन् पञ्च पञ्चजना[a] आकाशश्च प्रतिष्ठितः ।
तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् ॥ १७ ॥

*a* ) पंचजनाः here may refer to the five in the next verse according to the माध्यं text; cp ब्रसू 1·4·12 प्राणादयो वाक्यशेषात्.

[a]प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं[1] मनसो ये मनो विदुः ।
ते निचि[b]क्युर्ब्रह्म पुराणमग्र्यम् ॥ १८ ॥

1 ) माध्यं adds after श्रोत्रम्, अन्नस्य अन्नम्.

*a* ) के 1·2. —*b* ) वासं 11·1; श्वे 2·1 अग्नेर्ज्योतिर्निचाय्य; श्वे 4·11; क 1·17; 3·15.

मन[a]सैवा[1]नुद्रष्टव्यं ने[b]ह नानाऽस्ति किंचन ।
मृत्योः स मृत्युमाप्नोति य[2] इह नानेव पश्यति ॥ १९ ॥

1 ) माध्यं reads आप्तव्यम् ( for अनुद्रष्टव्यम् ) which does not suit the metre. —2 ) Read येह m. c.

*a* ) क 4·10,11. —*b* ) बृ 2·4·6 योऽन्यत्रात्मनो ब्रह्म वेद; 4·3·23 न तु तद्द्वितीयमस्ति; कौ 3·8 नो एतन्नाना.

[a]ए[1]कधैवानुद्रष्टव्यमेतदप्रमे[b]यं ध्रुवम् ।
विर[c]जः पर आकाशादज आत्मा महान् ध्रुवः ॥ २० ॥

1 ) मनसा for एकधा ( माध्यं ).

*a* ) छां 6·1·3; क 2·14; 2·18. —*b* ) अप्रमयं from प्रमयम् which is derived from प्र + मी; ऋ 8·61·4 अप्रामिसत्य मघवन् तथेदसत्; अ 6·110·3 स मा वधीत् पितरं वर्धमानो मा मातरं प्र मिनीज्जनित्रीम्; अ 8·1·5 त्वां मृत्युर्दयतां मा प्र मेष्ठाः; 8·1·16 मा जिह्वा बर्हिः प्रमयुः कथा स्याः; कासं 25·7 तेषां त्रयो होत्रेण प्रामीयन्त अथो यद्भूत उदाशिष्यत स प्रमयाद्-बिभेत्; शब्रा 4·1·2·10 यद्वा अयोनौ रेतः सिच्यते प्र वै तन्मीयते; जैब्रा 1·338 स होवाच प्रमेयो वा अयम्. —*c* ) क 6·18; मुं 1·2·11; 2·2·9; प्र 1·16.

त[1]मेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद्बहूञ्छब्दान् वाचो विग्ला[a]पनꣳ हि तदिति ॥ २१ ॥

*a* ) बृ 3·5 पाण्डित्यं निर्विद्य; तै 2·4 यतो वाचो निवर्तन्ते; क 2·23 नायमात्मा प्रवचनेन... न बहुना श्रुतेन; मुं 1·1·5 तत्रापरा-ऋग्वेदः...ज्योतिषमिति. The word विग्लापनं occurs only here. Cp मुं 2·2·5 अन्या वाचो विमुञ्चथ.

स वा [1]एष महानज[1] आत्मा योऽयं विज्ञानमयः प्राणेषु । य एषोऽन्तर्हृदय[a] आकाशस्तस्मिञ्छेते । सर्वस्य [b]वशी । सर्वस्येशानः । सर्वस्याधिपतिः । स न साधुना कर्मणा भूयान् । नो एवासाधुना कनीयान् । एष सर्वेश्वरः । एष भूताधिपतिः । एष भू[3]तपालः । एष से[c]तुर्विधरण[d] एषां लोकानामसंभे[e]दाय । तमेतं वेदा[f]नुवचनेन ब्राह्म[4]णा विविदिषन्ति [5–]यज्ञेन दानेन तपसाऽनाश[g]केन[–5] । एतमेव विदित्वा मुनिर्भवति । एतमेव

प्रव्राजिनो लोकमिच्छन्तः[6] प्रव्रजन्ति । एतद्ध स्म वै तत् पूर्वे[7] विद्वाꣳसः प्रजां न कामयन्ते । किं प्रजया[h] करिष्यामो येषां नोऽयमात्माऽयं लोक[i] इति । ते ह स्म पुत्रैषणायाश्च[j] वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं[k] चरन्ति । या ह्येव पुत्रैषणा सा वित्तैषणा । या वित्तैषणा सा लोकैषणा । उभे ह्येते एषणे एव भवतः । स एष नेति[l] नेत्यात्मा । अगृह्यो न हि गृह्यते । अशीर्यो न हि शीर्यते । [8-]असङ्गो न हि सज्यते । असितो न व्यथते[-8] । न रिष्यति । एतमु हैवैते न तरत इति । अतः पापमकरवमिति । अतः कल्याणमकरवमिति । उभे उ[9] हैवैष एते तरति[10] । नैनं[11] कृताकृते[m] तपतः[12] ॥ २२ ॥

1 ) माध्यं reads अयम् for एष महानजः. —2 ) माध्यं reads लोकेश्वरः. —3 ) लोकपालः ( माध्यं ). —4 ) Omitted in माध्यं. —5 - - 5 ) माध्यं reads ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन च. —6 ) माध्यं reads ईप्सन्तः. —7 ) माध्यं reads, after पूर्वे-ब्राह्मणा अनूचानाः. —8 - - 8 ) असंगोऽसितो न सज्यते न व्यथते ( माध्यं ). —9 ) माध्यं drops उ and एव. —10 ) माध्यं adds अमृतः after तरति. —11 ) माध्यं reads साध्वसाधुनी before नैनम्. Cp तै 2·9. —12 ) माध्यं adds नास्य केनचन कर्मणा लोको मीयते.

*a* ) बृ 4·3·7 हृद्यन्तर्ज्योतिः; तै 2·1 निहितो गुहायाम्; छां 8·3·3 हृदयम्; क 1·14; 2·20; 3·1; 4·6,7; मुं 2·1·10; 3·1·7. —*b* ) कौ 3·8 एष ह्येवैनं साधु कर्म कारयति; ई 1 ईशावास्यम्; छां 4·5·2–4 संयद्वाम, वामनीः, भामनीः. —*c*) छां 8·4·1 नैतं सेतुमहोरात्रे तरतः; मुं 2·2·5 अमृतस्यैष सेतुः; श्वे 6·19 अमृतस्य परं सेतुम्. —*d* ) बृ 3·8·9 सूर्याचन्द्रमसौ विधृतौ तिष्ठतः. —*e* ) तैसं 6·4·1·1 असंभिन्दन्नव द्याति प्राणानामसंभेदाय; ऐब्रा 7·12 पुरा संभेदाच्छायानाम्; शब्रा 13·8·4·12 मर्यादां करोत्यसंभेदाय; छां 8·4·1; नि2·24 स वित्तं गृहीत्वा विपाट्-छुतुद्र्योः संभेदमाययौ, अनुययुरितरे. —*f*) छां 2·23·1 त्रयो धर्मस्कन्धाः...; के 4·8. —*g* ) शब्रा 2·4·3·2 ता हेमाः प्रजा अनाशकेन नोत्परा बभूवुः; छां 8·5·3 यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तत्, एष हि आत्मा न नश्यति ( Popular etymology ! ). —*h* ) बृ 1·5·16 सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा. —*i* ) के 2·5 इह चेदवेदीदथ सत्यमस्ति. —*j* ) बृ 3·5·1 — *k*) बृ 3·5·1; पा 4·2·38 भिक्षादिभ्योऽण् ( = भैक्षम् ); गी 3·5. —*l* ) बृ 2·3·6; 3·9·26; 4·2·4; 4·5·15. —*m*) अ 19·9·2 शान्तं नो अस्तु कृताकृतम्; क 2·14 अन्यत्रास्मात् कृताकृतात्; छां 8·4·1; 8·13·1; मुं 3·1·3; 3·2·9; तै 2·9; कौ 1·4; 3·1; मै 2·7; 6·34; पा 2·1·60.

तदेतदृचाऽभ्युक्तम्—

एष नित्यो महिमा ब्राह्मणस्य न वर्धते[1] कर्मणा[c1] नो कनीयान् ।
तस्यैव स्यात्[2] पदवित्[a] तं विदित्वा न लिप्यते[b][3] कर्मणा पापकेनेति ॥

तस्मादेवंविच्छान्तो[c] दान्त उपरतस्तितिक्षुः समाहितो[4] भूत्वाऽऽत्मन्येवात्मानं पश्यति[5] । सर्वमात्मानं[6] पश्यति[7] । नैनं पाप्मा तरति । सर्वं[8] पाप्मानं तरति । नैनं

पाप्मा तपति । सर्वं पाप्मानं तपति । विपापो[8] विरजो[d]ऽविचिकित्सो[9e] ब्राह्मणो भवति[10] । एष ब्रह्मलोकः सम्राट् । एनं प्रापितोऽसीति होवाच याज्ञवल्क्यः । सोऽहं भगवते विदेहान् ददामि मां चापि सह दास्यायेति[f] ॥ २३ ॥

1 ) माध्यं reads कर्मणा वर्धते. —2 ) तैब्रा 3·12·9·7–8 reads आत्मा for स्यात्. —3 ) माध्यं reads कर्मणा लिप्यते. —4 ) माध्यं reads श्रद्धावित्तः. — 5 ) पश्येत् ( माध्यं ). —6 ) माध्यं reads एनम् for आत्मानम्. —7 ) माध्यं adds, after this, सर्वोऽस्यात्मा भवति । सर्वस्यात्मा भवति । —8 ) माध्यं reads विजरः. —9 ) माध्यं reads विजिघत्सोऽपिपासः for अविचिकित्सः. —10 ) माध्यं adds य एवं वेद after भवति.

*a* ) पदवित् only here. —*b* ) ई 2; छां 4·14·3; 5·10·10; क 5·11; गी 5·7,10. —*c* ) क 2·24; मुं 1·2·13; श्वे 6·22; मै 6·29. —*d* ) मुं 1·2·11; 2·2·9; प्र 1·16; बृ 4·4·20; क 6·18. —*e* ) छां 3·14·4 यस्य स्यादद्धा न विचिकित्सा अस्ति; मं 2·2·8 छिद्यन्ते सर्वसंशयाः. —*f* ) Cp बृ 4·4·2 इमे विदेहा अयमहमस्मि; गी 2·71 निर्ममो निरहंकारः.

स वा एष महानज आत्माऽन्नादो वसुदानः । विन्दते वसु य एवं वेद ॥२४॥

स वा एष महानज आत्माऽजरो[1]ऽमरो[1]ऽमृतो[1]ऽभयो ब्रह्म । अभयं वै ब्रह्म । अभयꣳ हि वै ब्रह्म भवति य एवं वेद ॥ २५ ॥

1 ) पा 6·2·116 नञो जरमरमित्रमृताः.

॥ इति चतुर्थं ब्राह्मणम् ॥

---

अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च । तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव । स्त्रीप्रज्ञैव[1] तर्हि कात्यायनी । अथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन्[2]—॥ १ ॥

Cp in general बृ 2·4.

1 ) माध्यं reads इव for एव. —2 ) माध्यं reads उपाकरिष्यमाणः.

मैत्रेयीति होवाच याज्ञवल्क्यः । प्रव्रजिष्यन्[a] वा अरेऽहमस्मात् स्थानादस्मि । हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥ २ ॥

*a* ) बृ 2·4·1 substitutes उद्यास्यन् for प्रव्रजिष्यन्.

सा होवाच मैत्रेयी—यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात् स्यां न्वहं तेनामृताहो ३ नेति । नेति होवाच याज्ञवल्क्यः । यथैवोपकरणवतां जीवितं तथैव ते जीवितꣳ स्यात् । अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेनेति ॥ ३ ॥

सा होवाच मैत्रेयी—येनाहं नामृता स्यां किमहं तेन कुर्याम् । यदेव भगवान्[1] वेद[1] तदेव मे ब्रूहीति[2] ॥ ४ ॥

1 ) माध्यं reads भगवन् for भगवान् and वेत्थ for वेद. . —2 ) विब्रूहि ( माध्यं ). Cp बृ 3·4·2 यथा विब्रूयात् असौ गौरसावश्व इति.

स होवाच याज्ञवल्क्यः—प्रिया वै[1] खलु नो भवती सती प्रियमवृधत्[2] । हन्त तर्हि[3] भवत्येतद्व्याख्यास्यामि ते[4] । व्याचक्षाणस्य[5] तु मे निदिध्यासस्वेति[6] ॥ ५ ॥

1 ) Dropped in माध्यं. —2 ) अवृतत् ( माध्यं ). —3 ) माध्यं reads खलु for तर्हि. —4 – –4 ) माध्यं reads तेऽहं तद् वक्ष्यामि व्याख्यास्यामि. —5 ) माध्यं inserts वाचं तु मे before व्याचक्षाणस्य. —6 ) माध्यं adds hereafter ब्रवीतु भगवानिति.

स होवाच[1] । न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति । न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति । न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति । न वा अरे पशूनां कामाय पशवः प्रिया भवन्त्यात्मनस्तु कामाय पशवः प्रिया भवन्ति । न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति । न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति । न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति । न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति । न वा अरे वेदानां कामाय वेदाः प्रिया भवन्त्यात्मनस्तु कामाय वेदाः प्रिया भवन्ति[2] । न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा[3] अरे[3] द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेयि । आत्मनि खल्वरे[4] दृष्टे श्रुते मते विज्ञात इदꣳ सर्वं विदितम् ॥ ६ ॥

1) माध्यं adds याज्ञवल्क्यः after उवाच. —2 ) माध्यं adds hereafter न वा अरे यज्ञानाम् कामाय .... —3 ) माध्यं substitutes न्वरे for वा अरे. —4 ) वा अरे for खल्वरे ( माध्यं ).

ब्रह्म तं परादाद्योऽन्यत्राऽऽत्मनो ब्रह्म वेद । क्षत्रं तं परादाद्योऽन्यत्राऽऽत्मनः क्षत्रं वेद । लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान् वेद । देवास्तं परादुर्योऽन्यत्राऽऽत्मनो देवान् वेद । वेदास्तं परादुर्योऽन्यत्राऽऽत्मनो वेदान् वेद[1] । भूतानि तं परादुर्योऽ-

न्यत्राऽऽत्मनो भूतानि वेद । सर्वं तं परादाद्योऽन्यत्राऽऽत्मनः सर्वं वेद । इदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमे वेदा[2] इमानि भूतानीद्ँ सर्वं यदयमात्मा ॥ ७ ॥

1) माध्यं reads hereafter यज्ञास्तं पराडुः... —2) माध्यं adds इमे यज्ञा hereafter.

स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय । दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥ ८ ॥

स[1] यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय। शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ ९ ॥

1) This and the next कण्डिका intercharge places in the माध्यं.

स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय । वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ १० ॥

स यथाऽऽर्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राणि अनुव्याख्यानानि व्याख्यानानीष्ट्[1a]ँ हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतानि । अस्यैवैतानि सर्वाणि निश्वसितानि ॥११॥

1) माध्यं has दत्तम् for इष्टम्.

*a*– –*a*) This portion is wanting in बृ 2·4·10, but found in बृ 4·1·2.

स यथा सर्वासामपाँ समुद्र एकायनम् । एवँ सर्वेषाँ स्पर्शानां त्वगेकायनम् । एवँ सर्वेषां गन्धानां नासिके एकायनम् । एवँ सर्वेषाँ रसानां जिह्वैकायनम् । एवँ सर्वेषाँ रूपाणां चक्षुरेकायनम् । एवँ सर्वेषाँ शब्दानाँ श्रोत्रमेकायनम् । एवँ सर्वेषाँ संकल्पानां मन एकायनम् । एवँ सर्वासां विद्यानाँ हृदयमेकायनम् । एवँ सर्वेषां कर्मणाँ हस्तावेकायनम् । एवँ सर्वेषामानन्दानामुपस्थ एकायनम् । एवँ सर्वेषां विसर्गाणां पायुरेकायनम् । एवँ सर्वेषामध्वनां पादावेकायनम् । एवं सर्वेषां वेदानां वागेकायनम् ॥ १२ ॥

स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव[1] । एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः[2] कृत्स्नः प्रज्ञानघन एव । एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति । न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमि । इति होवाच याज्ञवल्क्यः ॥ १३ ॥

1 ) माध्यं adds स्यात् after एव. —2 – –2 ) इदं महद्भूतमनन्तमपारम् ( माध्यं ).

*a* ) बृ 2·4·12; छां 6·13.

सा होवाच मैत्रेयी—अत्रैव मा भगवान् मोहान्तमापीपिपत्[1] । न वा अहमिमं[2] विजानामिति[3] । स होवाच[4]—न वा अरेऽहं मोहं ब्रवीमि । अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा[5] ॥ १४ ॥

1 ) माध्यं reads आपीपदत्. Cp अ 10·5·42 व्यात्ते परमेष्ठिनो ब्रह्मणा आपीपदाम तम्; प्र 2·3 मा मोहमापद्यथ. —2 ) माध्यं reads इदम्. —3 ) माध्यं adds, after विजानामि, न प्रेत्य संज्ञाऽस्ति. —4 ) माध्यं adds याज्ञवल्क्यः after उवाच. —5 ) माध्यं adds मात्रासंसर्गस्त्वस्य भवति after this.

यत्र[1] हि द्वैतमिव भवति तदितर इतरं पश्यति, तदितर इतरं जिघ्रति, तदितर इतरꣳ रसयते, तदितर इतरमभिवदति, तदितर इतरꣳ शृणोति, तदितर इतरं मनुते, तदितर इतरꣳ स्पृशति, तदितर इतरं विजानाति । यत्र त्वस्य सर्वमात्मैवाभूत्[a]त्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन कꣳ रसयेत्तत्केन कमभिवदेत्तत्केन कꣳ शृणुयात्तत्केन कं मन्वीत तत्केन कꣳ स्पृशेत्तत्केन कं विजानीयात् । येनेदꣳ सर्वं विजानाति तं केन विजानीयात् । स एष नेति[b] नेत्यात्मा । अगृह्यो न हि गृह्यते । अशीर्यो न हि शीर्यते । असङ्गो न हि सज्यते । असितो न व्यथते न रिष्यति[-2] । विज्ञातारमरे केन विजानीयादित्युक्तानुशासनाऽसि मैत्रेयि । एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार[3] ॥ १५ ॥

1 ) माध्यं reads यत्र वा अन्यदिव स्यात् तत्रान्योऽन्यत्पश्यति and so on. —2– – 2 ) माध्यं drops this and rightly, because विज्ञातारमरे केन विजानीयात् is the summing up of the earlier position. —3 ) माध्यं reads प्रवव्राज.

*a* ) ई 7 यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः. —*b* ) बृ 2·3·6; 3·9·26; 4·2·4; 4·4·22.

॥ इति पञ्चमं ब्राह्मणम् ॥

---

अथ वꣳशः । पौतिमाष्यो गौपवनात् । गौपवनः पौतिमाष्यात् । पौतिमाष्यो गौपवनात् । गौपवनः कौशिकात् । कौशिकः कौण्डिन्यात् । कौण्डिन्यः शाण्डिल्यात् । शाण्डिल्यः कौशिकाच्च गौतमाच्च । गौतमः—॥ १ ॥

आग्निवेश्यात् । आग्निवेश्यो गार्ग्यात् । गार्ग्यो गार्ग्यात् । गार्ग्यो गौतमात् । गौतमः सैतवात् । सैतवः पाराशर्यायणात् । पाराशर्यायणो गार्ग्यायणात् । गार्ग्यायण उद्दालकायनात् । उद्दालकायनो जाबालायनात् । जाबालायनो माध्यन्दिनायनात् ।

माध्यन्दिनायनः सौकरायणात् । सौकरायणः काषायणात् । काषायणः सायकायनात् । सायकायनः कौशिकायनेः । कौशिकायनिः—॥ २ ॥

घृतकौशिकात् । घृतकौशिकः पाराशर्यायणात् । पाराशर्यायणः पाराशर्यात् । पाराशर्यो जातूकर्ण्यात् । जातूकर्ण्य आसुरायणाच्च यास्काच्च । आसुरायणस्त्रैवणेः । त्रैवणिरौपजन्धनेः । औपजन्धनिरासुरेः । आसुरिर्भारद्वाजात् । भारद्वाज आत्रेयात् । आत्रेयो माण्टेः । माण्टिर्गौतमात् । गौतमो गौतमात् । गौतमो वात्स्यात् । वात्स्यः शाण्डिल्यात् । शाण्डिल्यः कैशोर्यात् काप्यात् । कैशोर्यः काप्यः कुमारहारितात् । कुमारहारितो गालवात् । गालवो विदर्भीकौण्डिन्यात् । विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवात् । वत्सनपाद्बाभ्रवः पथः सौभरात् । पन्थाः सौभरोऽयास्यादाङ्गिरसात् । अयास्य आङ्गिरस आभूतेस्त्वाष्ट्रात् । आभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्रात् । विश्वरूपस्त्वाष्ट्रोऽश्विभ्याम् । अश्विनौ दधीच आथर्वणात् । दध्यङ्ङाथर्वणोऽथर्वणो दैवात् । अथर्वा दैवो मृत्योः प्राध्वंसनात् । मृत्युः प्राध्वंसनः प्रध्वंसनात् । प्रध्वंसन एकर्षेः । एकर्षिर्विप्राचित्तेः । विप्राचित्तिर्व्यष्टेः । व्यष्टिः सनारोः । सनारुः सनातनात् । सनातनः सनगात् । सनगः परमेष्ठिनः । परमेष्ठी ब्रह्मणः । ब्रह्म स्वयंभु । ब्रह्मणे नमः ॥ ३ ॥

॥ इति षष्ठं ब्राह्मणम् ॥

॥ इति चतुर्थोऽध्यायः ॥

---

[a]पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते[a] ॥

ॐ [b]खं ब्रह्म । खं पुराणम् । वायुरं[c] खम् । इति ह स्माह कौरव्यायणीपुत्रः । वेदोऽयं[1] ब्राह्मणा विदुः । वेदैनेन यद्वेदितव्यम् ॥ १ ॥

1 ) v. l. यम् for अयम्.

*a*— —*a* ) This is the शान्ति of the ईशोपनिषत् although it forms part of text here. Cp अ 10·8·29 पूर्णात् पूर्णमुदचति पूर्णं पूर्णेन सिच्यते । उतो तदद्य विद्याम यतस्तत् परिषिच्यते. —*b* ) छां 4·10·5. —*c* ) वायुर occurs only here; cp मधुर, धीर etc.

॥ इति प्रथमं ब्राह्मणम् ॥

---

त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुः। देवा मनुष्या असुराः। उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवानिति। तेभ्यो हैतदक्षरमुवाच द इति। व्यज्ञासिष्टा ३ इति। व्यज्ञासिष्मेति होचुः। दाम्यतेति न आत्थेति। ओमिति[b] होवाच व्यज्ञासिष्टेति ॥ १ ॥

Cp in general शब्रा 2·4·2·1-6.

*a*) छां 4·10·1 सत्यकामे जाबाले ब्रह्मचर्यमुवास. —*b*) छां 1·1·8 याद्धि किंचानुजानाति ओमित्येव तदाह; बृ 3·9·1.

अथ हैनं मनुष्या ऊचुर्ब्रवीतु नो भवानिति। तेभ्यो हैतदेवाक्षरमुवाच द इति। व्यज्ञासिष्टा ३ इति। व्यज्ञासिष्मेति होचुः। दत्तेति न आत्थेति। ओमिति होवाच व्यज्ञासिष्टेति ॥ २ ॥

अथ हैनमसुरा ऊचुर्ब्रवीतु नो भवानिति। तेभ्यो हैतदेवाक्षरमुवाच द इति। व्यज्ञासिष्टा ३ इति। व्यज्ञासिष्मेति होचुः। दयध्वमिति न आत्थेति। ओमिति होवाच व्यज्ञासिष्टेति। तदेतदेवैषा दैवी[a] वागनुवदति स्तनयित्नुर्द द द इति। दाम्यत दत्त दयध्वमिति। तदेतत् त्रयꣳ शिक्षेद्दमं[b] दानं[b] दयामिति ॥ ३ ॥

*a*) Origin of अधिदैवम्. —*b*) तै 1·9 दमश्च स्वाध्यायप्रवचने च; छां 3·17·4 अथ यत्तपो दानम्...

॥ इति द्वितीयं ब्राह्मणम् ॥

---

एष प्रजापतिर्यद्धृदयम्। एतद्ब्रह्म। एतत् सर्वम्। तदेतत् त्र्यक्षरꣳ हृदयमिति। हृ इत्येकमक्षरम्। अभिहरन्त्यस्मै[b] स्वाश्चान्ये च य एवं वेद। दं इत्येकमक्षरम्। ददत्यस्मै[1] स्वाश्चान्ये च य एवं वेद। यमित्येकमक्षरम्। एति स्वर्गं लोकं य एवं वेद ॥ १ ॥

1) ददन्ति (!) माध्यं.

*a*) Etymological play; cp छां 8·3·3. —*b*) बृ 4·3·37 एवं हैवंविदं सर्वाणि भूतानि प्रतिकल्पन्ते; 6·1·13 तस्यो मे बलिं कुरुतेति; छां 2·21·4 सर्वा दिशो बलिमस्मै हरन्ति; 5·14·1 तस्मात्त्वा पृथग् बलय आयन्ति; कौ 2·2; तै 1·5; प्र 2·7.

॥ इति तृतीयं ब्राह्मणम् ॥

---

तद्वै तदेतदेव तदास । सत्यमेव । स यो हैतं[1] महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाँल्लोकान् —जित इन्न्वसावसत्— य एवमेतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति । सत्यꣳ ह्येव ब्रह्म ॥ १ ॥

1 ) हैवैतन् ( माध्यं ).

*a* ) To be taken parenthetically. असौ = शत्रुः; असत् = भवेत् or to be taken as an interrogative construction, where असौ = यः etc.

॥ इति चतुर्थं ब्राह्मणम् ॥

---

आप एवेदमग्र आसुः । ता आपः सत्यमसृजन्त । सत्यं ब्रह्म । ब्रह्म प्रजापतिम् । प्रजापतिर्देवान् । ते देवाः सत्यमेवो[1]पासते । तदेतत् त्र्यक्षरꣳ स–ति–य–मिति स इत्येकमक्षरम् । तीत्येकमक्षरम् । यमित्येकमक्षरम् । प्रथमोत्तमे[b] अक्षरे सत्यं मध्यतो[b]ऽनृतम् । तदेतदनृतमुभय[2]तः[c] सत्येन परिगृहीतम् । सत्यभूयमेव[d] भवति । नैवंविद्वाꣳसमनृतꣳ हिनस्ति ॥ १ ॥

1 ) इति for एव ( माध्यं ). —2 ) उभयतः dropped in माध्यं.

*a* ) Etymological play; छां 8·3·5; कौ 1·6; तै 2·6 सच्च त्यच्चाभवत्...सत्यमभवत्. —*b* ) शब्रा 7·1·2·23 अथो अन्तयोर्वाव संस्क्रियमाणयोर्मध्यं संस्क्रियते. —*c* ) ऋ 5·81·4 उत रात्रीमुभयतः परीयसे ( said of सवितृ ). —*d* ) छां 5·10·6 तद्भूय एव भवति; गी 14·26; 18·53 ब्रह्मभूयाय कल्पते.

तद्यत् तत् सत्यमसौ स आदित्यः । य एष एतस्मिन्मण्डले[a] पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषस्तावेतावन्योन्यस्मिन् प्रतिष्ठितौ । रश्मिभि[b][1]रेषोऽस्मिन् प्रतिष्ठितः प्राणैरयममुष्मिन् । स यदोत्क्रमिष्यन् भवति शुद्धमेवैतन् मण्डलं पश्यति । नैनमेते रश्मयः प्रत्यायन्ति ॥ २ ॥

1 ) माध्यं adds वै after रश्मिभिः.

*a* ) शब्रा 7·4·1·17 असौ वा आदित्य एष रुक्मो अथ य एष एतस्मिन् मण्डले पुरुषः; बृ 2·3·3; मै 6·16; 6·38 सौर–सौम्य–आग्नेय–सात्त्विकानि मण्डलानि. —*b* ) ई 16; बृ 5·15 व्यूह रश्मीन्, समूह तेजः; छां 8·6·2 एवमेवैता आदित्यस्य रश्मयः.

य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति शिरः । एकꣳ शिर एकमेतदक्षरम् । भुव इति बाहू । द्वौ बाहू द्वे एते अक्षरे । स्वरि[1]ति प्रतिष्ठा । द्वे प्रतिष्ठे द्वे एते अक्षरे । तस्योपनिषदहरिति[a] । हन्ति[b] पाप्मानं जहाति च य एवं वेद ॥ ३ ॥

1 ) Böhtlingk reads सुअर्.

*a* ) उपनिषत् in the sense औपम्य; cp पा 1·4·79 जीविकौपनिषदौ औपम्ये. —*b* ) Etymological explanation of अहः.

योऽयं दक्षिणेऽक्षन् पुरुषस्तस्य भूरिति शिरः । एकं शिर एकमेतदक्षरम् । भुव इति बाहू । द्वौ बाहू द्वे एते अक्षरे । स्वरिति प्रतिष्ठा । द्वे प्रतिष्ठे द्वे एते अक्षरे । तस्योपनिषदहमिति । हन्ति पाप्मानं जहाति च य एवं वेद ॥ ४ ॥

॥ इति पञ्चमं ब्राह्मणम् ॥

---

मनोमयोऽयं पुरुषो भाःसत्यः । तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा । स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किं च ॥ १ ॥

Cp in general शब्रा 10·6·2; छां 3·14; बृ 4·4·22. This ब्राह्मण interchanges with the following.

1 ) माध्यं adds एवमयमन्तरात्मन् पुरुषः before सः. —2 ) माध्यं adds य एवं वेद after च.

*a* ) Cp अन्तर्ज्योतिः in बृ 4·3·7. —*b* ) बृ 3·8·9 एतस्य वा अक्षरस्य प्रशासने; छां 5·3·7 क्षत्रस्यैव प्रशासनमभूत्.

॥ इति षष्ठं ब्राह्मणम् ॥

---

विद्युद् ब्रह्मेत्याहुः । विदानाद्विद्युत् । विद्यत्येनं पाप्मनो य एवं वेद विद्युद्-ब्रह्मेति । विद्युद्ध्येव ब्रह्म ॥ १ ॥

1 ) माध्यं reads सर्वस्मात् before पाप्मनः.

*a* ) बृ 2·3·6 यथा सकृद्विद्युत्तम्; के 4·4 यदेतद्विद्युतो व्यद्युतदा ३ इति. —*b* ) Popular etymology !

॥ इति सप्तमं ब्राह्मणम् ॥

---

वाचं धेनुमुपासीत । तस्याश्चत्वारः स्तनाः । स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारः । तस्यै द्वौ स्तनौ देवा उपजीवन्ति । स्वाहाकारं च वषट्कारं च । हन्तकारं मनुष्याः । स्वधाकारं पितरः । तस्याः प्राण ऋषभो मनो वत्सः ॥ १ ॥

*a* ) ऋ 10·71·5 अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलाँ अपुष्पाम्; बृ 1·4·17; 1·5·7.

॥ इति अष्टमं ब्राह्मणम् ॥

---

अयमग्निर्वैश्वानरो[a] योऽयमन्तः पुरुषे । येनेदमन्नं पच्यते । यदिदमद्यते । तस्यैष घोषो[b] भवति । यमेतत् कर्णावपिधाय शृणोति । स यदोत्क्रमिष्यन् भवति नैनं[1] घोषꣳ शृणोति ॥ १ ॥

Cp in general मै 2·6 which quotes this passage thus अन्यत्राप्युक्तम्....

1 ) माध्यं reads एतम् instead of एनम्.

*a* ) शब्रा 10·6·1·1 ते ह वैश्वानरे समासत; गी 15·14 अहं वैश्वानरो भूत्वा...पचाम्यन्नं चतुर्विधम्. —*b* ) छां 3·13·7–8 यदिदमस्मिन्नन्तः पुरुषे ज्योतिः.

॥ इति नवमं ब्राह्मणम् ॥

---

यदा वै पुरुषोऽस्माल्लोकात् प्रैति[a] स वायुमागच्छति । तस्मै स तत्र विजिहीते । यथा रथचक्रस्य खम् । तेन स ऊर्ध्व आक्रमते । स आदित्यमागच्छति । तस्मै स तत्र विजिहीते । यथा लम्बरस्य[1] खम् । तेन स ऊर्ध्व आक्रमते । स चन्द्रमसमागच्छति । तस्मै स तत्र विजिहीते[b] । यथा दुन्दुभेः खम् । तेन स ऊर्ध्व आक्रमते । स लोकमागच्छत्यशोकमहिमम्[2] । तस्मिन् वसति शाश्वतीः[3] समाः[c] ॥ १ ॥

This ब्राह्मण interchanges with the following in माध्यं.

1 ) माध्यं reads यथाडम्बरस्य for यथा ,लम्बरस्य. —2 ) Böhtlingk reads अशोकान्तरम्. —3 ) माध्यं reads शश्वतीः.

*a* ) बृ 3·3·2 तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत्... —*b* ) ऋ 5·78·5 वि जिहीष्व वनस्पते योनिः सूष्यन्त्या इव; cp विहायस् ( later ) open space, falling apart. —*c* ) ई 8 शाश्वतीभ्यः समाभ्यः.

॥ इति दशमं ब्राह्मणम् ॥

---

एतद्वै परमं तपो[a] यद्व्याहितस्तप्यते[b] । परमꣳ हैव लोकं जयति य एवं वेद । एतद्वै परमं तपो यं प्रेतमरण्यꣳ हरन्ति[c] । परमꣳ हैव लोकं जयति य एवं वेद । एतद्वै परमं तपो यं प्रेतमग्नावभ्यादधति । परमꣳ हैव लोकं जयति य एवं वेद ॥ १ ॥

*a* ) Sufferings of life and death are the तपस्, provided one is अविषीदन् and अनिन्दन् as शंकराचार्य nicely puts it. —*b* ) छां 7·10·1 व्याधीयन्ते प्राणाः. —*c* ) तैब्रा 3·9·1·3 क्षिप्रे यजमानमरण्यं मृतं हरेयुः.

॥ इति एकादशं ब्राह्मणम् ॥

---

अन्नं[a] ब्रह्मेत्येक आहुः । तन्न तथा । पूयति[b] वा अन्नमृते प्राणात् । प्राणो ब्रह्मेत्येक आहुः । तन्न तथा । शुष्यति[c] वै प्राण ऋतेऽन्नात् । एते ह त्वेव देवते एकधाभूयं[d] भूत्वा परमतां गच्छतः । तद्ध स्माह प्रातृदः पितरम् । किंस्विदेवैवं विदुषे साधु कुर्यां[1] किमेवास्मा असाधु कुर्यामिति[1] । स ह स्माह पाणिना मा प्रातृद[2] । कस्त्वेनयोरेकधाभूयं भूत्वा परमतां गच्छतीति । तस्मा उ हैतदुवाच वीति । अन्नं वै वि[1] । अन्ने हीमानि सर्वाणि भूतानि विष्टानि । रमिति । प्राणो वै रम्[f] । प्राणे हीमानि सर्वाणि भूतानि रमन्ते । सर्वाणि ह वा अस्मिन् भूतानि विशन्ति सर्वाणि भूतानि रमन्ते[3] य एवं वेद ॥ १ ॥

1 ) माध्यं reads कुर्यात्. —2 ) Böhtlingk reads प्रतृद्. —3 ) माध्यं reads रतानि ( cp विष्टानि above ).

*a* ) तै 3·2. —*b* ) शब्रा 10·5·3·8 अकृत्स्नं वै कर्म ऋते प्राणेभ्यः, अकृत्स्ना उ वै प्राणा ऋते कर्मणः. —*c* ) तैसं 4·1·1·13 तस्मादेष हतो न पूयति; 6·4·7·2 यत्पूयति तत्प्रवाते विषजन्ति; शब्रा 7·3·1·45 तस्माद्रेतः सिक्तं प्राणमभिसंभवति पूयेद्ध यद्दते प्राणात्संभवेत्. —*d* ) बृ 5·5·1 सत्यभूय. —*e* ) जै 3·31·4 ब्राह्मणोऽस्मि प्रातृदो भाल्लः. —*f* ) वि and रम् which go to form the word वीर (which is एकधाभूय of वि and रम्); cp the Indo-Germanic word *wiros*. See वीर in 5·13·1 below उद्धास्मादुक्थविद्वीरस्तिष्ठति.

॥ इति द्वादशं ब्राह्मणम् ॥

---

उक्थम्[a] । प्राणो वा उक्थम् । प्राणो हीदं सर्वमुत्थापयति । उद्धास्मादुक्थविद्वीरस्तिष्ठति । उक्थस्य सायुज्यं सलोकतां[b] जयति य एवं वेद ॥ १ ॥

उक्थम्, यजुः, and साम represent the ब्राह्मणs and क्षत्रम् represents the क्षत्रियs; cp कठ 2·25 यस्य ब्रह्म च क्षत्रं च; or the first three represent the three Vedas and the last, अथर्ववेद.

*a* ) ऐआ 2·1·2 पुरुष एव उक्थम् । अयमेव महान् प्रजापतिः; अहमुक्थमस्मीति विद्यात्; कौ 3·3 अथ खलु प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्य उत्थापयति तस्मादेतदेवोक्थमुपासीत. —*b* ) बृ 1·5·3; छां 2·20·2 which adds सार्ष्टिताम्.

यजुः । प्राणो वै यजुः । प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते । युज्यन्ते हास्मै[a] सर्वाणि भूतानि श्रैष्ठ्याय । यजुषः सायुज्यꣳ सलोकतां जयति य एवं वेद ॥ २ ॥

*a* ) अस्मै श्रैष्ठ्याय = अस्य श्रैष्ठ्याय ( attraction of cases ); cp तैब्रा 1·3·2·1 अतिष्ठन्त अस्मै ज्यैष्ठ्याय; कौ 2·6; 4·15.

साम । प्राणो वै साम । प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चि । सम्यञ्चि हास्मै[1] सर्वाणि भूतानि श्रैष्ठ्याय कल्पन्ते । साम्नः सायुज्यꣳ सलोकतां जयति य एवं वेद ॥ ३ ॥

1 ) माध्यं reads अस्मिन् for अस्मै.

क्षत्रम् । प्राणो वै क्षत्रम् । प्राणो हि वै क्षत्रम् । त्रायते[a] हैनं प्राणः क्षणितोः । प्रक्षत्रमत्रम्[1]आप्नोति । क्षत्रस्य सायुज्यꣳ सलोकतां जयति य एवं वेद ॥ ४ ॥

1 ) माध्यं reads क्षत्रमात्रम्.

*a* ) Popular etymology of क्षत्र; cp कालिदास-रघुवंश 2·53 क्षतात् किल त्रायते ( क्षत्रिय ).

॥ इति त्रयोदशं ब्राह्मणम् ॥

---

भूमिर्[a]अन्तरिक्षं द्यौरित्यष्टा[1]वक्षराणि । अष्टाक्षरꣳ ह वा एकं[b] गायत्र्यै पदम् । एतदु हैवास्या एतत् । स यावदेषु त्रिषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ १ ॥

1 ) Read दिऔः to make up the number eight.

*a* ) शब्रा 11·2·3·1 अस्मिन्नेव लोके अग्निं वायुमन्तरिक्षे दिव्येव सूर्यम्. —*b* ) छां 3·12·5 सैषा चतुष्पदा षड्विधा गायत्री.

ऋचो यजूꣳषि सामानीत्यष्टावक्षराणि । अष्टाक्षरꣳ ह वा एकं गायत्र्यै पदम् । एतदु हैवास्या एतत् । स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ २ ॥

प्राणोऽपानो व्यान इत्यष्टा[1]वक्षराणि । अष्टाक्षरꣳ ह वा एकं गायत्र्यै पदम् । एतदु हैवास्या एतत् । स यावदिदं प्राणि तावद्ध जयति योऽस्या एतदेवं पदं वेद । अथास्या एतदेव तुरीयं दर्शतं पदं परोरजा[a] य एष तपति । यद्वै[b] चतुर्थं तत् तुरीयम् ।

दर्शतं पदमिति ददृ[b]श इव ह्येषः । परोरजा इति सर्वमु ह्येवैष रज उपर्युपरि तपति । एवꣳ हैव श्रिया यशसा तपति योऽस्या एतदेवं पदं वेद ॥ ३ ॥

1 ) Read विज्ञान to make up the number eight.

*a* ) तैब्रा 3·7·7·13 परोरजास्ते पञ्चमः पादः; 3·10·9·4 परोरजाः as opposed to अवाग्रजाः; तैआ 1·25·3 परोरजाः पादः; षब्रा 1·2 परोरजास्ते पञ्चमः पादः इत्याह परोरजसो वै ब्रह्मणः स्थानम्... —*b* ) शब्रा 11·2·4·1 अथैष एव दर्शो यच्चन्द्रमाः, ददृश इव ह्येषः.

सैषा गायत्र्येतस्मिꣳस्तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता । तद्वै तत् सत्ये प्रतिष्ठितम्[1] । चक्षुर्वै सत्यम्[a] । चक्षुर्हि वै सत्यम् । तस्माद्यदिदानीं द्वौ विवद[b]मानावेयातामहमदर्शम्[2]अहमश्रौषमिति । य एवं ब्रूयादहमदर्शमिति । तस्मा एव श्रद्दध्याम[3] । तद्वै तत् सत्यं बले प्रतिष्ठितम् । प्राणो वै बलम् । तत् प्राणे प्रतिष्ठितम् । तस्मादाहुर्बलꣳ सत्यादोगीय[4] इति । एवम्वेषा गायत्र्यध्यात्मं प्रतिष्ठिता । सा हैषा गयाꣳस्तत्रे । प्राणा वै गयाः । तत् प्राणाꣳस्तत्रे । तद्यद्गयाꣳस्तत्रे तस्माद्गायत्री नाम । स यामेवामूꣳ सा[c]वित्रीम्[5]अन्वाहैषैव सा । स यस्मा अन्वाह तस्य प्राणाꣳस्त्रायते ॥ ४ ॥

1 ) प्रतिष्ठिता ( माध्यं ). —2 ) अद्राक्षम् ( माध्यं ). —3 ) श्रद्दध्यात् ( माध्यं ). —4 ) ओजीयः ( माध्यं ). Cp ऋ 2·33·10 न वा ओजीयो रुद्र त्वदस्ति; 9·66·17 य उग्रेभ्यश्चिदोजीयान्. —5 ) Dropped in माध्यं.

*a* ) ऐब्रा 1·6 एतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षुः. —*b* ) ऐब्रा 2·40 तस्माद्यतरो विवदमानयोराहानुष्ठ्या चक्षुषाऽदर्शमिति तस्य श्रद्दधाति. —*c* ) सावित्री = गायत्रीमंत्र ( ऋ 3·62·10 ).

ताꣳ हैताम्[1]एके सावित्रीमनुष्टुभम्[a]अन्वाहुः । वागनुष्टुप् । एतद्वाचमनुब्रूम इति । न तथा कुर्यात् । गायत्रीमेव सावित्रीम्[2]अनुब्रूयात् । यदि ह वा अप्येवंविद्[3]बह्विव प्रतिगृह्णाति न हैव तद्गायत्र्या एकंचन पदं[b] प्रति ॥ ५ ॥

1 ) एताम् dropped in माध्यं. —2 ) माध्यं drops सावित्रीम्. —3 ) माध्यं drops एवंवित्.

*a* ) ऋ 5·82·1. The only अनुष्टुप् verse in an otherwise गायत्रीसूक्त- तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि. —*d* ) छां 3·11·6 एतदेव ततो भूयः.

स य इमाꣳस्त्रींल्लोकान्पूर्णान् प्रतिगृह्णीयात् सोऽस्या एतत् प्रथमं पदमाप्नुयात् । अथ यावतीयं त्रयी विद्या यस्तावत् प्रतिगृह्णीयात् सोऽस्या एतद्द्वितीयं पदमाप्नुयात् । अथ यावदिदं प्राणि यस्तावत् प्रतिगृह्णीयात् सोऽस्या एतत् तृतीयं पदमाप्नुयात् । अथास्या

एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति । नैकेनचनाप्यम् । कुत उ एतावत् प्रतिगृह्णीयात् ॥ ६ ॥

तस्या उपस्थानम्[a] । गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पदी । अपदसि । न हि पद्यसे । नमस्ते तुरीयाय दर्शताय पदाय परोरजसे । असावदो मा प्रापदिति । यं द्विष्यादसावस्मै कामो मा समृद्धीति[1] वा । न हैवास्मै स कामः समृध्यते यस्मा एवमुपतिष्ठते । अहमदः प्रापमिति वा ॥ ७ ॥

1 ) माध्यं reads समर्धीति Cp शब्रा 3·9·1·2 न मे स कामः समार्धि; 4·6·5·5 अस्मै कामो मा समृद्धीति.

*a* ) शब्रा 2·3·2·4 उप च तिष्ठत उप चास्ते तदेव तस्योपस्थानम्; 2·4·1·2 दीर्घमग्न्युपस्थानम्.

एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्विमुवाच[a]— यन्नु हो तद्गायत्रीविदब्रूथाः । अथ कथꣳ हस्तीभूतो[b] वहसीति । मुखꣳ ह्यस्याः सम्राण्न विदांचकारेति[1] होवाच । तस्या अग्निरेव मुखम्[c] । यदि ह वा अपि बह्विवाग्नावभ्यादधति सर्वमेव तत् संदहति । एवꣳ हैवैवंविद्यद्यपि बह्विव पापं कुरुते सर्वमेव तत् संप्साय[d] शुद्धः पूतोऽजरोऽमृतः संभवति ॥ ८ ॥

1 ) विदांचकार ( माध्यं ).

*a* ) ऐब्रा 6·30 बुलिल आश्वतर आश्विः; जैब्रा 1·22; शब्रा 4·6·1·9; 10·6·1·1; छां 5·11·1; 5·16·1. —*b* ) Double retribution in बृ 4·6·6 प्राप्यान्तं कर्मणस्तस्य...तस्माल्लोकात् पुनरैत्यस्मै लोकाय कर्मणे. —*c* ) जै 4·8·1–2. —*d* ) अ 10·3·14 यथा वातश्चाग्निश्च वृक्षान् प्सातो वनस्पतीन्; 10·5·43 इयं तं प्सातु आहुतिः; शब्रा 3·9·3·26 एवमेषाहुतिरेतया देवतया प्साता भवति.

॥ इति चतुर्दशं ब्राह्मणम् ॥

---

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत् त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥

पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजः ।
यत् ते रूपं कल्याणतमं तत् ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि ॥

वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् ।
ॐ क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर ॥
अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १ ॥

1 ) माध्यं reads क्लिबे.

*a* ) Cp ई 15–18; मै 6·35 ( विष्णवे for इष्टये ! ). —*b* ) बृ 4·4·5 स यत्क्रतुर्भवति तत् कर्म कुरुते; छां 3·14·1 यथाक्रतुरस्मिँल्लोके... —*c* ) Cp ऋ 1·189·1.

॥ इति पञ्चदशं ब्राह्मणम् ॥

॥ इति पञ्चमोऽध्यायः ॥

---

यो[1] ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां[a] भवति । प्राणो वै ज्येष्ठश्च श्रेष्ठश्च । ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति । अपि च येषां बुभूषति । य एवं वेद ॥ १ ॥

Cp in general बृ 6·1·1–6 with छां 5·1·1–5; ऐआ 2·4; कौ 3·3; प्र 2·3.
1 ) बृ 6·1 appears as 6·2 in माध्यं.
*a* ) छां 5·1·1 drops स्वानाम्.

यो ह वै वसिष्ठां[a] वेद वसिष्ठः स्वानां भवति । वाग्वै वसिष्ठा[b] । वसिष्ठः स्वानां भवति । [1]अपि च येषां बुभूषति[-1] । य एवं वेद ॥ २ ॥

1– –1 ) dropped in माध्यं.
*a* ) छां 5·1·2 has वसिष्ठम्. —*b* ) छां 5·1·2 has वसिष्ठः.

यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति समे[a] । प्रतितिष्ठति दुर्गे । चक्षुर्वै प्रतिष्ठा । चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति । प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे । य एवं वेद ॥ ३ ॥

*a* ) अ 8·7·17 पर्वतेषु समेषु च.

यो ह वै संपदं वेद सꣳ हास्मै पद्यते यं कामं कामयते । श्रोत्रं वै संपत् । श्रोत्रे हीमे सर्वे वेदा अभिसंपन्नाः । सꣳ हास्मै पद्यते यं कामं कामयते । य एवं वेद ॥ ४ ॥

यो ह वा आयतनं वेदायतनꣳ स्वानां भवत्यायतनं जनानाम्। मनो वा आयतनम्। आयतनꣳ स्वानां भवत्यायतनं जनानाम्। य एवं वेद ॥ ५ ॥

यो[1] ह वै प्रजातिं[2] वेद प्रजायते ह[4] प्रजया पशुभिः। रेतो वै प्रजातिः[3]। प्रजायते ह[4] प्रजया पशुभिः। य एवं वेद ॥ ६ ॥

1) छां lacks this कण्डिका. —2) प्रजापतिम् (माध्यं). —3) प्रजापतिः (माध्यं). —4) माध्यं drops ह.

ते हेमे प्राणा अहꣳश्रेयसे[a] विवदमाना ब्रह्म[b] जग्मुः। तद्धोचुः—को नो वसिष्ठ इति। तद्धोवाच—यस्मिन् व उत्क्रान्त इदꣳ शरीरं पापीयो[c] मन्यते[1] स वो वसिष्ठ इति ॥ ७ ॥

1) Shall we read मन्येत ? Cp दृश्येत in छां 5·2·7.

*a*) Contrasted with निःश्रेयस; cp पा 5·4·77, 80; कौ 2·9 uses निःश्रेयस and अहंश्रेयस side by side; cp ऐआ 2·1·4 ता अहिंसन्त-अहमुक्थमस्मि, अहमुक्थमस्मि; बृ 6·1·7–14; छां 5·1·6–12; 5·2·2; कौ 2·14; 3·3; प्र 2·1–4. —*b*) छां has प्रजापतिम्. —*c*) छां reads पापिष्ठतरमिव.

वाग्घोच्चक्राम। सा संवत्सरं प्रोष्यागत्योवाच—कथमशकत मदृते जीवितुमिति। ते होचुः—यथाऽकला[1] अवदन्तो वाचा प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति। प्रविवेश ह वाक् ॥ ८ ॥

1) माध्यं reads कडाः (i. e. कलाः).

चक्षुर्होच्चक्राम। तत् संवत्सरं प्रोष्यागत्योवाच—कथमशकत मदृते जीवितुमिति। ते होचुः—यथाऽन्धा अपश्यन्तश्चक्षुषा प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति। प्रविवेश ह चक्षुः ॥ ९ ॥

श्रोत्रꣳ होच्चक्राम। तत् संवत्सरं प्रोष्यागत्योवाच—कथमशकत मदृते जीवितुमिति। ते होचुः—यथा बधिरा अशृण्वन्तः श्रोत्रेण प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा विद्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति। प्रविवेश ह श्रोत्रम् ॥ १० ॥

मनो होच्चक्राम। तत् संवत्सरं प्रोष्यागत्योवाच—कथमशकत मदृते जीवितुमिति। ते होचुः—यथा मुग्धा अविद्वाꣳसो मनसा प्राणन्तः प्राणेन वदन्तो वाचा

पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण प्रजायमाना रेतसैवमजीविष्मेति । प्रविवेश ह मनः ॥ ११ ॥

रेतो होच्चक्राम । तत् संवत्सरं प्रोष्यागत्योवाच—कथमशकत मदृते जीवितुमिति । ते होचुः—यथा क्लीबा अप्रजायमाना रेतसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसैवमजीविष्मेति । प्रविवेश ह रेतः ॥ १२ ॥

अथ ह प्राण उत्क्रमिष्यन् यथा महासुहयः सैन्धवः पड्वीशशङ्कून् संवृहेदेवꣳ हैवेमान् प्राणान् संववर्ह । ते होचुः—मा भगव उत्क्रमीः । न वै शक्ष्यामस्त्वदृते जीवितुमिति । तस्यो[1] मे बलिं कुरुतेति । तथेति ॥ १३ ॥

1 ) माध्यं reads वै for उ.

*a* ) छां 5·1·12 has संखिदेत्.

सा ह वागुवाच—यद्वा अहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीति । यद्वा अहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठोऽसीति चक्षुः । यद्वा अहꣳ संपदस्मि त्वं तत्संपदसीति श्रोत्रम् । यद्वा अहमायतनमस्मि त्वं तदायतनमसीति मनः । यद्वा अहं प्रजातिरस्मि त्वं तत् प्रजातिरसीति रेतः । तस्यो मे किमन्नं किं वास इति । यदिदं किंचा श्वभ्य आ कृमिभ्य[1] आ कीटपतङ्गेभ्यस्तत् तेऽन्नम् । आपो वास इति । न ह वा अस्यानन्नं जग्धं भवति, नानन्नं प्रतिगृहीतं, य एवमेतदनस्यान्नं वेद । तद्विद्वाꣳसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वाऽऽचामन्ति । एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते[2] ॥ १४ ॥

1 ) माध्यं reads क्रिमिभ्यः. —2 ) माध्यं adds hereafter–तस्मादेवंविदशिष्यन्नाचामेदशित्वाचामेदेतमेव तदनमनग्नं कुरुते.

॥ इति प्रथमं ब्राह्मणम् ॥

---

श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां परिषदमाजगाम । स आजगाम जैवलिं प्रवाहणं परिचारयमाणम् । तमुदीक्ष्याभ्युवाद कुमार ३ इति । स भो ३ इति प्रतिशुश्राव । अनुशिष्टो न्वासि पित्रेति । ओमिति होवाच ॥ १ ॥

Cp in general 6·2·1–16 with छां 5·3–10, the basis of the doctrine of transmigration of the soul; see ऋ 10·16·3 सूर्यं चक्षुर्गच्छतु वातमात्मा; शब्रा 10·3·3·8 वाचैवाग्निमप्येति चक्षुषादित्यम्...

*a* ) छां 1·8·1.

वेत्थ यथेमाः प्रजाः प्रयत्यो विप्रतिपद्यन्ता३[1] इति । नेति होवाच । वेत्थो यथेमं लोकं पुनरापद्यन्ता३[2] इति । नेति हैवोवाच । वेत्थो यथाऽसौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न संपूर्यता३[3] इति । नेति हैवोवाच । वेत्थो यतिथ्यां[a]-माहुत्याꣳ हुतायामापः पुरुषवाचो[b] भूत्वा समुत्थाय वदन्ती३ इति । नेति हैवोवाच । वेत्थो देवयानस्य वा पथः प्रतिपदं[c] पितृयाणस्य वा । यत् कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृयाणं वा । अपि हि न[4] ऋषेर्वचः श्रुतम्—

द्वे[d] सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् ।
ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं मातरं चेति ॥

नाहमत एकंचन वेदेति होवाच ॥ २ ॥

1 ) माध्यं and Böhtlingk read विप्रतिपद्यान्ता ३ इति. —2 ) माध्यं and Böhtlingk read पुनरापद्यान्ता ३ इति. —3 ) Böhtlingk reads संपूर्याता ३ इति. —4 ) न or नः ?

*a* ) शब्रा 1·8·1·5 स यतिथीं तत् समां परिदिदेश ततिथीं समां नावमुपकल्प्योपासांचक्रे. —*b* ) छां 5·3·3 reads पुरुषवचसः. —*c* ) तैसं 1·6·10·4 ब्रह्मैव प्रतिपदं कुरुते; वासं 7·38 त्वं राजासि प्रतिपत्सुतानाम्; तैब्रा 3·8·15·11 आज्यस्य प्रतिपदं करोति. Cp पालि-पटिपदा. —*d* ) ऋ 10·88·15 ( स्रुती for सृती ).

अथैनं वसत्योपमन्त्रयांचक्रे[a] । अनादृत्य वसतिं कुमारः प्रदुद्राव । स आजगाम पितरम् । तꣳहोवाच—इति वाव किल नो भवान् पुरानुशिष्टानवोच इति । कथꣳ सुमेधः[b] इति । पञ्च मा प्रश्नान् राजन्यबन्धुरप्राक्षीत्[c] । ततो नैकंचन वेदेति[1] । कतमे त इति । इम इति ह प्रतीकान्युदाजहार[d] ॥ ३ ॥

1 ) माध्यं adds होवाच after इति.

*a* ) तैसं 2·6·6·5 अन्नाद्येन देवा अग्निमुपामंत्रयन्त, राज्येन पितरो यमम्; शब्रा 3·2·1·19 योषा वा इयं वाक् । उपमंत्रयस्व ... स्त्री पुंसोपमंत्रिता. —*b* ) तै 1·10 सुमेधा अमृतोक्षितः; क 1·8 पुरुषस्याल्पमेधसः; गी 7·23 तद्भवत्यल्पमेधसाम्; पा 5·4·112 नित्यमसिच् प्रजामेधयोः. —*c* ) शब्रा 11·6·2·5 अति वै नो राजन्यबन्धुरवादीत्; छां 6·1·1 ब्रह्मबंधुरिव भवति. —*d* ) ऋ 10·118·8 स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्यः; बृ 1·5·1 सोऽन्नमत्ति प्रतीकेन.

स होवाच—तथा नस्त्वं तात जानीथा यथा यदहं किंच वेद सर्वमहं तत् तुभ्यमवोचम् । प्रेहि तु तत्र । प्रतीत्य ब्रह्मचर्यं वत्स्याव इति । भवानेव गच्छत्विति । स आजगाम गौतमो यत्र प्रवाहणस्य जैवलेरास । तस्मा आसनमाहृत्य[1]ोदकमाहारयांचकार । अथ हास्मा अर्घ्यं[2] चकार । तꣳ होवाच—वरं भगवते[3] गौतमाय दद्म इति ॥४॥

1) माध्यं reads आहार्य. —2) माध्यं reads अर्घम्. —3) माध्यं reads भवते.

स होवाच—प्रतिज्ञातो म एष वरः । यां तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति ॥ ५ ॥

स होवाच—दैवेषु वै गौतम तद्वरेषु । मानुषाणां ब्रूहीति ॥ ६ ॥

स होवाच—विज्ञायते हास्ति[1]हिरण्यस्या[a]पात्तं[b] गोअश्वानां दासीनां प्रवराणां[2] परिधानस्य । मा नो भवान् बहोरनन्तस्यापर्यन्तस्याभ्यवदान्यो[c] भूदिति । स वै गौतम तीर्थेनेच्छासा[d] इति । उपैम्यहं भवन्तमिति । वाचा ह स्मैव पूर्व उपयन्ति । स होपायनकीर्त्यो[3]वास ॥ ७ ॥

1) Böhtlingk splits this as ह + अस्ति; हस्तिहिरण्यम् ( माध्वपाठ ). —2) माध्यं reads प्रवराणां परिधानानाम्. —3) माध्यं reads उपायनकीर्ता उवाच.

*a*) छां 7·24·2 हस्तिहिरण्यं दासभार्यम्; क 1·23 हस्तिहिरण्यमश्वान्. —*b*) Shall we read अवत्तम्; cp शब्रा 4·5·2·6 तदस्य सर्वेषामेवाङ्गानाम् अवत्तं भवति; cp अभ्यवदान्यः further; cp मै 6·1 अक्षाध्यक्षोऽवदातमनाः; 6·33 यजमानस्यात्मविदे अवदानं करोति. If we read अपात्तम्— cp बृ 4·3·9 अस्य लोकस्य सर्वावतो मात्रामपादाय. —*c*) अभि + अवदान्यः ( from अवदान ) or अभि + अ + वदान्यः itself from अवदान्य by the elision of the initial अ; cp मभा ( CE ) 3·31·18 ऋजोर्मृदोर्वदान्यस्य ह्रीमतः सत्यवादिनः. —*d*) मुं 1·1·3 विधिवदुपसन्नः पप्रच्छ.

स[1] होवाच—तथा[a] नस्त्वं गौतम मापराधास्तव च पितामहाः । यथेयं विद्येतः पूर्वं न कस्मिꣳश्चन ब्राह्मण उवास । तां त्वहं तुभ्यं वक्ष्यामि । को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातु[b]मिति ॥ ८ ॥

1) माध्यं drops स होवाच.

*a*) छां 5·3·7 यथा मा त्वं गौतमावदो यथेयं न प्राक् त्वत्तः पुरा विद्या ब्राह्मणान् गच्छति. —*b*) क 2·9 त्वादृङ् नो भूयान्नचिकेतः प्रष्टा; तै 3·10 न कंचन वसतौ प्रत्याचक्षीत; कौ 2·2 य एवैनं पुरस्तात् प्रत्याचक्षीरन् त एव एनमुपमंत्रयन्ते.

असौ वै लोकोऽग्निर्गौतम । तस्यादित्य एव समित् । रश्मयो धूमः । अहरर्चिः । दिशो[1]ऽङ्गाराः । अवान्तर[2]दिशो विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति । तस्या आहुत्यै[3] सोमो राजा संभवति ॥ ९ ॥

Cp in general छां 5·4.

1 ) माध्यं substitutes चन्द्रमाः for दिशः. —2 ) नक्षत्राणि for अवान्तरादिशः; विष्फुलिंगाः for विस्फुलिंगाः ( माध्यं ). —3 ) आहुतेः for आहुत्यै ( माध्यं ).

पर्जन्यो वा अग्निर्गौतम । तस्य संवत्सर एव समित् । अभ्राणि धूमः । विद्युदर्चिः । अशनिरङ्गाराः । ह्रादुनयो विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳ राजानं[1] जुह्वति । तस्या आहुत्यै[2] वृष्टिः संभवति ॥ १० ॥

1 ) Dropped in माध्यं. —2 ) आहुतेः for आहुत्यै ( माध्यं ).

अयं वै लोकोऽग्निर्गौतम । तस्य पृथिव्येव समित् । अग्निर्[1]धूमः । रात्रिरर्चिः । चन्द्रमा अङ्गाराः । नक्षत्राणि[3] विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति । तस्या आहुत्या[4] अन्नꣳ संभवति ॥ ११ ॥

1 ) वायुः for अग्निः ( माध्यं ). —2 ) दिशः for चन्द्रमाः ( माध्यं ). —3 ) अवान्तरादिशः for नक्षत्राणि ( माध्यं ). —4 ) आहुतेः for आहुत्यै ( माध्यं ).

पुरुषो वा अग्निर्गौतम । तस्य व्यात्तमेव समित् । प्राणो धूमः । वागर्चिः । चक्षुरङ्गाराः । श्रोत्रं विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति । तस्या आहुत्यै रेतः संभवति ॥ १२ ॥

योषा वा अग्निर्गौतम । तस्या उपस्थ एव समित् । लोमानि धूमः । योनिरर्चिः । य[a]दन्तः करोति तेऽङ्गाराः । अभिनन्दा विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति । तस्या आहुत्यै पुरुषः संभवति[1] । स जीवति यावज्जीवति । अथ यदा म्रियते—॥ १३ ॥

1 ) माध्यं adds स जायते after this.

*a* ) शब्रा 1·7·4·2 य इत्थम्...करोति; छां 5·8·1.

अथैनमग्नये हरन्ति । तस्याग्निरेवाग्निर्भवति । समित् समित् । धूमो धूमः । अर्चिरर्चिः । अङ्गारा अङ्गाराः । विस्फुलिङ्गा विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति । तस्या आहुत्यै पुरुषो भास्वरवर्णः संभवति ॥ १४ ॥

ते य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां[a] सत्यमुपासते तेऽर्चिरभिसंभवन्ति। अर्चिषोऽहः। अह्न आपूर्यमाणपक्षम्। आपूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति। मासेभ्यो देवलोकम्। देवलोकादादित्यम्। आदित्याद्वैद्युतम्। तान् वैद्युतान्[1] पुरुषो मानस[b] एत्य ब्रह्मलोकान् गमयति। ते तेषु ब्रह्मलोकेषु पराः परावतो[c] वसन्ति। तेषां[2] न पुनरावृत्तिः[d 2] ॥ १५ ॥

1) माध्यं reads, obviously rightly, वैद्युतात्. —2- -2) माध्यं reads तेषामिह ... आवृत्तिरस्ति.

*a*) छां 5·10·1 श्रद्धा तप इति; मुं 1·2·11 तपःश्रद्धे ये ह्युपवसन्त्यरण्ये; प्र 1·10 तपसा ब्रह्मचर्येण श्रद्धया. —*b*) छां 4·15·5 and 5·10·2 पुरुषोऽमानवः. —*c*) ऋ 10·58·11 यत्ते पराः परावतो मनो जगाम दूरकम्. —*d*) छां 8·15·1 न च पुनरावर्तते.

अथ ये यज्ञेन[a] दानेन तपसा लोकाञ्जयन्ति ते धूममभिसंभवन्ति। धूमाद्रात्रिम्। रात्रेरपक्षीयमाणपक्षम्। अपक्षीयमाणपक्षाद्यान् षण्मासान् दक्षिणादित्य एति। मासेभ्यः पितृलोकम्। पितृलोकाच्चन्द्रम्। ते चन्द्रं प्राप्यान्नं भवन्ति। तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्[b]येवमेनांस्तत्र भक्षयन्ति। तेषां यदा तत् पर्यवैत्य-थेममेवाकाशमभिनिष्पद्यन्ते। आकाशाद्वायुम्। वायोर्वृष्टिम्। वृष्टेः पृथिवीम्। ते पृथिवीं प्राप्यान्नं भवन्ति। ते[1] पुनः पुरुषाग्नौ हूयन्ते ततो योषाग्नौ जायन्ते। लोकान् प्रत्यु-त्थायिनस्त[1] एवमेवानुपरिवर्तन्ते[c]। अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम् ॥ १६ ॥

1- -1) Dropped in माध्यं.

*a*) छां 5·10·3 इष्टापूर्ते दत्तमिति; प्र 1·9 इष्टापूर्ते कृतमिति; गी 18·5 यज्ञो दानं तपश्चैव; but बृ 4·4·22 तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन. —*c*) Cp in construction जायस्व म्रियस्वेति in छां 5·10·8.

॥ इति द्वितीयं ब्राह्मणम् ॥

---

स यः कामयेत[1]—महत् प्राप्नुयामित्युदगयन आपूर्यमाणपक्षस्य पुण्याहे द्वादशा-हमुपसद्व्रती भूत्वौदुम्बरे कंसे चमसे वा सर्वौषधं फलानीति संभृत्य परिसमुह्य परिलिप्याग्निमुपसमाधाय परिस्तीर्या[2]ऽऽवृताज्यं संस्कृत्य पुंसा नक्षत्रेण मन्थं संनीय जुहोति—

यावन्तो[b] देवास्त्वयि जातवेदस्तिर्यञ्चो घ्नन्ति पुरुषस्य कामान्[1]।
तेभ्योऽहं भागधेयं जुहोमि ते मा तृप्ताः सर्वैः[3] कामैस्तर्पयन्तु स्वाहा॥
या तिरश्ची निपद्यते[4]ऽहं विधरणी इति।
तां त्वा घृतस्य धारया यजे सꣳराधनीमहꣳ स्वाहा[5]॥ १॥

Cp in general बृ 6·3·1–13 ( which is a continuation of बृ 6·1·1–6) with छां 5·2·4–9 and 5·3; कौ 2·3.

1) Weber reads कामयते. —2) Dropped in माध्यं. —3) Dropped in माध्यं but it is required m. c. —4) माध्यं reads निपद्यसे. —5) माध्यं adds प्रजापते न त्वदेतान्यन्य ( ऋ 10·121·10 ) इति तृतीयां जुहोति.

*a*) अ 7·99·1 परि स्तृणीहि परि धेहि वेदिम्; शब्रा 1·1·1·18 अथ तृणैः परिस्तृणाति; 1·7·3·28 का ते अनग्नता इति अभित एव मा परि स्तृणीयुरिति. —*b*) These verses are absent in छां. —*c*) ब्रसू 3·2·24 अपि च संराधने प्रत्यक्षानुमानाभ्याम्.

ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति। प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति। वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति। चक्षुषे स्वाहा संपदे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति। श्रोत्राय स्वाहाऽऽयतनाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति। मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति। रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति॥ २॥

*a*) ऋ 9·113·5 सं स्रवन्ति संस्रवाः; शब्रा 3·5·3·13 संस्रवं पत्न्यै पाणावानयति; 3·9·3·32 यदि संस्रवः परिशिष्टोऽलं होमाय स्यात्.

अग्नये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति। सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति। भूः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति। भुवः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति। स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति। भूर्भुवः स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति। ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति। क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति। भूताय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति। भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति। विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति। सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति। प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति॥ ३॥

In the स्वाहाकारs which follow, माध्यं also changing their order, adds ten more स्वाहाकारs i. e. पृथिव्यै, अन्तरिक्षाय, दिवे, दिग्भ्यः, तेजसे, श्रियै, लक्ष्म्यै, सवित्रे, सरस्वत्यै and विश्वेभ्यः देवेभ्यः.

अथैनमभिमृशति—भ्रमदसि[1] । ज्वलदसि । पूर्णमसि । प्रस्तब्धमसि । एकसभमसि । हिंकृतमसि । हिंक्रियमाणमसि । उद्गीथमसि । उद्गीयमानमसि । श्रावितमसि । प्रत्याश्रावितमसि । आर्द्रे संदीप्तमसि । विभूरसि । प्रभूरसि । अन्नमसि । ज्योतिरसि । निधनमसि । संवर्गोऽसीति ॥ ४ ॥

1 ) माध्यं reads भ्रमसि.

अथैनमुद्यच्छत्यामꣳस्यामꣳहि ते मꣳहि[1] । स हि राजेशानोऽधिपतिः । स माꣳ राजेशानोऽधिपतिं करोत्विति ॥ ५ ॥

1 ) माध्यं reads अमोऽसि, आमं हि ते महि.

*a*— —*a* ) The padapāṭha will be आमंसि आमंहि ते महि. Cp छां 5·2·6 for play on words : अमो नामाऽसि, अमा हि ते सर्वमिदम्.

अथैनमाचामति—

तत् सवितुर्वरेण्यम् ।

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।

माध्वीर्नः सन्त्वोषधीः ॥ भूः स्वाहा ।

भर्गो देवस्य धीमहि ।

मधु नक्तमुतोषसो मधुमत् पार्थिवꣳ रजः ।

मधु द्यौरस्तु नः पिता ॥ भुवः स्वाहा ।

धियो यो नः प्रचोदयात् ॥

मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः ।

माध्वीर्गावो भवन्तु नः ॥ स्वः स्वाहा ।

सर्वां सावित्रीमन्वाह । सर्वाश्च मधुमतीरहमेवेदꣳ सर्वं भूयासꣳभूर्भुवः स्वः स्वाहेत्यन्तत[1] आचम्य पाणी प्रक्षाल्य जघनेनाग्निं प्राक्शिराः संविशति । प्रातरादित्यमुपतिष्ठते । दिशामेकपुण्डरीकमसि । अहं मनुष्याणामेकपुण्डरीकं भूयासमिति । यथेतमेत्य जघनेनाग्निमासीनो वꣳशं जपति ॥ ६ ॥

1 ) माध्यं adds after this सर्वाश्च व्याहृतीः.

*a*) ऋ 3·62·10ᵃ. —*b*) ऋ 1·90·6; वासं 13·27. —*c*) ऋ 3·62·10ᵇ. —*d*) ऋ 1·90·7; वासं 13·28. —*e*) ऋ 3·62·10ᶜ. —*f*) ऋ 1·90·8; वासं 13·29. —*g*) ऋ 10·142·8 ह्रदाश्च पुण्डरीकाणि; शब्रा 5·4·5·6 तत्रैकं पुण्डरीकं प्रयच्छति; बृ 2·3·6 पुरुषस्य रूपं ... यथा पुण्डरीकम्; छां 1·6·7 तस्य यथा कप्यासं पुण्डरीकम्; 8·8·1 दहरं पुण्डरीकं वेश्म. —*h*) छां 5·10·5; ब्रसू 3·1·8 यथेतमनेवं च. —*i*) बृ 6·5.

तꣳ हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाच— अपि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ७ ॥

*a*) For the idiom, cp छां 3·17·6 तद्धैतद् घोर आंगिरसः कृष्णाय देवकीपुत्राय उक्त्वा उवाच; also the अर्धमागधी usage उट्ठाए उट्ठाइ. —*b*- -*b*) छां 5·2·3 जायेरन्नेव आस्मिन् शाखाः, प्ररोहेयुः पलाशानीति; cp Iliad I·234 *f* ναὶ μὰ τόδε σκῆπτρον, τὸ μὲν οὔ ποτε φύλλα καὶ ὄζους φύσει, ( Verily by this staff, that shall no more put forth leaf or twig. )

एतमु हैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिन उक्त्वोवाच— अपि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ८ ॥

एतमु हैव मधुकः पैङ्ग्यश्चूलाय भागवित्तयेऽन्तेवासिन उक्त्वोवाच—अपि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ९ ॥

एतमु हैव चूलो भागवित्तिर्जानकाय आयस्थूणायान्तेवासिन उक्त्वोवाच— अपि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ १० ॥

एतमु हैव जानकिरायस्थूणः सत्यकामाय जाबालायान्तेवासिन उक्त्वोवाच— अपि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ११ ॥

एतमु हैव सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वोवाच—अपि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति । तमेतं नापुत्राय वाऽनन्तेवासिने वा ब्रूयात् ॥ १२ ॥

*a*) ऐआ 3·2·6 ता एताः संहिता नानन्तेवासिने प्रब्रूयान्नासंवत्सरवासिने नाप्रवक्त्र इत्याचार्याः; छां 3·11·5 पिता ब्रह्म प्रब्रूयात् प्रणाय्याय वा अन्तेवासिने; श्वे 6·22 नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः; मै 6·29.

चतुरौदुम्बरो भवति। औदुम्बरः स्रुव औदुम्बरश्चमस औदुम्बर इध्म औदुम्बर्या उपमन्थन्यौ। दश ग्राम्याणि धान्यानि भवन्ति। व्रीहियवास्तिलमाषा अणुप्रियंगवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च। तान् पिष्टान् दधनि मधुनि घृत उपसिञ्चति। आज्यस्य जुहोति ॥ १३ ॥

1– –1 ) माध्यं reads तान् सार्धं पिष्ट्वा दध्ना मधुना घृतेनोपसिञ्चति. Cp ओदन and उपसेचन in क 2·25.

*a* ) चतुः used adverbially as a multiplicative. —*b* ) पा 5·2·2–4 where व्रीहि, यव, तिल, माष and अणु are mentioned.

॥ इति तृतीयं ब्राह्मणम् ॥

---

एषां वै भूतानां पृथिवी रसः[a]। पृथिव्या आपः। अपामोषधयः। ओषधीनां पुष्पाणि। पुष्पाणां फलानि। फलानां पुरुषः। पुरुषस्य रेतः ॥ १ ॥

*a* ) छां 1·1·3 स एष रसानां रसतमः·

स ह प्रजापतिरीक्षांचक्रे—हन्तास्मै प्रतिष्ठां कल्पयानीति स स्त्रियꣳ ससृजे। ताꣳ सृष्ट्वाऽध उपास्त। तस्मात् स्त्रियमध उपासीत[1]। स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत्। तेनैनामभ्यसृजत् ॥ २ ॥

1 ) माध्यं reads after this श्रीरेषा.

तस्या वेदिरुपस्थः। लोमानि बर्हिः। चर्माधिषवणे। समिद्धो मध्यतस्तौ मुष्कौ[a]। स यावान् ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति। य एवं विद्वानधोपहासं[b] चरत्यासाꣳ[1] स्त्रीणाꣳ सुकृतं वृङ्क्ते। अथ य इदमविद्वानधोपहासं चरत्याऽस्य[2] स्त्रियः सुकृतं वृञ्जते ॥ ३ ॥

1 ) माध्यं reads चरति आ स for चरत्यासाम्. —2 ) = चरति + आ + अस्य.

*a* ) ऋ 9·112·4 रोमण्वन्तौ भेदौ. —*b* ) i. e. अधः + उप + ह + आसम्? Cp अध उपासीत above.

एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराह। एतद्ध स्म वै तद्विद्वान्नाको[a] मौद्गल्य आह। एतद्ध स्म वै तद्विद्वान् कुमारहारित आह—बहवो मर्या ब्राह्मणायना[b] निरिन्द्रिया विसुकृतोऽस्माल्लोकात् प्रयन्ति य इदमविद्वाꣳसोऽधोपहासं[c] चरन्तीति। बहु वा इदꣳ सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति ॥ ४ ॥

*a* ) तै 1·9. —*b* ) A mere distant relative of ब्राह्मण; cp पा 4·1·99 नडादिभ्यो फक्. —*c* ) अध + उपहास ( = प-हास ( Pāli ) = हर्ष ).

तदभिमृशेदनु वा मन्त्रयेत—यन्मेऽद्य रेतः पृथिवीमस्कान्त्सीद्यदोषधीरप्यसरद्यदपः । इदमहं तद्रेत आददे । पुनर्मा[a]मैत्विन्द्रियं पुनस्तेजः पुनर्भगः । पुनरग्नि[1]र्धिष्ण्या यथास्थानं कल्पन्ताम् । इत्यना[b]मिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा नि[2]मृज्यात् ॥ ५ ॥

1) माध्यं reads अग्नयः. —2) माध्यं reads निमृञ्ज्यात्.

*a*) अ 7·67·1 (with variants). —*b*) Only here for the first time.

अथ यद्युदक आत्मानं पश्येत् तदभिमन्त्रयेत—मयि तेज इन्द्रियं यशो द्रविणꣳ सुकृतमिति । श्रीर्ह वा एषा स्त्रीणां यन्मलोद्वासाः । तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत ॥ ६ ॥

सा चेदस्मै न दद्यात् काममेनामवक्री[1]णीयात् । सा चेदस्मै नैव दद्यात् काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेत् । इन्द्रियेण ते यशसा यश आदद इति । अयशा एव भवति ॥ ७ ॥

1) माध्यं reads अपक्रीणीयात्.

*a*) शब्रा 2·6·2·17 तान् द्वयोर्मूतकयोरुपनह्य वेणुयष्ट्यां वा कुपे वोभयत आबध्य ...

सा चेदस्मै दद्यादिन्द्रियेण ते यशसा यश आदधामीति । यशस्विनावेव भवतः ॥ ८ ॥

स यामिच्छेत्—कामयेत मेति तस्यामर्[a]थं निष्ठा[b]य मुखेन मुखꣳ संधायोपस्थमस्या अभिमृश्य जपेत्—

अङ्गादङ्गात् संभवसि हृदयादधिजायसे ।
स त्वमङ्गकषायोऽसि दिग्धविद्धामिव मादये[1]माममूं मयीति ॥ ९ ॥

1) माध्यं reads मादयेति.

*a*) Only here in the sense of वेतस or शेप. —*b*) Used in the causal sense? माध्यं reads निष्ठाप्य. —*c*) कौ 2·11 (only the two pādas).

अथ यामिच्छेन्न गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधायाभिप्राण्यापान्यात् । इन्द्रियेण ते रेतसा रेत आदद इति । अरेता एव भवति ॥ १० ॥

अथ यामिच्छेद्द[1]धीतेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधायापान्याभिप्राण्यात् । इन्द्रियेण ते रेतसा रेत आदधामीति । गर्भिण्येव भवति ॥ ११ ॥

1 ) माध्यं reads गर्भं दधीत.

अथ यस्य जायायै जारः स्यात् तं चेद् द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमꣳ शरबर्हिः स्तीर्त्वा तस्मिन्नेताः[1] शरभृष्टीः प्रतिलोमाः सर्पिषाक्ताः[2a] जुहुयात्। मम समिद्धेऽहौषीः। प्राणापानौ[3] त आददेऽसाविति[4]। मम समिद्धेऽहौषीः। पुत्रपशूꣳस्त[3] आददेऽसाविति। मम समिद्धेऽहौषीः। इष्टासुकृते[5] त आददेऽसाविति[4b]। मम समिद्धेऽहौषीः। आशापराकाशौ[3] त आददेऽसाविति[4b]। स वा एष निरिन्द्रियो विसुकृतोऽस्माल्लोकात् प्रैति यमेवंविद्ब्राह्मणः शपति। तस्मादेवंविच्छ्रोत्रियस्य दारेण[6] नोपहासमिच्छेत्। उतं ह्येवंवित् परो भवति ॥ १२ ॥

1 ) माध्यं reads तिस्रः after एताः. —2 ) माध्यं reads अक्त्वा. —3 ) माध्यं changes the order of प्राणापानौ, पुत्रपशून् and आशापराकाशौ. —4 ) माध्यं adds after असाविति–नाम गृह्णाति. 5 ) माध्यं drops इष्टासुकृते......... 6 ) माध्यं reads जायया.

*a* ) शब्रा 1·8·3·13 स वा अग्रं जुह्वामनक्ति मध्यं उपभृति मूलं ध्रुवायाम्. —*b* ) This असौ seems to be used vocatively; cp अमी in मैसं 2·2·6 अमी ये विव्रताः स्थ तान् वः संनमयामसि. —*c* ) शब्रा 1·6·1·8 तस्मादु ह नानुव्याहारी स्यात्, उत ह्येवंवित्......

अथ यस्य जायामार्तवं विन्देत्[a] त्र्यहं कꣳसे न पिबेत्। अहतवासाः। नैनां वृषलो न वृषल्युपहन्यात्। त्रिरात्रान्त आप्लुत्य व्रीहीनवघातयेत् ॥ १३ ॥

*a* ) Note the idiom; cp ऋ 10·146·1 न त्वा भीरिव विन्दति.

स य इच्छेत् — पुत्रो मे शुक्लो[1] जायेत, वेदमनुब्रुवीत, सर्वमायुरियादिति, क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताम्। ईश्वरौ जनयितवै ॥ १४ ॥

1 ) माध्यं reads गौर.

—*a* ) Cp पा 3·4·13 ईश्वरे तोसुन्कसुनौ.

अथ य इच्छेत् — पुत्रो मे कपिलः पिङ्गलो जायेत, द्वौ वेदावनुब्रुवीत, सर्वमायुरियादिति, दध्योदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताम्। ईश्वरौ जनयितवै ॥ १५ ॥

अथ य इच्छेत् — पुत्रो मे श्यामो लोहिताक्षो जायेत, त्रीन् वेदाननुब्रुवीत, सर्वमायुरियादित्युदौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताम्। ईश्वरौ जनयितवै ॥ १६ ॥

अथ य इच्छेद् — दुहिता मे पण्डिता जायेत, सर्वमायुरियादिति, तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताम्। ईश्वरौ जनयितवै ॥ १७ ॥

अथ य इच्छेत्—पुत्रो मे पण्डितो विगीतः[1] समितिंगमः शुश्रूषितां वाचं भाषिता जायेत, सर्वान् वेदाननुब्रुवीत, सर्वमायुरियादिति, माꣳसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाताम्। ईश्वरौ जनयितवै। औक्षेण वार्षभेण वा॥ १८॥

1) v. l. विजिगीतः; माध्यं reads विजिगीथः (celebrated).

अथाभिप्रातरेव स्थालीपाकावृताज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहाऽनुमतये[a] स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति। हुत्वोद्धृत्य[c] प्राश्नाति। प्राश्येतरस्याः प्रयच्छति। प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षति—

उत्तिष्ठातो[b] विश्वावसोऽन्यामिच्छ प्रपूर्व्याम्[1]।
सं जायां पत्या सहेति॥ १९॥

1) माध्यं reads प्रफर्व्याम् as in ऋ 10·85·22.

*a*) ऋ 10·59·6 अनुमते मृळया नः स्वस्ति; 10·167·3 बृहस्पतेरनुमत्या उ शर्मणि; वासं 34·8 अन्विदनुमते त्वं मन्यासै; 34·9 अनु नो अद्यानुमतिर्यज्ञं देवेषु मन्यताम्; अ 5·7·4 सरस्वतीमनुमतिं भगं यन्तो हवामहे; ऐब्रा 7·10 या पूर्वा पौर्णमासी सा अनुमतिः योत्तरा सा राका. —*b*) ऋ 10·85·22 (with variants).

अथैनामभिपद्यते—अमोऽहमस्मि सा त्वम्। सा त्वमस्यमोऽहम्। सामाहमस्मि ऋक् त्वम्। द्यौरहं पृथिवी त्वम्॥

तावेहि[b] सꣳरभावहै सह रेतो दधावहै।
पुꣳसे पुत्राय[c] वित्तय इति॥ २०॥

*a*) अ 14·2·71; ऐब्रा 8·27; बृ 1·3·22; छां 1·6·7; 5·2·6; तैब्रा 3·7·1·9 reads अमूहमस्मि instead of अमोऽहमस्मि. —*b*) तैब्रा 3·7·1·9 (which reads भवाव for रभावहै and वेत्तवै for वित्तये). —*c*) Attraction of cases.

अथास्या ऊरू विहापयति—विजिहीथां द्यावापृथिवी इति। तस्यामर्थं निष्ठाय मुखेन मुखꣳसंधाय त्रिरेनामनुलोमामनुमार्ष्टि—

विष्णुर्योनिं[a] कल्पयतु त्वष्टा रूपाणि पिꣳशतु।
आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते॥
गर्भं[b] धेहि सिनीवालि गर्भं धेहि पृथुष्टुके।
गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ॥ २१॥

*a*) ऋ 10·184·1. —*b*) ऋ 10·184·2; cp अ 5·25·3.

हिरण्मयी अरणी याभ्यां निर्मन्थतामश्विनौ ।
तं ते गर्भं हवामहे[1] दशमे मासि सूतये[2] ॥
यथाऽग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी ।
वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेऽसाविति[3] ॥ २२ ॥

1) माध्यं reads दधामहे. —2) माध्यं reads सूतवे as in ऋ. —3) माध्यं adds नाम गृह्णाति.

*a*) ऋ 10·184·3. *b*) Source ?

सोष्यन्तीमद्भिरभ्युक्षति—
यथा वायुः पुष्करिणीꣳ समिङ्गयति[1] सर्वतः ।
एवा ते गर्भ एजतु सहावैतु जरायुणा ।
इन्द्रस्यायं व्रजः कृतः सार्गलः सपरिश्रयः ।
तमिन्द्र निर्जहि गर्भेण सावराꣳ[2] सहेति ॥ २३ ॥

1) माध्यं reads समींगयति. —2) माध्यं reads सावरम्.

*a*) ऋ 5·78·7 वातः for वायुः. —*b*) ऋ 5·78·8$^{d}$ with इहि for एतु.

जातेऽग्निमुपसमाधायाङ्क आधाय कꣳसे पृषदाज्यꣳ संनीय[1] पृषदाज्यस्योपघातं जुहोति—

अस्मिन् सहस्रं पुष्यासमेधमानः स्वे गृहे[2] ।
अस्योपसन्द्यां[3] मा च्छैत्सीत् प्रजया च पशुभिश्च स्वाहा ॥
मयि प्राणाꣳस्त्वयि मनसा जुहोमि स्वाहा ।
यत् कर्मणाऽत्यरीरिचं यद्वा न्यूनमिहाकरम् ।
अग्निष्टत् स्विष्टकृद्विद्वान् स्विष्टꣳ सुहुतं करोतु नः[4] स्वाहेति ॥ २४ ॥

1) माध्यं reads आनीय for संनीय. —2) माध्यं reads स्वगृहे for स्वे गृहे. —3) उपसद्याम् for उपसन्द्याम् ( माध्यं ). —4) Dropped in माध्यं.

अथास्य[1] दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिः । अथ दधि मधु घृतꣳ संनीया[2]नन्तर्हितेन जातरूपेण प्राशयति । भूस्ते दधामि, भुवस्ते दधामि, स्वस्ते दधामि, भूर्भुवः स्वः सर्वं त्वयि दधामीति ॥ २५ ॥

1) माध्यं adds आयुष्यं करोति. —2) संसृज्य for संनीय ( माध्यं ).

अथास्य नाम[1] करोति वेदोऽसीति । तदस्य तद्[2] गुह्यमेव नाम भवति[3] ॥ २६ ॥

1 ) नामधेयं for नाम ( माध्यं ). —2 ) एतत् for तत् ( माध्यं ). —3 ) स्यात् for भवति ( माध्यं ). माध्यं adds after this अथैनमभिमृशति—अश्मा भव परशुर्भव हिरण्यमस्रुतं भव । आत्मा वै पुत्रनामासि स जीव शरदः शतमिति. Cp कौ 2·11.

अथैनं मात्रे प्रदाय स्तनं प्रयच्छति—

यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः ।
येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे करिति ॥ २७ ॥

*a* ) ऋ 1·164·49 with transpositions.

अथास्य मातरमभिमन्त्रयते—

इलासि मैत्रावरुणी वीरे वीरमजीजनत्[1] ।
सा त्वं वीरवती भव याऽस्मान् वीरवतोऽकरदिति ॥

तं वा एतमाहुः— अतिपिता बताभूः । अतिपितामहो बताभूः । परमां बत काष्ठां प्रापच्छ्रि[2]या यशसा ब्रह्मवर्चसेन । य एवंविदो ब्राह्मणस्य पुत्रो जायत इति ॥ २८ ॥

1 ) माध्यं reads अजीजनथाः. —2 ) माध्यं reads प्राप for प्रापत्.

*a* ) ऋ 1·88·8 भारतीळे सरस्वति.

॥ इति चतुर्थं ब्राह्मणम् ॥

---

अथ वंशः । पौतिमाषीपुत्रः कात्यायनीपुत्रात् । कात्यायनीपुत्रो गौतमीपुत्रात् । गौतमीपुत्रो भारद्वाजीपुत्रात् । भारद्वाजीपुत्रः पाराशरीपुत्रात् । पाराशरीपुत्र औपस्वस्तीपुत्रात् । औपस्वस्तीपुत्रः पाराशरीपुत्रात् । पाराशरीपुत्रः कात्यायनीपुत्रात् । कात्यायनीपुत्रः कौशिकीपुत्रात् । कौशिकीपुत्र आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च । वैयाघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च । कापीपुत्रः—॥ १ ॥

आत्रेयीपुत्रात् । आत्रेयीपुत्रो गौतमीपुत्रात् । गौतमीपुत्रो भारद्वाजीपुत्रात् । भारद्वाजीपुत्रः पाराशरीपुत्रात् । पाराशरीपुत्रो वात्सीपुत्रात् । वात्सीपुत्रः पाराशरीपुत्रात् । पाराशरीपुत्रो वार्कारुणीपुत्रात् । वार्कारुणीपुत्रो वार्कारुणीपुत्रात् । वार्कारुणीपुत्र आर्तभागीपुत्रात् । आर्तभागीपुत्रः शौङ्गीपुत्रात् । शौङ्गीपुत्रः सांकृतीपुत्रात् । सांकृतीपुत्र आलम्बायनीपुत्रात् । आलम्बायनीपुत्र आलम्बीपुत्रात् । आलम्बीपुत्रो जायन्तीपुत्रात् । जायन्तीपुत्रो माण्डूकायनीपुत्रात् । माण्डूकायनीपुत्रो माण्डूकीपुत्रात् । माण्डूकीपुत्रः

शाण्डलीपुत्रात् । शाण्डलीपुत्रो राथीतरीपुत्रात् । राथीतरीपुत्रो भालुकीपुत्रात् । भालुकीपुत्रः क्रौञ्चिकीपुत्राभ्याम् । क्रौञ्चिकीपुत्रौ वैदभृतीपुत्रात् । वैदभृतीपुत्रः कार्शकेयीपुत्रात् । कार्शकेयीपुत्रः प्राचीनयोगीपुत्रात् । प्राचीनयोगीपुत्रः सांजीवीपुत्रात् । सांजीवीपुत्रः प्राश्नीपुत्रादासुरिवासिनः । प्राश्नीपुत्र आसुरायणात् । आसुरायण आसुरेः । आसुरिः—॥ २ ॥

याज्ञवल्क्यात् । याज्ञवल्क्य उद्दालकात् । उद्दालकोऽरुणात् । अरुण उपवेशेः उपवेशिः कुश्रेः । कुश्रिर्वाजश्रवसः । वाजश्रवा जिह्वावतो बाध्योगात् । जिह्वावान् बाध्योगोऽसिताद्वार्षगणात् । असितो वार्षगणो हरितात् कश्यपात् । हरितः कश्यपः शिल्पात् कश्यपात् । शिल्पः कश्यपः कश्यपान्नैध्रुवेः । कश्यपो नैध्रुविर्वाचः । वागम्भिण्याः । अम्भिण्यादित्यात् । आदित्यानीमानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥ ३ ॥

*a*) आदित्य is adj. Cp पा 4·1·85 दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः; शब्रा 4·4·5·19 आदित्यानि यजूंषि.

समानमा सांजीवीपुत्रात् । सांजीवीपुत्रो माण्डूकायनेः । माण्डूकायनिर्माण्डव्यात् । माण्डव्यः कौत्सात् । कौत्सो माहित्थेः । माहित्थिर्वामकक्षायणात् । वामकक्षायणः शाण्डिल्यात् । शाण्डिल्यो वात्स्यात् । वात्स्यः कुश्रेः । कुश्रिर्यज्ञवचसो राजस्तम्बायनात् । यज्ञवचा राजस्तम्बायनस्तुरात् कावषेयात् । तुरः कावषेयः प्रजापतेः । प्रजापतिर्ब्रह्मणः । ब्रह्म स्वयम्भु । ब्रह्मणे नमः ॥ ४ ॥

॥ इति पञ्चमं ब्राह्मणम् ॥

॥ इति षष्ठोऽध्यायः ॥

॥ इति बृहदारण्यकोपनिषत् ॥

# ॥ श्वेताश्वतरोपनिषत् ॥

[ The *Svetāśvataras* are cited in the चरणव्यूह as belonging to the कृष्णयजुर्वेद and although Śaṁkarācārya cites this Up. as श्वेताश्वतराणां मंत्रोपनिषत्, the present Upaniṣad seems to have श्वेताश्वतर as the personal author (6·21) who taught it to the अत्याश्रमिन्s (ascetics) who do not belong to any Veda or Brāhmaṇa. The individual traits of this Upaniṣad are many: e. g. a criticism of philosophical opinions at the beginning of the first and the sixth *adhyāya*; no ordered movement of philosophical thoughts; irregular and arbitrary metres; quotations and explanations; special treatment of Sāṅkhya and Yoga; monistic, theistic and idealistic doctrines; rich Sāṅkhya vocabulary (e. g. पुरुष, ज्ञ, प्रकृति, प्रधान, व्यक्त, अव्यक्त, गुण, लिंग, भाव); doctrine of भक्ति etc. As is well known next to Kaṭhopaniṣad, this is the source-book for many ideas of the Bhagavadgītā. ]

ॐ ब्रह्मवादिनो वदन्ति—

किं कारणं ब्रह्म[a] कुतः स्म जाता जीवामः[1] केन क्व च संप्रतिष्ठाः।
अधिष्ठिताः केन सुखेतरेषु[b] वर्तामहे ब्रह्मविदो व्यवस्थाम्[c] ॥ १ ॥

1) v. l. जीवाम.

*a*) बृ 2·1·1; 4·1·2; छां 5·11·1; कौ 4·1. —*b*) इतर = दुःख. The compound occurs only here. —*c*) व्यवस्था in पा 1·1·34.

कालः[a] स्वभावो[a] नियतिर्[b]यदृच्छा[c] भूतानि योनिः पुरुष[d] इति चिन्त्यम्[1]।
संयोग[e] एषां न[2] त्वात्मभावादात्माऽप्यनीशः सुखदुःखहेतोः[f] ॥ २ ॥

1) v. l. चिन्त्याः. —2) Hauschild proposes ननु for न तु.

*a*) श्वे 6·1. —*b*) शांब्रा 22·1 नियत्या प्रच्युत्यै रूपम्. —*c*) Here for the first time; गी 2·32 यदृच्छया चोपपन्नम्; 4·22 यदृच्छालाभसंतुष्टः. —*d*) Read पुरुषेति m. c. —*e*) श्वे 1·8 संयुक्तम्. —*f*) Cp सुखेतरेषु in श्वे 1·1.

ते ध्यानयोगा[a]नुगता अपश्यन् देवात्मशक्तिं[b] स्वगुणै[c]र्निगूढाम्।
यः कारणानि निखिलानि[d] तानि कालात्मयुक्ता[e]न्यधितिष्ठत्येकः ॥ ३ ॥

*a*) श्वे 6·13 सांख्ययोगाधिगम्यम्. —*b*) श्वे 4·1 शक्तियोगात्; 4·10 मायां तु प्रकृतिं विद्यात्. —*c*) अ 10·8·43 पुण्डरीकं नवद्वारं त्रिभिर्गुणेभिरावृतम्; श्वे 6·10 प्रधानजैः स्वभावतो देव एकः स्वमावृणोत्. —*d*) Here for the first time. —*e*) श्वे 6·3 कालेन चैवात्मगुणैश्च सूक्ष्मैः.

तमेकनेमिं त्रिवृतं षोडशान्तं शतार्धारं विंशतिप्रत्यराभिः ।
अष्टकैः षड्भिर्विश्वरूपैकपाशं त्रिमार्गभेदं द्विनिमित्तैकमोहम् ॥ ४ ॥

*a* ) बृ 2·5·15; छां 7·15·1; कौ 3·8; मुं 2·2·6; प्र 2·6; 6·6. —*b*) सांका 46 तस्य च भेदास्तु पञ्चाशत्. —*c* ) Cp the अष्टक referred to in सांका ( 44,45 ) धर्म, अधर्म; ज्ञान, अज्ञान; वैराग्य, राग; ऐश्वर्य, अनैश्वर्य ( विपर्यय ). —*d* ) बृ 3·7·2. —*e* ) श्वे 1·11; 5·7.

पञ्चस्रोतोम्बुं पञ्चयोन्युग्रवक्रां पञ्चप्राणोर्मिं पञ्चबुद्ध्यादिमूलाम् ।
पञ्चावर्तां पञ्चदुःखौघवेगां पञ्चाशद्भेदां पञ्चपर्वामधीमः ॥ ५ ॥

1 ) v. l. पञ्चक्लेशाम् ?

*a* ) Cp the five क्लेशs in योसू 2·3 अविद्यास्मितारागद्वेषाभिनिवेशाः.

सर्वाजीवे सर्वसंस्थे बृहन्ते तस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे ।
पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ॥ ६ ॥

*a* – – *a* ) मै 2·6; श्वे 3·18; 6·1. —*b* ) के 1·1 केनेषितम्.

उद्गीतमेतत् परमं तु ब्रह्म तस्मिंस्त्रयं सुप्रतिष्ठाक्षरं च ।
अत्रान्तरं ब्रह्मविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः ॥ ७ ॥

1 ) v. l. वेदविदः ( Max Müller ).

संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः ।
अनीशश्चात्मा बध्यते भोक्तृभावाज्ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ ८ ॥

1 ) v. l. बुध्यते.

*a* ) श्वे 1·2. —*b* ) गी 15·16–18. —*c*– –*c* ) क 3·4; श्वे 4·6; 5·7; सांका 17 पुरुषोऽस्ति भोक्तृभावात्.

ज्ञाज्ञौ द्वावजावीशनीशावजा ह्येका भोक्तृभोगार्थयुक्ता ।
अनंतश्चाऽऽत्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत् ॥ ९ ॥

1 ) v. l. भोग्यार्थ.

*a* ) ईश् + अनीश् dual. —*b* ) श्वे 4·5; 5·7.

क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः ।
तस्याभिध्यानाद्योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः ॥ १० ॥

*a* ) क 6·13 तत्त्वभावेन. —*b* ) बृ 4·4·19; क 4·10–11; श्वे 4·9–10.

ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ।
तस्याभिध्यानात् तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः[1] ॥ ११ ॥

1 ) v. l. आत्मकामः ( शंकराचार्य on ब्रसू 3·2·5 ).

*a* ) योसू 1·24 क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः. —*b* ) योसू 1·24; 2·2 समाधिभावनार्थः क्लेशतनूकरणार्थश्च; 2·3; 4·30 ततः क्लेशकर्मनिवृत्तिः. Cp पालि — किलेसा ( धम्मसंगणि 1548 ). —*c* ) श्वे 1·4.

एतज्ज्ञेयं नित्यमेवाऽऽत्मसंस्थं नातःपरं वेदितव्यं हि किञ्चित् ।
भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥ १२ ॥

*a* ) श्वे 5·7.

वह्नेर्यथा योनिगतस्य मूर्तिर्न दृश्यते नैव च लिङ्गनाशः ।
स भूय एवेन्धनयोनिगृह्यस्तद्वोभयं वै प्रणवेन देहे ॥ १३ ॥

*a* ) क 2·15, 17; प्र 5; मुं 2·2·4; मां 12; मै 6·24, 26, 28.

स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥ १४ ॥

*a* ) ऋ 2·29·2 अरण्योर्निहितो जातवेदाः; क 4·8.

तिलेषु तैलं दधिनीव[1] सर्पिरापः स्रोतःस्वरणीषु चाग्निः ।
एवमात्माऽऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति ॥ १५ ॥

1 ) Read दधनि ( which is correct ).

*a* ) के 4·8; मुं 3·1·5.

सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् ।
आत्मविद्यातपोमूलं तद् ब्रह्मोपनिषत्परं तद् ब्रह्मोपनिषत्परमिति ॥ १६ ॥

॥ इति प्रथमोऽध्यायः ॥

---

युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः[1] ।
अग्नेर्[2]ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ १ ॥

Cp in general श्वे 2·1–5 with श्वे 3·1–6; 4·1.

1 ) v. l. धियम्. —2 ) v. l. अग्निम्.

*a* ) वासं 11·1; तैसं 4·1·1·1; शब्रा 6·3·1·12ff. —*b* ) तत्वाय from तन्. Cp हित्वाय, गत्वाय in ऋ.

युक्तेन मनसा वयं देवस्य सवितुः सवे ।
सुवर्गेयाय शक्त्या[1] ॥ २ ॥

1 ) v. l. शक्त्यै. Read शक्तिआ m. c.

*a* ) वासं 11·2; तैसं 4·1·1·2.

युक्त्वाय मनसा देवान् सुवर्यतो धिया दिवम् ।
बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान् ॥ ३ ॥

*a* ) वासं 11·3 ( with सविता for मनसा ); तैसं 4·1·1·3.

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥ ४ ॥

*a* ) ऋ 5·81·1; वासं 5·14; 11·4; तैसं 4·1·1·4; शब्रा 3·5·3·11–12; 6·3·1·16. —*b* ) ऋ 1·48·7 स धीनां योगमिन्वति.

युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोका[1] यन्ति पथ्येव सूरेः ।
शृण्वन्ति[2] विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥ ५ ॥

1 ) v. l. सूराः for श्लोकाः. —2 ) शृण्वन्तु ( ऋ ).

*a* ) ऋ 10·13·1 ( श्लोक एतु for श्लोका यन्ति ); वासं 11·5; तैसं 4·1·1·5; अ 18·3·19 ( एति or Rigvedic एतु ).

अग्निर्यत्राभिमथ्यते वायुर्यत्राधिरुध्यते[1] ।
सोमो यत्रातिरिच्यते तत्र संजायते मनः ॥ ६ ॥

1 ) v. l. अभियुज्यते ( Hauschild ).

*a* ) क 1·17; 3·2. —*b* ) मै 1·1.

सवित्रा प्रसवेन[1] जुषेत ब्रह्म पूर्व्यम् ।
तत्र[2] योनिं[2] कृणवसे न हि ते पूर्तमक्षिपत् ॥ ७ ॥

1 ) Hauschild adds च after this m. c. —2 ) ऋ 6·16·17ᶜ reads तत्रा सदः.

*a* ) ऋ 6·16·18ᵃ; मै 1·1.

त्रिरुन्नतं[1] स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा संनिवेश्य[2] ।
ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानि ॥ ८ ॥

Cp श्वे 2·8–15 with क 3·10–13; 6·6–13; गी 6·13.

1) v. l. ऽयुक्ततम् ( शंकराचार्य on ब्रसू 2·1·3 ). —2) Drop सम् m. c.

*a* ) सुत्तनिपात 319 यथा नरो आपगं ओतरित्वा महोदिकं सलिलं सीघसोतं; 433, 1034, 1035 सवन्ति सब्बधी सोता...सोतानं संवरं ब्रूमि पञ्ञायेते पिथीयरे.

**प्राणान् प्रपीड्येह स युक्तचेष्टः क्षीणे प्राणे नासिकयोच्छ्वसीत ।**
**दुष्टाश्वयुक्तमिव वाहमेनं विद्वान्मनो धारयेताप्रमत्तः ॥ ९ ॥**

1) v. l. संयुक्तचेष्टः for स युक्तचेष्टः. —2) Shall we read नासिकयोः श्वसीत ?

*a* ) गी 6·17 युक्तचेष्टस्य कर्मसु. —*b*) गी 5·27 प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ. —*c* ) क 3·4.

**समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः ।**
**मनोनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत् ॥ १० ॥**

1) Böhtlingk proposes आशय for आश्रय.

*a* ) गी 6·11. —*b*) मै 6·30. —*c* ) For चक्षु ( *m.*? ) see ऋ 10·90·13 चक्षोः सूर्यो अजायत; अ 4·20·5 सहस्रचक्षो त्वम्.

**नीहारधूमार्कानलानिलानां खद्योतविद्युत्स्फटिकशशीनाम् ।**
**एतानि रूपाणि पुरःसराणि ब्रह्मण्यभिव्यक्तिकराणि योगे ॥ ११ ॥**

1) Shall we read स्फटिका m. c?

*a*) ऋ 10·82·7 नीहारेण प्रावृता जल्प्या च. —*b* ) श्वे 6·2.

**पृथ्व्यप्तेजोनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते ।**
**न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम् ॥ १२ ॥**

1) v. l. दुःखम् for मृत्युः.

*a* ) छां 7·26·2 न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्.

**लघुत्वमारोग्यमलोलुपत्वं वर्णप्रसादः स्वरसौष्ठवं च ॥**
**गन्धः शुभो मूत्रपुरीषमल्पं योगप्रवृत्तिं प्रथमां वदन्ति ॥ १३ ॥**

*a* ) गी 16·2. —*b* ) गी 7·9.

**यथैव बिम्बं मृदयोपलिप्तं तेजोमयं भ्राजते तत् सुधौतम् ।**
**तद्वाऽऽत्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः ॥ १४ ॥**

1 ) v. l. सुधातम्, सुधान्तम्.

*a* ) Only here in Vedic literature. Cp पठवीकसिण in the Buddhist scheme of झान ( ध्यान ).

यदाऽऽत्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् ।
अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १५ ॥
एषो[a][1] ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः ।
स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः ॥ १६ ॥

1 ) Silburn proposes एषोऽह. —2 ) v. l. प्रत्यङ् जनाँस्तिष्ठति.

*a* ) वासं 32·4; तैआ 10·1·3.

यो[a] देवो अग्नौ यो अप्सु यो विश्वं भुवनमाविवेश ।
य ओषधीषु यो वनस्पतीषु तस्मै देवाय नमो नमः ॥ १७ ॥

*a* ) तैसं 5·5·9·3; अ 7·87·1 with modifications.

॥ इति द्वितीयोऽध्यायः ॥

---

य[1] एको जालवानीशत ईशनीभिः सर्वाँल्लोकानीशत ईशनीभिः ।
य एवैक उद्भवे संभवे च य एतद्विदुरमृतास्ते भवन्ति ॥ १ ॥

Cp in general श्वे 3·1–6 with श्वे 2·1–5; 4·1; 6·10; बृ 2·1·10.

1 ) Hauschild reads यैको ( double saṁdhi ).

*a* ) अ 8·8·8 अयं लोको जालमासीत्...तेनाहामिन्द्रजालेन.

एको[a][1] हि रुद्रो न द्वितीयाय तस्थे[2] य इमाँल्लोकानीशत ईशनीभिः ।
प्रत्यङ्[b]जना[4]स्तिष्ठति संचुकोचान्तकाले[3] संसृज्य विश्वा भुवनानि गोपाः[5] ॥२॥

1 ) Hauschild reads एकैव. —2 ) v. l. तस्थुः. —3 ) Drop अन्तकाले m. c. —4 ) v. l. जनाः. —5 ) v. l. गोप्ता.

*a* ) तैसं 1·8·6·1 with एव for हि. —*b* ) नि 1·15.

विश्वत[a]श्चक्षुरुत विश्वतोमुखो[b] विश्वतोबाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः ॥ ३ ॥

*a* ) This verse is ऋ 10·81·3; वासं 17·19. —*b* ) श्वे 3·11; अ 13·2·26 with विश्वचर्षणि for विश्वतश्चक्षुः, विश्वतःपाणिः for विश्वतोबाहुः and विश्वतस्पृथः for विश्वतस्पात्, भरति for धमति, and पृथिवी for भूमी; तैसं 4·6·2·4 with हस्त for बाहु and नमति for धमति; मैसं 2·10·2; तैआ 10·1·3.

यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः[1] ।
हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु ॥ ४ ॥

1 ) v. l. महाँ ऋषिः.

*a* ) श्वे 3·1; 4·12. —*b* ) श्वे 4·12. —*c* ) श्वे 4·1.

या ते रुद्र शिवा तनूरघोराऽपापकाशिनी ।
तया नस्तनुवा शंतमया गिरिशन्ताभिचाकशीहि ॥ ५ ॥

*a* ) वासं 16·2 तन्वा for तनुवा; तैसं 4·5·1·1. —*b* ) गिरि + शन्त ( from √शी ? ).

यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।
शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥ ६ ॥

Cp in general वासं 16·3; तैसं 4·5·1·1—2.

ततः परं ब्रह्म परं बृहन्तं यथानिकायं सर्वभूतेषु गूढम् ।
विश्वस्यैकं[1] परिवेष्टितारमीशं तं ज्ञात्वाऽमृता[2] भवन्ति ॥ ७ ॥

1 ) Read विश्वस्य एकं m. c. —2 ) Read अमृता m. c.

*a* ) श्वे 4·14, 16.

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः[1] परस्तात् ।
तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ ८ ॥

1 ) v. l. तमसस्तु पारे for तमसः परस्तात्.

*a* ) वासं 31·18. —*b* ) तैआ 3·13·1 अमृत इह भवति. —*c* ) श्वे 6·15; तैआ 3·12·7 अयनाय विद्यते

यस्मात् परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति किंचित् ।
वृक्ष[1] इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ ९ ॥

1 ) Read वृक्षेव m. c.

*a* ) तैआ 10·10·3; क 6·1; श्वे 6·6.

ततो यदुत्तरतरं यदरूपमना[a]मयम् ।
य[b] एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति ॥ १० ॥

*a* ) छां 7·26·2 न रोगं नोत दुःखताम् ; श्वे 2·13 लघुत्वमारोग्यम्; गी 2.51. —*b* ) बृ 4·4·14.

स[a]र्वाननशिरोग्रीवः [b–]सर्वभूतगुहाशयः ।
सर्वव्यापी स भ[–b]गवांस्तस्मात् सर्व[c]गतः शिवः ॥ ११ ॥

*a* ) ऋ 10·81·3 विश्वतश्चक्षुरुत विश्वतोमुखः; 10·90·1 सहस्रशीर्षा पुरुषः. —*b*– –*b* ) श्वे 3·3, 16, 21. —*c* ) Cp सर्वग in मुं 1·1·6; 3·2·5.

महान् प्रभुर्वै[a] पुरुषः स[b]त्त्वस्यैष प्रवर्तकः ।
सुनिर्मलामिमां प्राप्ति[1b]मीशानो ज्योतिरव्ययः ॥ १२ ॥

1 ) v. l. शान्तिम् for प्राप्तिम्.

*a* ) क 6·7. – *b* ) क 3·9.

अङ्गुष्ठ[a]मात्रः पुरुषोऽन्तरात्मा [b–]सदा जनानां हृदये संनिविष्टः ।
हृदा मनीषा मनसाऽभिक्लृप्तो[–b] [c]य एतद्विदुरमृतास्ते भवन्ति ॥ १३ ॥

*a* ) क 4·12, 13; श्वे 4·17. —*b*– –*b* ) Fusion of क 6·9 and 6·17. —*c* ) श्वे 4·20.

स[a]हस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वाऽत्यति[b]ष्ठद्दशाङ्गुलम् ॥ १४ ॥

*a* ) ऋ 10·90·1; अ 19·6·1; वासं 31·1 with सर्वतः स्पृत्वा for विश्वतो वृत्वा; तैआ 3·12·1. —*b* ) कौ 4·3; बृ 2·1·2.

पु[a]रुष एवेदं सर्वं यद् भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ १५ ॥

*a* ) ऋ 10·90·2; वासं 31·2; अ 19·6·4 ( with variants ); तैआ 3·12·1 ( with variants ).

स[a]र्वतःपाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १६ ॥

*a* ) श्वे 3·3; 3·11; गी 13·13.

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृत् ॥ १७ ॥

1 ) v. l. बृहत् for सुहृत्.

*a* ) गी 13·14. —*b* ) गी 9·18.

नवद्वारे पुरे देही हंसो लेलायते बहिः ।
वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च ॥ १८ ॥

*a* ) अ 10·2·31 अष्टाचक्रा नवद्वारा देवानां पूरयोध्या; 10·8·43 पुण्डरीकं नवद्वारं त्रिभिर्गुणेभिरावृतम्; क 5·1 एकादशद्वारम्; गी 5·13. —*b* ) श्वे 1·6. —*c* ) बृ 4·3·7. —*d* ) क 4·1.

अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥ १९ ॥

अणोरणीयान् महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्यति वीतशोको धातुर्प्रसादान्महिमानमीशम् ॥ २० ॥

1 ) v. l. धातुः प्रसादात्.

*a* ) क 2·20 with variations.

वेदाहमेतमजरं पुराणं सर्वात्मानं सर्वगतं विभुत्वात् ।
जन्मनिरोधं प्रवदन्ति यस्य ब्रह्मवादिनो हि प्रवदन्ति नित्यम् ॥ २१ ॥

*a* ) श्वे 3·11; cp सर्वग in मुं 1·1·6; 3·2·5.

॥ इति तृतीयोऽध्यायः ॥

---

य एकोऽवर्णो बहुधा शक्तियोगाद्वर्णाननेकान्निहितार्थो दधाति ।
वि चैति चान्ते विश्वमादौ स देवः स नो बुद्ध्या शुभया संयुनक्तु ॥ १ ॥

Cp श्वे 4·1 with श्वे 2·1–5; 3·1–6.

1 ) v. l. वर्णः; cp मुं 1·1·6 अवर्णम्.

*a* ) Cp ध्यानयोग in श्वे 1·3. —*b* ) वासं 32·8; श्वे 4·11. —*c* ) श्वे 3·4.

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद्ब्रह्म तदापस्तत् प्रजापतिः ॥ २ ॥

*a*) वासं 32·1 with variants ( ताः for तत् and स for तत्. )

[a]त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।
त्वं[b] जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः ॥ ३ ॥

*a*) अ 10·8·27. —*b*) ऋ 8·45·20 रम्भं न जिव्रयः.

नील[a]ः पतङ्गो हरितो लोहिताक्षस्तडिद्गर्भ ऋतवः समुद्राः ।
अना[1]दिमांस्त्वं विभुत्वेन वर्तसे यतो जातानि भुवनानि विश्वा ॥ ४ ॥

1 ) v. l. अनादिमत्त्वम्.

*a*) बृ 4·4·9.

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्र[a]जाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहा[b]त्येनां भुक्तभो[1]गामजोऽन्यः ॥ ५ ॥

1 ) v. l. भुक्तभोग्याम्.

*a*) छां 6·4·1. —*b*) श्वे 1·9.

द्वा[a] सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं[b] स्वाद्व[1][b]त्त्यनश्नन्नन्यो अभिचाकशीति ॥ ६ ॥

1 ) Read स्वाद्व अत्ति m. c.

*a*) ऋ 1·164·20; अ 9·9·20; क 3·1; मुं 3·1·1. —*b*) ऋ 1·164·22 यस्मिन् वृक्षे मध्वदः सुपर्णाः । तस्येदाहुः पिप्पलं स्वाद्वग्रे; श्वे 1·8; 5·7.

समा[a]ने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्य[1]त्यन्यमीशमस्य[2] महिमानमिति वीतशोकः ॥ ७ ॥

1 ) Read पश्यति अन्यम् m. c. —2 ) Hauschild reads तन्महिमानम्.

*a*) क 3·1; मुं 3·1·2.

ऋ[a]चो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।
य[b]स्तन्न वेद किमृचा करिष्यति य इत् तद्विदुस्त इमे समासते ॥ ८ ॥

*a*) ऋ 1·164·39; अ 9·10·18 with अमी for इमे; तैआ 2·11·1. —*b*) बृ 4·4·21; मुं 2·2·5.

छन्दांसि यज्ञा[a]ः क्रत[a]वो व्रतानि भूतं[b] भव्यं[b] यच्च वेदा वदन्ति ।
अस्मान् मायी सृजते विश्वमेतत् तस्मिंश्चान्यो[a] मायया संनिरुद्धः ॥ ९ ॥

*a*) पा 4·3·64 ऋतुयज्ञेभ्यश्च. —*b*) ऋ 10·55·2 येन भूतं जनयो येन भव्यम्; 10·58·12 यत्ते भूतं च भव्यं च; 10·90·2 यद् भूतं यच्च भव्यम्; क 2·14 अन्यत्र भूताच्च भव्याच्च; 4·5 ईशानं भूतभव्यस्य; मां 1 भूतं भवद्भविष्यत्. —*c*) श्वे 1·10; क 4·10-11; बृ 4·4·19. —*d*) श्वे 3·6-7. —*e*) ऋ 10·71·5 अधेन्वा चरति माययैषः.

मा[a]यां तु प्रकृ[b]तिं विद्यान्मा[c]यिनं तु महे[d]श्वरम् ।
तस्यावयव[e]भूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ १० ॥

*a*) ऋ 10·54·2 मायेत् सा यानि युद्धान्याहुः; छां 6·1·4; 8·1·3; श्वे 1·3; गी 4·6. —*b*) नि 1·7 दिग्घस्तप्रकृतिः; 1·17 पदप्रकृतिः संहिता; मै 6·10 भोक्ता पुरुषः, भोग्या प्रकृतिः. —*c*) श्वे 6·10. —*d*) श्वे 6·7. —*e*) बृ 2·1·20; मुं 2·1·1; पा 5·1·6 शरीरावयवाद्यत्.

यो यो[a]निं योनिमधितिष्ठत्येको यस्मिन्निदं सं[b] च वि चैति सर्वम् ।
तमीशानं वर[c]दं देवमीड्यं निचा[d]य्येमां शान्तिमत्यन्तमेति ॥ ११ ॥

*a*) श्वे 5·2. —*b*) वासं 32·8; श्वे 4·1. —*c*) तैसं 5·2·8·2 त्रीन् वरान् दद्यात्; अ 19·71·1 वरदा वेदमाता; अ 11·1·10 त्रयो वरा यतमांस्त्वं वृणीषे; क 1·9; कौ 3·1. —*d*) क 1·17; श्वे 4·14.

यो देवानां प्रभ[a]वश्चोद्भवश्च विश्वाधिको रुद्रो मह[b]र्षिः ।
हिरण्यगर्भं पश्यत जायमानं स नो बुद्ध्या शुभया संयुनक्तु ॥ १२ ॥

*a*) श्वे 3·4. —*b*) श्वे 5·2.

यो[a] देवानामधिपो यस्मिंल्लोका अधिश्रिताः ।
य[b] ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ १३ ॥

*a*) वासं 20·32. —*b*) ऋ 10·121·3; वासं 23·3; तैसं 4·1·8·4.

सू[a]क्ष्मातिसूक्ष्मं कलि[b]लस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम् ।
विश्वस्यैकं परिवेष्टि[c]तारं ज्ञा[d]त्वा शिवं शान्तिमत्यन्तमेति ॥ १४ ॥

*a*) श्वे 4·13 ( with modifications ). —*b*) गी 2·52 मोहकलिलम्. —*c*) श्वे 3·7; 4·16. —*d*) श्वे 4·11; क 1·17.

स एव काले भुवनस्य गोप्ता विश्वाधिपः सर्वभूतेषु गूढः ।
य[1]स्मिन् युक्ता ब्रह्मर्षयो देवताश्च तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति ॥ १५ ॥

1 ) Omit ब्रह्म m. c. ?

घृतात् परं मण्डमिवातिसूक्ष्मं ज्ञात्वा शिवं सर्वभूतेषु गूढम् ।
विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १६ ॥

a) Only here for the first time in Vedic literature.

एष देवो विश्वकर्मा महात्मा सदा जनानां हृदये संनिविष्टः ।
हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥ १७ ॥

a) क 6·9; श्वे 3·13.

यदाऽतमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः ।
तदक्षरं तत् सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी ॥ १८ ॥

1) Böhtlingk reads यद् आ तमः. —2) v. l. असन्.

a) छां 3·11·3; 8·4·1–2. —b) मुं 2·2·1; मै 6·24; 6·34. —c) ऋ 3·62·10. —d) श्वे 5·4. —e) बृ 2·4·10; श्वे 6·18. —f) गी 15·4.

नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् ।
न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः ॥ १९ ॥

a) वासं 32·2; मै 6·17. —b) वासं 32·3.

न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा हृदिस्थं मनसा य एनमेवं विदुरमृतास्ते भवन्ति ॥ २० ॥

a) क 6·9. —b) श्वे 3·13.

अजात इत्येवं कश्चिद्भीरुः प्रपद्यते ।
रुद्र यत् ते दक्षिणं मुखं तेन मां पाहि नित्यम् ॥ २१ ॥

1) Hauschild proposes to read अजात इति एवं कश्—चिद्भीरुः प्रतिपद्यते m. c.

मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान् मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ २२ ॥

1) Hauschild reads सदसि त्वा.

a) ऋ 1·114·8 (with आयौ for आयुषि); तैसं 4·5·10·3; वासं 16·16 (भामिनो for भामितो).

॥ इति चतुर्थोऽध्यायः ॥

---

द्वे अक्षरे ब्रह्मपुरे त्वनन्ते विद्याविद्ये निहिते यत्र गूढे ।
क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः ॥ १ ॥

1) v. l. ब्रह्मपरे.

*a*) अ 10·2·28 पुरं यो ब्रह्मणो वेद; छां 8·1·1; मुं 2·2·7. —*b*) क 2·14; ई 11; बृ 4·4·3–4, 11–12; मुं 1·2·8–10; मै 7·9. —*c*) Cp Plato, *Republic* 534 a.

यो योनिं योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वाः ।
ऋषिं[1] प्रसूतं कपिलं[b] यस्तमग्रे ज्ञानैर्बिभर्ति[2] जायमानं च पश्येत् ॥ २ ॥

1) v. l. ऋषिप्रसूतम्; cp सवितृप्रसूताः in शब्रा 6·3·1·13. —2) v. l. पिपर्ति (Hillebrandt).

*a*) श्वे 4·11; 5·4. —*b*) श्वे 3·4; 4·12.

एकैकं जालं[1][a] बहुधा विकुर्वन्नस्मिन् क्षेत्रे संहरत्येष देवः ।
भूयः सृष्ट्वा पतयस्तथेशः[2] सर्वाधिपत्यं कुरुते महात्मा ॥ ३ ॥

1) Böhtlingk suggests जातम्. —2) v. l. यस्तु पतिस्तथेशः (Böhtlingk); v. l. यतयः.

*a*) मुं 1·1·7; श्वे 3·1; 6·10.

सर्वा दिश ऊर्ध्वमधश्च तिर्यक् प्रकाशयन् भ्राजते यद्वनड्वान् ।
एवं स देवो भगवान् वरेण्यो योनिस्वभावानधितिष्ठत्येकः ॥ ४ ॥

*a*) Cp अनड्वान् in अ 4·11·7 *f*.

यच्च स्वभावं पचति विश्वयोनिः पाच्यांश्च सर्वान् परिणामयेद्यः ।
सर्वमेतद्विश्वमधितिष्ठत्येको गुणांश्च[b] सर्वान् विनियोजयेद्यः ॥ ५ ॥

*a*) श्वे 5·12. —*b*) श्वे 6·4; 6·12.

तद्वेदगुह्योपनिषत्सु[1] गूढं तद्ब्रह्मा वेदते ब्रह्मयोनिम् ।
ये पूर्वं[2] देवा[2] ऋषयश्च तद्विदुस्ते तन्मया अमृता वै बभूवुः ॥ ६ ॥

1) Some read वेद गुह्य°. —2) v. l. पूर्वदेवाः (Hauschild).

*a*) मुं 2·2·4; श्वे 6·17.

गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता ।
स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा[b] प्राणाधिपः संचरति स्वकर्मभिः ॥ ७ ॥

*a*) श्वे 1·8, 9, 12; 4·6; क 3·4. —*b*) श्वे 1·4

अङ्गुष्ठमात्रो रवितुल्यरूपः संकल्पाहंकारसमन्वितो यः ।
बुद्धेर्गुणेनाऽऽत्मगुणेन[b] चैव आराग्रमात्रो ह्यवरोऽपि[1] दृष्टः ॥ ८ ॥

1 ) v. l. अपरः for अवरः.

*a* ) छां 3·14·3; क 2·20. —*b* ) श्वे 5·12.

वालाग्रशतभागस्य शतधा कल्पितस्य च[1] ।
भागो जीवः स विज्ञेयः स[a] चाऽऽनन्त्याय कल्पते ॥ ९ ॥

1 ) v. l. तु for च.

*a* ) क 3·17.

नैव[a] स्त्री न पुमानेष न चैवायं नपुंसकः ।
यद्यच्छरीरमादत्ते[b] तेन तेन स युज्यते[1] ॥ १० ॥

1 ) v. l. रक्ष्यते ( Hauschild ).

*a* ) शब्रा 5·5·4.35 न वा एष स्त्री न पुमान् यन्नपुंसको गौः. —*b* ) श्वे 4·3.

संकल्पनस्पर्शनदृष्टिमोहैर्ग्रासाम्बुवृष्ट्या[a][1] चात्म[2]विवृद्धिजन्म ।
कर्मानुगान्यनुक्रमेण[b] देही स्थानेषु रूपाण्यभिसंप्रपद्यते ॥ ११ ॥

1 ) v. l. वृष्ट्या आत्म°. —2 ) आत्त for आत्म and °जन्मा for °जन्म ( Hillebrandt )

*a* ) छां 3·17·2. —*b* ) क 5·7; छां 3·14·1.

स्थूलानि[a] सूक्ष्माणि बहूनि चैव रूपाणि देही स्वगुणैर्वृणोति ।
क्रियागुणैरात्मगुणैश्च[b] तेषां संयोगहेतुरपरोऽपि दृष्टः ॥ १२ ॥

*a* ) श्वे 5·5. —*b* ) श्वे 5·8.

अनाद्यनन्तं[a] कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम् ।
विश्वस्यैकं[b] परिवेष्टितारं ज्ञात्वा[c] देवं मुच्यते सर्वपाशैः ॥ १३ ॥

*a* ) श्वे 4·14; क 3·15. —*b* ) श्वे 3·7. —*c* ) श्वे 1·8; 2·15; 4·16; 6·13.

भावग्राह्यमनीडाख्यं[a][b] भावाभावकरं शिवम्[c] ।
कलासर्गकरं[d] देवं ये विदुस्ते जहुस्तनुम् ॥ १४ ॥

*a* ) मुं 2·2·3 आयम्य तद्भावगतेन चेतसा; गी 10·8. —*b* ) ऋ 10·55·6 सनादनीळः. —*c* ) श्वे 3·11 सर्वगतः शिवः; 3·14 ज्ञात्वा शिवं; 4·16,18 शिव एव केवलः. —*d* ) प्र 6·2; 6·4.

॥ इति पञ्चमोऽध्यायः ॥

स्वभा॑वमेके कवयो वदन्ति कालं तथाऽन्ये परिमुह्यमानाः ।
देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रम् ॥ १ ॥

*a* ) श्वे 1·2. —*b* ) श्वे 1·6.

येना॑ऽऽवृतं नित्यमिदं हि सर्वं ज्ञः कालकालो गुणी सर्वविद्यः ।
तेनेशितं कर्म विवर्तते ह पृथि॑व्यप्तेजोनिलखानि चिन्त्यम् ॥ २ ॥

1 ) कालकरो ( Silburn ). —2 ) v. l. सर्वविद् यः ( ? ); cp श्वे 6·16.

*a* ) ऋ 10·91·1 विश्वतो वृत्वा. —*b* ) श्वे 2·12.

तत् कर्म कृत्वा विनिवर्त्य भूयस्तत्त्वस्य तत्त्वेन समेत्य योगम् ।
एकेन द्वाभ्यां त्रिभिरष्टभिर्वा कालेन चैवाऽऽत्मगु॑णैश्च सूक्ष्मैः ॥ ३ ॥

Cp श्वे 6·3–4 with श्वे 5·3 and मै 6·17.

*a* ) श्वे 4·5; 5·7; 6·11; 6·16.

आरभ्य कर्माणि गुणान्वितानि भा॑वांश्च सर्वान् विनियोजयेद्यः ।
तेषामभावे कृतकर्मनाशः कर्मक्ष॑ये याति स तत्त्वतोऽन्यः ॥ ४ ॥

*a* ) श्वे 5·5; 6·12. —*b* ) मुं 2·2·8 क्षीयन्ते चास्य कर्माणि.

आदिः स संयोगनिमित्तहेतुः प॑रस्त्रिकालादक॑लोऽपि दृष्टः ।
तं विश्वरूपं भवभूतमीड्यं देवं स्वचित्तस्थमुपास्य पूर्वम् ॥ ५ ॥

*a* ) मां 1 यच्चान्यत् त्रिकालातीतम्. —*b* ) श्वे 6·19 निष्कलम्; मुं 2·2·9; प्र 6·5; मै 6·15.

स॑ वृक्षकालाकृतिभिः परोऽन्यो यस्मात् प्रप॑ञ्चः परिवर्ततेऽयम् ।
ध॑र्मावहं पापनुदं भगेशं ज्ञात्वाऽऽत्मस्थममृतं विश्वधाम ॥ ६ ॥

*a* ) क 6·1; श्वे 3·9. —*b* ) मां 7. —*c* ) तै 2·9.

तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ।
पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ॥ ७ ॥

न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥ ८ ॥

न तस्य कश्चित् पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम्[a] ।
स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ॥ ९ ॥

*a* ) क 6·8 व्यापकोऽलिङ्ग एव च.

यस्तन्तुनाभ[1] इव तन्तुभिः प्रधानजैः[a] स्वभावतः ।
देव एकः स्वमावृणोति[b] स नो दधाद्ब्रह्माप्ययम् ॥ १० ॥

1 ) The metre is faulty. Hauschild proposes to read two pādas of जगती ( ? ) here : यस्तूर्णनाभिव तन्तुभिः प्रधानजैः, स्वभावतो देव एकः स्वमावृणोत् । स नो दधाद् ब्रह्माप्य( व्य )यम् which does not seem to be satisfactory.

*a* ) श्वे 4·10; 5·3. —*b*) ऋ 10·81·1 प्रथमच्छदवराँ आविवेश; श्वे 1·3; बृ 1·4·7; 1·6·3; 2·1·20; 2·4·12; 5·14. 3; छां 3·12·6; 6·13·2; क 5·9–11.

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी[a] चेता[1] केवलो निर्गुणश्च ॥ ११ ॥

1 ) v. l. चेत्ता.

*a* ) बृ 4·3·32; मै 2·7; 6·16; प्र 6·5; सांका 65 प्रेक्षकवदवस्थितः स्वस्थः; गी 9·18; 13·12.

एको वशी[a] निष्क्रियाणां बहूनामेकं बीजं[b] बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १२ ॥

*a* ) क 5·12. —*b* ) श्वे 5·5; 6·4.

नित्यो[a] नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति[b] कामान् ।
तत्कारणं[1] सांख्ययोगाधिगम्यं[2][c] ज्ञात्वा देवं[d] मुच्यते सर्वपाशैः ॥ १३ ॥

1 ) v. l. तम्. —2 ) v. l. अभिपन्नम्.

*a*) क 5·13. —*b* ) ई 8. —*c* ) श्वे 1·3. —*d* ) श्वे 5·13.

न[a] तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १४ ॥

*a* ) क 5·15; मुं 2·2·9,10; बृ 4·4·16; गी 13·17; 15·6.

एको हंसो भुवनस्यास्य मध्ये स एवाग्निः सलिले संनिविष्टः ।
तमेव[a] विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ १५ ॥

*a* ) वासं 31·18; श्वे 3·8.

स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः [a]कालकालो गुणी सर्वविद्यः ।
प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः ॥ १६ ॥

*a* ) श्वे 6·2, 17.

स तन्मयो[a] ह्यमृत ईशसंस्थो ज्ञः सर्वगो[b] भुवनस्यास्य गोप्ता ।
य ईशे[c] अस्य जगतो नित्यमेव नान्यो[d] हेतुर्विद्यत ईशनाय ॥ १७ ॥

*a* ) श्वे 5·6; मुं 2·2·4. —*b* ) मुं 1·1·6; 3·2·5. —*c* ) श्वे 3·11,21. —*d* ) श्वे 1·9; 6·2, 16, 18.

यो[a] ब्रह्माणं विदधाति पूर्वं यो[b] वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्म[c]बुद्धिप्रकाशं[1] मुमुक्षुर्वै शरणम[d]हं प्रपद्ये ॥ १८ ॥

1 ) v. l. आत्मबुद्धिप्रसादम्.

*a* ) श्वे 3·4; 4·12; 5·2; 6 17. —*b* ) षृ 2·4·10; बृ 4·5·11. —*c* ) बृ 2·4·10; 4·3·9; श्वे 4·18. —*d* ) छां 2·22·3,4; गी 2·7; 15·4.

निष्कलं[a] निष्क्रियं शान्तं निरवद्यं निरञ्जनम्[b] ।
अमृतस्य परं सेतुं[c] दग्धेन्धन[d]मिवानलम् ॥ १९ ॥

*a* ) मुं 2·2·9; श्वे 6·5; प्र 6·5; मै 6·15. —*b*) मुं 3·1·3. —*c* ) छां 8·4·1 य आत्मा स सेतुर्विधृतिः; बृ 4·4·22; मै 7·7 एष सेतुर्विधरणः; क 3·2 यः सेतुरीजानानाम्; मुं 2·2·5. —*d* ) क 4·13; मै 6·34.

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥ २० ॥
तपःप्रभावाद्देव[1]प्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान् ।
अत्याश्रमिभ्यः[2][a] परमं पवित्रं प्रोवाच सम्यगृषि[b]संघजुष्टम् ॥ २१ ॥

1 ) It seems that Deussen reads वेदप्रसादात्. —2 ) v. l. अन्त्याश्रमिभ्यः.

*a* ) बृ 3·5; 4·4·22; 4·5·2,15; मै 4·3. —*b* ) सम्यगृषि = सम्यग्-दर्शनवान् i. e. a perfect ऋषि; cp सम्मासंबुद्ध.

वेदान्ते[a] परमं गुह्यं पुराकल्पे प्रचोदितम् ।
नाप्रशान्ताय दातव्यं नापुत्राय[b]ाशिष्याय वा पुनः ॥ २२ ॥

*a* ) मुं 3·2·6; श्वे 5·6; मै 2·3. —*b* ) ऐआ 3·2·6; छां 3·11·5; बृ 6·3·12; मुं 3·2·11; मै 6·29.

यस्य देवे परा भक्तिर्[a] यथा देवे तथा गुरौ[b] ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः प्रकाशन्ते महात्मन इति ॥ २३ ॥

*a* ) For the first time ( in the sense of *devotion, love through faith* ) here and often in गी. —*b* ) मुं 1·2·12.

॥ इति षष्ठोऽध्यायः ॥

॥ इति श्वेताश्वतरोपनिषत् ॥

# ॥ कौषीतक्युपनिषत् ॥

[ The Kausītaki–Upanisad ( also called Kausītaki-Brāhmaṇopanisad ) belongs to the school of Kausītakins of the Ṛgveda. They are also called Śāṅkhāyanas. They have a Brāhmaṇa, at the end of which there is the Kausītaki–Āraṇyaka, which, in its turn, contains the present Upaniṣad. The Brāhmaṇa contains 30 adhyāyas and the Āraṇyaka, fifteen. The place of the Upaniṣad is different according to different manuscripts. Some place the Up. as Adhyāyas 1, 2, 3, 4, while others as 6, 7, 8, 9 and still others as 1, 7, 8, 9. This circumstance shows that by the time the Āraṇyaka and the Upaniṣad were amalgamated, they were ready in their final forms. ]

चित्रो ह वै गार्ग्यायणि[1][a]र्यक्ष्यमाण आरुणिं[b] वव्रे । स ह पुत्रं श्वेतकेतुं[c] प्राजिघाय[2] याजयेति । तं हाभ्यागतं[3] पप्रच्छ—गौतमस्य[d] पुत्रास्ति[4] संवृतं[e] लोके यस्मिन् मा धास्यसि, अन्यतमो[5] वाध्वा[5] तस्य, मा लोके[6] धास्यसीति । स होवाच—नाहमेतद्वेद । हन्ताचार्यं[f] पृच्छानीति[7] । स ह पितरमासाद्य पप्रच्छ—इतीति माऽप्राक्षीत् कथं प्रतिब्रवाणीति । स होवाच—अहमप्येतन्न वेद । सदस्येव वयं स्वाध्यायमधीत्य हरामहे यन्नः परे ददति । एह्युभौ गमिष्याव इति । स ह समित्पाणिश्चित्रं[g] गार्ग्यायणिं प्रतिचक्रम उपायानीति[h] । तं होवाच—ब्रह्मार्होऽसि[8] गौतम यो[9] न मानमुपागाः[9] । एहि व्येव[i] त्वा ज्ञपयिष्यामीति ॥ १ ॥

Cp in general शब्रा 10 3·4·1; बृ 6·2; छां 5·3.

1 ) v. l. गाङ्ग्यायनिः; गार्ग्यायनिः; cp गार्ग्यायण in बृ 4·6·2. —2 ) v. l. प्राजिगाय. —3 ) v. l. आसनिम्. —4 ) v. l. पुत्रोऽस्ति; पुत्रास्ते. —5 ) v. l. अन्यमुताहो वाध्वा. —6 ) v. l. अलोके. —7 ) v. l. पृच्छामीति. —8 ) v. l. ब्रह्मार्घः. —9 ) v. l. यो मामुपागाः.

*a* ) The name of a Ṛṣi in बृ 4·6·2. —*b* ) छां 5·11·2; बृ 6·2·1. —*c* ) शब्रा 10·3·4·1; छां 5·3; 6·1. —*d* ) शब्रा 11·5·3·2; क 1·10; 4·15. —*e* ) बृ 2·5·18. —*f* ) छां 6·14·2.. —*g* ) शब्रा 10·6·1·2; 11·4·1·9; छां 4·4·5; मुं 1·2·12. —*h* ) बृ 2·1·14. —*i* ) बृ 2·1·15.

स होवाच—ये वै के चास्माल्लोकात् प्रयन्ति[a] चन्द्रमसमेव[b] ते सर्वे गच्छन्ति । तेषां प्राणैः पूर्वपक्ष आप्यायते[c] । तानपरपक्षेण[1] प्रजनयति । एतद्वै स्वर्गस्य लोकस्य द्वारं यच्चन्द्रमाः[2] । तं यः प्रत्याह तमतिसृजते[d] । अथ य एनं[3] न प्रत्याह तमिह वृष्टिर्भूत्वा[e]

वर्षति । स[f] इह कीटो[g] वा पतङ्गो वा शकुनिर्वा शार्दूलो वा सिंहो वा[4] मत्स्यो वा परश्वा[h] वा पुरुषो वाऽन्यो वैतेषु स्थानेषु प्रत्याजायते[i] यथाकर्म[j] यथाविद्यम्[j] । तमागतं पृच्छति[k]—कोऽसीति । तं प्रतिब्रूयात्—

विचक्षणादृतवो[l–m] रेत आभृतं पञ्चदशात्[n] प्रसूतात् पित्र्यवतः ।

तन्मा पुंसि[o] कर्तर्येरयध्वम्[p] पुंसा कर्त्रा मातरि मा निषिक्त[5] ॥

स जाय[6] उपजायमानो[q] द्वादशत्रयोदश[6] उपमासो द्वादशत्रयोदशेन पित्रा सं तद्विदे[7] प्राति तद्विदेऽहम् । तन्म ऋतवो अमृत्यव[8] आभरध्वम्[r] । तेन सत्येन[s] तेन तपसा ऋतुरस्मि । आर्तवोऽस्मि[t] । कोऽस्मि । त्वमस्मीति तमातिसृजते ॥ २ ॥

1 ) v. l. तानपरपक्षे न. —2 ) v. l. यश्चन्द्रमाः; छां 7·10·1. —3 ) Some Mss drop एनम्. —4 ) Some Mss add वराहो वा. —5 ) Deussen reads मा आसिषिक्त. Geldner proposes नि सिश्च—an archaic form of 2nd pers. pl. perfect ! ! ! —6 ) v. l. for जाय ( i. e. जाये ) is जायाया ( i. e. जायायै or जायायाः ); cp कौ 1·6 संभूतः भार्यायै रेतः. Prof. S. Bhattacharya suggests boldly, for उपजायमानो etc. उपजायमानस्त्रयोदशो द्वादशेन पित्रा. —7 ) Böhtlingk adds अहम् after तद्विदे. —8 ) v. l. अमर्त्यवः ( ! ); v. l. अमृतवे which looks like a negative Vedic infinitive like सूतवे; but the correct form would be अमर्तवे like कर्तवे, सर्तवे, हर्तवे etc. Also cp in the Paippalāda recension of अथर्ववेद.

*a* ) बृ 5·10·1; के 1·2. —*b* ) जैब्रा 1·49 धूमात्; जै 3·28·1–3. —*c* ) बृ 6·2·16. —*d* ) शब्रा 1·9·3·2; बृ 6·10·1 ( विजिहीते ). —*e* ) ऐब्रा 8·28; बृ 6·2·16 —*f* ) छां 6·9·3; 6·10·2. —*g* ) बृ 6·2·16. —*h* ) Is it परस्वा ? cp ऋ 10·86·18 परस्वन्तं हतं विदत्; अ 6·72·2 यावत् परस्वतः पसः; वासं 24·28 ईशानाय परस्वत आलभते. —*i* ) छां 6·3·9; 6·10·2. —*j* ) क 5·7 यथाश्रुतम्. —*k* ) जैब्रा 1·49. —*l* ) जैब्रा 1·18; 1·50 reads अर्धमास्यं प्रसुतात् पित्र्यावतः । तं मा पुंसि कर्तर्येरयध्वं पुंसः कर्तुर्मातरि आसिषिक्त ॥ स उपजायोपजायमानो त्रयोदशेन द्वादशोपमासः । समु तद्विदे प्रति तद्विदेऽहं तं मा ऋतवोऽमृत आनयध्वम्. —*m* ) ऋ 8·41·9 यस्य श्वेता विचक्षणा तिस्रो भूमीः आधिक्षितः; कौब्रा 4·4; 12·5. —*n* ) तैब्रा 1·5·10·5 तं पञ्चदशेनैव हरान्ति...; शब्रा 8·4·1·10 वज्रः पञ्चदशः... —*o* ) बृ 6·2·12–13. —*p* ) ऋ 4·34·2 सुवीरामस्मे रयिमेरयध्वम्. —*q* ) ऋ 1·25·8 वेदा य उपजायते. —*r* ) शब्रा 6·2·2·29 उप च त्रयोदशो मासः. —*s* ) जैब्रा 1·50. —*t* ) तैसं 7·2·6·1 तदार्तवानामार्तवत्वम्; अ 5·28·2 आर्तवा ऋतुभिः संविदानाः.

स एतं देवयानं पन्थानमापद्या[1]ग्निलोकमागच्छाति । स वायुलोकम् । स आदित्यलोकम् । स वरुणलोकम् । स इन्द्रलोकम् । स प्रजापतिलोकम् । स ब्रह्मलोकम्[a] । तस्य ह वा एतस्य ब्रह्मलोकस्यारो[b] ह्रदः । मुहूर्ता येष्टिहाः[2] । विजरा[c] नदी । इल्यो[3] वृक्षः । सालज्यं[4] संस्थानम् । अपराजितमायतनम्[d] । इन्द्रप्रजापती[e]

द्वारगोपौ। विभुप्रमितम्[f]। विचक्षणाऽऽसन्दी[g]। अमितौजाः[h] पर्यङ्कः[i]। प्रिया च मानसी। प्रतिरूपा च चाक्षुषी। पुष्पाण्यावयतो[5] वैराजगानि[6]। अम्बाश्चाम्बायवी[7]-श्चाप्सरसः। अम्बया नद्यः[8]। तमित्थंविदागच्छति। तं ब्रह्माऽऽहाभिधावत[9] मम यशसा। विजरां वा अयं नदीं प्रापत्। न वा अयं जरयिष्यतीति ॥ ३ ॥

Cp in general छां 5·3–10; बृ 6·2.

1 ) v. l. आसाद्य. —2 ) v. l. अन्वोष्टिहा; येष्टकाः which really is ऐष्टकाः with the advent of य् before; see पा 8·3·17; Renou asks : is it इष्टकाः? Cp शब्रा 10·4·2·4 ff. —3 ) Weber suggests इल्प. —4 ) v. l. सालज्ज and सालुज; सज्जलम् ( cp तज्जलान् in छां 3·14·1 ). —5 ) v. l. आदायावयत्यौ ( तौ ). —6 ) v. l. वै च जगानि. —7 ) v. l. अम्बायवाश्च. —8 ) Belvalkar suggests नव्यः. —9 ) v. l. अभिधावति.

*a* ) बृ 3·6·1. —*b* ) छां 8·5·3. —*c* ) छां 8·1·5; बृ 4·4·25 ( अजरः ). —*d* ) ऋ 10·48·11 अपराजितमस्तृतमषाळ्हम्. —*e* ) तैब्रा 2·8·8·10; ऐआ 2·6; बृ 3·9·2. —*f* ) छां 8·5·3 प्रभुविमितम् ( Is this perhaps the original reading of the Kausītaki ? ); क 2·22 ( विभु ). —*g* ) अ 15·3·3 तस्मै व्रात्यायासन्दीं समभरन् ऐब्रा 8·12 तस्मा एतामासन्दीं समभरन्. —*h* ) ऋ 1·11·4 पुरां भिन्दुर्युवा कविरमितौजा अजायत. —*i* ) पा 8·2·22 परेश्च घाङ्कयोः

तं पञ्च शतान्यप्सरसां प्रतियन्ति[1]। शतं चूर्णहस्ताः। शतं वासोहस्ताः। शतं फलहस्ताः[2]। शतमाञ्जनहस्ताः। शतं माल्यहस्ताः[3]। तं ब्रह्मालङ्कारेणालङ्कुर्वन्ति। स ब्रह्मालङ्कारेणालङ्कृतो ब्रह्म विद्वान् ब्रह्माभिप्रैति[4]। स आगच्छत्यारं ह्रदम्। तं मनसाऽत्येति[5]। तमित्वा संप्रतिविदो[a] मज्जन्ति। स आगच्छति मुहूर्तान् येष्टिहान्। तेऽस्मादपद्रवन्ति। स आगच्छति विजरां नदीम्। तां मनसैवात्येति। तत् सुकृतदुष्कृते[b] धुनुते[6]। तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति। अप्रिया दुष्कृतम्। तद्यथा रथेन धावयन् रथचक्रे पर्यवेक्षेत[c]। एवमहोरात्रे पर्यवेक्षते[d]। एवं सुकृतदुष्कृते सर्वाणि च द्वन्द्वानि[e]। स एष विसुकृतो विदुष्कृतो ब्रह्म विद्वान् ब्रह्मैवाभिप्रैति ॥ ४ ॥

1 ) v. l. धावन्ति. —2 ) v. l. फण°, फणा°, कणा° for फल°. —3 ) v. l. ज्वाला° for माल्य°. —4 ) एव added after ब्रह्म in some Mss. —5 ) v. l. अप्येति for अत्येति. —6 ) v. l. विधूनुते; Keith proposes धुन्वाते.

*a* ) ऋ 2·1·15 त्वं तान्त्सं च प्रति चासि मज्मना; ऐआ 2·3·4 यो ह वै यज्ञे यज्ञमध्यूळ्हं वेद स संप्रतिविद्; 2·3·6 यो वैतां वाचं वेद...स संप्रतिवित्. —*b* ) जैब्रा 1·18 स एतमेव सुकृतरसमप्येति, तस्य पुत्रा दायमुपयन्ति पितरः साधुकृत्याम्; तै 2·7. —*c* ) मै 6·28; गी 2·45

5·3 निर्द्वंद्व. —*d* ) शब्रा 2·3·3·12 अहोरात्रे उपावेक्षते. —*e* ) द्वंद्व in the sense of a pair of opposites is late; cp योसू 2·48 ततो द्वंद्वानभिघातः; मै 3·1 द्वंद्वैरभिभूयमानः; 6·29; गी 4·22 द्वन्द्वातीतः; 7·27 द्वंद्वमोहेन; 7·28 ते द्वंद्वमोहनिर्मुक्ताः; 15·5 द्वंद्वैर्विमुक्ताः सुखदुःखसंज्ञैः. —*f* ) शब्रा 2·3·3·11 अहोरात्रे सुकृतं न क्षिणुतः; छां 4·14·3; 8·4·1.

स आगच्छतील्यं वृक्षम् । तं ब्रह्मगन्धः प्रविशति । स आगच्छति सालज्यं संस्थानम् । तं ब्रह्मरसः प्रविशति । स आगच्छत्यपराजितमायतनम् । तं ब्रह्मतेजः प्रविशति । स आगच्छतीन्द्रप्रजापती द्वारगोपौ । तावस्मादपद्र[a]वतः । स आगच्छति विभुप्रमितम् । तं ब्रह्मयशः प्रविशति । स आगच्छति विचक्ष[b]णामासन्[b]दीम् । बृहद्रथन्तरे सामनी पूर्वौ पादौ । श्यैत[c]नौधसे चापरौ । वै[d]रूपवैराजे अनूच्ये । शा[e]क्वररैवते तिर[f]श्ची । सा प्रज्ञा । प्रज्ञया हि विपश्[g]यति । स आगच्छत्यमितौजसं पर्यङ्कम् । स प्राण[h]ः । तस्य भूतं भविष्यच्च पूर्वौ पादौ । श्रीश्चेरा[i] चापरौ । बृहद्र[j]थन्तरे अनूच्ये । भद्रयज्ञाय[k]ज्ञीये शीर्षण्ये । ऋचश्च सामानि च प्राचीनाता[l]नानि । यजूंषि तिरश्ची[m]नानि । सोमांशव उपस्तर[n]णम् । उद्गीथ उप[o]श्रीः । श्रीरुपबर्ह[p]णम् । तस्मिन् ब्रह्माऽऽस्ते । तमित्थंवित् पादेनैवाग्र आरो[q]हति । तं ब्रह्मा पृच्छ[1]ति—कोऽसीति । तं प्रतिब्रूयात् ॥ ५ ॥

1 ) v. l. आह.

*a* ) जैब्रा 1·18 संपलाय्य; तै 2·8; क 6·3. —*b* ) अ 15·3·3 तस्मै व्रात्यायासन्दीं समभरन्; ऐब्रा 8·12; जैब्रा 2·25. —*c* ) अ 15·2·22 तं श्यैतं च नौधसं च; जैब्रा 1·145 श्यैतं ह वा अग्रे रथन्तरस्य प्रिया तनूरास, नौधसं बृहतः; तांब्रा 7·10·3 देवविवाहो वै श्यैतनौधसे. —*d* ) तांब्रा 7·8·10–11 स वैरूपमसृजत.. स वैराजमसृजत; 8·9·12–13 परिष्टुभं हि वैरूपम्...अनुष्टुभं हि वैराजम्. —*e* ) ऐब्रा 8·12, 17 शाक्वररैवते शीर्षण्ये. —*f* ) जैब्रा 2·25 यजूंषि तिरश्चीनं. ... —*g* ) See विचक्षणा above. —*h* ) For the identification of प्राण and प्रज्ञा see कौ 2. —*i* ) अ 15·2·19 इरा पुंश्चली. —*j* ) अ 15·3·5 बृहच्च रथंतरं च अनूच्ये आस्ताम्. —*k* ) अ 15·3·5 यज्ञायज्ञीयं च वामदेव्यं च; तांब्रा 5·1·18 यज्ञायज्ञीयं पुच्छं कार्यम्. —*l* ) अ 15·3·6 ऋचः प्राञ्चस्तन्तवः; तैसं 6 1·1·4 आदित्यानां प्राचीनतानः. —*m* ) अ 15·3·6 ( तिर्यञ्चः ); ऐब्रा 8·12 सामानि तिरश्चीनवायान् यजूंष्यतीकाशान्; जैब्रा 2·25. —*n* ) अ 15·3·7 वेदास्तरणम्. —*o* ) अ 15·3·8 उद्गीथोऽपश्रयः. —*p* ) अ 15·3·7 ब्रह्मोपबर्हणम्. —*q* ) तांब्रा 5·5·4 छन्दोभिरारोहति स्वर्गमेव तल्लोकमारोहति; ऐब्रा 8·12.

ऋ[a]तुरस्मि । आर्तवोऽस्मि । आकाशाद्योनेः संभूतो भाया एतद्रे[b]तः । संवत्सरस्य तेजोभूतस्य भूतस्य भूतस्य भूतस्याऽऽत्मा त्वमात्मा[c]ऽसि[1] । "यस्त्व[d]मसि सोऽहमस्मी"ति । तमाह—कोऽहमस्मीति । सत्य[e]मिति ब्रूयात् । किं तद्यत् सत्यमिति । यदन्यद्देवेभ्यश्च प्राणेभ्यश्च तत् सत्[f] । अथ यद्देवाश्च प्राणाश्च तत् त्यम्[g] । तदेकया[2]

वाचाऽभिव्याह्रियते सत्यमिति । एतावदिदं सर्वम् । इदं सर्वमसि[h] । इत्येवैनं तदाऽऽह[i] । [3]तदेतदृक्श्लोकेनाभ्युक्तम्[3] ॥ ६ ॥

1 ) Some Mss add इति after असि. —2 ) v. l. एतया. 3– –3 ) Dropped in some Mss.

*a* ) कौ 1·2. —*b* ) तैब्रा 3·4·8·1 भार्यै दार्वाहारम्. —*c* ) छां 3·14·4. —*d* ) जैब्रा 1·18. —*e* ) ऋ 10·190·1 ऋतं च सत्यं च. —*f* ) छां 8·3·5; बृ 5·5·1. —*g* ) बृ 2·3·1; बृ 3·9·9. —*h* ) छां 6·8·7 तत्त्वमसि. —*i* ) Is it तत् + आह ?

[1]यजूदरः सामशिरा असावृङ्मूर्तिरव्ययः ।
स ब्रह्मेति स विज्ञेय ऋषिर्ब्रह्ममयो महानिति ॥

तमाह—केन मे पौंस्नानि[2] नामान्याप्नोषीति । प्राणेनेति[3] ब्रूयात् । केन स्त्रीनामानीति । वाचेति । केन नपुंसकानीति । मनसेति । केन गन्धानिति । घ्राणेनेत्येव ब्रूयात् । केन रूपाणीति । चक्षुषेति[4] । केन शब्दानिति । श्रोत्रेणेति । केनान्नरसानिति । जिह्वयेति । केन कर्माणीति । हस्ताभ्यामिति । केन सुखदुःखे इति । शरीरेणेति । केनाऽऽनन्दं रतिं प्रजातिमिति । उपस्थेनेति । केनेत्या इति । पादाभ्यामिति । केन धियो विज्ञातव्यं कामानिति । प्रज्ञयेति[5] ब्रूयात् । तमाह—आपो[6–] वै खलु मे ह्यसावयं ते लोक इति[–6] । सा या ब्रह्मणो जितिर्या व्यष्टिस्तां जितिं जयति, तां व्यष्टिं व्यश्नुते य एवं वेद य एवं वेद ॥ ७ ॥

1 ) Some Mss drop this verse. —2 ) v. l. पौंस्यानि. —3 ) Some Mss add एव after इति. —4 ) शंकरानन्द adds hereafter केन स्पर्शानिति त्वचेति. —5 ) Some add एव after प्रज्ञया. —6– –6 ) v. l. आपो वै खलु मीयन्ते असौ लोकः ( quoted by S'aṁkara on ब्रसू 4·4·21 ); v. l. लोको अयं ते असौ.

*a* ) क 3·10, 13; 6·7; श्वे 3·19. —*b* ) पा 4·1·87 स्त्रीपुंसाभ्यां नञ्-स्नञौ भवनात्; but पौंस्य in ऋ 1·80·10 महत्तदस्य पौंस्यम्; तैब्रा 2·7·17·3 पौंस्येनेमं वर्चसा सꣳसृजाथ. —*c* ) छां 2·7·1. —*d* ) शब्रा 10·5·2·15 न वाचा अन्नस्य रसं विजानाति; कौ 3·5–8; जै 4·11·5. —*e* ) क 1·28; प्र 1·13; मै 7·9. —*f* ) बृ 6·1·6; 6·1·14; 6·3·2; तै 1·9;3·10. —*g* ) ऋ 1·167·5 त्वेषप्रतीका नभसो नेत्या; 7·36·3 आ वातस्य ध्रजतो रन्त इत्याः. —*h* ) कौ 2·15; 3·5–8; जै 4.11·5. —*i* ) ऋ 10·72·6 यद्देवा अदः सलिले सुसंरब्धा अतिष्ठत; 10·82·1 घृतमेने अजनन् नंनमाने; 10·121·9 यश्चापश्चंद्रा बृहतीर्जजान; 10·129·3 अप्रकेतं सर्वमा इदम्; ई 4; ऐ 1·1·1; क 4·6; बृ 1·5·13. —*j* ) शब्रा 10·2·4·8 इमां व्यष्टिं व्यश्नुते.

॥ इति प्रथमोऽध्यायः ॥

प्राणो[a] ब्रह्मेति ह स्माऽऽह कौषीतकिः[b] । तस्य ह वा एतस्य प्राणस्य ब्रह्मणो मनो[c] दूतम् । वाक् परिवेष्ट्री[d] । चक्षुर्गोत्रम्[1] । श्रोत्रं संश्रावयितृ[2] । तस्मै वा एतस्मै प्राणाय ब्रह्मण एताः सर्वा देवता[e] अयाचमानाय बलिं हरन्ति[f] । तथो एवास्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति य एवं वेद । तस्योपनिषन्न[g] याचेदिति । तद्यथा ग्रामं भिक्षित्वाऽलब्ध्वोपविशेन्नाहमतो दत्तमश्नीयामिति । य एवैनं पुरस्तात् प्रत्याचक्षीरंस्त एवैनमुपमन्त्रयन्ते—ददाम त इति । एष धर्मोऽयाचतो भवति । अन्यतस्त्वेवैनमुपमन्त्रयन्ते—ददाम त इति ॥ १ ॥

1 ) v. l. गोप्तृ for गोत्रम्. —2 ) Some Mss read after this : स यो ह वा एतस्य प्राणस्य ब्रह्मणो मनो दूतं वेद दूतवान् भवति यश्चक्षुर्गोप्तृ गोप्तृमान् भवति । यः श्रोत्रं संश्रावयितृ संश्रावयितृमान् भवति यो वाचं परिवेष्ट्रीं परिवेष्ट्रीमान् भवति.

*a* ) शब्रा 8·4·1·3 प्राणा उ वै ब्रह्म; but refuted in बृ 5·12·1; बृ 4·1·3; छां 4·10·5; जै 1·33·2. —*b* ) ऐब्रा 7·10 and many times in कौब्रा; शांआ 15·1; छां 1·5.2,4; कौ 2·7; कौषीतकेयः in बृ 3·5·1. —*c* ) तैसं 2·5·11·5 प्रजापतिर्दूतीरेव त्वं मनसोऽसि. —*d* ) अ 9·6·51 यत् परिवेष्टारः पात्रहस्ताः पूर्वे च अपरे च; वासं 6·13 सुपरिविष्टा वयं परिवेष्टारो भूयास्म; ऐब्रा 8·21 मरुतः परिवेष्टारः; शब्रा 11·2·7·5 स यो ह वा अहोरात्रे परिवेष्ट्री इति वेद..... —*e* ) तांब्रा 20·14·2 तस्य वागेव स्वमासीत्, वाग् द्वितीया; शब्रा 2·5·2·2 अथान्या देवता अपचक्रमुः; बृ 1·3·6; 1·5·23; 3·7·1–2; छां 4·3·3; 7·15·4; कौ 2·13; प्र 2·13. —*f*) कौ 2·14. —*g* ) बृ 2·1·20; 2·3·6; छां 3·14·1; के 4·6.

प्राणो ब्रह्मेति ह स्माऽऽह पैङ्ग्यः[a] । तस्य ह वा एतस्य प्राणस्य ब्रह्मणो वाक्[b] परस्ताच्चक्षुरारुन्धे । चक्षुः परस्ताच्छ्रोत्रमारुन्धे । श्रोत्रं परस्तान्मन आरुन्धे । मनः[c] परस्तात् प्राण आरुन्धे । तस्मै वा एतस्मै प्राणाय ब्रह्मण एताः सर्वा देवता अयाचमानाय बलिं हरन्ति । तथो एवास्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति य एवं वेद । तस्योपनिषन्न याचेदिति । तद्यथा ग्रामं भिक्षित्वाऽलब्ध्वोपविशेन्नाहमतो दत्तमश्नीयामिति । य एवैनं पुरस्तात् प्रत्याचक्षीरंस्त एवैनमुपमन्त्रयन्ते —ददाम त इति । एष धर्मोऽयाचतो भवति । अन्यतस्त्वेवैनमुपमन्त्रयन्ते—ददाम त इति ॥ २ ॥

*a* ) शब्रा 11·7·2·8 मधुको ह स्माह पैङ्ग्यः; 12·2·2·4 पृष्ठ्याभिप्लवौ तन्त्रे कुर्वीत इति स्माह पैङ्ग्यः; बृ 6·3·8 मधुकाय पैङ्ग्याय. —*b* ) वाक् ( neu. ); cp कौ 2.8. —*c* ) Vaguely parallel to बृ 2·1·17; cp the doctrine of *Kos'as* in तै 1·2.

अथात एकधनावरोधनम्[a] । यदेकधनमभिध्यायात्[1] पौर्णमास्यां वाऽमावास्यां वा शुद्धपक्षे वा पुण्ये नक्षत्रेऽग्निमुपसमाधाय परिसमुह्य[b] परिस्तीर्य पर्युक्ष्योत्पूय[2] दक्षिणं

जान्वाच्य स्रुवेण वा चमसेन वा कंसेन वैता आज्याहुतीर्जुहोति । वाङ्नाम देवताऽवरोधिनी[3] सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा । प्राणो[4] नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा । चक्षुर्नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा । श्रोत्रं नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा । मनो नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा । प्रज्ञा नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहेति । अथ धूमगन्धं प्रतिघ्रायाऽऽज्यलेपेनाङ्गान्यनुविमृज्य वाचंयमोऽभिप्रव्रज्यार्थं ब्रुवीत[5] । दूतं वा प्रहिणुयात् । लभते[f] हैव ॥ ३ ॥

1 ) Some Mss add after this एतेषामेकस्मिन् पर्वणि. —2 ) Omitted by some Mss. —3 ) v. l. देवतावरोधनी. —4 ) v. l. घ्राणो; cp शांआ 5·5; कौ 1·7; छां 8·12·4. —5 ) v. l. ब्रूयात्.

*a* ) वासं 5·7 इन्द्रायैकधनविदे; शब्रा 11·4·1·1 एतद्ध स्म वै तत् पूर्वेषां वृतानां धावयतामेकधनमुपाहितं भवति. —*b* ) शांब्रा 12·8; बृ 6·3·1. —*c* ) ऋ 10·15·6 आच्या जानु दक्षिणतो निषद्य; शब्रा 2·4·2·1 ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदन्; 3·2·1·5 जान्वाक्न उपविशति. —*d* ) छां 5·2·8; बृ 6·3·1. —*e* ) कौ 2·1. —*f* ) शांआ 12·8; बृ 6·3·1; छां 5·2·4.

अथातो दैवः स्मरः । यस्य प्रियो बुभूषेद्यस्यै वा येषां[1] वा यासां वा एकस्मिन् पर्वण्यग्निमुपसमाधायैतयैवाऽऽवृतैता आज्याहुतीर्जुहोति । वाचं ते मयि जुहोम्यसौ स्वाहा । प्राणं ते मयि जुहोम्यसौ स्वाहा । चक्षुस्ते मयि जुहोम्यसौ स्वाहा । श्रोत्रं ते मयि जुहोम्यसौ स्वाहा । मनस्ते मयि जुहोम्यसौ स्वाहा । प्रज्ञां ते मयि जुहोम्यसौ स्वाहेति । अथ धूमगन्धं प्राजिघ्रायाऽऽज्यलेपेनाङ्गान्यनुविमृज्य वाचंयमोऽभिप्रव्रज्य संस्पर्शं जिगमिषेत् । अपि वाताद्वा संभाषमाणस्तिष्ठेत् । प्रियो हैव भवति । स्मरन्ति हैवास्य ॥ ४ ॥

1 ) v. l. एषां वै तेषामेव.

*a* ) अ 6·130·1; 6·132·5 देवाः प्र हिणुत स्मरं असौ मामनुशोचतु; यं मित्रावरुणौ स्मरमसिञ्चताम्; छां 7·14. —*b* ) कौ 2·3. —*c* ) बृ 6·3·1 has only आवृता and not एतया.

अथातः सांयमनं[1] प्रातर्दनमान्तरमग्निहोत्रमिति चाऽऽचक्षते[2] । यावद्वै पुरुषो भाषते न तावत् प्राणितुं शक्नोति । प्राणं तदा वाचि जुहोति । यावद्वै पुरुषः प्राणिति न तावद्भाषितुं शक्नोति । वाचं तदा प्राणे जुहोति । एते अनन्ते अमृताहुती[3] जाग्रच्च

स्वपंश्च सन्ततमव्यवच्छिन्नं[4] जुहोति[d] । अथ या अन्या आहुतयोऽन्तवत्यस्ताः कर्ममय्यो हि भवन्ति । एतद्ध[5] वै पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रुः ॥ ५ ॥

1 ) v. l. संयमनम्. —2 ) Some Mss drop च. —3 ) v. l. अमृते आहुती. —4 ) Some Mss. drop अव्यवच्छिन्नम्. —5 ) v. l. तद्ध स्मैतत्.

*a* ) कासं 21·10 एतेन ह स्म वै भरद्वाजः प्रतर्दनं संनह्यन्नेति; कौब्रा 26·5; कौ 3·1; बृ 5·12·1. —*b* ) शब्रा 11·3·1·1 वाग्घ वा एतस्याग्निहोत्रस्याग्निहोत्री etc.; जैब्रा 1·20; बृ 1·5·23. —*c* ) ऐआ 3·2·6 वाचि हि प्राणं जुहुमः प्राणे वा वाचम्. —*d* ) बृ 1·3·3; छां 1·2·2; ऐ 1·3·4; जै 2·1·16. —*e* ) बृ 3·8·10; गी 7·23.

उक्थं[a] ब्रह्मेति ह स्माह शुष्कभृङ्गारः । तदृगित्युपासीत । सर्वाणि हास्मै भूतानि श्रैष्ठ्यायाभ्यर्चन्ते[1][b] । तद्यजुरित्युपासीत । सर्वाणि हास्मै भूतानि श्रैष्ठ्याय युज्यन्ते । तत् सामेत्युपासीत । सर्वाणि हास्मै भूतानि श्रैष्ठ्याय संनमन्ते । तच्छ्रीरित्युपासीत । तद्यश इत्युपासीत । तत्तेज इत्युपासीत । तद्यथैतच्छस्त्राणां श्रीमत्तमं यशस्वितमं तेजस्वितमं भवति । तथो एवैवं विद्वान् सर्वेषां भूतानां श्रीमत्तमो यशस्वितमस्तेजस्वितमो भवति । तमेतमैष्टकं कर्ममयमात्मानमध्वर्युः संस्करोति । तस्मिन् यजुर्मयं प्रवयति । यजुर्मय ऋङ्मयं होता । ऋङ्मये साममयमुद्गाता । स एष सर्वस्यै त्रयीविद्याया आत्मा । एष उ एवास्यात्मा । एतदात्मा भवति य एवं वेद ॥ ६ ॥

1 ) v. l. अभ्यर्च्यन्ते.

*a* ) शब्रा 10·6·2·8–10 अग्निर्वा उक्थं तस्य आहुतय एव थम् etc.; ऐआ 2·1·2 उक्थमुक्थमिति वै प्रजा वदन्ति; बृ 5·13·1. —*b* ) तैब्रा 1·3·2·1 अतिष्ठन्त अस्मै ज्यैष्ठ्याय.

[1–]अथातः सर्वजितः कौषीतकेस्त्रीण्युपासनानि भवन्ति[–1] । यज्ञोपवीतं कृत्वाऽपः[2] आचम्य त्रिरुदपात्रं प्रसिच्योद्यन्तमादित्यमुपतिष्ठेत । वर्गोऽसि[a] पाप्मानं मे वृङ्ग्धीति । एतयैवाऽऽवृता मध्ये सन्तम् । उद्वर्गोऽसि पाप्मानं म उद्वृङ्ग्धीति । एतयैवाऽऽवृताऽस्तं यन्तम् । संवर्गोऽसि[b] पाप्मानं मे संवृङ्ग्धीति । यदहोरात्राभ्यां[3] पापं करोति[4] सं तद् वृङ्क्ते ॥ ७ ॥

1– –1 ) Some Mss read instead : सर्वजिद्ध स्म कौषीतकिरुद्यन्तमादित्यमुपतिष्ठते. —2 ) For अप आचम्य v. l. उदकमानीय. —3 ) Some read here : तद्यदहोरात्राभ्यां पापमकरोत्, सं तद् वृङ्क्ते; तथो एवैवं विद्वानेतयैवावृतादित्यमुपतिष्ठते. —4 ) v. l. अकरोत्; pc बृ 2·4·6.

*a* ) शब्रा 2·4·2·1 ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जानु आच्योपासीदन्; तैब्रा 3·10·9·12 यज्ञोपवीतं कृत्वाधो निपपात. —*b* ) ऋ 8·75·12 संवर्गं सं रयिं जय; 10·43·5 संवर्गं यन्मघवा सूर्यं जयत्.

अथ मासि मास्यमावास्यायां[1] पश्चाच्चन्द्रमसं दृश्यमानमुपतिष्ठेतैतयैवाऽऽवृता । हरिततृणाभ्यां[2] वाक्[a] प्रत्यस्यति—

यत्ते[b][3] सुसीम[4] हृदयमधि[5][6] चन्द्रमसि श्रितम् ।
तेनामृतत्वस्येशाने[7] माऽहं पौत्र्यमघं[8] रुदमिति ॥

न हास्मात्[9] पूर्वाः[c] प्रजाः प्रैति इति नु जातपुत्रस्य । अथाजातपुत्रस्य । "आप्याय[d]स्व समेतु ते", "सं[e] ते पयांसि समु यन्तु वाजाः", "यमादित्या[f] अंशुमाप्याययन्ति" इत्येतास्तिस्र ऋचो जपित्वा । मास्माकं प्राणेन प्रजया पशुभिराप्याययिष्ठाः[g] । योऽस्मान् द्वेष्टि । यं च वयं द्विष्मः । तस्य प्राणेन प्रजया[h] पशुभिराप्याययस्वेति दैवीमावृतमावर्त[10] आदित्यस्याऽऽवृतमन्वावर्ते । इति दक्षिणं बाहुमन्वावर्तते[i] ॥ ८ ॥

1 ) Some Mss add वृत्तायाम् after this. 2 ) v. l. हरिततृणे. —3 ) v. l. यन्मे. —4 ) Deussen conjectures सुषीमे; v. l. सुसमित्. —5 ) v. l. हृदये. —6 ) v. l. दिवि for अधि. —7 ) v. l. मन्येऽहं मां तद्विद्वांसं for तेनामृतत्वस्येशाने. —8 ) v. l. पुत्र्यम् for पौत्र्यम्. —9 ) v. l. हि for ह. —10 ) v. l. ऐन्द्रीम् for दैवीम्.

*a* ) वाक् is *neuter*; cp कौ 2·2. —*b* ) Cp this verse with कौ 2·10 ( with many variants ). —*c* ) प्रजाः is nom. sg of प्रजा; therefore पूर्वी प्रजाः. —*d* ) ऋ 1·91·18. —*e* ) ऋ 1·91·18. —*f* ) तैसं 2·3·5·3; 2·4·14·1; अ 7·81·6; मैसं 4·9·27; 4·12·2 ( यथा for यम् ). —*g* ) अ 7·81·5 आ वयं प्यासिषीमहि गोभिरश्वैः प्रजया पशुभिर्गृहैर्धनेन. —*h*) अ 3·29·8 माहं प्राणेन मात्मना मा प्रजया प्रतिगृह्य विराधिषि; ऋ 10·128·5 मा हास्महि प्रजया मा तनूभिः; कौ 4·6. —*i* ) कौब्रा 10·2.

अथ पौर्णमास्यां पुरस्ताच्चन्द्रमसं दृश्यमानमुपतिष्ठेतैतयैवाऽऽवृता । सोमो राजाऽसि विचक्षणः[a] पञ्चमुखोऽसि प्रजापतिः । ब्राह्मणस्त एकं मुखं तेन मुखेन राज्ञोऽत्सि । तेन मुखेन मामन्नादं कुरु । राजा त एकं मुखं तेन मुखेन[b] विशोऽत्सि । तेन मुखेन मामन्नादं कुरु । श्येनस्त एकं मुखं तेन मुखेन पक्षिणोऽत्सि । तेन मुखेन मामन्नादं कुरु । अग्निष्टे[c] एकं मुखं तेन मुखेनेमं लोकमत्सि[d] । तेन मुखेन मामन्नादं कुरु । त्वयि पञ्चमं मुखं तेन मुखेन सर्वाणि भूतान्यत्सि । तेन मुखेन मामन्नादं कुरु । मास्माकं प्राणेन प्रजया पशुभिरपक्षेष्ठाः[1] । योऽस्मान् द्वेष्टि यं च वयं

द्विष्मः । तस्य प्राणेन प्रजया पशुभिरपक्षीयस्वेति दैवीमावृतमावर्त आदित्यस्याऽऽवृतमन्वावर्ते । इति दक्षिणं बाहुमन्वावर्तते ॥ ९ ॥

1 ) v. l. अवक्षेष्ठाः for अपक्षेष्ठाः.

*a* ) कौ 1·2. —*b* ) शब्रा 3·3·2·8 अन्नं वै क्षत्रियस्य विट्. —*c* ) ऋ 2·1·13 त्वामग्न आदित्यास आस्यम्, त्वां जिह्वां शुचयश्चक्रिरे कवे.. त्वे देवा हविरदन्ति आहुतम्. —*d* ) ऋ 8·44·26 विश्वादं पुरुवेपसमग्निं शुंभामि मन्मभिः; 10·16·6 अग्निष्टद् विश्वादगदं कृणोतु.

अथ संवेक्ष्यज्जायायै हृदयमाभिमृशेत्—

यत्ते[1][a] सुसीमे हृदये[1] हितमन्तः[2] प्रजापतौ[2] ॥

मन्येऽहं मां तद्विद्वांसं ( तेन ) माऽहं पौत्रमघं[3] रुदामिति[4] ॥

न हास्मात्[5] पूर्वा प्रजाः[b] प्रैतीति ॥ १० ॥

1 ) v. l. यन्मे सुसीमं हृदयम्. —2 ) v. l. दिवि चन्द्रमासि श्रितम्. —3 ) v. l. पुत्र्यम् for पौत्रम्. —4 ) v. l. निगाम्; रिशम् for रुदम्. —5 ) v. l. ह्यस्याः.

*a* ) On the whole verse, cp कौ 2·8. —*b* ) प्रजाः *nom. sg.* ; cp कौ 2·8.

अथ प्रोष्याऽऽयन् पुत्रस्य मूर्धानमाभिमृशेत्[1]—

अङ्गादङ्गात्[a] संभवसि हृदयादधिजायसे ।

आत्मा[2] त्वं पुत्र माऽऽविथ[2] स जीव शरदः शतम् ॥

असौ इति नामास्य गृह्णाति ।

अश्मा[b] भव परशुर्भव हिरण्यमस्तृतं भव ।

तेजो[3] वै पुत्रनामासि स जीव शरदः शतम् ॥

असौ इति नामास्य गृह्णाति[4] ।

येन[c] प्रजापतिः प्रजाः पर्यगृह्णादरिष्ट्यै[5] ।

तेन त्वा परिगृह्णामि ।

असौ इति नामास्य गृह्णाति । अथास्य दक्षिणे कर्णे जपति[d]—

‘ अस्मै[e] प्रयन्धि मघवन्नृजीषिन्निति ’ ।

‘ इन्द्र[f] श्रेष्ठानि द्रविणानि धेहीति ’ सव्ये ।

मा[g] च्छित्था मा व्यथिष्ठाः[6] शतं शरद आयुषः ।

जीवस्व पुत्र ते नाम्ना मूर्धानमवजिघ्रामि[7] ॥

असौ इति त्रि[8]र्मूर्धानम[7]वजिघ्रेत् ।
‘ [h]गवां त्वा हिंकारेणाभि हिं करोमि ’ ।
इति त्रि[8]र्मूर्धानमभि हिं कुर्यात् ॥ ११ ॥

1 ) v. l. आभिजिघ्रेत्. —2 ) v. l. आत्मा वै पुत्रनामासि; [ cp शब्रा ( का ) 14·9·4·9; शब्रा ( मा ) 14·9·4·20 ]. —3 ) v. l. वेदो. —4 ) Some Mss add अथैनं परिगृह्णाति after this. —5 ) v. l. तदरिष्टच्चै. —6 ) v. l. व्यधिष्ठाः. —7 ) v. l. अभिजिघ्रामि; अभिजिघ्रेत्. —8 ) v. l. त्रिरस्य.

*a* ) बृ 6·4·9. —*b* ) बृ 6·4·26. —*c* ) शब्रा 14·9·4·11; बृ 6·4·11. —*d* ) बृ 6·4·25. —*e* ) ऋ 3·36·10 ( with अस्मे for अस्मै ). —*f* ) ऋ 2·21·6. —*g* ) अ 8·1·4 मा छित्था अस्माल्लोकात्. —*h* ) Quotation untraced.

अथातो दैवः परि[a]मरः । एतद्वै ब्रह्म दीप्यते यदग्निर्ज्वलति । अथैतन्म्रियते यन्न ज्वलति । एतद्वै ब्रह्म दीप्यते यदादित्यो दृश्यते । अथैतन्म्रियते यन्न दृश्यते । तस्य चन्द्रमसमेव तेजो गच्छति । वायुं प्राणः । एतद्वै ब्रह्म दीप्यते यच्चन्द्रमा दृश्यते । अथैतन्म्रियते यन्न दृश्यते । तस्य विद्युतमेव तेजो गच्छति । वायुं प्राणः । एतद्वै ब्रह्म दीप्यते यद्विद्युद्विद्योतते । अथैतन्म्रियते यन्न विद्योतते । तस्य[1] वायुमेव तेजो गच्छति । वायुं प्राणः । ता वा एताः सर्वा देवता वायुमेव प्रविश्य वायौ सृप्ता न मृ[2]च्छन्ते । तस्मादेव [3]उ पुनरुदीरते । इत्यधिदैवतम् ॥ अथाध्यात्मम्— ॥ १२ ॥

1 ) v. l. तस्या दिश एव for तस्य वायुमेव. —2 ) v. l. मूच्छन्ते. —3 ) Some Mss. drop उ.

*a* ) ऐब्रा 8·28; तैब्रा 8·1·3; तै 3·10.

ए[a]तद्वै ब्रह्म दीप्यते यद्वाचा वदति । अथैतन्म्रियते यन्न वदति । तस्य चक्षुरेव तेजो गच्छति । प्राणं प्राणः । एतद्वै ब्रह्म दीप्यते यच्चक्षुषा पश्यति । अथैतन्म्रियते यन्न पश्यति । तस्य श्रोत्रमेव तेजो गच्छति । प्राणं प्राणः । एतद्वै ब्रह्म दीप्यते । यच्छ्रोत्रेण शृणोति । अथैतन्म्रियते यन्न शृणोति । तस्य मन एव तेजो गच्छति । प्राणं प्राणः । एतद्वै ब्रह्म दीप्यते यन्मनसा ध्यायति । अथैतन्म्रियते यन्न ध्यायति । तस्य प्राणमेव तेजो गच्छति । प्राणं प्राणः । ता वा एताः सर्वा देवताः प्राणमेव प्रविश्य प्राणे सृप्ता न मृच्छन्ते । तस्मादेव उ पुनरुदीरते । तद्यदि ह वा एवं विद्वांसं उभौ प[b]र्वतावभिप्रवर्तेयातां तुस्तूर्षमाणौ दक्षिणश्चोत्तरश्च न हैवैनं स्तृण्वीयाताम् । अथ य एनं द्विषन्ति यांश्च स्वयं द्वेष्टि त ए[1]नं सर्वे परिम्रियन्ते ॥ १३ ॥

Cp in general शांआ 10.1; बृ 1·3·12; 3·1·3.

1 ) v. l. एवैनम् for एनम्.

*a* ) i. e. विन्ध्य and हिमवत्; cp मनु 2·21. —*b* ) शब्रा 2·2·2·14 न हैनं सपत्नस्तुस्तूर्षमाणश्च न स्तृणुते.

अथातो निःश्रेयसादानम् । सर्वा ह वै देवता अहंश्रेयसे[a] विवदमाना अस्माच्छरीरादुच्चक्रमुः । तद्दारुभूतं[1][b] शिश्ये । अथैतद्वाक् प्रविवेश । तद्वाचा वदच्छिश्य एव । अथैतच्चक्षुः प्रविवेश । तद्वाचा वदच्चक्षुषा पश्यच्छिश्य एव । अथैतच्छ्रोत्रं प्रविवेश । तद्वाचा वदच्चक्षुषा पश्यच्छ्रोत्रेण शृण्वच्छिश्य एव । अथैतन्मनः प्रविवेश । तद्वाचा वदच्चक्षुषा पश्यच्छ्रोत्रेण शृण्वन्मनसा ध्यायच्छिश्य एव । अथैतत् प्राणः प्रविवेश । तत्तत एव समुत्तस्थौ । ते[2] देवाः प्राणे निःश्रेयसं विदित्वा प्राणमेव प्रज्ञात्मानमभिसंभूय[d] सहैतैः सर्वैरस्माल्लोकादुच्चक्रमुः[3] । ते वायुप्रतिष्ठा[4] आकाशात्मानः[e] स्वरीयुः । तथो एवैवं विद्वान् सर्वेषां भूतानां प्राणमेव[f] प्रज्ञात्मानमभिसंभूय सहैतैः सर्वैरस्माच्छरीरादुत्क्रामति । स वायुप्रतिष्ठ[5] आकाशात्मा स्वरेति । स तद्भवति[6] यत्रैते देवाः । तत् प्राप्य[7] तदमृतो भवति यदमृता देवाः[7] ॥ १४ ॥

Cp in general शब्रा 10·5·2·15 एष उ एव प्राणः । एष हीमाः सर्वाः प्रजाः प्रणयति । तस्यैते प्राणाः स्वाः...तस्मात् स्वाप्ययः ।

1 ) Some Mss add अप्राणत् and शुष्कम् after दारुभूतम्. —2 ) v. l. ता वा एताः सर्वा देवताः for ते देवाः. —3 ) v. l. शरीरात् for लोकात्. —4 ) v. l. °प्राविष्टाः for °प्रतिष्ठाः. —5 ) v. l. °प्रविष्टः for °प्रतिष्ठः. —6 ) v. l. गच्छति for भवति, which ( former ) appears to be a better reading. —7 ) v. l. यदमृता देवास्तदमृतो भवति य एवं वेद.

*a* ) तैसं 2·5·11·4 वाक् च मनश्च आर्तीयेताम्-अहं देवेभ्यो हव्यं वहामि इति वागब्रवीदहं देवेभ्य इति मनः; ऐआ 2·1·4 ताः ( देवताः ) अहिंसन्त – अहमुक्थमस्म्यहमुक्थमिति; छां 1·2·1; 5·1·6; बृ 1·3·1; 1·5·21; 6·1·1–14; ऐ 3·1–10; कौ 3·3; प्र 2·1–4. अहंश्रेयसे is the loc. of अहंश्रेयस. —*b* ) शब्रा 3·8·3·15 यदास्मात् प्राणोऽपक्रामति दार्वेव तर्हि भूतोऽनर्थ्यः शेते; 3·8·4·5 ( identical with the previous quotation ); जै 3·32·3; छाग 4 यदयं शवशायितमशायिष्ट इति. —*c* ) कौ 2·1. —*d* ) ऐआ 3·2·3–4 स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्ये एकमेतादिति विद्यात्. —*e* ) छां 4·10·5; बृ 5·1·1; तै 2·7. —*f* ) छां 7·15; कौ 3·2.

अथातः पितापुत्रीयं संप्रदानमिति चाऽऽचक्षते । पिता पुत्रं प्रेष्यन्नाह्वयति । नवैस्तृणैरगारं संस्तीर्याग्निमुपसमाधायोदकुम्भं सपात्रमुपनिधायाहतेन वाससा संप्रच्छन्नः स्वयं[1] श्येत[1] एत्य पुत्र उपरिष्टादभिनिपद्यत इन्द्रियैरस्येन्द्रियाणि संस्पृश्य ।

अपि[2] वाऽस्याभिमुखत एवाऽऽसीत । अथास्मै संप्रयच्छति[2] । वाचं[a] मे त्वयि दधानीति पिता । वाचं ते मयि दध इति पुत्रः । प्राणं[b] मे त्वयि दधानीति पिता । प्राणं ते मयि दध इति पुत्रः । चक्षुर्मे त्वयि दधानीति पिता । चक्षुस्ते मयि दध इति पुत्रः । श्रोत्रं मे त्वयि दधानीति पिता । श्रोत्रं ते मयि दध इति पुत्रः । अन्नरसान् मे त्वयि दधानीति पिता । अन्नरसांस्ते मयि दध इति पुत्रः । कर्माणि[c] मे त्वयि दधानीति पिता । कर्माणि ते मयि दध इति पुत्रः[3] । सुखदुःखे मे त्वयि दधानीति पिता । सुखदुःखे ते मयि दध इति पुत्रः । आनन्दं रतिं प्रजातिं मे त्वयि दधानीति पिता । आनन्दं रतिं प्रजातिं ते मयि दध इति पुत्रः । इत्या मे त्वयि दधानीति पिता । इत्यास्ते मयि दध इति पुत्रः । धियो[4] विज्ञातव्यं कामान् मे त्वयि दधानीति पिता । धियो विज्ञातव्यं कामांस्ते मयि दध इति पुत्रः ॥ अथ दक्षिणावृत् प्राङ्[5]उपनिष्क्रामति । तं पिताऽनुमन्त्रयते—यशो ब्रह्मवर्चसमन्नाद्यं[d] कीर्तिस्त्वा जुषतामिति । अथेतरः सव्यमंसमन्ववेक्षते । पाणिनाऽन्तर्धाय वसनान्तेन वा प्रच्छाद्य स्वर्गाँल्लोकान् कामानाप्नुहीति[e] । स यद्यगदः[f] स्यात् पुत्रस्यैश्वर्ये पिता वसेत् । परि वा व्रजेत् । यद्यु वै प्रेयाद्यदेवैनं समापयति, तथा[6] समापयितव्यो भवति तथा समापयितव्यो भवति ॥ १५ ॥

1 ) v. l. पिता शेते for स्वयं श्येतः. 2- -2 ) v. l. अपि वा अस्मा आसीनाय, अभिमुखायेव संप्रदद्यात्. —3 ) One Ms adds a similar sentence about शरीर after this. —4 ) Instead of धियो some Mss add a corresponding statement about मनः and प्रज्ञा, and add at the end संप्रदानविधि in short thus : यद्यु वा उपाभिगदः स्यात् समासेनैव ब्रूयात्—प्राणान् मे त्वयि दधानीति पिता प्राणांस्ते मयि दध इति पुत्रः. —5 ) Some Mss drop प्राङ्. —6 ) v. l. तथैवैनं समापयेयुः.

*a* ) Cp संप्रत्तिः in बृ 1·5·17–20. —*b* ) कौ 1·7. —*c* ) कौ 2·3–4. —*d*) छां 3·13·3; 3·18·3; बृ 6·4·28. —*e* ) छां 8·12·6; ऐ 3·4. —*f* ) छां 3·16·2.

॥ इति द्वितीयोऽध्यायः ॥

---

प्रतर्दनो[a] ह[1] दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम[b] युद्धेन च पौरुषेण च । तं हेन्द्र उवाच—प्रतर्दन वरं[2] ददानीति । स होवाच प्रतर्दनः[c][3]—त्वमेव मे ( वरं ) वृणीष्व यं त्वं मनुष्याय[d] हिततमं[d] मन्यस इति । तं हेन्द्र उवाच—न[4] वै वरं परस्मै

वृणीते । त्वमेव वृणीष्वेति । एवमवरो वै[5] किल म[6] इति होवाच प्रतर्दनः । अथो खल्विन्द्रः सत्यादेव नेयाय[e] । सत्यं हीन्द्रः[f] । स होवाच—मामेव विजानीहि । एतदेवाहं मनुष्याय हिततमं मन्ये यन् मां विजानीयात् । त्रिशीर्षाणं[g] त्वाष्ट्रमहनम् । अरुर्मुखान्[h 8] यतीन् सालावृकेभ्यः[i] प्रायच्छम् । बह्वीः संधा[j] अतिक्रम्य दिवि प्रह्लादीयान[k]तृणमहमन्तरिक्षे पौलोमान्[9] पृथिव्यां कालखञ्जान्[l] । तस्य मे तत्र न लोम[m] च[10] नामीयत । स यो मां[11] विजानीयान् नास्य केन च कर्मणा लोको मीयते । न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया[n] । नास्य पापं चन चकृषो[12] मुखान्नीलं[13] व्येतीति[o] ॥ १ ॥

Cp in general बृ 1·4·7; छां 8·12·4.

1 ) Some Mss add वै after ह. —2 ) Some Mss add वृणीष्व after वरम्. —3 ) Dropped in some Mss. —4 ) v. l. वरः परस्मै; परः परस्मै; वरोऽपरस्मै; वरोऽवरस्मै. —5 ) Some Mss add तर्हि after वै. —6 ) Böhtlingk reads सः for म. —7 ) v. l. तं हेन्द्रः for सः. —8 ) v. l. अरुन्मुखान्. —9 ) v. l. कालखाञ्जान्, कालकाश्यान्, कालकञ्जान्, कालकञ्ज्यान्. —10 ) v. l. च मा मीयते. —11 ) v. l. वेद. —12 ) v. l. चकृषः. —13 ) v. l. वेति.

*a* ) कौब्रा 26·5; कौ 2·5. —*b* ) तांब्रा 14·2·5 ऋभवो वा इन्द्रस्य प्रियं धाम; ऐआ 2·2·3 तेनेन्द्रस्य प्रियं धामोपेयाय; ऐ 1·3·14. —*c* ) क 1·9; frequently in क 1. —*d* ) ऋ 1·73·3 उप क्षेति हितमित्रो न राजा; 10·16·3 अपो वा गच्छ यदि तत्र ते हितम्; पा 2·3·73 चतुर्थी च...आयुष्य...हितैः. —*e* ) छां 4·4·5 न सत्यादगाः. —*f* ) ऋ 1·63·3 त्वं सत्य इन्द्र; 1·174·1 त्वं सत्यः. 2·12·15 स किलासि सत्यः. —*g* ) ऋ 10·8·8 त्रिशीर्षाणं सप्तरश्मिं जघन्वान् त्वाष्ट्रस्य चिन्निः ससृजे त्रितो ( इन्द्रेषितः आप्त्यः ) गाः; 10·99·6 षळक्षं त्रिशीर्षाणं दमन्यत्...विपा वराहमयोअग्रया हन्; तैसं 2·5·1·1 विश्वरूपो वै त्वाष्ट्रः...तस्य त्रीणि शीर्षाणि; शब्रा 5·5·4·2–3 त्वष्टुर्ह वै पुत्रः त्रिशीर्षा षडक्ष आस...तमिन्द्रो द्विद्वेष तस्य तानि शीर्षाणि प्रचिच्छेद. —*h* ) ऐब्रा. 7·28 ( इन्द्रः ) विश्वरूपं त्वाष्ट्रमभ्यमंस्त...अरुर्मघानवधीत्; जैब्रा 2·134 ( इन्द्रः ) त्रिशीर्षाणं त्वाष्ट्रम् अवधीत्...अरुर्मुखानवधीत्. —*i* ) ऋ 10·73·3 त्वमिन्द्र सालावृकान् सहस्रमासन् दधिषे; 10·95·15 सालावृकाणां हृदयान्येता; तैसं 6·2·7·5 इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्; तांब्रा 8·1·4 इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्. —*j* ) जैब्रा 2·134 संधां संहितामतीत्य ( इन्द्रः ) नमुचेरासुरस्य शिरः प्राच्छैत्सीत्. —*k* ) तैब्रा 1·5·9·1 प्रह्लादो ह वै कायाधवः. —*l* ) अ 6·80·2 ये त्रयः कालकाञ्जा दिवि देवा इव श्रिताः; का 8·1 कालकाञ्जा वै नामासुरा आसन्. —*m* ) Cp the sentiment in ऋ 5·34·4 न किल्बिषादीषते वस्व आकरः. —*n* ) तैब्रा 3·9·15·2 भ्रूणहत्यामेव जयते ( where, according to Sāyaṇa, भ्रूण means a Brāhmaṇa ); बृ 4·3·22. —*o* ) तैसं 3·1·1·2 नास्य नीलं न हरो व्येति.

स होवाच—प्राणोऽस्मि प्रज्ञात्मा[a] । तं मामायुरमृतमित्युपास्स्व । आयुः प्राणः[b] । प्राणो वा आयुः[c] । प्राण[d] एवामृतम् । यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः । प्राणेन ह्येवामुष्मिँल्लोके[1]ऽमृतत्वमाप्नोति । प्रज्ञया सत्यं संकल्पम्[e] । स यो मामायुरमृत-मित्युपास्ते । सर्वमायुरस्मिँल्लोक एति । आप्नोत्यमृतत्वमक्षितिं[f] स्वर्गे लोके । तद्धैक आहुरेकभूयं[g] वै प्राणा गच्छन्तीति । न हि[2] कश्चन शक्नुयात् सकृद्वाचा नाम प्रज्ञापयितुं चक्षुषा रूपं श्रोत्रेण शब्दं मनसा ध्यातुम्[h][3] । इत्येकभूयं वै प्राणाः[4] । एकैकमेतानि सर्वाण्येव[5] प्रज्ञापयन्ति[6] । वाचं वदन्तीं सर्वे प्राणा अनु वदन्ति । चक्षुः पश्यत् सर्वे प्राणा अनु पश्यन्ति । श्रोत्रं शृण्वत् सर्वे प्राणा अनु शृण्वन्ति । मनो ध्यायत् सर्वे प्राणा अनु ध्यायन्ति । प्राणं प्राणन्तं सर्वे प्राणा अनु प्राणन्तीति[i][7] । एवमु हैतदिति हेन्द्र उवाच । अस्ति त्वेव[8] प्राणानां निःश्रेयसमिति[j] ॥ २ ॥

1 ) v. l. अस्मिँल्लोके. —2 ) Omitted by some Mss. —3 ) v. l. ध्यानम्. —4 ) Some Mss read भूत्वा after प्राणाः. —5 ) Omitted by some Mss. —6 ) Some Mss add इति after प्रज्ञापयन्ति. —7 ) Some Mss drop इति. —8 ) v. l. अस्तित्वे च ( See शांकरभाष्य on ब्रसू 1·1·29. )

*a* ) कौ 2·14. —*b* ) शब्रा 5·2·4·10 यो वै प्राणः स आयुः; तै 2·3 प्राणो हि भूताना-मायुः. —*c* ) ऐब्रा 2·38 प्राणो वा आयुः. —*d* ) बृ 1·6·3; 3·9·9. —*e* ) ऋ 10·164·5 जाग्रत्स्वप्नः संकल्पः पापः; शब्रा 10·6·3·2 सत्यसंकल्पम्; छां 7·4·3; 7·8·2; 7·26·1; बृ 1·5·3; 2·4·11; 4·5·12; के 4·5; ऐ 3·2. —*f* ) ऋ 8·7·16 उत्सं दुहन्तो अक्षितम्; 9·110·5 उत्सं न कंचिज्जनपानमक्षितम्; तै 1·10. —*g* ) Cp वासं 27·9 अमुत्रभूयादध यद्यमस्य; अ 19·37·3 आभिभूयाय त्वा ( अभिभूय *n.* superiority; *solitary occurrence* ); शब्रा. 14·8·6·2 ( = बृ 5·5·1 ) सत्यभूयमेव भवति; ऐआ 2·5·1 ( = ऐ 2·2 ) आत्मभूयं गच्छति. बृ. 5·12·1 एकधाभूयं भूत्वा. —*h* ) ध्यातुम् = ध्यानं प्रज्ञापयितुम्. —*i* ) Cp बृ 1·4·7; 4·4·2. —*j* ) कौ 2·14.

जीवति वागपेतः । मूकान् हि पश्यामः । जीवति चक्षुरपेतः । अन्धान् हि पश्यामः । जीवति श्रोत्रापेतः । बधिरान् हि पश्यामः । जीवति मनोपेतः । बालान् हि पश्यामः । जीवति बाहुच्छिन्नः । जीवत्यूरुच्छिन्न इति । एवं हि पश्याम इति । अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति । तस्मादेतदेवोक्थ[a]-मुपासीत[1] । यो वै प्राणः सा प्रज्ञा । या वा प्रज्ञा[b] स प्राणः[b] । सह[2] ह्येतावस्मिन् शरीरे वसतः । सहोत्क्रामतः[2] । तस्यैषैव दृष्टिः । एतद्विज्ञानम् । यत्रैतत्[3] पुरुषः सुप्तः[c] स्वप्नं न कंचन पश्यति । अथास्मिन् प्राण एवैकधा[d] भवति । तदेनं[4] वाक् सर्वैर्नामभिः सहाप्येति[e] ।

चक्षुः सर्वैं रूपैः सहाप्येति। श्रोत्रं सर्वैः शब्दैः सहाप्येति। मनः सर्वैर्ध्यानैः सहाप्येति। स यदा प्रतिबुध्यते। यथाऽग्नेर्ज्वलतः सर्वा दिशो विष्फुलिङ्गा[5] वि[f]प्रतिष्ठेरन्नेवमेवै-तस्मादात्मनः प्राणा[6] यथायतनं विप्रतिष्ठन्ते। प्राणेभ्यो देवाः। देवेभ्यो[g] लोकाः। तस्यैषैव सिद्धिः[h]। एतद्विज्ञानम्। यत्रैतत् पुरुष आर्तो मरिष्यन्नाबल्यं[7] न्येत्य[i] संमोहं न्येति। तदाहुः—उदक्रमीच्चित्तम्। न शृणोति। न पश्यति। न वाचा वदति। न ध्यायति (इति)। अथास्मिन् प्राण एवैकधा भवति। तदैनं वाक् सर्वैर्नामभिः सहाप्येति। चक्षुः सर्वैः रूपै सहाप्येति। श्रोत्रं सर्वैः शब्दैः सहाप्येति। मनः सर्वैर्ध्यानैः सहाप्येति। स यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति। स यदा प्रति-बुध्यते यथाऽग्नेर्ज्वलतो विष्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते। प्राणेभ्यो देवाः। देवेभ्यो लोकाः ॥ ३ ॥

Cp in general शांआ 9·3; बृ 6·1; छां 5·1.

1 ) Some editions add after this : सैषा प्राणे सर्वाप्तिः. 2– –2 ) Omitted by some Mss. —3 ) v. l. यदा for यत्रैतत् पुरुषः. —4 ) v. l. तदेनम्. —5 ) v. l. विस्फुलिंगाः. —6 ) शंकराचार्य ( on ब्रसू 1·3·30 ) has सर्वे before प्राणाः in the कौषीतकि quotation. —7 ) v. l. अबल्यम्.

*a* ) शब्रा 1·6·2·8 अग्निर्वा उक् तस्याहुतय एव थम्; 10·6·2·10 प्राणो वा उक् तस्यान्नमेव थम्; ऐआ 2·1·4 इदं शरीरमुत्थास्यति तदुक्थं भविष्यति; बृ 5·13·1; कौ 2·6. —*b* ) नि 10·34 असुरत्वम्—प्रज्ञावत्त्वं वा अनवत्त्वं वा. —*c* ) बृ 2·2·19; 4·3·19. —*d* ) बृ 2·1·17. —*e* ) शब्रा 10·5·2·15 स एतैः सुप्तः न कस्यचन वेद etc; छां 4·3·3. —*f* ) बृ 2·1·20; मुं 2·1·1; मै 6·26. *g* ) बृ 1·4·7; ऐ 3·2; कौ 3·7–8. —*h* ) तांब्रा 12·9·1 इति गायत्री भवति सिध्यै; तैआ 4·3·2 सिध्यैत्वा; शांआ 8·2. —*i* ) नि + आ + इ + त्य; बृ 4·4·1; छां 8·6·4.

वागस्मात् सर्वाणि नामान्यभिविसृजते[a]। वाचा सर्वाणि नामान्याप्नोति। प्राणोऽस्मात् सर्वान् गन्धानभिविसृजते। प्राणेन सर्वान् गन्धानाप्नोति। चक्षुरस्मात् सर्वाणि रूपाण्यभिविसृजते। चक्षुषा सर्वाणि रूपाण्याप्नोति। श्रोत्रमस्मात् सर्वान् शब्दानभिविसृजते। श्रोत्रेण सर्वान् शब्दानाप्नोति। मनोऽस्मात् सर्वाणि ध्यानान्यभि-विसृजते। मनसा[b] सर्वाणि ध्यानान्याप्नोति। सैषा प्राणे सर्वाप्तिः। यो वै प्राणः सा प्रज्ञा। या वा प्रज्ञा स प्राणः। सह ह्येतावस्मिन् शरीरे वसतः। सहोत्क्रामतः। अथ खलु[1] यथाऽस्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्ति तद्व्याख्या-स्यामः— ॥ ४ ॥

Cp in general कौ 4; बृ 1·4·7.

1 ) Some Mss drop खलु.

*a* ) तैसं 6·3·2·1. —*b* ) बृ 2·1·17. —*c* ) ऐआ 2·1–2; छां 4·10·5; 8·12·4; के 1·1–8.

वाग्^(a)गेवास्या एकमङ्गमुदूळ्हम्[1]। तस्यै[b] नाम परस्तात् प्रातिविहिता भूतमात्रा[c]। प्राण एवास्या एकमङ्गमुदूळ्हम्। तस्य गन्धः परस्तात् प्रतिविहिता भूतमात्रा। चक्षुरेवास्या एकमङ्गमुदूळ्हम्। तस्य रूपं परस्तात् प्रतिविहिता भूतमात्रा। श्रोत्रमेवास्या एकमङ्गमुदूळ्हम्। तस्य शब्दः परस्तात् प्रतिविहिता भूतमात्रा। जिह्वैवास्या एकमङ्गमुदूळ्हम्। तस्या अन्नरसः परस्तात् प्रतिविहिता भूतमात्रा। हस्तावेवास्या एकमङ्गमुदूळ्हम्। तयोः कर्म[c] परस्तात् प्रतिविहिता भूतमात्रा। शरीरमेवास्या एकमङ्गमुदूळ्हम्। तस्य सुखदुःखे परस्तात् प्रतिविहिता भूतमात्रा। उपस्थ एवास्या एकमङ्गमुदूळ्हम्। तस्याऽऽनन्दो रतिः प्रजातिः परस्तात् प्रतिविहिता भूतमात्रा। पादावेवास्या एकमङ्गमुदूळ्हम्। तयोरित्याः परस्तात् प्रतिविहिता भूतमात्रा। प्रज्ञैवास्या[2] एकमङ्गमुदूळ्हम्। तस्यै[3] धियो[4] विज्ञातव्यं कामाः[4] परस्तात् प्रतिविहिता भूतमात्रा ॥ ५ ॥

1 ) v. l. अदूळ्हम्; अदूदुहत्. —2 ) v. l. मनः. —3 ) v. l. तस्य. —4 ) v. l. धीः कामाः.

*a* ) कौ 1·7; 2·15. —*b* ) कौ 1·6. —*c* ) सांका 38 तन्मात्राण्यविशेषाः. —*c* ) कौ 1·7 ( कर्माणि ).

प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति। प्रज्ञया प्राणं समारुह्य प्राणेन सर्वान् गन्धानाप्नोति। प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति। प्रज्ञया श्रोत्रं समारुह्य श्रोत्रेण सर्वान् शब्दानाप्नोति। प्रज्ञया जिह्वां समारुह्य जिह्वया सर्वानन्नरसानाप्नोति। प्रज्ञया हस्तौ समारुह्य हस्ताभ्यां सर्वाणि कर्माण्याप्नोति। प्रज्ञया शरीरं समारुह्य शरीरेण सुखदुःखे आप्नोति। प्रज्ञयोपस्थं समारुह्योपस्थेनाऽऽनन्दं रतिं प्रजातिमाप्नोति। प्रज्ञया पादौ समारुह्य पादाभ्यां सर्वा इत्या आप्नोति। प्रज्ञयैव धियं समारुह्य प्रज्ञयैव धियो विज्ञातव्यं कामानाप्नोति ॥ ६ ॥

न हि प्रज्ञापेता वाङ् नाम किंचन प्रज्ञापयेत्। अन्यत्र मे मनोऽभूदित्याह। नाहमेतन्नाम प्राज्ञासिषमिति। न प्रज्ञापेतः प्राणो गन्धं कंचन प्रज्ञापयेत्। अन्यत्र मे मनोऽभूदित्याह। नाहमेतं गन्धं प्राज्ञासिषमिति। न हि प्रज्ञापेतं चक्षू रूपं किंचन

प्रज्ञापयेत्। अन्यत्र मे मनोऽभूदित्याह। नाहमेतद्रूपं प्राज्ञासिषमिति। न हि प्रज्ञापेतं श्रोत्रं शब्दं कंचन प्रज्ञापयेत्। अन्यत्र मे मनोऽभूदित्याह। नाहमेतं शब्दं प्राज्ञासिषमिति। न हि प्रज्ञापेता जिह्वाऽन्नरसं कंचन प्रज्ञापयेत्। अन्यत्र मे मनोऽभूदित्याह। नाहमेतमन्नरसं प्राज्ञासिषमिति। न हि प्रज्ञापेतौ हस्तौ कर्म किंचन प्रज्ञापयेताम्। अन्यत्र मे[1] मनोऽभूदित्याह[2]। नाह[3]मेतत् कर्म प्राज्ञासि[4]षमिति। न हि प्रज्ञापेतं शरीरं सुखं[5] दुःखं[5] किंचन प्रज्ञापयेत्। अन्यत्र मे मनोऽभूदित्याह। नाहमेतत् सुखं दुःखं प्राज्ञासिषमिति। न हि प्रज्ञापेत उपस्थ आनन्दं [6]रतिं प्रजा[6]तिं कांचन प्रज्ञापयेत्। अन्यत्र मे मनोऽभूदित्याह। नाहमेतमानन्दं न रतिं न प्रजातिं प्राज्ञासिषमिति। न हि प्रज्ञापेतौ [7]पादावित्यां कांचन प्रज्ञापयेताम्। अन्यत्र मे मनोऽभूदित्याह। नाहमेतामित्यां प्राज्ञासिषमिति। न हि प्रज्ञापेता[b] धीः काचन सिध्येत्। न प्रज्ञातव्यं प्रज्ञायेत ॥ ७ ॥

1) v. l. नौ for मे. —2) v. l. आहतुः. —3) v. l. आवाम् for अहम्. —4) v. l. प्राज्ञासिष्व for प्राज्ञासिषम्. —5) v. l. न सुखम् न दुःखम्. —6) v. l. न रतिम्, न प्रजातिम्. —7) Cp the various readings as in the case of हस्तौ above.

*a*) बृ 1·5·3. —*b*) ऐ 3·3.

न वाचं विजिज्ञासीत। वक्तारं विद्यात्। न गन्धं विजिज्ञासीत। घ्रातारं विद्यात्। न रूपं विजिज्ञासीत। रूपविद्यं[1] विद्यात्। न शब्दं विजिज्ञासीत। श्रोतारं विद्यात्। नान्नरसं विजिज्ञासीत। अन्नरसस्य विज्ञातारं विद्यात्। न कर्म विजिज्ञासीत। कर्तारं विद्यात्। न सुखदुःखे विजिज्ञासीत। सुखदुःखयोर्विज्ञातारं विद्यात्। नाऽऽनन्दं न रतिं न प्रजातिं विजिज्ञासीत। आनन्दस्य रतेः प्रजातेर्विज्ञातारं विद्यात्। नेत्यां विजिज्ञासीत। एतारं विद्यात्। न मनो विजिज्ञासीत। मन्तारं विद्यात्॥ ता वा एता दशैव भूतमात्रा अधिप्रज्ञम्। दश प्रज्ञामात्रा अधिभूतम्। यद्धि भूतमात्रा[a] न स्युर्न प्रज्ञामात्राः स्युः। यद्वा प्रज्ञामात्रा न स्युर्न भूतमात्राः स्युः। न ह्यन्यतरतो रूपं किंचन सिध्येत्। नो एतन्नाना[b]॥ तद्यथा रथस्यारेषु[c] नेमिरर्पितः। नाभावरा अर्पिताः। एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः। प्रज्ञामात्राः प्राणे अर्पिताः। स एष प्राण एव प्रज्ञात्माऽऽनन्दो[2]ऽजरो[d]ऽमृतः। न साधुना कर्मणा[e] भूयान्। नो एवासाधुना[3] कनीयान्॥ एष ह्येवैनं[4] साधु[f] कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनी[5]षते। एष उ एवैनं[4]मसाधु कर्म कारयति तं यम[6]धो निनीषते। एष लोकपालः। एष लोका[7]धिपतिः। एष सर्वेशः[g]। स म आत्मेति विद्यात् स म आत्मेति विद्यात्॥ ८॥

1 ) v. l. रूपविदम् and द्रष्टारम्. —2 ) v. l. अनन्तः. —3 ) Some Mss add कर्मणा after असाधुना. —4 ) Some Mss drop एनम्. —5 ) v. l. अन्वानुनेषति, नुनुत्सते ( Renou ).. —6 ) Some Mss add, after यम्, एभ्यः लोकेभ्यः. —7 ) v. l. लोकेशः.

*a* ) बृ 4·4·1. —*b* ) बृ 4·4·19; क 4·10–11. —*c* ) बृ 2·5·15; छां 7·15·1; मुं 2·2·6. —*d* ) बृ 2·1·19; 4·4·25; 5·14·8; छां 4·10·5; प्र 5·7; आर्षेय 9; बाष्कल 24. —*e* ) बृ 3·8·9; 4·4·22. —*f* ) बृ 3·8·9; के 3·4–10; मै 3·2 ( प्रभुम्... कारयितारम् ). —*g* ) बृ 4·4·22; बाष्कल 23,25; ऐ 2·1–3.

## ॥ इति तृतीयोऽध्यायः ॥

---

अथ गार्ग्यो ह वै बालाकिरनूचानः संस्पृष्ट[1] आस[a]। सोऽवसदुशीनरेषु[b] सवशमत्स्येषु[c] कुरुपञ्चालेषु[d] काशिविदेहेष्विति[e f]। स हाजातशत्रुं काश्यमेत्योवाच[2]—ब्रह्म ते ब्रवाणीति। तं होवाचाजातशत्रुः—सहस्रं दद्मस्ते[g 3] इत्येतस्यां वाचि। जनको[h] जनक इति वा उ जना धावन्तीति ॥ १ ॥

Cp in general बृ 2·1·1–19 and छां 5·11–24; बृ 1·4·7; कौ 3·4.

1 ) v. l. संस्पष्ट. —2 ) v. l. आव्रज्य. —3 ) Some Mss drop ते.

*a* ) बृ 2·1·1; 3·1·1; छां 1·1·2. —*b* ) ऋ 10·59·10 य आवहदुशीनराण्या अनः; the ऋषि of ऋ 10·179 is शिबि औशीनर; अ 19·39·9 यं वा वसो ( शो ) यं मात्स्यः ( reconstructed text ! ); ऐब्रा 8·14 ये के च कुरुपञ्चालानां राजानः स-वशोशीनराणां राज्यायैव तेऽभिषिच्यन्ते. —*d* ) तैब्रा 1·8·4·1–2. तस्माच्छिशिरे कुरुपञ्चालाः प्राञ्चो यान्ति... तस्माज्जघन्ये नैदाघे प्रत्यञ्चः कुरुपञ्चाला यान्ति; शब्रा 3·2·3·15 तस्मादत्रोत्तरा हि वाग् वदति कुरुपञ्चालत्रा; 13·5·4·7 क्रिवय इति ह वै पुरा पञ्चालानाचक्षते. —*e* ) शब्रा 13·5·4·19 काशयोऽग्नीनादधत; बृ 3·8·2. —*f* ) Cp विदेघ in शब्रा 1·4·1·10 विदेघो ह माथवोऽग्निर्वैश्वानरं मुखे जभार; विदेह in वेदेहः ( जनकः ) शब्रा 11·3·1·2; तैब्रा 3·10·9·9. —*g* ) बृ 2·1·1; 4·3·14. —*h* ) शब्रा 11·6·2·10 ततो ब्रह्मा ( v. l. ब्रह्मिष्ठः ) आस; तैब्रा 3·10·9·9 जनको ह वैदेहः......

स[1] होवाच बालाकिः— य एवैष[2] आदित्ये पुरुषस्तमेवाहमुपास[3] इति। तं होवाचाजातशत्रुः — मा मैतस्मिन् संवादयिष्ठाः[4]। बृहन् पाण्डरवासा अतिष्ठाः[b] सर्वेषां भूतानां मूर्धेति वा अहमेतमुपास इति। स यो हैतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा भवति ॥ २ ॥

1 ) Some Mss insert here a list of clue words, summarising the following conversation. —2 ) बृ 2·1·2 has असौ instead of एषः. —3 ) बृ 2·1·2 adds ब्रह्म before उपासे. —4 ) बृ 2·1·2 reads संवदिष्ठाः.

*a* ) बृ 2·1·3; कौ 4·18. —*b* ) शब्रा 4·5·4·1–2 तेऽतिष्ठावानोऽभवन्; 5·3·3·6 अतिष्ठा वा एता ओषधयः; 13·5·1·9 अतिष्ठा वा एषा च्छन्दसां यदतिच्छन्दाः अतिष्ठा अश्वमेधः.

स होवाच बालाकिः— य एवैष चन्द्रमसि पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुः— मा मैतस्मिन् संवादयिष्ठाः । सोमो[1] राजाऽन्नस्यात्मेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्तेऽन्नस्याऽऽत्मा भवति ॥ ३ ॥

1 ) Dropped in some Mss.

*a* ) तैब्रा 3·2·3–4 अन्नं वै चन्द्रमाः; बृ 1·4·6; 2·1·3; 6·2·16.

स होवाच बालाकिः— य एवैष विद्युति पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुः— मा मैतस्मिन् संवादयिष्ठाः । तेजस[a1] आत्मेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते तेजस[1] आत्मा भवति ॥ ४ ॥

1 ) v. l. सत्यस्य.

*a* ) बृ 2·1·4.

स होवाच बालाकिः— य एवैष स्तनयित्नौ पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुः— मा मैतस्मिन् संवादयिष्ठाः । शब्दस्याऽऽत्मेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते शब्दस्याऽऽत्मा भवति ॥ ५ ॥

स होवाच बालाकिः— य एवैष आकाशे पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुः— मा मैतस्मिन् संवादयिष्ठाः । पूर्णमप्रवर्ति[a1] ब्रह्मेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते पूर्यते प्रजया[b] पशुभिः[2] । नो एव नास्य प्रजा पुरा कालात् प्रवर्तते ॥ ६ ॥

1 ) v. l. अप्रवृत्ति. —2 ) Some Mss add यशसा ब्रह्मवर्चसेन । सर्वमायुरेति.

*a* ) छां 3·12·9. —*b* ) ऋ 3·54·18 प्रजावान्नः पशुमाँ अस्तु गातुः; 5·41·17 इति चिन्नु प्रजायै पशुमत्यै; कौ 2·8.

स होवाच बालाकिः— य एवैष वायौ पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुः— मा मैतस्मिन् संवादयिष्ठाः । इन्द्रो वैकुण्ठोऽपराजिता[b] सेनेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते । जिष्णुर्ह वाऽपराजयिष्णुरन्यतस्त्य[1]जायी भवति ॥ ७ ॥

1 ) अपराजिष्णुः in बृ 2·1·6.

*a* ) Association of Indra and Vāyu : ऋ 1·23·2 उभा देवा दिविस्पृशा इन्द्रवायू हवामहे. —*b* ) बृ 2·1·6; जै 4·5·1; 4·10·10.

**स होवाच बालाकिः— स एवैषोऽग्नौ पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुः— मा मैतास्मिन् संवादयिष्ठाः। विषासहिरिति वा अहमेतमुपास इति। स यो हैतमेवमुपास्ते विषासहिर्हैवान्वेषु[1] भवति ॥ ८ ॥**

1 ) v. l. वान्येषु for एवान्वेषः.

*a* ) Cp सासहि in ऋ 3·16·4 चक्रियों विश्वा भुवनाभि सासहिः; 8·12·9 अग्निर्वनेव सासहिः प्र वावृधे.

**स होवाच बालाकिः— य एवैषोऽप्सु पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुः— मा मैतास्मिन् संवादयिष्ठाः। नाम्न आत्मेति वा अहमेतमुपास इति। स यो हैतमेवमुपास्ते नाम्न आत्मा भवति। इत्यधिदैवतम्। अथाध्यात्मम्— ॥ ९ ॥**

*a* ) नामन् in the Vedic sense; cp ऋ 3·20·3 अग्ने भूरीणि तव......अमृतस्य नाम ( = नामानि ).

**स होवाच बालाकिः— य एवैष आदर्शे पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुः— मा मैतास्मिन् संवादयिष्ठाः। प्रतिरूप इति वा अहमेतमुपास इति। स यो हैतमेवमुपास्ते प्रतिरूपो हैवास्य प्रजायामाजायते नाप्रतिरूपः ॥ १० ॥**

*a* ) बृ 2·1·9 रोचिष्णुः; 3·9·15 असुः.

**स होवाच बालाकिः— य एवैष प्रतिश्रुत्कायां[1] पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुः— मा मैतास्मिन् संवादयिष्ठाः। द्वितीयोऽनपग इति वा अहमेतमुपास इति। स यो हैतमेवमुपास्ते विन्दते द्वितीयात्[2]। द्वितीयवान् भवति[3] ॥ ११ ॥**

1 ) Some Mss read छायापुरुष here. —2 ) v. l. द्वितीयान्. —3 ) Some Mss add हि after द्वितियवान्; बृ 2·1·11 has ह instead of हि.

*a* ) बृ 2·1·11-12; 3·9·14.

**स होवाच बालाकिः— य एवैष शब्दः[1] पुरुषमन्वेति तमेवाहमुपास इति। तं होवाचाजातशत्रुः— मा मैतास्मिन् संवादयिष्ठाः। असुरिति[2] वा अहमेतमुपास इति। स यो हैतमेवमुपास्ते नो एव स्वयं नास्य प्रजा पुरा कालात् संमोहमेति ॥ १२ ॥**

1 ) v. l. शब्दे पुरुषः. —2 ) v. l. आयुः.

*a* ) Cp बृ 2·1·10; 3·9·13.

स होवाच बालाकिः— य एवैष च्छायापुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुः— मा मैतस्मिन् संवादयिष्ठाः। मृत्युरिति वा अहमेतमुपास इति। स यो हैतमेवमुपास्ते नो एव स्वयं नास्य प्रजा पुरा कालात् प्रमीयते ॥ १३ ॥

स होवाच बालाकिः— य एवैष शारीरः[1] पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुः— मा मैतस्मिन् संवादयिष्ठाः। प्रजापतिरिति[a] वा अहमेतमुपास इति। स यो हैतमेवमुपास्ते प्रजायते प्रजया[b] पशुभिः[2] ॥ १४ ॥

1 ) v. l. शरीरे. 2 ) Some Mss add यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति.

*a* ) वासं 31·19 प्रजापतिश्चरति गर्भेऽन्तर् ( = अ 10·8·13 ). —*b* ) शब्रा 6·2·2·12 स यत् प्राजापत्यो भवति, प्रजापतिर्ह्यात्मा ( where आत्मन् = body ).

स होवाच बालाकिः— य एवैष प्राज्ञ[a] आत्मा येनैतत् पुरुषः सुप्तः स्वप्न्यया[b] चरति तमेवाहमुपास इति। तं होवाचाजातशत्रुः— मा मैतस्मिन् संवादयिष्ठाः। यमो[c] राजेति वा अहमेतमुपास इति। स यो हैतमेवमुपास्ते सर्वं हास्मा इदं श्रैष्ठ्याय यम्यते ॥ १५ ॥

*a* ) बृ 2·1·16–19; 4·3·35. —*b* ) अ 5·7·8 स्वप्नया सचसे जनम्. —*c* ) Cp बृ 4·3·7; कौ 2·6; note the etymological relation between यम and यम्यते.

स होवाच बालाकिः— य एवैष दक्षिणेऽक्षन् पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुः— मा मैतस्मिन् संवादयिष्ठाः। नाम्न[1a] आत्माऽग्नेरात्मा ज्योतिष आत्मेति वा अहमेतमुपास इति। स यो हैतमेवमुपास्त एतेषां सर्वेषामात्मा भवति ॥ १६ ॥

1 ) v. l. वाचः ( see बृ 3·8·15 माध्यं ).

*a* ) बृ 2·1·10; 2·3·5; 4·2·2; 5·5·2–4.

स होवाच बालाकिः— य एवैष सव्ये[a]ऽक्षन् पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुः— मा मैतस्मिन् संवादयिष्ठाः। सत्यस्याऽऽत्मा विद्युत आत्मा तेजस आत्मेति वा अहमेतमुपास इति। स यो हैतमेवमुपास्त एतेषां सर्वेषामात्मा भवतीति ॥ १७ ॥

*a* ) शब्रा 10·5·2·8 योऽयं सव्येऽक्षन् पुरुषः; छां 1·7·4; 4·15·1; 8·7·4.

तत उ ह बालाकिस्तूष्णीमास । तं होवाचाजातशत्रुः—एतावन्नु बालाका ३ इ इति । एतावद्धीति होवाच बालाकिः । तं होवाचाजातशत्रुः— मृषा वै किल[1] मा समवादयिष्ठाः[2], ब्रह्म[a] ते ब्रवाणीति । स होवाच— यो वै बालाक एतेषां पुरुषाणां [b]कर्ता यस्य वैतत्[3] कर्म[c] स वै वेदितव्य इति । तत उ ह बालाकिः समित्पाणिः[d] प्रतिचक्रम उपायानीति[e] । तं होवाचाजातशत्रुः— प्रतिलोम[f]रूपमेव तत्स्याद्यत्[4]क्षत्रियो ब्राह्मणमुपनयेत्[g] । एहि व्येव त्वा ज्ञपयिष्यामीति[h] । तं ह पाणावभिपद्य प्रवव्राज । तौ ह सुप्तं[5] पुरुषमाजग्मतुः[i] । तं हाजातशत्रुरामन्त्रयांचक्रे— बृहन् पाण्डरवासः सोम राजन्निति । स उ ह शिश्य[6] एव । तत उ हैनं यष्ट्या विचिक्षेप । स तत एव समुत्तस्थौ[j] । तं होवाचाजातशत्रुः— क्वैष एतद्बालाके पुरुषोऽशयिष्ट । क्वैतदभूत् । कुत एतदागा ३ दिति । तत उ ह बालाकिर्न विजज्ञे[k] । तं होवाचाजातशत्रुः— यत्रैष[l] एतद्बालाके पुरुषोऽशयिष्ट । यत्रैतदभूत् । यत एतदागादिति । हिता[7] नाम हृदयस्य[8] नाड्यो हृदयात् पुरीततम्[m]अभिप्रतन्वन्ति[n] । तद्यथा सहस्रधा केशो विपाटितस्तावदण्व्यः पिङ्गलस्याणिम्ना[o] तिष्ठन्ति । शुक्लस्य कृष्णस्य[p] पीतस्य[q] लोहितस्येति । तासु तदा भवति । यदा सुप्तः[r] स्वप्नं न कंचन पश्यति । अथास्मिन् प्राण एवैकधा[s] भवति । तदेनं वाक् सर्वैर्नामभिः सहाप्येति । चक्षुः सर्वै रूपैः सहाप्येति । श्रोत्रं सर्वैः शब्दैः सहाप्येति । मनः सर्वैर्ध्यानैः सहाप्येति । स यदा प्रतिबुध्यते । यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते । प्राणेभ्यो देवाः । देवेभ्यो लोकाः ॥ १८ ॥

1 ) v. l. खलु. —2 ) v. l. संवादयिष्ठाः with मा as prohibitive; संवदिष्ठाः in शांभा on ब्रसू 1·4·16. —3 ) v. l. वै तत् ( for वा एतत् ). —4 ) v. l. मन्ये. —5 ) v. l. कंचिदीयतुः. —6 ) v. l तूष्णीमिव शिश्ये. —7 ) v. l. हिराः for हिताः; see अ 1·17·1,3 and 7·35·2. —8 ) v. l. पुरुषस्य.

*a* ) कौ 1·1; 4·1. —*b* ) बृ 2·1·14; कौ 3·8. —*c* ) छां 8·1·1; 8·7·1. —*d* ) कौ 1·1. —*e* ) बृ 6·2·7; छां 4·4·5; 5·13·7, 8·7·2; 8·10·3; 8.11.2; मुं 1·2·12; प्र 1·1. —*f* ) बृ 2·1·15; 6·2·8; छां 5·3·7. —*g* ) छां 4·4·5 उप त्वा नेष्ये. —*h* ) बृ 2·1·15; कौ 1·1. —*i* ) बृ. 2·1·15 पाणिना पेषं बोधयांचकार. —*j* ) बृ 2·1·16. —*k* ) बृ 2·1·16 ( with न मेने for विजज्ञे ). —*l* ) बृ 2·1·17, 19; 4·2·3; 4·3·20. —*m* ) वासं 25·8 अन्तरिक्षं पुरीतता. —*n* ) बृ 2·1·19 अभिप्रतिष्ठन्ते. —*o* ) बृ 4·3·20 ( अणिम्ना ); छां 8·6·1 ( अणिम्नः ). —*p* ) नील in बृ 4·3·20; छां 8·6 1. —*q* ) हरित for पीत in बृ 4·3·20; छां 8·6·1. —*r* ) Cp संप्रसाद in छां 8·3·4; बृ 4·3·15. —*s* ) बृ 2·1·19; कौ 3·3.

तद्यथा क्षुरः[a] क्षुरधानेऽवहितः स्यात्। विश्वंभरो वा विश्वंभर[b]कुलाये। एवमेवैष प्राज्ञ आत्मेदं शरीरमात्मानमनुप्रविष्ट आ लोमभ्य आ नखेभ्यः। तमेतमात्मानमेत आत्मानोऽन्ववस्यन्ति[1][c]। यथा श्रेष्ठिनं स्वाः[d]। तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते। यथा वा श्रेष्ठिनं स्वा भुञ्जन्ति। एवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते। यथा श्रेष्ठी स्वैः। एवं वैतमात्मानमेत आत्मानोऽन्ववस्यन्ति। यथा श्रेष्ठिनं स्वाः॥ स यावद्ध वा इन्द्र एतमात्मानं न विजज्ञे तावदेनमसुरा अभिबभूवुः[e]। स यदा विजज्ञेऽथ हत्वाऽसुरान् विजित्य सर्वेषां देवानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं परीयाय[f][2]। तथो एवैवंविद्वान् सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद य एवं वेद ॥ १९ ॥

1) v. l. अन्ववस्यन्ते. —2) v. l. पर्यैत्.

*a*) बृ 1·4·7. —*b*) अ 2·16·5 विश्वंभर विश्वेन मा भरसा पाहि स्वाहा; ऋ 4·1·19 होतारं विश्वभरसं यजिष्ठम्; विश्वंभर not in ऋ. —*c*) Similarly परस्मैपदी in तैब्रा 1·4·10·2; शब्रा 6·7·3·5. —*d*) कौ 3·8. —*e*) छां 1·2·1; 8·8·4; बृ 1·3·2. —*f*) छां 3·6·4 (पर्येता).

॥ इति चतुर्थोऽध्यायः ॥

॥ इति कौषीतक्युपनिषत् ॥

---

# ॥ मैत्रायण्युपनिषत् ॥

This Upanisad belongs to the कृष्णयजुर्वेद and is closely related to the मैत्रायणी संहिता in four काण्डs. It contains the orthographic and euphonic traits of the Saṁhitā; but a large number of quotations not only from the छान्दोग्य and बृहदारण्यक Upaniṣads, but also those from कठ, प्रश्न, श्वेताश्वतर Upaniṣads proves that the Upaniṣad seems to belong to a much later period of Upaniṣadic speculations. Complete silence of Śaṅkarāchārya about this Upaniṣad also bears testimony to this. This Up. is also called मैत्र्युपनिषत्; see मै 2·3 अस्माकं भगवता मैत्रिणाऽऽख्याता.

ब्रह्म[a]यज्ञो वा एष यत् पूर्वेषां चयनम् । तस्माद्यजमानश्चितैं[b]तानग्नीनात्मानमभिध्यायेत् । स पूर्णः खलु वा अद्धा[c]ऽविकलः संपद्यते यज्ञः । कः सोऽभिध्येयोऽयं यः प्राणा[d]ख्यः । तस्योपाख्यानम् — ॥ १ ॥

*a*) श्वे 2·7; मनु 3·10 अध्यापनं ब्रह्मयज्ञः. —*b*) क 1·18. —*c*) ऋ 10·129·6 को अद्धा वेद क इह प्रवोचत्; छां 3·14·4 यस्य स्यादद्धा न विचिकित्सा अस्ति. —*d*) प्र 3·1; तै 2·3; कौ 2·14; 3·2.

बृहद्र[a]थो वै नाम राजा विरा[1b]ज्ये पुत्रं निधापयित्वा इदमशाश्व[c]तं मन्यमानः शरीरं वैराग्यमुपेतोऽरण्यं निर्जगाम । स तत्र परमं तप आस्थायाऽऽदित्यमुदीक्षमाण ऊर्ध्व[d e]बाहुस्तिष्ठति । अन्ते सह[2]स्राहस्यान्ति[3]कमाजगामाग्निरिवाधूम[e]कस्तेजसा निर्दहन्निवाऽऽत्म[f]विद्भग[g]वाञ् शाकाय[h]न्यः — उत्तिष्ठोत्तिष्ठ वरं वृणीष्वेति राजानमब्रवीत् । स तस्मै नमः कृत्वोवाच— भगवन्नाहमात्मवित् । त्वं तत्त्व[j]विच्छुश्रुमो वयम् । स त्वं नो ब्रूहीति । एतद्वृत्तं पुरस्ताद्दुःशक्यमेतं प्र[k]श्नम् । ऐक्ष्वा[l]कान्यान् का[m]मान् वृणीष्वेति शाकायन्यः । शिरसाऽस्य चरणावभिमृशमानो राजेमां गाथां जगाद — ॥ २ ॥

1) v. l. वैराज्ये. —2) v. l. सहस्रस्य instead of सहस्राहस्य. —3) Some Mss add मुनेः before अन्तिकम्.

*a*) बृहद्रथ, a person (king?) mentioned in ऋ 1·36·18 and 10·49·6 is referred to as a king later. —*b*) ऐब्रा 7·32 स्वाराज्यं च ह वा एतद्वैराज्यं च; 8·6 तानहमनु राज्याय साम्राज्याय भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय राज्याय माहाराज्याय आधिपत्याय स्वावश्याय आतिष्ठाय आरोहामि. —*c*) Note the Buddhist trend (Cp Pāli सस्सतो लोको and असस्सतो लोको); गी 8·15 दुःखालयमशाश्वतम्; 9·33 अनित्यमसुखं लोकम्; छां 7·1·3 सोऽहं भगवः शोचामि; बृ 3·5·1 (निर्विद्य). —*d*) Cp तैसं 5·2·5·1 यावान् पुरुष ऊर्ध्वबाहुस्तावान् भवति; शब्रा 5·4·1·17 तस्मादेनमूर्ध्वबाहुमभिषिञ्चति. —*e*) क 4·13. *f*) छां

7·1·3 तरति शोकमात्मवित्. *g*) छां 7·26·2 तस्मै मृदितकषायाय तमसस्पारं दर्शयति **भगवान्** सनात्कुमारः. —*h*) कासं 22·7 एतद्ध वा उवाच जातः शाकायन्यः शंखं कौष्यम्; क (पिष्ठल) कठसं 35·1. —*i*) क 3·14. —*j*) तत्त्ववित् here for the first time in Vedic literature; गी 3·28; 5·8; गौका 2·34. —*k*) प्रश्नम् is idiomatic for प्रष्टुम्; cp तैसं 2·5·8·5 तौ प्रजापतिं प्रश्नमैताम्; 2·5·11·9 यद् ब्राह्मणश्चाब्राह्मणश्च प्रश्नमेयाताम् ब्राह्मणायाधिब्रूयात्; ऐब्रा 3·28 ते देवेषु प्रश्नमैताम्; तैब्रा 2·1·6·2 ते प्रजापतिं प्रश्नमायन्. —*l*) ऋ 10·60·4 यस्येक्ष्वाकुरुप-व्रते रेवान् मराय्येधते; अ 19·39·9 यं त्वा वेद पूर्व इक्ष्वाको; शब्रा 13·5·4·5 तेन ह पुरुकुत्सो दौर्गहेणेजे ऐक्ष्वाको राजा. —*m*) क 1·25.

भगवन्नस्थिचर्मस्नायुमज्जमा[a]ंसशुक्रशोणितश्लेष्माश्रुदूषिका[b]विण्मूत्रवातपित्तकफ-सङ्घाते दुर्गन्धे निःसारेऽस्मिञ्शरीरे किं कामोपभोगैः। कामक्रोधलोभमोहभय-विषादेर्ष्येष्टवियोगा[c]निष्टसंप्रयोगक्षुत्पिपासाजरामृत्युरोगशोकाद्यैरभिहतेऽस्मिञ्शरीरे किं कामोप[d]भोगैः ॥ ३ ॥

*a*) ऋ 10·68·9 निर्मज्जानं न पर्वणो जभार; अ 4·12·4 मज्जा मज्ज्ञा सं धीयताम्. —*b*) वासं 25·9 ह्रादुनीर्दूषिकाभिः; अ 16·6·8 कुम्भीका दूषीकाः पयिकान्; शब्रा 3·1·3·10 पूयो हैवास्य दूषीका. —*c*) महावग्ग 1·6·19 (धम्मचक्कप्पवत्तन) अप्पियेहि संपयोगो दुक्खो, पियेहि विप्पयोगो दुक्खो; मनु 6·62 विप्रयोगं प्रियैश्चैव संयोगं च तथाप्रियैः. —*d*) बृ 3·4·2; 4·4·11; क 1·3; 1·26–29.

सर्व[a] चेदं क्षयिष्णु पश्यामः। यथेमे दंशमशकादयस्तृणवनस्पतयोद्भूत[1]प्र[a]ध्वंसिनः। अथ किमेतैर्वा। परेऽन्ये महाधनुर्धराश्चक्रवर्तिनः केचित् सुद्युम्नभूरिद्युम्नेन्द्रद्युम्न-कुवलयाश्वयौवनाश्ववध्र्यश्वाश्वपतिशशबिन्दुहरिश्चन्द्राम्बरीषननक्तु[2] शर्यातिययात्य-नरण्यक्ष[3]सेनादयः। अथ मरु[b]त्तभरत[c]प्रभृतयो राजानो मिषतो बन्धुवर्गस्य महतीं श्रियं त्यक्त्वाऽस्माल्लोकादमुं लोकं प्रयाता इति। अथ किमेतैर्वा। परेऽन्ये गन्धर्वा[4]-सुरयक्षराक्षसभूतगणपिशाचोरगग्रहादीनां निरोधं[5] पश्यामः। अथ किमेतैर्वा। अन्यानां शोषणं महार्णवानाम्। शिखरिणां प्रपतनम्। ध्रुवस्य प्रचलनम्। व्रश्चनं वातरज्जूनाम्। निमज्जनं पृथिव्याः। स्थानादपसरणं सुराणाम्। इत्येतद्विधेऽ-स्मिन् संसारे किं कामोपभोगैर्यैरेवाशि[6]तस्यासकृदिहाऽऽवर्तनं दृश्यता[7] इत्युद्धर्तुमर्हसि। अन्धोदपानस्थो भेक इवाहमस्मिन् संसारे भगवंस्त्वं नो गतिस्त्वं नो गतिः ॥ ४ ॥

1) Double Saṁdhi वनस्पतयः + उद्भूतप्रध्वंसिनः. —2) v. l. नहुष for ननक्तु. —3) v. l. उक्षसेन for अक्षसेन. —4) Some Mss add अप्सरस् between असुर and यक्ष. —5) v. l. निरोधनम्. —6) v. l. वाश्रित. —7) दृश्यते + इति is written दृश्यता इति, a peculiar संधि met with in this उपनिषत् (which we call मैत्रायणी–संधि).

*a* ) छां 5·10·8 जायस्व म्रियस्वेति. —*b* ) ऐब्रा 8·21 आङ्गिरसो मरुत्तमाविक्षितमभिषिषेच; शब्रा 13·5·4·6 तेन ह मरुत्त आविक्षित ईजे. —*c* ) ऋ 3·3·3·12 अतारिषुर्भरता गव्यवः; 3·53·24 इम इन्द्र भरतस्य पुत्राः; शब्रा 13·5·4·11 तेन हैतेन भरतो दौःषान्तिरीजे; 13·5·4·13 शकुन्तला नाडापिति ( perhaps the name of कण्व-आश्रम ) अप्सरा भरतं दधे.

॥ इति प्रथमः प्रपाठकः ॥

---

अथ भगवाञ्शाकायन्यः सुप्रीतस्त्वब्रवीद्राजानम्[a]—महाराज बृहद्रथेक्ष्वाकुवंश— शध्वज शीघ्रमात्मज्ञः[b] कृतकृत्यस्त्वं[c] मरुन्नाम्नेति[d] विश्रुतोऽसीति । अयं[e] वाव खल्वात्मा ते । यः कतमो भगवा[1] इति । तंꣳ होवाचेति ॥ १ ॥

1 ) मैत्रायणी-संधि.

*a* ) क 1·15-16; 2·9. —*b* ) मुं 3·1·10 आत्मज्ञं ह्यर्चयेद् भूतिकामः. —*c* ) ऐ 2·4 इतर आत्मा कृतकृत्यो वयोगतः प्रैति; मै 6·30; गी 15·20 कृतकृत्यश्च भारत. —*d* ) मै 6·30 यथावदुपचारी कृतकृत्यो मरुद्युत्तरायणं गतः. —*e* ) मै 6·32.

अथ[1] य एष उच्छ्वासाविष्टम्भनेनोर्ध्वमुत्क्रान्तो व्ययमानो[2]ऽव्ययमान[2]स्तमः प्रणुदत्येष आत्मा । इत्याह भगवान् मैत्रिः । इत्येवंꣳह्याह । अथ य एष संप्रसादो[a]ऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यता[3] इति । एष आत्मेति होवाच । एतदमृतमभयमेतद्ब्रह्मेति[b] ॥ २ ॥

1 ) Dropped by some Mss. —2 ) v. l. व्यथमानः, अव्यथमानः. —3 ) मैत्रायणी-संधि; some Mss, however, omit इति.

*a* ) छां 8·3·4. —*b* ) बृ 1·4·10; 2·5·19; छां 6·8·7.

अथ खल्वियं ब्रह्मविद्या[a] सर्वोपनिषाद्विद्या वा राजन् । अस्माकं भगवता मैत्रिणाऽऽख्याता । अहं ते कथयिष्यामीति । अथापहतपाप्मानस्तिग्मतेजसा[1] ऊर्ध्वरेतसो वालखिल्या[b] इति श्रूयन्ते । अथ क्रतुं प्रजापतिमब्रुवन् । भगवञ्शकटमिवाचेतनमिदंꣳशरीरम् । कस्यैष खल्वीदृशो महिमाऽतीन्द्रियभूतस्य येनैतद्विधमेतच्चेतनवत् प्रतिष्ठापितम् । प्रचोदयिता वाऽस्य[2] यद्भगवन् वेत्सि तदस्माकं ब्रूहीति । तान् होवाचेति ॥ ३ ॥

1 ) मैत्रायणी-संधि. —2 ) Some Mss add here ब्रूहीति ते होचुः भगवन् कथमनेन वास्यम्.

*a*) बृ 1·4·9; मुं 1·1·1–2; 1·2·13; 3·2·10; मै 6·59. —*b*) शब्रा 8·3·4·1 प्राणा वै वालखिल्याः; तैआ 1·23·3 ये वालाः ते वालखिल्याः. —*c*) Here begins the conversation which ends in 4·6.

यो ह खलु वावोपरिस्थः श्रूयते गुणेष्विवोर्ध्वरेतसः स वा एष शुद्धः पूतः शून्यः शान्तोऽप्राणो निरात्माऽनन्तोऽक्षय्यः स्थिरः शाश्वतोऽजः स्वतन्त्रः स्वे महिम्नि तिष्ठति । अनेनेदंशरीरं चेतनवत् प्रतिष्ठापितम् । प्रचोदयिता वैषोऽप्यस्येति । ते होचुर्भगवन् कथमनेनेदृशेनाणिष्ठेनैतद्विधमिदं चेतनवत् प्रतिष्ठापितं प्रचोदयिता वैषोऽस्य कथमिति । तान् होवाच— ॥ ४ ॥

1) v. l. अनीशात्मा. —2) v. l. अनिष्टेन.

*a*) मै 6·28, 31. —*b*) छां 7·24·1.

स वा एष सूक्ष्मोऽग्राह्योऽदृश्यः पुरुषसंज्ञो बुद्धिपूर्वमिहैवाऽऽवर्ततेऽंशेनेति । सुप्तस्येवाबुद्धिपूर्वं विबोधा एवमिति । अथ यो ह खलु वावैतस्य सोऽंशोऽयं चेतामात्रः प्रतिपुरुषं क्षेत्रज्ञः संकल्पाध्यवसायाभिमानलिङ्गः प्रजापतिर्विश्वाख्यः । चेतनेनेदंशरीरं चेतनवत् प्रतिष्ठापितं प्रचोदयिता वैषोऽप्यस्येति । ते होचुः— भगवन् यद्यनेनेदृशेनाणिष्ठेनैतद्विधमिदं चेतनवत् प्रतिष्ठापितं प्रचोदयिता वैषोऽस्य कथमिति । तान् होवाचेति ॥ ५ ॥

1) v. l. बुद्धिपूर्वम्. —2) मैत्रायणी-संधि. —3) Some Mss add ईदृशस्य कथमंशेन वर्तनमिति । तान् होवाच between भगवन् and यत्.

*a*) मै 3·2; 5·2; सांका 24 अभिमानोऽहंकारः. —*b*) बृ 1.4·1–4. —*c*) मां 3; गौका 3·3–10.

प्रजापतिर्वा एकोऽग्रेऽतिष्ठत् । स नारमतैकः । सोऽत्मानमभिध्यात्वा बह्वीः प्रजा असृजत । ता अश्मेवाप्रबुद्धा अप्राणाः स्थाणुरिव तिष्ठमाना अपश्यत् । स नारमत । सोऽमन्यत— एतासां प्रतिबोधनायाभ्यन्तरं विशानीति । स वायुरिवात्मानं कृत्वाऽभ्यन्तरं प्राविशत् । स एको नाशकत् । स पञ्चधाऽऽत्मानं विभज्योच्यते यः प्राणोऽपानः समान उदानो व्यान इति । अथायं य ऊर्ध्वमुत्क्रामत्येष वाव स प्राणः । अथ योऽयमवाङ् संक्रामत्येष वाव सोऽपानः । अथ येन वैताऽनुगृहीतेत्येष वाव स व्यानः । अथ योऽयंस्थविष्ठो धातुरन्नस्यापाने प्रापयत्यणिष्ठो वाऽङ्गेऽङ्गे समानयत्येष वाव स समानसंज्ञः । उत्तरं व्यानस्य रूपं चैतेषामन्तरा प्रसूतिरेवोदानस्य । अथ योऽयं पीता—शितमुद्गिरति निगिरतीति वावैष स उदानः । अथोपांशुरन्तर्याममभि-

भवत्यन्तर्याम उपांशुं च । एतयोरन्तरा देवौष्ण्यं प्रासुवत् । यदौष्ण्यं स पुरुषः । अथ यः पुरुषः सोऽग्निर्वैश्वानरः ॥ अन्यत्राप्युक्तम् । अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे । येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत् कर्णावपिधाय शृणोति । स यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोति । स वा एष पञ्चधाऽऽत्मानं विभज्य निहितो गुहायाम् । मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मेति । स वा एषोऽस्माद्धृदन्तरादकृतार्थोऽमन्यतार्थानश्नानीति । अतः खानीमानि भित्त्वोदितः पञ्चभी रश्मिभिर्विषयानत्तीति । बुद्धीन्द्रियाणि यानीमान्येतान्यस्य रश्मयः । कर्मेन्द्रियाण्यस्य हयाः । रथः शरीरम् । मनो नियन्ता । प्रकृतिमयोऽस्य प्रतोदः । अनेन खल्वीरितं परिभ्रमतीदं शरीरं चक्रमिव मृत्पचेन । इदं शरीरं चेतनवत् प्रतिष्ठापितं प्रचोदयिता वैषोऽप्यस्येति ॥ ६ ॥

1 ) Irregular संधि like क 3·12 गूढोऽऽत्मा. —2 ) v. l. अभिध्यायन्. 3 ) v. l. वायुम्. — 4 ) v. l. एताः सिरा अनुव्याप्ता एव एताऽनुगृहीतेति = एते + अनुगृहीता + इति is मैत्रायणीसंधिः. 5– –5 ) v. l. योऽयं स्थविष्ठं धातुमन्नस्यापाने स्थापयति अणिष्ठं चाङ्गेऽङ्गे संनयति एष वाव स समानः . —6 ) v. l. अस्य हृदन्तरे तिष्ठन् for अस्माद्धृदन्तरात्.

*a* ) ऐ 1·11. —*b* ) बृ 1·4·3. —*c* ) Cp Plotinus : ἡ ἐπιστροφή; προσχυτόν. —*d* ) छां 3·13·1–5; 5·19–23; बृ 1·5·3; 3·9·26; प्र 3·3–10; 4·3–4; तै 1·7; मै 6·4,9,33; 7·1–5. —*e* ) छां 6·5·1. —*f* ) On उपांशुग्रह and अन्तर्यामग्रह, see तैसं 1·4·2 and 3 respectively; तैसं 6·4·5 and 6 deal with the same; ऐब्रा 2·21 प्राणापानौ उपांश्वन्तर्यामौ; तैब्रा 1·5·4·1 प्राणापानाभ्यामेवोपांश्वन्तर्यामौ निरमिमीत; शब्रा 4·1·1·1 प्राणो ह वा अस्योपांशुर्व्यान उपांशुसवन उदान एवान्तर्यामः. —*g* ) Double संधि—देव + औष्ण्यम्. —*h* ) छां 3·13·7; बृ 5·9. —*i* ) छां 3·14·2. —*j* ) क 4·1 पराञ्चि खानि. —*k* ) श्वे 1·6. —*l* ) क 3·3–4.

स वा एष आत्मेहोशन्ति कवयः सितासितैः कर्मफलैरनभिभूत इव प्रतिशरीरेषु चरति । अव्यक्तत्वात् सौक्ष्म्याददृश्यत्वादग्राह्यत्वान्निर्ममत्वाच्चानवस्थोऽसति कर्ताऽकर्तेवावस्थः । स वा एष शुद्धः स्थिरोऽचलश्चालेप्योऽव्यग्रो निस्स्पृहः प्रेक्षकवदवस्थितः स्वस्थश्च । ऋतभुग्गुणमयेन पटेनाऽऽत्मानमन्तर्धायावस्थिता इत्यवस्थिता इति ॥ ७ ॥

1 ) v. l. आत्मेति होशान्निव for आत्मेहोशन्ति. —2 ) v. l. अभिभूयमानः. —3 ) v. l. अलेपः. —4 ) v. l. सुस्थः. —5 ) मैत्रायणीसंधिः.

*a* ) छां 4·4·13; बृ 4·4·22; तै 2·9; कौ 3·8. —*b* ) सांका 65 प्रेक्षकवदवस्थितः सुस्थः; स्वस्थ and सुस्थ seem to be identical; cp मनु 8·216 आर्तस्तु कुर्यात् **स्वस्थः** सन् and 8·217 यथोक्तमार्तः **सुस्थो** वा; cp also स्वधा and सुधा which seem to be identical. —*c* ) क 3·1 ऋतं पिबन्तौ. —*d* ) अ 10·8·43 त्रिभिर्गुणेभिरावृतम्; श्वे 1·3; गी 7·14.

॥ इति द्वितीयः प्रपाठकः ॥

---

ते होचुर्भगवन् यद्येवमस्याऽऽत्मनो महिमानꣳ सूचयसीत्यन्यो[a] वा परः कोऽयमात्माख्यो योऽयꣳ सितासितैः कर्मफलैरभिभूयमानः सद[b]सद्योनिमापद्यता[1] इति । अवाञ्च्योर्ध्वा वा गतिर्द्वन्द्वैरभिभूयमानः परिभ्रमति ॥ १ ॥

1 ) मैत्रायणीसंधिः —2 ) Read अवाच्यूर्ध्वा वा.

*a* ) बृ 2·3·1. —*b* ) गी 13·21.

अस्ति खल्वन्योऽपरो भूता[a]त्माख्यो योऽयꣳ सितासितैः कर्मफलैरभिभूयमानः सदसद्योनिमापद्यता इति । अवा[b]ञ्च्योर्ध्वा वा गतिरभिभूयमानः परिभ्रमतीति । अस्योपव्याख्यानम्— पञ्च[c]तन्मात्रा[1] भूतशब्देनोच्यन्ते । अथ पञ्चमहाभूतानि भूतशब्देनोच्यन्ते । अथ तेषां यत् समुदयं[2] तच्छरीरमित्युक्तम् । अथ यो ह खलु वाव शरीर[d] इत्युक्तं स भूतात्मेत्युक्तम् । अथामृतोऽस्याऽऽत्मा विन्दुरिव पुष्[e]करा[3] इति । स वा एषोऽभिभूतः प्राकृतै[f]र्गुणैरिति । अथोऽभिभूतत्वात् संमूढत्वं प्रयातः । संमूढत्वादात्मस्थं प्रभुं भगवन्तम् कारयि[g]तारं नापश्यत् । गुणौघैरुह्य[h]मानः कलुषीकृतश्चास्थिरश्चञ्चलो लुप्यमानः सस्पृहो व्यग्रश्चाभिमा[i]नित्वं प्रयात इति । अहं सो[4] ममेदमित्येवं मन्यमानो निब[j]ध्नात्यात्मनाऽऽत्मानं जालेनेव खचरः कृतस्यानुफलैरभिभूयमानः सदसद्योनिमापद्यता[5] इति । अवाञ्च्योर्ध्वा वा गतिर्द्वन्द्वैरभिभूयमानः परिभ्रमतीति । कतम एष इति । तान् होवाचेति ॥ २ ॥

1 ) v. l. तन्मात्राणि. —2 ) v. l. समुदयः. —3 ) मैत्रायणीसंधिः —4 ) सो = स+उ; double संधि. —5 ) मैत्रायणीसंधिः.

*a* ) नि 14·3 तन्निष्ठः भूतात्मा. —*b* ) See 2 on मै 3·1 above. —*c* ) प्र 4·8; मनु 1·27 अण्व्यो मात्रा विनाशिन्यो दशार्धानां तु या स्मृताः. —*d*) शरीर used here mas. as in रामायण ( 7·75·4 ) —यथा शरीरो बालस्य गुप्तः सन् क्लिष्टकर्मणः etc. —*e* ) छां 4·14·3; गी 5·10. —*f* ) मै 7·11. —*g* ) कौ 3·8. —*h* ) मै 6·30. —*i* ) सांका 24 अभिमानोऽहङ्कारः. —*j* ) सांका 63 रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः; प्र 3·3.

अथान्यत्राप्युक्तम् । यः कर्ता सोऽयं वै भूतात्मा[a] करणैः[1] कारयिताऽन्तः-पुरुषः[b] । अथ यथाऽग्निनाऽयस्पिण्डो वाऽभिभूतःकर्तृभिर्हन्यमानो नानात्वमुपैति । एवं वाव खल्वसौ[c] भूतात्माऽन्तःपुरुषेणाभिभूतो गुणैर्हन्यमानो नानात्वमुपैति । चतुर्जालं[2][d] चतुर्दशविधं[e] चतुरशीतिधा[f] परिणतं भूतगणम् । एतद्वै नानात्वस्य रूपम् । तानि ह वा एतानि पुरुषेणेरितानि चक्रमिव मृत्पचेनेति । अथ यथाऽयस्पिण्डे हन्यमानेनाग्निरभिभूयत्येवं नाभिभूयत्यसौ पुरुषः । अभिभूयत्ययं भूतात्मोप[h]-संश्लिष्टत्वादिति[3] ॥ ३ ॥

1 ) v. l. अन्तःकरणैः. —2 ) Some add अथ त्रिगुणं before this. —3 ) v. l. संसृष्टत्वात्.

*a* ) मनु 12·12 यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः. —*b* ) मनु 12·12 योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते. —*c* ) बृ 4·4·4. —*d* ) तै 2·1–4; मै 6·28,38. —*e* ) सांका 53 ( which enumerates however *thirteen* kinds ) अष्टविकल्पो दैवः तैर्यग्योनश्च पञ्चधा भवति. —*f* ) Cp जैन-समवायांग ( 162, where 84 a favourite number ). —*g* ) बृ 4·4·4. —*h* ) मै 6·10.

अथान्यत्राप्युक्तम् । शरीरमिदं मैथुनादेवोद्भूतꣳ संवृद्ध्युपेतं निरयेऽथ मूत्रद्वारेण निष्क्रान्तमस्थिभिश्चितं माꣳसेनानुलिप्तं चर्मणाऽवनद्धं विण्मूत्रपित्तकफ-मज्जामेदोवसाभिरन्यैश्[1]चामयैर्[2]बहुभिः परिपूर्णं कोश इव वसुनेति ॥ ४ ॥

Cp in general मनु 6·76, 77 अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम् । चर्मावनद्धं दुर्गन्धिपूर्णं मूत्रपुरीषयोः ॥ जराशोकसमाविष्टं रोगायतनमातुरम् । रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ॥ Cp धम्मपद् 150 ( अट्ठीनं नगरं कतं ) etc.

1 ) Some Mss add स्नायु after वसा. —2 ) v. l. च मलैः.

अथान्यत्राप्युक्तम् । संमोहो भयं विषादो निद्रा तन्द्री प्रमादो जरा शोकः क्षुत् पिपासा कार्पण्यं क्रोधो नास्तिक्यमज्ञानं मात्सर्यं नैष्कारुण्यं[1] मूढत्वं निर्व्रीडत्वं[2] निकृतत्वमुद्धतत्वम[3]-समत्वमिति तामसानि । अतस्तृष्णा स्नेहो रागो लोभो हिꣳसा रतिर्दिष्टिर्व्यावृत्तत्व-मीर्ष्याऽकाम[4]मस्थिरत्वं चलत्वं[5] व्यग्रत्वं जिगीषाऽर्थोपार्जनं मित्रानुग्रहणं परिग्रहाव-लम्बोऽनिष्टेष्विन्द्रियार्थेषु द्विष्टिरिष्टेष्वभिष्वङ्गः शुक्तस्वरो[6][b]ऽन्नतत्वमास्त्विति राजसानि । एतैः परिपूर्ण एतैरभिभूता[7] इत्ययं भूतात्मा । तस्मान्नानारूपाण्याप्नोतीत्याप्नोतीति ॥ ५ ॥

1 ) v. l. वैकारुण्यम्. —2 ) v. l. निराकृतित्वम्. —3 ) v. l. असत्त्वम्. —4 ) v. l. कामम्. —5 ) v. l. चञ्चलत्वम्. 6 ) Double sandhi शुक्तस्वरः + उन्नतत्वम्. —7 ) मैत्रायणीसंधिः.

*a* ) सांका 12 प्रीत्यप्रीतिविषादात्मकाः ... च गुणाः. —*b* ) शुक्त in कासं 27·4 तस्माच्छुक्तं विषजन्ति; शब्रा 4·1·3·6 स एनान्त्रच्छुक्तः पूतिरभिववौ.

## ॥ इति तृतीयः प्रपाठकः ॥

---

ते ह खलु वावोर्ध्वरेतसोऽतिविस्मिता अभिसमेत्योचुर्भगवन्नमस्तेऽस्त्वनुशाधि । त्वमस्माकं गतिरन्या न विद्यता[1] इति । अस्य को विधिर्भूतात्मनो येनेदꣳ हित्वाऽऽत्मन्नेव सायुज्यमुपैति । तान् होवाचेति ॥ १ ॥

1 ) मैत्रायणीसंधिः.

अथान्यत्राप्युक्तम् । महानदीषूर्मय इवानिवर्तकमस्य यत् पुराकृतं, समुद्रवेलेव दुर्निवार्यमस्य मृत्योरागमनं, सदसत्फलमयैः पाशैः पङ्गुरिव बद्धम् , बन्धनस्थस्येवास्वातन्त्र्यं, यमविषयस्थस्येव बहुभयावस्थं, मदिरोन्मत्त इव मोहमादिरोन्मत्तं, पाप्मना गृहीत इव भ्राम्यमाणं, महोरगदष्ट इव विषयदष्टं, महान्धकारमिव रागान्धं, इन्द्रजालमिव मायामयं, स्वप्न इव मिथ्यादर्शनं, कदलीगर्भ इवासारं, नट इव क्षणवेशं, चित्रभित्तिरिव मिथ्यामनोरममिति । अथोक्तम्—

शब्दस्पर्शादयो येऽर्था मर्त्येऽनर्था इवाऽऽस्थिताः ।
येषाꣳ सक्तस्तु भूतात्मा न स्मरेत्[1] परमं पदम् ॥ २ ॥

1 ) v. l. न स्मरेत परं पदम्.
*a* ) संयुत्तनिकाय 3·140.

अयं वाव खल्वस्य प्रतिविधिभूतात्मनो यद्वेदविद्याधिगमः स्वधर्मस्यानुचरणं स्वाश्रमेष्वेवानुक्रमणꣳ स्वधर्मस्य[1] वा । एतद्व्रतम् । स्तम्बशाखेवापराणि । अनेनोर्ध्वभाग् भवति । अन्यथाऽवाङ्[2] पतति । एष स्वधर्मोऽभिहितो यो वेदेषु । न स्वधर्मातिक्रमेणाऽऽश्रमी भवति । आश्रमेष्वेवानवस्थ[3]स्तपस्वी वेत्युच्यत इत्येतदयुक्तम्[4] । नातपस्कस्याऽऽत्म[b]ज्ञाने[5]ऽधिगमः कर्मसिद्धि[6]र्वेति । एवꣳ ह्याह—

तपसा प्राप्यते सत्त्वꣳ सत्त्वात्[c] संप्राप्यते मनः ।
मनसः प्राप्यते ह्यात्मा यमाप्त्वा न निवर्तता[7] इति ॥ ३ ॥

1) v. l. स्वधर्म एव सर्वं धत्ते. —2) v. l. अधः for अवाङ्. —3) v. l. अवास्थितः. —4) v. l. अप्युक्तम्. —5) v. l. आत्मज्ञानेन. —6) कर्मशुद्धिः. —7) मैत्रायणीसंधिः.

*a*) तैब्रा 3·6·7·1 स्वधर्म (स्वधर्मन् in ऋ 3·21·2) देववीतये; गी 2·31,33;3·35; 18·47 —*b*) बृ 4·4·22; छां 2·23·1; 5·10·1; तै 1·9; गी 18·67 इदं ते नातपस्काय. —*c*) गी 14·6,11.

अस्ति ब्रह्मेति ब्रह्मविद्याविदब्रवीत्। ब्रह्मद्वारमिदमित्येवैतदाह यस्तपसाऽपहत-पाप्मा। ॐ ब्रह्मणो महिमेत्येवैतदाह यः सुयुक्तोऽजस्रं चिन्तयति। तस्माद्विद्यया तपसा चिन्तया चोपलभ्यते ब्रह्म। स ब्रह्मणः परएता भवत्यधिदैवत्वं देवेभ्यश्च। इत्यक्षय्यमपरिमितमनामयं सुखमश्नुते य एवं विद्वाननेन त्रिकेण ब्रह्मोपास्ते। अथ यैः परिपूर्णोऽभिभूतोऽयं रथितश्च तैर्वैव मुक्तस्त्वात्मन्नेव सायुज्यमुपैति ॥ ४ ॥

1) v. l. यस्तु युक्तः. —2) v. l. उपलभते. —3) v. l. पुरएता.

*a*) तै 2·6. —*b*) क 3·3; मै 2·3, 6.

ते होचुर्भगवन्नभिवाद्यसीत्यभिवाद्यसीति। निहितमस्माभिरेतद्यथावदुक्तं मनसीति। अथोत्तरं प्रश्नमनुब्रूहीति। अग्निर्वायुरादित्यः कालो यमः प्राणोऽन्नं ब्रह्मा रुद्रो विष्णुरित्येकेऽन्यमभिध्यायन्ति। एकेऽन्यम्। श्रेयः कतमो यः सोऽस्माकं ब्रूहीति। तान् होवाचेति ॥ ५ ॥

*a*) Is it अतिवादी ? cp छां 7·15·4 and 7·16; बृ 3·9·10; मुं 3·1·4; तैब्रा 1·3·6·2 तस्माद् दुंदुभिः सर्वा वाचोऽतिवदति.

ब्रह्मणो वावैता अग्र्यास्तनवः परस्यामृतस्याशरीरस्य। तस्यैव लोके प्रतिमोदतीह यो यस्यानुषक्त इत्येवं ह्याह। ब्रह्म खल्विदं वाव सर्वम्। या वास्या अग्र्यास्तनवस्ता अभिध्यायेदर्चयेन्निह्नुयाच्च। अतस्ताभिः सहैवोपर्युपरि लोकेषु चरति। अथ कृत्स्नक्षयं एकत्वमेति पुरुषस्य पुरुषस्य ॥ ६ ॥

1) v. l. वाऽऽस्या अग्र्याः; वा अस्याग्र्याः. —2) v. l. कृत्स्नः क्षयः.

*a*) शब्रा 10·5·2·20 तं यथायथोपासते तदेव भवति. —*b*) छां 3·14·1. —*c*) ई 1. —*d*) End of the conversation, begun in मै 2·3.

॥ इति चतुर्थः प्रपाठकः ॥

अथ यथेयं कौत्सायनी स्तुतिः ।

त्वं ब्रह्मा त्वं च वै विष्णुस्त्वꣳ रुद्रस्त्वं प्रजापतिः ।
त्वमग्निर्वरुणो वायुस्त्वमिन्द्रस्त्वं निशाकरः ॥
त्वं मनुस्त्वं[1] यमस्त्वं पृथिवी त्वं विश्वं त्वमथाच्युतः ।
स्वार्थे[a] स्वाभाविकेऽर्थे[2] च बहुधा सꣳस्थितिस्त्वयि ॥
विश्वेश्वर नमस्तुभ्यं विश्वात्मा विश्वकर्मकृत् ।
विश्वभुग्विश्वमायुस्त्वं विश्वक्रीडारतिप्रभुः ॥
नमः शान्तात्मने[b] तुभ्यं नमो गुह्यतमाय च ।
अचिन्त्यायाप्रमेयाय[c] अनादिनिधनाय चेति ॥ १ ॥

1) v. l. अन्नः (!). —2) v. l. स्वाभाविकार्थे.

*a*) सांका 56 स्वार्थ इव परार्थ आरंभः. —*b*) क 3·13. —*c*) मनु 1·3 अचिन्त्यस्याप्रमेयस्य कार्यतत्त्वार्थवित् प्रभो.

तमो[a] वा इदमग्र आसीदेकम् । तत् परे स्यात्[1] । तत् परेणेरितं विषमत्वं प्रयाति । एतद्रूपं[2] वै रजः । तद्रजः खल्वीरितं विषमत्वं प्रयाति । एतद्वै सत्त्वस्य रूपम् । तत् सत्त्वमेवेरितꣳ रसः संप्रास्रवत् । सोऽꣳशोऽयं यश्चेतामात्रः[b] प्रतिपुरुषः[3] क्षेत्रज्ञः संकल्पाध्यवसायाभिमानलिङ्गः प्रजापतिर्विश्वा[4] इत्यस्य[5] प्रागुक्ता एतास्तनवः । अथ यो ह खलु वावास्य तामसोऽꣳशोऽसौ स ब्रह्मचारिणो[6] योऽयं रुद्रः । अथ यो ह खलु वावास्य राजसोऽꣳशोऽसौ स ब्रह्मचारिणो[6] योऽयं ब्रह्मा । अथ यो ह खलु वावास्य सात्त्विकोऽꣳशोऽसौ स ब्रह्मचारिणो[6] योऽयं विष्णुः । स वा एष एकस्त्रिधा[c] भूतोऽष्टधैकादशधा[d] द्वादशधाऽपरिमितधा वोद्भूतः[7] । उद्भूतत्वात् भूतम् । भूतेषु चरति प्रविष्टः स भूतानामधिपतिर्बभूव । इत्यसा[8] आत्माऽन्तर्बहिश्चान्तर्बहिश्च ॥ २ ॥

1) Max Müller reads: तत् परेऽस्यात्. —2) v. l. एतद्वै रजसो रूपम्. —3) v. l. प्रतिपुरुषम्. —4) मैत्रायणीसंधिः. —5) v. l. तस्य प्रोक्ता अग्र्यास्तनवः. —6) Some Mss omit ब्रह्मचारिणः. —7) Some Mss drop उद्भूतः and substitute च for वा.

*a*) ऋ 10·129·3 तम आसीत् तमसा गूळ्हमग्रे. —*b*) बृ 1·4·6; मै 6·11-13. —*c*) छां 8·26·2. —*d*) गी 13·5.

॥ इति पञ्चमः प्रपाठकः ॥

द्विधा वा एष[1] आत्मानं बिभर्त्ययं यः प्राणो यश्चासा आदित्यः। अथ द्वौ वा एता अस्य पन्थाना अन्तर्बहिश्च। अहोरात्रेणैतौ व्यावर्तेते। असौ वा आदित्यो बहिरात्मा[b]। अन्तरात्मा प्राणः। अतो बहिरात्मक्या गत्याऽन्तरात्मनोऽनुमीयते गतिः। इत्येवꣳह्याह। अथ यः कश्चिद्विद्वानपहतपाप्माऽक्षाध्यक्षोऽवदातमनास्तन्निष्ठ आवृत्तचक्षुः सो[b] अन्तरात्मक्या गत्या बहिरात्मनोऽनुमीयते गतिः। इत्येवꣳह्याह। अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो यः पश्यतीमां हिरण्यवस्थात्[2] स एषोऽन्तरे[3] हृत्पुष्करे[3] एवाश्रितोऽन्नमत्ति ॥ १ ॥

1) Some Mss add आत्मा after एष. —2) Is it हिरण्यवक्षसम् as in अ 12·1·6 and 26? —3) v. l. अन्तः पुष्करे हृत्पुष्करे वा.

*a*) तै 1·1; क 6·2; प्र 3·3. —*b*) मै 5·2. —*c*) क 4·1. —*d*) सो=सा+उ. उ and अन्तर् can not coalesce as the vowels are प्रगृह्य. —*e*) हिरण्य+अवस्थात् = हिरण्यवस्थात्.

अथ य एषाऽन्तरे हृत्पुष्कर एवाऽऽश्रितोऽन्नमात्ति स एषोऽग्निर्दिवि श्रितः सौरः कालाख्योऽदृश्यः सर्वभूतान्यन्नमत्तीति। कः पुष्करः किंमयो वेति। इदं वाव तत् पुष्करं योऽयमाकाशः। अस्येमाश्चतस्रो दिशश्चतस्र उपदिशो दलसꣳस्था आसम्[1]। अर्वाग् विचरत एतौ प्राणादित्यौ। एतौ उपासीतोमित्येतदक्षरे व्याहृतिभिः सावित्र्या चेति ॥ २ ॥

1) v. l. आसन्, आसुः.

*a*) ऋ 3·62·10 तत् सवितुर्वरेण्यम्...; बृ 5·14·4; 6·3·6; मै 6·7.

द्वे[a] वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च। अथ यन्मूर्तं तदसत्यं यदमूर्तं तत् सत्यम्। तद्ब्रह्म[1] तज्ज्योतिः[2]। यज्ज्योतिः स आदित्यः। स वा एष ओमित्येतदात्माऽभवत्[b]। स त्रेधाऽऽत्मानं व्यकुरुत। ओमिति तिस्रो मात्राः। एताभिः सर्वमिदमोतं[d] प्रोतं चैवास्मिन्नित्येवꣳह्याह[3]। एतद्वा आदित्य ओमित्येवं ध्यायताऽऽत्मानं युञ्जीतेति ॥ ३ ॥

1) According to Cowell यत् सत्यं should be read before this. —2) Cowell proposes यद् ब्रह्म before तज्ज्योतिः. —3) v. l. अस्मि.

*a*) बृ 2·3·1. —*b*) क 2·17; मुं 2·2·4; प्र 5; मां 12; श्वे 1·14; मै 6·23, 24, 26, 28. —*c*) बृ 1·2·3. —*d*) बृ 3·6·1. —*e*) क 2·12; 6·11, 18; प्र 5·5; तै 2·4; श्वे 2·11; 6·13; मै 6·18–25.

अथान्यत्राप्युक्तम् । अथ खलु य उद्गीथः स प्रणवो य प्रणवः स उद्गीथ इति । असौ वा आदित्य उद्गीथः । एष प्रणव[b] इत्येवꣳ ह्याह । उद्गीथं प्रणवाख्यं प्रणेतारं भारूपं विगतनिद्रं विजरं विमृत्युं त्रिपदं[d] त्र्यक्षरं पुनः पञ्चधा ज्ञेयं निहितं गुहायामित्येवꣳ ह्याह । ऊर्ध्वमूलं त्रिपाद्ब्रह्म । शाखा आकाशवाय्वग्न्युदकभूम्यादय[g] एकोऽश्वत्थनामा[h] । एतद् ब्रह्म । एतस्यैतत् तेजो यदसा आदित्यः । ओमित्येतदक्षरस्य चैतत् । तस्मादोमित्यनेनैतदुपासीताजस्रमिति । एकोऽस्य संबोधयितेत्येवꣳ ह्याह ।

एतदेवाक्षरं पुण्यमेतदेवाक्षरं परम् ।
एतदेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ ४ ॥

*a*) छां 1·5·1. —*b*) मैत्रायणीसंधिः. *c*—) मै 6·25. —*d*) मै 7·11. —*e*) क 6·1; गी 15·1 —*f*) ऋ 10·90·3,4; छां 3·12·6. —*g*) मैत्रायणीसंधिः. —*h*) क 6·1; गी 12·1. —*i*) क 2·16 ( with ब्रह्म for पुण्यम् ).

अथान्यत्राप्युक्तम् । स्वनवत्येषाऽस्य तनूर्यो[a]मिति । स्त्रीपुंनपुंसकेति[b] लिङ्गवत्येषा । अथाग्निर्वायुरादित्य[c] इति भास्वत्येषा । अथ ब्रह्मा रुद्रो विष्णुरित्यधिपतिवत्येषा । अथ गार्हपत्यो दक्षिणाग्निराहवनीय इति मुखवत्येषा । अथ ऋग्यजुः सामेति विज्ञानवत्येषा । अथ भूर्भुवः स्वरिति लोकवत्येषा[d] । अथ भूतं भव्यं भविष्यदिति कालवत्येषा । अथ प्राणोऽग्निः सूर्य[e] इति प्रतापवत्येषा । अथान्नमापश्चन्द्रमा[f] इत्याप्यायनवत्येषा । अथ बुद्धिर्मनोऽहंकार इति चेतनवत्येषा । अथ प्राणोऽपानो व्याना इति प्राणवत्येषा । इत्यत[1] ओमित्युक्तेनैताः प्रस्तुता अर्चिता अर्पिता भवन्ति । इत्येवꣳ ह्याह । एतद्वै सत्यकाम परं[g] चापरं च ब्रह्म यदोमित्येतदक्षरमिति ॥ ५ ॥

1 ) v. l. एतद्वै for इत्यतः.

*a*) योम् = या + ओम्. See पा 6·1·95 ओमाङोश्च; cp वासं 13·53 अपां त्वेमन् ( = त्वा + एमन् ); त्वोद्मन् ( = त्वा + ओद्मन् ). —*b*) गौका 2·27. —*c*) मैत्रायणीसंधिः. —*d*) मै 6·6. —*e*) गी 15·14. —*f*) गी 15·13. —*g*) प्र 5·2.

अथाव्याहृतं[1] वा इदमासीत् । स सत्यं प्रजापतिस्तपस्तप्त्वाऽनुव्याहरद् भूर्भुवः स्वरिति । एषैवास्य प्रजापतेः स्थविष्ठा तनूर्या लोकवतीति । स्वरित्यस्याः शिरः । नाभिर्भुवः । भूः पादाः । आदित्यश्चक्षुः । चक्षुरायत्ता हि पुरुषस्य महतीमात्राः ।

चक्षुषा ह्ययं मात्राश्चरति। सत्यं वै चक्षुः। अक्षिण्यवस्थितो हि पुरुषः सर्वार्थेषु चरति। एतस्माद् भर्भुवः स्वरित्युपासीत। अनेन हि प्रजापतिर्विश्वात्मा विश्वचक्षुरिवोपासितो भवति। इत्येवꣳ ह्याह। एषा वै प्रजापतेर्विश्वभृत् तनूः। एतस्यामिदꣳ सर्वमन्तर्हितम्। अस्मिंश्च सर्वस्मिन्नेषाऽन्तर्हितेति। तस्मादेषोपासीत[2][b] ॥ ६ ॥

1) v. l. अथ व्याहृतम्, अथ व्यात्तम्, (cp तैसं 7·5·25·1 वैश्वानरो व्यात्तम्; बृ 1·1·1). —2) v. l. उपासिता इति.

a) ऋ 10·90·13,14. —b) Middle Voice in the passive sense.

तत्[a] सवितुर्वरेण्यमिति। असौ वा आदित्यः सविता। स वा एवं प्रवरणीय आत्मकामेनेत्याहुर्ब्रह्मवादिनः। अथ भर्गो देवस्य धीमहीति। सविता वै देवः। ततो योऽस्य भर्गाख्यस्तं चिन्तयामीत्याहुर्ब्रह्मवादिनः। अथ धियो यो नः प्रचोदयादिति। बुद्धयो वै धियः। ता योऽस्माकं प्रचोदयादित्याहुर्ब्रह्मवादिनः। अथ भर्गा[b] इति। यो ह वा अमुष्मिन्नादित्ये निहितस्तारकोऽक्षिणि भर्गाख्यः। भाभिर्गतिरस्य हीति भर्गः। भर्जयतीति वैष भर्ग इति रुद्रो ब्रह्मवादिनः। अथ भ इति भासयतीमाँल्लोकान्। र इति रञ्जयतीमानि भूतानि। ग इति गच्छन्त्यस्मिन्नागच्छन्त्यस्मादिमाः प्रजाः। तस्माद्भरगत्वाद्भर्गः। शश्वत् सूयमानात् सूर्यः[d]। सवनात् सविता[e]। आदानादादित्यः[f]। पवनात् पवनः[1]। अथाऽऽपोऽप्यायनादित्येवꣳ ह्याह[g]। खल्वात्मनोऽत्मा[h] नेताऽमृताख्यश्चेता[i][j] मन्ता गन्तोत्स्रष्टाऽऽनन्दयिता कर्ता वक्ता रसयिता घ्राता द्रष्टा[k] श्रोता स्पृशति च विभुर्विग्रहे संनिविष्ट[l] इत्येवꣳ ह्याह। अथ यत्र द्वैतीभूतं[m] विज्ञानं तत्र हि शृणोति पश्यति जिघ्रति रसयति चैव स्पर्शयति। सर्वमात्मा जानीतेति[n]। यत्राद्वैतीभूतं विज्ञानं कार्यकारण[2]कर्मनिर्मुक्तं निर्वचनमनौपम्यं[o] निरुपाख्यम्। किं तत्। अवाच्यम् ॥ ७ ॥

1) v. l. पावनः. —2) कार्यकारण; cp गी 13·20.

a) ऋ 3·62·10; बृ 5·14·4; 6·3·6; मै 6·2. —b) मैत्रायणीसंधिः. —c) Here follow some quaint etymologies at which even यास्क would shudder !. —d) Cp तैब्रा 2·2·10·4 तं देवा अब्रुवन् सुवीर्यो मर्या मया गोपायत इति, तत् सूर्यस्य सूर्यत्वम्. —e) ऐ 1·30 सविता वै प्रसवानामीशे; शब्रा 1·1·3·6 सविता वै देवानां प्रसविता (= जै 3·18·3). —f) तैब्रा 3·9·21·2 यदसुराणां लोकानादत्त तस्मादादित्यो नाम; शब्रा 2·1·2·18 उद्यन्नेव वीर्यं क्षत्रमादत्त तस्मादादित्यो नाम. —g) But अ 3·13·2 तदाप्नोदिन्द्रो वो यतीस्तस्मादापोऽनु ष्ठन; 12·3·28 सर्वं व्यापुः शुचयः शुचित्वम्; गोब्रा 1·1·2 तयदब्रवीदाभिर्वा अहमिदं सर्वमाप्स्यामि ......

तस्मादापोऽभवस्तदपामप्त्वम्; नि 9·26 आपः आप्नोतेः. —*h*) On आत्मनोऽत्मा, cp क 3·12 गूढोऽत्मा न प्रकाशते. —*i*) मुं 2·2·7 प्राणशरीरनेता. —*j*) श्वे 6·11 साक्षी चेता केवलो निर्गुणश्च; मै 6·10 पुरुषश्चेता प्रधानान्तःस्थः. —*k*) प्र 4·9; 7·8·1; दीघनिकाय Vol. II, 210 = 226. —*l*) मैत्रायणीसंधिः. —*m*) बृ 2·4·14. —*n*) जानीतेति + इति = जानीतेति which reminds of the प्राकृत—ति instead of इति ! —*o*) ई 7 विजानतः ... एकत्वमनुपश्यतः. —*p*) A fitting conclusion to the निर्वचनानि above !

[a]एष हि खल्वात्मेशानः शंभुर्भवो रुद्रः प्रजापतिर्विश्वसृग्घिरण्यगर्भः सत्यं प्राणो हंसः शास्ता विष्णुर्नारायणोऽर्कः सविता धाता विधाता[1] सम्राडिन्द्र इन्दुरिति । य एष तपत्यग्निरिवाग्निना पिहितः सहस्राक्षेण हिरण्मयेनाण्डेन । एष वाव जिज्ञासितव्योऽन्वेष्टव्यः[b] सर्वभूतेभ्योऽभयं दत्त्वारण्यं गत्वाऽथ बहिः [c]कृत्वेन्द्रियार्थान् स्वाञ्छरीरादुपलभेतैनमिति[d] ।

[e]विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् ।

सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥ ८ ॥

1) Dropped in some Mss.

*a*– –*a*) मै 7·7. —*b*) छां 8·1·1; तै 3·2. —*c*) क 4·1; गी 5·27. —*d*) This is the peculiar मैत्रायणीसंधि e. g. निर्वपेत् + श्यामाकम् = निर्वपेञ्श्यामाकम् (मैसं 2·1·14) निर्वपेत् + श्रीकामः = निर्वपेञ् श्रीकामः; cp के 6·17 तं स्वाच्छरीरात् प्रवृहेत्. —*e*) प्र 1·9.

तस्माद्वा एष उभयात्मैवंविदात्मन्नेवाभिध्यायत्यात्मन्नेव [a]यजतीति ध्यानं प्रयोगस्थं मनो विद्वाद्भिः[1] ष्टुतम् । मनःपूतिमुच्छिष्टोपहतमित्यनेन तत् पावयेत् । मन्त्रं पठति । [b]उच्छिष्टोच्छिष्टोपहतं यच्च पापेन दत्तं मृतसूतकाद्वा । [c]वसोः पवित्रमग्निः सवितुश्च रश्मयः पुनन्त्वन्नं मम दुष्कृतं च यदन्यत् । आद्भिः[d] पुरस्तात् परिदधाति । प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा समानाय स्वाहोदानाय स्वाहेति पञ्चभिरभिजुहोति[e] । अथावशिष्टं यतवागश्नाति । अतोऽद्भिर्भूय एवोपरिष्टात् परिदधाति । आचान्तो भूत्वाऽऽत्मेज्यानः प्राणोऽग्निर्विश्वोऽसीति[f] च द्वाभ्यामात्मानमभिध्यायेत् ।

प्राणोऽग्निः परमात्मा वै पञ्चवायुः समाश्रितः ।
स प्रीतः प्रीणातु विश्वं विश्वभुक् ॥
विश्वोऽसि वैश्वानरोऽसि विश्वं त्वया धार्यते जायमानम् ।
विशन्तु त्वामाहुतयश्च सर्वाः प्रजास्तत्र यत्र विश्वामृतोऽसीति ॥

एवं न विधिना खल्वनेनात्ताऽन्नत्वं पुनरुपैति ॥ ९ ॥

Cp in general छां 3·19–24.

1 ) v. l. विद्वद्भिष्टुतम्.

*a* ) See this idea of आत्मयाजी in शब्रा 12·2·6·13 तदाहुः—आत्मयाजी श्रेया ३ न्‌ देवयाजी ३ इति । आत्मयाजीति ह ब्रूयात्. —*b* ) This मंत्र which sounds apparently metrical, may be presented thus :—

उच्छिष्टमुच्छिष्टोपहतं च यत् ( यच्च ) पापेन दत्तं मृतसूतकाद्वा ।
पवित्रमग्निः सवितुश्च रश्मयः पुनन्त्वन्नं मम दुष्कृतं च यत् ॥

—*c* ) वासं 1·2 वसोः पवित्रमसि; शब्रा 1·7·1·9 यज्ञो वै वसुः; तस्मादाह वसोः पवित्रमसीति. —*d* ) छां 5·2·2–5. —*e* ) बृ 1·5·3; 3 9·26; छां 3·13·1–5; 5·19–23; तै 1·7; प्र 3·5; 4·4; मै 2·6, 6·33. —*f* ) छां 5·24; मै 6·34.

अथापरं वेदितव्यम् । उत्तरो विकारोऽस्याऽऽत्मयज्ञस्य यथाऽन्नमन्नादश्चेति । अस्योपव्याख्यानम् । पुरुषश्चेता प्रधानान्तःस्थः । स एव भोक्ता प्राकृ[a]तमन्नं भुङ्क्त[b] इति । तस्यायं भूतात्[c]मा ह्यन्नम् । अस्य कर्ता[d] प्रधानः । तस्मात् त्रिगुणं भोज्यम् । भोक्ता पुरुषोऽन्तःस्थः । अत्र दृष्टं नाम प्रत्ययम् । यस्माद्बीजसंभवा हि पशवस्तस्माद्बीजं भोज्यम् । अनेनैव प्रधानस्य भोज्यत्वं व्याख्यातम् । तस्माद्भोक्ता पुरुषः । भोज्या प्रकृतिः । तत्स्थो[d] भुङ्क्त[b] इति । प्राकृतमन्नं त्रिगुणभेदपरिणामत्वान्महदा[e]द्यं[1] विशेषान्तं लिङ्गम् । अनेनैव चतुर्दशविधस्य मार्गस्य व्याख्या कृता भवति । सुखदुःखमोहसंज्ञं ह्यन्नभूतमिदं जगत् । न हि बीजस्य स्वादुपरिग्रहोऽस्तीति यावन्न प्रसूतिः । तस्याप्येवं तिसृष्ववस्थास्वन्नत्वं भवति । कौमा[f]रं यौवनं जरा । परिणामत्वात् तदन्नत्वम् । एवं प्रधानस्य व्यक्ततां गतस्योपलब्धिर्भवति । तत्र बुद्ध्यादीनि स्वा[2]दू[h]नि भवन्ति । अध्यवसायसंकल्पाभिमाना इति । अथेन्द्रियार्थान् पञ्च स्वादूनि भवन्ति । एवं सर्वाणीन्द्रियकर्माणि प्राणकर्माणि । एवं व्यक्तमन्नमव्यक्तमन्नम् । अस्य निर्गुणो भोक्ता । भोक्तृत्वाच्चैतन्यं प्रसिद्धं तस्य । यथाऽग्निर्वै देवानामन्नादः सोमोऽन्नम् । अग्निनैवान्नमित्येवंवित् । सोमसंज्ञोऽयं भूतात्माऽग्निसंज्ञोऽप्यव्यक्तमुख इति । वचनात् पुरुषो ह्यव्यक्तमुखेन त्रिगुणं भुङ्क्त इति । यो हैवं वेद संन्यासी योगी चाऽऽत्मयाजी चेति । अथ यद्वन्न[3] कश्चिच्छून्यागारे कामिन्यः[4] प्रविष्टाः स्पृशतीन्द्रियार्थांस्तद्वद्यो न स्पृशति प्रविष्टान् संन्यासी योगी चाऽऽत्मयाजी चेति ॥ १० ॥

1 ) v. l. महदाद्यविशेषान्तम्. —2 ) v. l. स्वादूनि. —3 ) v. l. यद्वान्यः. —4 ) Read कामिनीः as in अ 3·8·4 अस्मै कामाय उपकामिनीः.

*a*) गी 13·21 भुङ्क्ते प्रकृतिजान् गुणान्. —*b*) मैत्रायणीसंधिः. —*c*) मै 3·3. —*d*) गी 13·21 पुरुषः प्रकृतिस्थो हि. —*e*) सांका 38 तन्मात्राण्यविशेषाः ... 40 महदादि सूक्ष्मपर्यन्तम्. —*f*) क 6·8; श्वे 6·9. —*g*) गी 2·13 कौमारं यौवनं जरा. —*h*) स्वाद्वनि is loc. sing. going with तत्र (= तास्मिन्). —*i*) गी 4·27. —*j*) बृ 1·4·6; मै 5·2.

परं वा एतदात्मनो रूपं यदन्नम् । अन्नमयो ह्ययं प्राणः । अथ न यद्यश्नात्य-मन्ताऽश्रोताऽस्प्रष्टाऽद्रष्टाऽवक्ताऽघ्राताऽरसयिता भवति । प्राणांश्चोत्सृजाति । इत्येवं ह्याह । अथ यदि खल्वश्नाति प्राणसमृद्धो भूत्वा मन्ता भवति श्रोता भवति स्प्रष्टा भवति वक्ता भवति रसयिता भवति घ्राता भवति द्रष्टा भवतीति । एवं ह्याह—

अन्नाद्वै प्रजा प्रजायन्ते याः काश्चित् पृथिवीश्रिताः ।
अतोऽन्नेनैव जीवन्त्यथैतदपियन्त्यन्ततः ॥ ११ ॥

*a*) छां 7·9·1. —*b*) तै 2·2.

अथान्यत्राप्युक्तम्—सर्वाणि ह वा इमानि भूतान्यहरहः प्रपतन्त्यन्नमभिजिघृक्षमाणानि । सूर्यो रश्मिभिराददात्यन्नम् । तेनासौ तपति । अन्नेनाभिषिक्ताः पचन्तीमे प्राणाः । अग्निर्वा अन्नेनाभिज्वलति । अन्नकामेनेदं प्रकल्पितं ब्रह्मणा । अतोऽन्नमात्मेत्युपासीत । इत्येवं ह्याह—

अन्नाद् भूतानि जायन्ते जातान्यन्नेन वर्धन्ते ।
अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते ॥ १२ ॥

*a*) गी 15·14 प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्. —*b*) तैआ 8·2; तै 2·2.

अथान्यत्राप्युक्तम् । विश्वभृद्वै नामैषा तनूर्भगवतो विष्णोर्यदिदमन्नम् । प्राणो वा अन्नस्य रसः । मनः प्राणस्य । विज्ञानं मनसः । आनन्दं विज्ञानस्येति । अन्नवान् प्राणवान् मनस्वान् विज्ञानवानानन्दवांश्च भवति यो हैवं वेद । यावन्तीह वै भूतान्यन्नमदन्ति तावत् स्वन्तःस्थोऽन्नमत्ति यो हैवं वेद—

अन्नमेव विजरन्नमन्नं संवननं स्मृतम् ।
अन्नं पशूनां प्राणोऽन्नं ज्येष्ठमन्नं भिषक् स्मृतम् ॥ १३ ॥

1) v. l. स्वन्तरस्थः.

*a*) तै 2·2.

अथान्यत्राप्युक्तम्—अन्नं वा अस्य सर्वस्य योनिः। कालश्चान्नस्य। सूर्यो योनिः कालस्य। तस्यैतद्रूपं यन्निमेषादिकालात् संभूतं द्वादशात्मकं वत्सरम्। एतस्याऽऽग्नेयमर्धमर्धं वारुणम्। मघाद्यं[1] श्रविष्ठार्धमाग्नेयं क्रमेण। उत्क्रमेण सार्पाद्यं श्रविष्ठार्धान्तं सौम्यम्। तत्रैकैकमात्मनो नवांशकं[a] सचारकविधम्। सौक्ष्म्यत्वादेतत् प्रमाणम्। अनेनैव प्रमीयते हि कालः। न विना प्रमाणेन प्रमेयस्योपलब्धिः। प्रमेयोऽपि प्रमाणतां पृथक्त्वादुपैत्यात्मसंबोधनार्थम्। इत्येवं ह्याह। यावत्यो वै कालस्य कलास्तावतीषु चरत्यसौ। यः कालं ब्रह्मेत्युपासीत कालस्तस्यातिदूरमपसरति इत्येवं ह्याह —

कालात् स्रवन्ति भूतानि कालाद् वृद्धिं प्रयान्ति च।
काले चास्तं नियच्छन्ति कालो मूर्तिरमूर्तिमान्॥ १४॥

1) v. l. अघाद्यम्; cp ऋ 10·85·13 अघासु हन्यन्ते गावः, while अ 14·1·13 has मघासु हन्यन्ते गावः.

*a*) नवांशकम् is to be calculated thus:—27 नक्षत्रs divided by twelve मासs give $2\frac{1}{4}$ i. e. nine fourths; cp बृहत्संहिता 1·2 राश्यंश = नवांश ?

द्वे वाव ब्रह्मणो रूपे[a] कालश्चाकालश्च[b]। अथ यः प्रागादित्यात् सोऽकालोऽकलः। अथ य आदित्याद्यः स काल सकलः। सकलस्य वा एतद्रूपं यत् संवत्सरः। संवत्सरात् खल्वेवेमाः प्रजाः प्रजायन्ते। संवत्सरेणेह वै जाता विवर्धन्ते। संवत्सरे प्रत्यस्तं[c] यन्ति। तस्मात् संवत्सरो वै प्रजापतिः कालोऽन्नं ब्रह्मनीडमात्मा च। इत्येवं ह्याह—

कालः पचति भूतानि सर्वाण्येव महात्मनि।
यस्मिंस्तु पच्यते कालो यस्तं वेद स वेदवित्॥ १५॥

*a*) बृ 2·3·1. —*b*) बृ 4·4·15; क 2·14; 4·5, 12, 13; श्वे 6·5· Plato, Timæus p. 33 D. —*c*) तै 3·1.

विग्रहवानेष कालः सिन्धुराजः प्रजानाम्। एष तत्स्थः सविताख्यः। यस्मादेवेमे चन्द्रर्क्षग्रहसंवत्सरादयः सूयन्ते। अथैभ्यः सर्वमिदम्। अत्र वा यत् किंचिच्छुभाशुभं दृश्यते[1] ह लोके तदेतेभ्यः। तस्मादादित्यात्मा ब्रह्म। अथ कालसंज्ञमादित्यमुपासीत। आदित्यो ब्रह्मेत्येके। अथैवं ह्याह—

होता भोक्ता हविर्मन्त्रो यज्ञो विष्णुः प्रजापतिः।
सर्वः कश्चित् प्रभुः साक्षी योऽमुष्मिन् भाति मण्डले॥ १६॥

1) v. l. दृश्यते ह.

*a*) छां 5·19·1,3.

ब्रह्म ह वा इदमग्र आसीदेकोऽनन्तः प्रागनन्तो दक्षिणतोऽनन्तः प्रतीच्योऽनन्त[1] उदीच्योऽनन्त[2] ऊर्ध्वं चावाङ् च सर्वतोऽनन्तः। न ह्यस्य प्राच्यादिदिशः कल्पन्ते। अथ तिर्यग्वा[3]ऽवाङ् वोर्ध्वं वाऽनूह्य एष परमात्माऽपरिमितोऽ[4]जोऽतर्क्योऽचिन्त्यः। एष आकाशात्मा[a]। एवैष कृत्स्नक्षय एको जागर्ति[b]। इत्येतस्मादाकाशादेष खल्विदं चेतामात्रं बोधयति। अनेनैव चेदं ध्यायते। अस्मिंश्च प्रत्यस्तं याति। अस्यैतद् भास्वरं रूपं यदमुष्मिन्नादित्ये तपति। अग्नौ चाधूमके यज्ज्योतिश्चित्रतरम्[c]। उदरस्थोऽथ वा यः पचत्यन्नम्। इत्येवं ह्याह। यश्चैषोऽग्नौ[d] यश्चायं हृदये यश्चासा आदित्ये स एष एक[e] इति। एकस्य हैकत्वमेति य एवं वेद ॥ १७ ॥

1) v. l. प्रतीच्यनन्तः. 2) v. l. उदीच्यनन्तः. —3) v. l. तिर्यगवाङ् च. —4) Some add यः after अपरिमितः.

*a*) छां 3·14·2; कौ 2·14. —*b*) श्वे 6·3–4. —*c*) क 4·13. —*d*) छा 3·13·7. —*e*) मैत्रायणीसंधिः.

तथा तत्प्रयोगकल्पः। प्राणायामः[a] प्रत्याहारो ध्यानं धारणा तर्कः समाधिः षडङ्ग इत्युच्यते योगः। अनेन—

यदा[b] पश्यन् पश्यति रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्म योनिम्।

तदा विद्वान् पुण्यपापे विहाय परेऽव्यये सर्वमेकीकरोति[c] ॥

एवं ह्याह—

यथा पर्वतमादीप्तं[1] नाऽऽश्रयन्ति मृगद्विजाः[2]।

तद्वद् ब्रह्मविदो[3] दोषा नाऽऽश्रयन्ति कदाचन ॥ १८ ॥

1) v. l. प्रदीप्तं पर्वतम्. —2) v. l. मृगा द्विजाः. —3) Read ब्रह्मविदम्.

*a*) Cp योसू 2·29 यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि. —*b*) मुं 3·1·3. —*c*) छां 8·13; मुं 1·1·12; 3·2·7.

अथान्यत्राप्युक्तम्—यदा वै बहिर्विद्वान् मनो नियम्येन्द्रियार्थांश्च प्राणो[a] निवेशयित्वा निःसंकल्पस्ततस्तिष्ठेत्। अप्राणादिह यस्मात् संभूतः प्राणसंज्ञको जीवस्तस्मात् प्राणो वै तुर्याख्ये[b] धारयेत् प्राणम्। इत्येवं ह्याह—

अचित्तं चित्तमध्यस्थमचिन्त्यं गुह्यमुत्तमम्।

तत्र चित्तं निधायेत तच्च लिङ्गं निराश्रयम् ॥ १९ ॥

*a*) बृ 1·5·23; छां 8·15; मुं 3·1·8; 3·2·7. —*b*) Contrast ऋ 10 90·3 पादोऽस्य विश्वा भूतानि त्रिपाद् ( Gender ? ) अस्यामृतं दिवि; बृ 5·14·3–4, 6–7; छां 3·12; 3·18; 4·5–8; मां 7; मांका 1·12; 2·33 f; मै 7·11. —*c*) सांका 41 न तिष्ठति निराश्रयं लिङ्गम्.

अथान्यत्राप्युक्तम् । अतः पराऽस्य धारणा तालुरसनाग्रनिपीडनाद्वाङ्मनः-प्राणनिरोधनाद् ब्रह्म तर्केण पश्यति । यदाऽऽत्मनाऽऽत्मानमणोरणीयाꣳसं द्योतमानं मनःक्षयात् पश्यति तदाऽऽत्मनाऽऽत्मानं दृष्ट्वा निरात्मा भवति । निरात्मकत्वादसंख्योऽयोनिश्चिन्त्यः । मोक्षलक्षणमित्येतत् परं रहस्यम् । इत्येवꣳ ह्याह—

चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् ।
प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमव्ययमश्नुताँ[a] इति ॥ २० ॥

*a*) मैत्रायणीसंधिः.

अथान्यत्राप्युक्तम्—ऊर्ध्वगा[a] नाडी सुषुम्नाख्या[1] प्राणसंचारिणी तालुवन्त[b]-र्विच्छिन्ना । तया प्राणोंकारमनोयुक्तयोर्ध्वमुत्क्रमेत्[c] तालवध्यग्रं परिवर्त्य चेन्द्रियाण्य-संयोज्य[2] । महिम्नां[d] महिमानं निरीक्षेत । ततो निरात्मकत्वमेति निरात्मकत्वान्न सुखदुःखभाग् भवति । केवलत्वं लभता इत्येवꣳ ह्याह—

परः पूर्वं प्रतिष्ठाप्य निगृहीतानिलं ततः ।
तीर्त्वा पारमपारेण पश्चाद्युञ्जीत मूर्धनि ॥ २१ ॥

1) v. l. सुषुम्णाख्या. —2) v. l. संयोज्य.

*a*) छां 8·6·5–6. —*b*) तै 1·6. —*c*) क 6·16; प्र 3·6–7. —*d*) छां 7·24·1; प्र 5·3.

अथान्यत्राप्युक्तम्—द्वे वाव ब्रह्मणी अभिध्येये शब्दश्चाशब्दश्च । अथ शब्देनैवाशब्द-माविष्क्रियते अथ तत्रोमिति[a] शब्दः । अनेनोर्ध्वमुत्क्रान्तोऽशब्दे निधनमेति । अथ हैषा गतिः । एतदमृतम् । एतत् सायुज्यत्वं[b] निर्वृतत्वं तथा चेति । अथ यथोर्णनाभि[c]स्तन्तुनोर्ध्व-मुत्क्रान्तोऽवकाशं लभतीत्येवं[1] वाव खल्वसा अभिध्यातोमित्यनेनोर्ध्वमुत्क्रान्तः स्वातन्त्र्यं लभते । अन्यथा परे शब्दवादिनः श्रवणाङ्गुष्ठयोगेनान्तर्हृदयाकाश[d]शब्दमाकर्णयन्ति[e] । सप्तविधेयं तस्योपमा । यथा नद्यः किङ्किणी काꣳस्यचक्रकभेकाविःकृन्तिका वृष्टिर्निवाते[2][f] वदतीति । तं पृथग्लक्षणमतीत्य[g] परेऽशब्देऽव्यक्ते ब्रह्मण्यस्तं गताः । तत्र तेऽपृथग्धर्मिणोऽपृथग्विवेक्या यथा संपन्ना मधुत्वं नानारसाः[h] । इत्येवꣳ ह्याह—

द्वे[a] ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ २२ ॥

1) v. l. लभत इत्येवम्. —2) v. l. निर्वाते.

*a*) तत्रो ३ मिति? Cp प्र 5·2,5. —*b*) Elsewhere in the Upaniṣads we have सायुज्यम्; छां 2·20·2; बृ 1·3·22. —*c*) Vedic word is ऊर्णवाभिः; e. g. शब्रा 14·5·1·23 and ऊर्णावभि in तैब्रा 1·1·2·5 वाभि or वभि from the root वभ् *to weave.* —*d*) छां 3·13·7; बृ 5·9. —*e*) छां 8·1·1. —*f*) शब्रा 11·5·3·12 एतास्मिन्नेव काले निवाते सर्वेऽग्नयोऽनुगच्छेयुः ; श्वे 2·10 गुहानिवाताश्रयणे; गी 6·19 निवातस्थः. —*g*) छां 5·18·1. —*h*) छां 6·9·1–2. —*i*) मभा (CE) XII. 224·60; मांका 2·27.

अथान्यत्राप्युक्तम्—यः शब्दस्तदोमित्येतदक्षरम्[a] । यदस्याग्रं तच्छान्तमशब्दमभयमशोकमानन्दं तृप्तꣳ स्थिरमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितम् । सर्वापरत्वाय तदेतां[b] उपासीत । इत्येवꣳ ह्याह—

योऽसौ परापरो देवो[c] ओंकारो नाम नामतः ।
निःशब्दः शून्यभूतस्तु मूर्ध्नि स्थाने ततोऽभ्यसेत् ॥ २३ ॥

*a*) बृ 4·3·9 *et passim*; मुं 2·2·7; तै 2·4 *et passim*; मै 6·13,27; 7·3. —*b*) मैत्रायणीसंधि even with प्रगृह्य. —*c*) मैत्रायणीसंधिः.

अथान्यत्राप्युक्तम्—धनुः[a] शरीरम् । ओमित्येतच्छरः[b] । शिखास्य मनः । तमोलक्ष्यं भित्त्वा तमोऽतमाविष्टमागच्छति[c] । अथाऽऽविष्टं भित्त्वा अलातचक्रमिव[d] स्फुरन्तमादित्यवर्णमूर्जस्वन्तं ब्रह्म तमसः पर्यम[e]पश्यत्[1] । यदमुष्मिन्नादित्येऽथ सोमेऽग्नौ विद्युति विभाति[f] । अथ खल्वेनं दृष्ट्वाऽमृतत्वं[g] गच्छति । इत्येवꣳ ह्याह—

ध्यानमन्तः परे तत्त्वे लक्ष्येषु च निधीयते ।
अतोऽविशेषविज्ञानं विशेषमुपगच्छति ॥
मानसे च विलीने तु यत् सुखं चाऽऽत्मसाक्षिकम् ।
तद् ब्रह्म चामृतꣳ शुक्रꣳ सा गतिर्लोक एव सः ॥ २४ ॥

1) v. l. तमसः परि अपश्यत्.

*a*) मुं 2·2·3–4. —*b*) छां 1·1; तै 1·8; क 2·17; श्वे 1·4. —*c*) अतमः + आविष्टम्; छां 8·4·1; क 5·15. —*d*) मांका 4·47–52. —*e*) तमसः पर्यम् from तमसः परि in ऋ 1·50·10; वासं 31·18 आदित्यवर्णं तमसः परस्तात्; श्वे 3·8; गी 8·9. —*f*) क 5·15; गी 15·12. —*g*) वासं 31·18 अति मृत्युमेति; छां 3·11·3; 8·4·2; श्वे 4·18.

अथान्यत्राप्युक्तम्—निद्रेवान्तर्हितेन्द्रियः शुद्धतमया धिया स्वप्न इव यः पश्यतीन्द्रियबिलेऽविवशः प्रणवाख्यं प्रणेतारं[a] भारूपं विगतनिद्रं विजरं विमृत्युं[b] विशोकं च । सोऽपि प्रणवाख्यः प्रणेता भारूपो विगतनिद्रो विजरो विमृत्युर्विशोको भवति । इत्येवꣳ ह्याह—

एवं प्राणमथोंकारं यस्मात् सर्वमनेकधा ।
युनक्ति युञ्जते वाऽपि तस्माद्योगं[c] इति स्मृतः ॥
एकत्वं प्राणमनसोरिन्द्रियाणां तथैव च ।
सर्वभावपरित्यागो योग इत्यभिधीयते ॥ २५ ॥

*a*) मै 6·4. —*b*) मुं 3·2·9. —*c*) तै 2·4; क 2·12; 6·11,18; श्वे 2·11; 6·13; मै 6·3,18.

अथान्यत्राप्युक्तम्—यथा वाऽप्सुचारिणः शाकुनिकः सूत्रयन्त्रेणोद्धृत्योदरेऽग्नौ जुहोत्येवं वाव खल्विमान् प्राणानोमित्यनेनोद्धृत्यानामये[a]ऽग्नौ जुहोति । अतस्तप्तोर्वीव सः । अथ यथा तप्तोर्विसर्पिस्तृणकाष्ठसꣳस्पर्शेनोज्ज्वलतीत्येवं वाव खल्वसावप्राणाख्यः प्राणसꣳस्पर्शेनोज्ज्वलति । अथ यदुज्ज्वलत्येतद्ब्रह्मणो रूपं च । एतद्विष्णोः[b] परमं पदं च । एतद् रुद्रस्य रुद्रत्वम् । एतत् तदपरिमित[c]धा चाऽऽत्मानं विभज्य पूरयतीमाँल्लोकान् । इत्येवꣳ ह्याह—

वह्नेश्च[d] यद्वत् खलु विस्फुलिङ्गाः सूर्यान्मयूखाश्च तथैव तस्य ।
प्राणादयो वै पुनरेव तस्मादभ्युच्चरन्तीह यथाक्रमेण ॥ २६ ॥

*a*) श्वे 3·10; गी 2·51. —*b*) ऋ 1·22·20–21; 1·154·5; 5·3·3; क 3·9. —*c*) छां 7·26·2. —*d*) बृ 2·1·20; मुं 2·1·1; मै 6·31.

अथान्यत्राप्युक्तम्—ब्रह्मणो वावैतत् तेजः परस्यामृतस्याशरीरस्य यच्छरीरस्यौष्ण्य[a]मस्यैतद् घृतम् । अथाऽऽविः[b] सन्नभसि निहितं वा । एतदैकाग्र्येणैवमन्तर्हृदया[c]काशं विनुदन्ति[d] यत् तस्य ज्योतिरिव संपद्य[e]तीत्यतस्तद्भावमाचिरेणैति । भूमावयस्पिण्डं निहितं यथाऽचिरेणैति भूमित्वम् । मृद्वत्सꣳस्थमयस्पिण्डं यथाऽग्न्ययस्कारादयो नाभिभवन्ति । प्रणश्यति चित्तं तथाऽऽश्रयेण सहैवम् । इत्येवꣳ ह्याह—

हृद्याकाशमयं कोश[f]मानन्दं परमालयम् ।
स्वं योगश्च ततोऽस्माकं तेजश्चैवाग्निसूर्ययोः ॥ २७ ॥

*a*) छां 3·13·8. —*b*) मुं 2·2·1. —*c*) मुं 2·2·7–8. —*d*) मै 6·38. —*e*) छां 4·4·5; 8·11·3; संपद्यति is परस्मैपदी, see संपेदुः in छां 4·4·5. —*f*) बृ 2·2·1; तै 2·1.

अथान्यत्राप्युक्तम्—भूतेन्द्रियार्थानतिक्रम्य ततः प्रव्रज्याज्यं धृतिदण्डं धनुर्गृहीत्वा[a]ऽनभिमानमयेन चैवेषुणा तं ब्रह्मद्वारपारं निहत्याद्यं संमोहमौली तृष्णेर्ष्याकुण्डली तन्द्रीराघवेत्र्यभिमानाध्यक्षः क्रोधज्यं प्रलोभदण्डं धनुर्गृहीत्वेच्छामयेन चैवेषुणेमानि खलु भूतानि हन्ति । तं हत्वोंकारप्लवेनान्तर्हृदयाकाशस्य पारं तीर्त्वाऽऽविर्भूतेऽन्तराकाशे शनकैरवटै[b]वावटकृद्धातुकामः संविशत्येवं ब्रह्मशालां विशेत् । ततश्चतुर्जालं ब्रह्मकोशं[d] प्रणुदेद् गुर्वागमेनेति । अतः शुद्धः पूतः शून्यः शान्तो[e]ऽप्राणो निरात्माऽनन्तोऽक्षय्यः स्थिरः शाश्वतोऽजः स्वतन्त्रः स्वे[c] महिम्नि तिष्ठति । अतः स्वे महिम्नि तिष्ठमानं दृष्ट्वाऽऽवृत्तचक्र[d]मिव संसारचक्रमालोकयाति । इत्येवं ह्याह—

षड्भिर्मासैस्तु युक्तस्य नित्यमुक्तस्य देहिनः ।
अनन्तः[1] परमो गुह्यः सम्यग्योगः प्रवर्तते ॥
रजस्तमोभ्यां विद्धस्य सुसमिद्धस्य देहिनः ।
पुत्रदार[e]कुटुम्[f]बेषु संक्तस्य न कदाचन ॥ २८ ॥

1) v. l. आनन्दः.

*a*) मुं 2·2·3. —*b*) मैत्रायणीसंधिः—अवटे + इव (संधिवृद्धी छांदसे—रामतीर्थ.) —*c*) मै 3·3; 6·38. —*d*) बृ 2·2·1; तै 2·1–4; मै 6·26. —*e*) छां 7·24·1; मै 2·4; 6·31. —*d*) शब्रा 2·3·3·12 यथा रथोपस्थे तिष्ठन् उपरिष्टाद्रथचक्रे पल्यङ्गमाने उपावेक्षेत; बृ 4·4·16; कौ 1·4. —*e*) गी 13·9. —*f*) छां 8·15·1.

एवं[a]मुक्त्वाऽन्तर्हृदयः शाकायन्यस्तस्मै नमस्कृत्वाऽनया ब्रह्मविद्यया राजन् ब्रह्मणः पन्थानमारूढाः पुत्राः प्रजापतेरिति । संतोषं द्वन्द्वतितिक्षां शान्तत्वं योगाभ्यासादवाप्नोतीति । एतद् गुह्यतमं नापुत्रा[b]य नाशिष्याय नाशान्ताय कीर्तयेदिति । अनन्यभक्ताय सर्वगुणसंपन्नाय दद्यात् ॥ २९ ॥

*a*) Speaking thus (एवमुक्त्वा) to बृहद्रथ, concluding the conversation (begun at मै 1·2) and the course of instruction begun at मै 2·1. —*b*) ऐआ 3·2·6 न अनन्तेवासिने प्रब्रूयात् नासंवत्सरवासिने नाप्रवक्त्रे; छां 3·11·5–6; बृ 6·3·12; श्वे 6·22; मुं 3·2·11.

ॐ शुचौ देशे शुचिः सत्त्वस्थः सदधीयानः सद्वादी सद्ध्यायी सद्याजी स्यादिति। अतः सद्ब्रह्मणि सत्याभिलाषिणि निर्वृत्तोऽन्यस्तत्फलच्छिन्नपाशो निराशः परेष्वात्मवद्विगतभयो निष्कामोऽक्षय्यमपरिमितꣳसुखमाक्रम्य तिष्ठति। परमं वै शेवधेरिव परस्योद्धरणं यन्निष्कामत्वम्। स हि सर्वकाममयः पुरुषोऽध्यवसायसंकल्पाभिमानलिङ्गो बद्धः। अतस्तद्विपरीतो मुक्तः। अत्रैका आहुः। गुणः प्रकृतिभेदवशादध्यवसायात्मबन्धमुपागतः। अध्यवसायस्य दोषक्षयाद्विमोक्षः। "मनसा ह्येव पश्यति मनसा शृणोति। कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव।" गुणौघैरुह्यमानः कलुषीकृतश्चास्थिरश्चञ्चलो लुप्यमानः सस्पृहो व्यग्रश्चाभिमानित्वं प्रयाता इति। अहꣳसो ममेदमित्येवं मन्यमानो निबध्नात्यात्मनाऽऽत्मानं जालेनेव खचरः। अतः पुरुषोऽध्यवसायसंकल्पाभिमानलिङ्गो बद्धः। अतस्तद्विपरीतो मुक्तः। तस्मान्निरध्यवसायो निःसंकल्पो निरभिमानस्तिष्ठेत्। एतन्मोक्षलक्षणम्। एषाऽत्र ब्रह्मपदवी। एषोऽत्र द्वारविवरः। अनेनास्य तमसः पारं गमिष्यति। अत्र हि सर्वे कामाः समाहिता इति। अत्रोदाहरन्ति—

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।
बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम्॥

एतदुक्त्वाऽन्तर्हृदयः शाकायन्यस्तस्मै नमस्कृत्वा यथावदुपचारी कृतकृत्यो मरुदुत्तरायणं गतः। न ह्यत्रोद्वर्त्मना गतिः। एषोऽत्र ब्रह्मपथः सौरं द्वारं भित्त्वोर्ध्वेन विनिर्गता इति। अत्रोदाहरन्ति—

अनन्ता रश्मयस्तस्य दीपवद्यः स्थितो हृदि।
सितासिताः कद्रुनीलाः कपिला मृदुलोहिताः॥
ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम्।
ब्रह्मलोकमतिक्रम्य तेन यान्ति परां गतिम्॥
यदस्यान्यद्रश्मिशतमूर्ध्वमेव व्यवस्थितम्।
तेन देवनिकायानां स्वधामानि प्रपद्यते॥
ये नैकरूपाश्चाधस्ताद्रश्मयोऽस्य मृदुप्रभाः।
इह कर्मोपभोगाय तैः सꣳसरति सोऽवशः॥
तस्मात् सर्गस्वर्गापवर्गहेतुर्भगवानसावादित्य इति॥ ३०॥

1) v. l. सत्याभिलाषिणि; we propose सद्भिलाषिणि. —2) मैत्रायणीसंधिः.

*a*) छां 8·15; श्वे 2·10; गी 6·11. —*b*) मै 6·9; गी 18·65 (मद्याजी). —*c*) सांका 23 अध्यवसायो बुद्धिः. —*d*) बृ 1·5·3. —*e*) मै 3·2. —*f*) बृ 4·4·23. —*g*) छां 7·26·2. —*h*) छां 8·1·5· —*i*) क 6·10 (with विचेष्टति for विचेष्टते). —*j*) गी 8·21. —*k*) मै 3·2. —*l*) प्र 1·9–10 —*m*) छां 5·10·1–2. —*n*) बृ 4·4·9; छां 8·6·16; क 6·6. —*o*) बृ 6·2·16.

किमात्म[a]कानि वा एतानीन्द्रियाणि प्रचरन्ति। उद्गन्ता चैतेषामिह को नियन्ता वेत्याह। प्रत्याहाऽऽत्मात्मकानीति। आत्मा ह्येषामुद्गन्ता नियन्ता वा। अप्सरसो भानवीयाश्च मरी[b]चयो नाम। अथ पञ्चभी रश्मि[c]भिर्विषयानत्ति[1]। कतम आत्मेति। योऽयं शुद्धः पूतः शून्यः शान्तादिलक्षणोक्तः स्व[d]कैर्लिङ्गैरुपगृह्यः। तस्यैतल्लिङ्गमलिङ्गस्याग्नेर्यदौ[e]ष्ण्यमाविष्टं चापां यः शिवतमो रस इत्येके। अथ वा[f]क्श्रोत्रं चक्षुर्मनः प्राण इत्येके। अथ बुद्धिर्धृतिः स्मृतिः प्रज्ञा[g]नमित्येके। अथ ता[h] एतस्यैवं यथैवेह बीजस्याङ्कुरा अथ धूमार्चिर्विस्फुलिङ्गा इवाग्नेश्चेति। अत्रोदाहरन्ति—

वह्ने[i]श्च यद्वत् खलु विस्फुलिङ्गाः सूर्यान्मयूखाश्च तथैव तस्य।
प्राणादयो वै पुनरेव तस्मादभ्युच्चरन्तीह यथाक्रमेण ॥ ३१ ॥

1) Some Mss add इति after अत्ति.

*a*) के 1·1. —*b*) ऐ 1·1·2–3. —*c*) अ 19·9·5 इमानि या पञ्चेन्द्रियाणि मनःषष्ठानि; गी 15·9. —*d*) मै 2·4; 6·28. —*e*) मै 6·27. —*f*) के 1·2; बृ 4·4·18. —*g*) ऐ 3·2. —*h*) मैत्रायणीसंधिः. —*i*) बृ 2·1·20; मुं 2·1·1; मै 6·26.

तस्माद्वा एतस्मादात्म[a]नः सर्वे प्राणाः सर्वे लोकाः सर्वे वेदाः सर्वे देवाः सर्वाणि च भूतान्युच्चरान्ति। तस्योपनिषत्—सत्यस्य[b] सत्यामिति। अथ यथाऽऽर्द्रै[c]धाग्नेरभ्याहितस्य पृथग्धूमा निश्चरन्त्येवं वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि विश्वा[1] भूतानि ॥ ३२ ॥

1) v. l. सर्वाणि निःश्वसितानि (cp बृ 2·4·10).

*a*) बृ 2·1·20. —*b*) ऋ 2·15·1 प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम्; बृ 2·1·20; छां 6·1. —*c*) छां 7·1.

पञ्चे[a]ष्टको वा एषोऽग्निर्यत्[c][1] संवत्सरः । तस्येमा इष्टका यो वसन्तो ग्रीष्मो वर्षाः[b] शरद्धेमन्तः । स शिरःपक्षसीपृष्ठपुच्छवानेषोऽग्निः पुरुषविधः[2][d] । सेयं पृथिवी प्रजापतेः प्रथमा चितिः । करैर्यजमानमन्तरिक्षमुत्क्षिप्त्वा वायवे प्रायच्छत् । प्राणो वै वायुः । प्राणोऽग्निः । तस्येमा इष्टका यः प्राणो[e]ऽपानो व्यानः समान उदानः । स शिरःपक्षसीपृष्ठपुच्छवानेषोऽग्निः पुरुषविधः[2] । तदिदमन्तरिक्षं प्रजापतेर्द्वितीया चितिः । करैर्यजमानं दिवमुत्क्षिप्त्वेन्द्राय प्रायच्छत् । असौ वा आदित्य इन्द्रः । सैषो[3]ऽग्निः । तस्येमा इष्टका यदृग्यजुःसामाथर्वाङ्गिरस इतिहासः पुराणम् । स शिरःपक्षसीपृष्ठपुच्छवानेषोऽग्निः पुरुषविधः[2] । सैषा द्यौः प्रजापतेस्तृतीया चितिः । करैर्यजमानस्याऽऽत्मविदेऽवदानं करोति । अथाऽऽत्मविदुत्क्षिप्य ब्रह्मणे प्रायच्छत् । तत्राऽऽनन्दी मोदी भवति ॥ ३३ ॥

1 ) Some drop यत्. —2 ) v. l. पुरुषविदः ( going with प्रजापतेः in the next sentence ? ). —3 ) Double संधि.

*a* ) प्र 5 in general. —*b* ) अ 6·55·2 ग्रीष्मो हेमन्तः शिशिरो वसन्तः शरद्वर्षाः स्विते नो दधात; 15·3·4 तस्या ग्रीष्मश्च वसन्तश्च द्वौ पादावास्ताम् । शरच्च वर्षाश्च द्वौ. —*c* ) Irregular use of dual in a compound. —*d*) तै 2·2–5; बृ 1·4·1. —*e* ) बृ 1·5·3; 3·9·16; छां 3·13·1–5; 5·19–23; तै 1·7; प्र 3·5; 4·4; मै 2·6; 6·9.

पृथिवी गार्हपत्यः । अन्तारिक्षं दक्षिणाग्निः । द्यौराहवनीयः । तत एव पवमान[1]पावकशुचय आविष्[a]कृतमेतेनास्य यज्ञम्[b] । यतः पवमानपावकशुचिसंघातो हि जाठरः । तस्मादग्निर्यष्टव्यश्चेतव्यः स्तोतव्योऽभिध्यातव्यः । यजमानो हविर्गृहीत्वा देवताभिध्यानमिच्छति ।

हिरण्यवर्णः शकुनो हृद्यादित्ये प्रतिष्ठितः ।
मद्गुर्हंसस्तेजोवृषः सोऽस्मिन्नग्नौ यजामहे ॥

इति चापि मन्त्रार्थं विचिनोति । तत्[d] सवितुर्वरेण्यं भर्गोऽस्याभिध्येयम् । यो बुद्ध्यन्तस्थो ध्यायीह मनःशान्तिं[e]पदमनुसरत्यात्मन्येव धत्ते । अत्रेमे श्लोका भवन्ति—

यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति ।
तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति ॥
स्वयोनावुपशान्तस्य मनसः सत्यका[2]मतः ।
इन्द्रियार्थविमूढस्यानृताः कर्मवशानुगाः ॥

चित्तमेव हि संसारस्तत् प्रयत्नेन शोधयेत् ।
यच्चित्तस्तन्मयो भवति गुह्यमेतत् सनातनम् ॥
चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् ।
प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमव्ययमश्नुते ॥
समासक्तं यथा चित्तं जन्तोर्विषयगोचरे ।
यद्येवं ब्रह्मणि स्यात् को न मुच्येत बन्धनात् ॥
मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च ।
अशुद्धं कामसंपर्काच्छुद्धं कामविवर्जितम् ॥
लयविक्षेपरहितं मनः कृत्वा सुनिश्चलम् ।
यदा यात्यमनीभावं तदा तत् परमं पदम् ॥
तावन्मनो निरोद्धव्यं हृदि यावत् क्षयं गतम्[3] ।
एतज्ज्ञानं च मोक्षं च शेषान्ये[4] ग्रन्थविस्तराः[5] ॥
समाधिनिर्धूत[6]मलस्य चेतसो निवेशितस्याऽऽत्मनि यत् सुखं भवेत् ।
न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन[7] गृह्यते ॥
अपामापोऽग्निरग्नौ वा व्योम्नि व्योम न लक्षयेत्[8] ।
एवमन्तर्गतं यस्य मनः स परिमुच्यते ॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासङ्गि[9] मोक्षे[10] निर्विषयं स्मृतम् ॥ इति ॥

अतोऽनग्निहोत्र्यनाग्निचिदज्ञानभिध्यायिनां ब्रह्मणः पदव्योमानुस्मरणं विरुद्धम् । तस्मादग्निर्यष्टव्यश्चेतव्यः स्तोतव्योऽभिध्यातव्यः ॥ ३४ ॥

1 ) v. l. पवमानः पावकः शुचिर्यः. —2 ) v. l. सत्यकामिनः —3 ) v. l. गतक्षयम्. —4 ) A case of double संधि—शेषाः + अन्ये. —5 ) v. l. ग्रंथिविस्तराः. —6 ) v. l. निर्धौत. —7 ) v. l. °करणेति = करणे + इति—a case of double संधि ? —8 ) v. l. लक्ष्यते. —9 ) v. l. विषयासक्तम्. —10 ) v. l. मुक्त्यै.

*a* ) छां 5·24; मै 6·9. —*b* ) यज्ञम् *neu.* —*c* ) Irregular construction : सः for तम्. —*d* ) ऋ 3·62·10. —*e* ) अंगुत्तरनिकाय 2·18. —*f* ) छां 3·14·1; गी 8·6; धम्मपद 1·1 मनोपुब्बंगमा धम्मा मनोसेट्ठा मनोमया. —*g* ) गौका 3·31–32. —*h* ) बृ 4·4·12–13, 15–17; छां 7·26·2; तै 2·9; के 2·2–3; क 5·12; 6·12–15; ई 6, 7; श्वे 4·18; मुं 2·2·8; 3·2·2, 8; मांका 1·16.

नमोऽग्नये पृथिविक्षिते लोकस्पृते[1] लोकमस्मै यजमानाय देहि। नमो वायवेऽन्तरिक्षाक्षिते लोकस्पृते[1] लोकमस्मै यजमानाय देहि। नम आदित्याय दिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि। नमो ब्रह्मणे सर्वक्षिते सर्वस्पृते[1] सर्वमस्मै यजमानाय देहि।

हिरण्[b]मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत् त्वं पूषन्नपावृणु सत्यधर्माय विष्णवे ॥

यो[d]ऽसा आदित्ये पुरुषः सोऽसा अहमिति । एष ह वै सत्यधर्मो यदादित्यस्याऽऽदित्यत्वम् । तच्छुक्लं पुरुषमलिङ्[f]गं नभसोऽन्तर्गतस्य तेजसोऽꣳशमात्रम् । एतद्यदादित्यस्य मध्ये इवेत्यक्षिण्यग्नौ च। एतद् ब्रह्म। एतदमृतम्। एतद्भर्गः। एतत् सत्यधर्मो नभसोऽन्तर्गतस्य तेजसोऽꣳशमात्रमेतद्यदादित्यस्य मध्येऽमृतम् । यस्य हि सोमः प्राणा वाऽप्ये[h]यङ्कुराः । एतद् ब्रह्म । एतदमृतम् । एतद्भर्गः । एतत् सत्यधर्मो नभसोऽन्तर्गतस्य तेजसोऽꣳशमात्रमेतद्यदादित्यस्य मध्ये यजु[i]र्दीप्याति ।

ओमापो[j]ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् ।
अष्टपादꣳ शु[k]चिꣳ हꣳसं त्रिसूत्रमणुमव्ययम् ।
द्वि[l]धर्मो[3]न्धं ते[m]जसेन्धं सर्वं पश्यन् पश्यति ॥

नभसोऽन्तर्गतस्य तेजसोऽꣳशमात्रमेतद्यदादित्यस्य मध्ये उदित्वा मयूखे भवतः। एतत् सावत् सत्यधर्मः। एतद्यजुः। एतत् तपः। एतदग्निः। एतद्वायुः। एतत् प्राणः। एतदापः। एतच्चन्द्रमाः । एतच्छुक्रम् । एतदमृतम् । एतद् ब्रह्मविषयम्[4] । एतद्भानुरर्णवः । तस्मिन्नेव यजमानाः सैन्धव इव विलीयन्ते। एषा वै ब्रह्मैकता[5] । अत्र हि सर्वे कामाः समाहिता इति। अत्रोदाहरन्ति—

अꣳशुधारय इवाणु[6]वातेरितः सꣳस्फुरत्यसावन्तर्[7]गः सुराणाम् ।
यो हैवंवित् स सवित् स द्वैतवित् सैकधामेतः स्यात् तदात्मकश्च ॥
ये बिन्दव इवाभ्युच्चरन्त्यजस्रं विद्युदिवाभ्रार्चिषः परमे व्योमन् ।
तेऽर्चिषो वै यशस आश्रयवशाज्जटाभिरूपा इव कृष्णवर्त्मनः ॥ ३५ ॥

1) v. l. लोकस्मृते which is obviously wrong. —2) ई 15 reads हृष्टये for विष्णवे here; cp बृ 5·15·1. —3) v. l. त्रिवर्त्मानम् for द्विधर्मोन्धम्. —4) v. l. ब्रह्मविषयः. —5) v. l. ब्रह्मैक्यता; cp सायुज्यत्वं (double abstraction as in मै 6·22). —6) v. l. अणुतेरिताः. —7) v. l. अन्तर्गतः.

*a* ) तैसं 7·5·24·1. —*b* ) ई 15; बृ 5·15·1. —*c* ) ई 15 ( and बृ 5·15·1) reads दृष्टये for विष्णवे here. —*d* ) ई 16. —*e* ) ऋ 10·34·8 देव इव सविता सत्यधर्मा; 10·121·9 यो वा दिवं सत्यधर्मा जजान. —*f* ) श्वे 5·10. —*g* ) छां 3·1–11. —*h* ) Irregular संधिः or प्रमादपाठः ? —*i* ) तै 2·3. —*j* ) तैआ 10·15·1; 10·28·1. —*k* ) ऋ 4·40·5 हंसः शुचिषद्; क 5·2. —*l* ) Irregular for द्विधर्मान्धम्. —*m* ) Irregular for तेजसेद्धम्; cp तैब्रा 8·12·9·7 येन सूर्यस्तपति तेजसेद्धः. —*n* ) Why no संधि? It cannot go with मयूखे (*neu. dual*), which would make it प्रगृह्य. —*o* ) उदित्वा ( archaic ) for उदित्य. —*p* ) मयूख ( originally *a wooden peg*; cp ऋ 7·99·3 दाधर्थ पृथिवीमभितो मयूखैः or ऐब्रा 5·15 मयूखं वान्ततो धारणाय निहन्यात् ) means here *a ray*, which is perhaps the oldest reference in Vedic literature; however cp निघण्टु ( 1·5·12 ) where मयूख is listed as रश्मिनाम; मै 6·26, 31. —*q* ) सवित् as opposed to द्वैतवित्, स means ' one ' as in सकृत्. —*r* ) ऋ 3·22·2 त्वेषः स भानुरर्णवो नृचक्षाः ; वासं 12·48; तैसं 4·2·4·3; मैसं 2·7·11; कासं 16·11; शब्रा 7·1·1·23. —*s* ) बृ 2·4·12; छां 6·13·1–2. —*t* ) छां 8·1·5; मै 6·30,38. —*u* ) पा 3·13·18, धारयतीति धारयः ( काशिका ).

द्वे वाव खल्वेते ब्रह्मज्योतिषो रूपके । शान्तमेकꣳ समृद्धं चैकम् । अथ यच्छान्तं तस्याऽऽधारं खम् । अथ यत् समृद्धमिदं तस्यान्नम् । तस्मान्मन्त्रौषधाज्यामिष[1]पुरोडाशस्थालीपाकादिभिर्यष्टव्यमन्तर्वेद्याम् । आस्न्य[2]वशिष्टैरन्नपानैश्चाऽऽस्यमाहवनीयमिति मत्वा । तेजसः समृद्ध्यै पुण्यलोकविजित्यर्थाय । अमृतत्वाय च । अत्रोदाहरन्ति । अग्निहोत्रं जुहुयात् स्वर्गकामः । यमराज्यमग्निष्टोमेनाभिजयाति[3] । सोमराज्यमुक्थेन[4] । सूर्यराज्यꣳ षोडशिना । स्वाराज्यमतिरात्रेण । प्राजापत्यमासहस्रसंवत्सरान्तक्रतुनेति ।

वर्त्याधारस्नेहयोगाद्यथा दीपस्य सꣳस्थितिः ।
अन्तर्याण्डोपयोगादिमौ स्थितावात्मशुची तथा ॥ ३६ ॥

1 ) v. l. औषधाज्यामिव. —2 ) v. l. आस्ये for आस्नि. —3 ) v. l. अभियजति. —4 ) v. l. उक्थ्येन.

*a* ) Cp पा 6·2·131 वर्ग्यादयश्च for अन्तर्य.

तस्मादोमित्यनेनैतदुपासीतापरिमितं तेजः । तत् त्रेधाऽभिहितमग्नावादित्ये प्राणे । अथैषा नाड्यन्नबहुमित्येषाऽग्नौ हुतमादित्यं गमयति । अथादित्ये यो रसोऽस्रवत् स उद्गीथं वर्षति । तेनेमे प्राणाः । प्राणेभ्यः प्रजा इति । अत्रोदाहरन्ति । यद्धविरग्नौ हूयते तदादित्यं गमयति । तत् सूर्यो रश्मिभिर्वर्षति । तेनान्नं भवति । अन्नाद् भूतानामुत्पत्तिरिति । एवꣳ ह्याह—

अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ ३७ ॥

*a* ) बहु used in *mas.* in the sense of '*abundance*' is rather obscure. —*b* ) इत्येषा seems to be redundant. —*c* ) मनु 3·76.

अग्निहोत्रं जुह्वानो लोभजालं भिनत्ति । अतः संमोहं छित्त्वा न क्रोधान् स्तुन्वानः काममभिध्यायमानस्ततश्चतुर्जालं ब्रह्मकोशं भिन्ददतः परमाकाशमत्र हि सौरसौम्याग्नेयसात्त्विकानि मण्डलानि भित्त्वा ततः शुद्धः सत्त्वान्तरस्थमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वापरं धाम सत्यकामसर्वज्ञत्वसंयुक्तं स्वतन्त्रं चैतन्यं स्वे महिम्नि तिष्ठमानं पश्यति । अत्रोदाहरन्ति—

रविमध्ये स्थितः सोमः सोममध्ये हुताशनः ।
तेजोमध्ये स्थितं सत्त्वं सत्त्वमध्ये स्थितोऽच्युतः ॥

शरीरप्रादेशाङ्गुष्ठमात्रमणोरप्यणुं ध्यात्वाऽतः परमतां गच्छति । अत्र हि सर्वे कामाः समाहिता इति । अत्रोदाहरन्ति—

अङ्गुष्ठप्रादेशशरीरमात्रं प्रदीपप्रतापवद् द्विस्त्रिधा हि ।
तद् ब्रह्माभिष्टूयमानं महो देवो भुवनान्याविवेश ॥
ॐ नमो ब्रह्मणे नमः ॥ ३८ ॥

*a* ) मै 3·3; 6·28; तै 2·1–4. —*b* ) मै 6·27. —*c* ) मै 6·23. —*d* ) छां 7·24·1. —*e* ) छां 8·1·5; मै 6·30, 35.

॥ इति षष्ठः प्रपाठकः ॥

---

अग्निर्गायत्रं त्रिवृद्रथन्तरं वसन्तः प्राणो नक्षत्राणि वसवः पुरस्तादुद्यन्ति । तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति । अचिन्त्योऽमूर्तो गभीरो गुप्तोऽनवद्यो घनो गहनो निर्गुणः शुद्धो भास्वरो गुणभुगभयोऽनिर्वृत्तिर्योगीश्वरः सर्वज्ञोऽनघोऽप्रमेयोऽनाद्यन्तः श्रीमानजो धीमाननिर्देश्यः सर्वसृक् सर्वस्याऽऽत्मा सर्वभुक् सर्वस्येशानः सर्वस्याऽन्तरान्तरः ॥ १ ॥

Compare in general मै 7·1–5 with अ 11·4·13; तैआ 3·14; ऐआ 2·1; क 5·3; मुं 2·1·7 for प्राण and अपान; with बृ 3·1·10; 5·14·3; छां 1·3·3; तै 1·5; 2·2 for प्राण, अपान, व्यान and उदान; and with बृ 1·5·3; 3·1·26; 3·13·1–5; 5·19–23; तै 1·7; प्र 3·5; and मै 2·6; 6·4; 6·9 and 6·33 for all the five Prāṇas.

*a*) ऋ 10·130·4 अग्नेर्गायत्री अभवत् सयुग्वा. —*b*) ऋ 1·164·25 जगता सिन्धुं दिवि अस्तभायत्, रथन्तरे सूर्यं पर्यपश्यत्। गायत्रस्य समिधस्तिस्र आहुः ...; 10·181·1 रथन्तरमा जभारा वसिष्ठः ; छां 2·12·1–2; कौ 1·5. —*c*) बृ 3·9·3; छां 3·16·1. —*d*) मै 7·11.

इन्द्रस्त्रिष्टुप् पञ्चदशो बृहद्[a] ग्रीष्मो व्यानः सोमो रुद्रा दक्षिणत उद्यन्ति। तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तार्विवरेणेक्षन्ति। अनाद्यन्तोऽपरिमितोऽपरिच्छिन्नोऽपरप्रयोज्यः स्वतन्त्रोऽलिङ्गोऽमूर्तोऽनन्तशक्तिर्धाता भास्करः ॥ २ ॥

*a*) गी 10·35.

मरुतो जगती सप्तदशो वैरूपं वर्षा अपानः शुक्र आदित्याः[a] पश्चादुद्यन्ति। तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति। तच्छान्तमशब्दमभयमशोकमानन्दं[b] तृप्तं स्थिरमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वापरं धाम[1] ॥ ३ ॥

1) Some Mss add इति after धाम to denote the end of the section.

*a*) ऋ 2·27·1 इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि. —*b*) क 3.9; मै 6·23, 26.

विश्वे[a] देवा अनुष्टुबेकाविंशो[b] वैराजः शरत् समानो वरुणः साध्या[c] उत्तरत उद्यन्ति। तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति। अतः[1] शुद्धः पूतः शून्यः शान्तोऽप्राणो निरात्माऽनन्तः ॥ ४ ॥

1) v. l. अन्तःशुद्धः; see मै 6·28.

*a*) छां 2·24·1, 14, 16; cp श्वे 2·5, the same as ऋ 10·13·1. —*b*) अ 8·9·20; वासं 10·13; 14·24; नि 7·11. —c) ऋ 1·164·50; 10·90·7, 16; शब्रा 3·7·1·25; 10·2·2·3; 13·4·2·16; नि 12·35; मनु 1·22.

मित्रावरुणौ पङ्क्तिस्त्रिणवत्रयस्त्रिंशौ शाक्वररैवते हेमन्ताशिशिरा उदानोऽङ्गिरसश्चन्द्रमा ऊर्ध्वा उद्यन्ति। तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तार्विवरेणेक्षन्ति[a]। प्रणवाख्यं प्रणेतारं भारूपं विगतनिद्रं विजरं विमृत्युं विशोकम्[b] ॥ ५ ॥

*a*) Sporadic परस्मैपदी form; cp क 4·1 ( ऐक्षत् ). —*b*) मै 6·4; 6·25.

शनिराहुकेतूरगरक्षोयक्षनरविहगशरभेभादयोऽधस्तादुद्यन्ति । तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति । यः प्राज्ञो विधरणः सर्वान्तरोऽक्षरः शुद्धः पूतो भान्तः क्षान्तः शान्तः ॥ ६ ॥

*a*) For शनैश्चर cp ऋ 8·45·11 शनैश्चियन्तः; 8·91·3 शनैरिव शनकैरिव; तांब्रा 7·9·11 यथांकुली पुत्रान् सन्दश्यासंभिन्दन्ती हरति यथा वातोऽप्सु शनैर्वाति; मै 6·28.

एष हि खल्वात्माऽन्तर्हृदयेऽणीयानिद्धोऽग्निरिव विश्वरूपः । अस्यैवान्नमिदं सर्वम् । अस्मिन्नोता इमाः प्रजाः । एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविचिकित्सोऽविपाशः सत्यसंकल्पः सत्यकामः । एष परमेश्वरः । एष भूताधिपतिः । एष भूतपालः । एष सेतुर्विधरणः । एष हि खल्वात्मेशानः शम्भुर्भवो रुद्रः प्रजापतिर्विश्वसृग्धिरण्यगर्भः सत्यं प्राणो हंसः शास्ताच्युतो विष्णुर्नारायणः । यश्चैषोऽग्नौ यश्चायं हृदये यश्चासा आदित्ये स एष एकः । तस्मै ते विश्वरूपाय सत्ये नभसि हिताय नमः ॥ ७ ॥

*a*) छां 3·14·3. —*b*) बृ 3·6; 3·8·3-4. —*c*) छां 8·7·1. —*d*) Mislection for अविजिघत्सः. —*e*) Mislection for अपिपासः. —*f*) छां 8·1·5. —*g*) बृ 3·8·9; 4·4·22; छां 8·4·1. —*h*) मै 6·8. —*i*) मै 6·17.

अथेदानीं ज्ञानोपसर्गाः—राजन् मोहजालस्यैष वै योनिर्यदस्वर्ग्यैः सह स्वर्ग्यस्य । एष वाटचे[a][1] पुरस्तादुक्तेऽप्यधःस्तम्बेनाऽऽश्लिष्यन्ति । अथ ये चान्ये ह नित्यप्रमुदिता नित्यप्रसविता नित्ययाचनका नित्यं शिल्पोपजीविनः । अथ ये चान्ये ह पुरयाचका[2] अयाज्ययाजकाः शूद्रशिष्याः शूद्राश्च शास्त्रविद्वांसः । अथ ये चान्ये ह चाटजटनटभटप्रव्रजितरङ्गावतारिणो राजकर्मणि पतितादयः । अथ ये चान्ये ह यक्षराक्षसभूतगणपिशाचोरगग्रहादीनामर्थं पुरस्कृत्य शमयाम इत्येवं ब्रुवाणाः । अथ ये चान्ये ह वृथा कषायकुण्डलिनः कापालिनः । अथ ये चान्ये ह वृथातर्कदृष्टान्तकुहकेन्द्रजालैर्वैदिकेषु परिस्थातुमिच्छन्ति तैः सह न संवसेत् । प्रकाशभूता वै ते तस्करा अस्वर्ग्याः । इत्येवं ह्याह—

नैरात्म्यवादकुहकैर्मिथ्यादृष्टान्तहेतुभिः ।
भ्राम्यल्लोको[3] न जानाति वेद विद्यान्तरं[4] तु यत् ॥ ८ ॥

1) v. l. वाटचैः. —2) v. l. पुरोयाचकाः. —3) v. l. भ्राम्यँल्लोकः. —4) v. l. वेदविद्यान्तरम्.

*a*) नि 2·1 अथाप्याादिविपर्ययो भवति—ज्योतिः, घनः, बिन्दुः, वाटच इति.

बृहस्पतिर्वै[a] शुक्रो भूत्वेन्द्रस्या[b]भयायासुरेभ्यः क्षयायेमामविद्यामसृजत् । तया शिवमाशिवमित्युद्दिशन्ति । आशिव ९ शिवमिति वेदादिशास्त्रहिं[1]सकधर्माभिध्यान[c]-मास्त्विति वदन्ति । अतो नैनामाभिधीयेत । अन्यथैषा वन्ध्येवैषा रतिमात्रं[d] फलमस्या वृत्तच्युतस्येव नाऽऽरम्भणीया । इत्येवं ह्याह—

दूरमेते[e] विपरीते विषूची अविद्या या च विद्येति ज्ञाता ।
विद्याभीप्सितं नाचिकेतसं मन्ये न त्वा कामा बहवो लोलुपन्ते ॥
विद्यां[f] चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥
अविद्यायामन्तरे[g] वेष्टयमानाः स्वयंधीराः पण्डितंमन्यमानाः ।
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥ ९ ॥

1) v. l. वेदादिशास्त्रम्.

a) For बृहस्पतिसव see तैब्रा 2·7·1·2 and शब्रा 5·2·1·19. —b) छां 8·7 ff. —c) धर्माभिध्यान in तत्त्वार्थाधिगमसूत्र (of the जैनs) 9·28 आर्तरौद्रधर्म्यशुक्लानि. —d) Cp क 2·1–2 प्रेयः *versus* श्रेयः. —e) क 2·4. —f) ई 11. —g) क 2·5; मुं 1·2·8 with वर्तमानाः for वेष्टयमानाः here.

देवासुरा[a] ह वै य आत्मकामा ब्रह्मणोऽन्तिकं प्रयातास्तस्मै नमस्कृत्वोचुः । भगवन् वयमात्मकामाः । स त्वं नो ब्रूहि । इत्यतश्चिरं ध्यात्वाऽमन्यत । अन्यता[1]त्मानो वै तेऽसुराः । अतोऽन्यतममेतेषामुक्तम् । तदिमे मूढा उपजीवन्त्याभिष्वङ्गिणस्तर्याभिघातिनोऽनृताभिशंसिनः । सत्यमिवानृतं पश्यन्ति इन्द्रजालवदिति । अतो यद्वेदे[b]ष्वभिहितं तत् सत्यम् । यद्वेदेषूक्तं तद्विद्वांस उपजीवन्ति । तस्माद्ब्राह्मणो नावैदिकमधीयीत । अयमर्थः स्यादिति ॥ १० ॥

1) v. l. अयतात्मानः.

a) छां 8·7·2. —b) क 1·17; 3·2; श्वे 2·6–7; मै 1·1; 4·3.

एतद्वाव तत् स्वरूपं नभसः खेऽन्तर्भूतस्य यत् परं तेजः । तत् त्रेधाऽभिहितमग्ना[a] आदित्ये प्राणे । एतद्वाव तत् स्वरूपं नभसः खेऽन्तर्भूतस्य यदोमित्येतदक्षरम् । अनेनैव तदुद्बुध्यत्युदयत्युच्छ्वासिति । अजस्रं ब्रह्मधीयालम्बं[b] वाऽत्रैव । एतत् समीरणे प्रकाशप्रक्षेपकौष्ण्यस्थानीयमेतद्धूमस्येव समीरणे नभसि प्रशाखयैवोत्क्रम्य स्कन्धात् स्कन्धमनुसराति । अप्सु प्रक्षेपको लवणस्येव । घृतस्य चौष्ण्यमिव ।

आभिध्यातु विंस्तृतिरिव । एतादित्यत्रोदाहरन्ति । अथ कस्मादुच्यते वैद्युतः । यस्मादुच्चारितमात्र एव सर्वꣳ शरीरं विद्योतयाति । तस्मादोमित्यनेनैतदुपासीतापरिमितं तेजः ।

पुरुषश्चाक्षुषो[d] योऽयं दक्षिणेऽक्षिण्यवास्थितः ।
इन्द्रोऽयमस्य जायेयꣳ सव्ये चाक्षिण्यवस्थिता ॥
समागमस्तयोरेव हृदयान्तर्गते सुषौ ।
तेजस्तल्लोहितस्यात्र पिण्ड एवोभयोस्तयोः ॥
हृदयादायता तावच्चक्षुष्यस्मिन् प्रतिष्ठिता ।
सारणी सा तयोर्नाडी द्वयोरेका द्विधा सती ॥
मनःकायाग्निमाहन्ति स प्रेरयाति मारुतम् ।
मारुतस्तूरसि चरन् मन्द्रं जनयाति स्वरम् ॥
खजाग्नियोगाद्धृदि संप्रयुक्तमणोर्ह्यणुर्द्विरणुः कण्ठदेशे ।
जिह्वाग्रदेशे त्र्यणुकं च विद्धि विनिर्गतं मातृकमेवमाहुः ॥
नं पश्यन् मृत्युं पश्यति न रोगं नोत दुःखताम् ।
सर्वꣳ हि पश्यन् पश्यति सर्वमाप्नोति सर्वशः ॥
चाक्षुषः[h] स्वप्नचारी च सुप्तः सुप्तात् परश्च यः ।
भेदाश्चैतेऽस्य चत्वारस्तेभ्यस्तुर्यं महत्तरम् ॥
त्रिष्वेकपाच्चरेद्ब्रह्म त्रिपाच्चराति चोत्तरे ।
सत्यानृतोपभोगार्थो[k] द्वैतीभावो महात्मन इति ।
द्वैतीभावो महात्मन इति ॥ ११ ॥

*a*) मै 6·37. —*b*) ब्रह्मधीयालम्बम् is विश्लिष्टपाठ for ब्रह्मधी + आलम्बम्. —*c*) मै 7·1. —*d*) बृ 4·2·2–3. —*e*) पाणिनीयाशिक्षा 6–7. —*f*) Cp στοιχεια (*letters of the alphabet*), an epithet of Athena at Epidaurus. —*g*) छां 7·26·2 पश्यः for पश्यन्. —*h*) Cp मां 2–7. —*i*) मां 7; मै 6·19. —*j*) ऋ 10·90·3–4; मांका 1·12–16; 3·33f; छां 3·12; 3·18; 4·58; बृ 5·14. —*k*) मै 3·2.

॥ इति सप्तमः प्रपाठकः ॥

॥ इति मैत्रायण्युपनिषत् ॥

---

# ॥ बाष्कलमन्त्रोपनिषत् ॥

[This Upaniṣad, for a long time, was known only in Perso-Latin-German translation. Fortunately, however, one (or two) manuscripts have been found in Southern India. They are full of inaccuracies and we give below the text, as reconstructed and emended by our predecessors in the field. We have taken care to compare our text with the Adyar Mss themselves and found some interesting readings, duly acknowledged. The Upaniṣad seems to be a part of the बाष्कलसंहिता of the ऋग्वेद, which is no longer extant.]

मेधा॑तिथिं काण्वमिन्द्रो जहार द्या॑[1] मे॑ष[b]भूयोपगतो विद्वानः ।
तमन्य इत्तम॑नं परिभाद् पद एनं नियुं॑[d]जे परस्मिन् ॥ १ ॥

1) Is it द्याम् ? The gloss reads द्याः ( = स्वर्गलोकान् ).

*a*) The legend is referred to in ऋ 8·2·40 इत्था धीवन्तमद्रिवः काण्वं मेध्यातिथिं (*sic*) मेषो भूतोऽभि यन्नयः; cp षब्रा 1·1·1 मेधातिथेर्मेष इति मेधातिथिं ह काण्वायनं मेषो भूत्वा जहार; शब्रा 3·3·4·18 quotes षब्रा passage; जैब्रा 2·79 मेधातिथेर्ह मेषो भूत्वा राजानं पपौ; तैआ 1·12·3. —*b*) ऋ 1·51·1 अभि त्यं मेषं पुरुहूतमृग्मियमिन्द्रं... —*c*) बा 24. —*d*) For नियुयुजे with haplology; cp ऐब्रा 7·16 तं स निनियोज for नियुयोज; छां 3·11 निम्लोच for निमुम्लोच.

को ह स्मैष भवसि [a]व्यवायो नावायो म इह शश्वदस्ति ।
सुशेवमिच्चङ्क्रमसि प्रपश्यन्नित्था न कश्चोरणमाचचक्षे ॥ २ ॥

*a*) Cp in the next pāda : न अवायः; व्यवाय occurring in प्रातिशाख्य, technical and later classical literature.

नेमामस्पृक्षदिदुदस्यमानः को अद्धाऽमूमभि चङ्क्रमीति ।
तदिच्छाधि योऽसि सर्ववित्तमो नं[1] त्वाऽऽनवद् ब्रह्म रिषा॑[a] मयस्विं[b] ॥ ३ ॥

1) Ms reads नेत्वा. Is it न इत् त्वा ? Deussen seems to translate this variant.

*a*) ऋ 1·41·2 पान्ति मर्त्यं रिषः (*abl.*). —*b*) Only here in Vedic literature; cp शतस्विन्, नमस्विन्, तरस्विन्, and रक्षस्विन्.

इन्द्रो नृचक्षा वृ॑[b]षभस्तुरा[1]षा॑[c]ट् प्रसा॑[d]साहिस्तपसा मा विचक्षे[2] ।
स इद्देवो[3] ऋतमन्व[4]यन्तं प्र॑[e] भीमकर्मा तवसो[5]ऽपविद्धा[b]त् ॥ ४ ॥

1 ) Ms containing the bare text begins here and ends with the word अध्वर्युः in verse 15. —2 ) Ms reads विचक्षेः. —3 ) देवो ऋतम् irregular संधि ! —4 ) Ms reads अन्ववन्तम् while the Com. paraphrases अन्वयन्तम्. —5 ) Read तवसा अपविध्यात् ( ? ); cp ऋ 6·75 4 अप शत्रून् विध्यतां संविदाने.

*a* ) ऋ 3·53·9 अस्तभ्नात् सिन्धुमर्णवं नृचक्षाः. —*b* ) ऋ 5·40·4 ऋजीषी वज्री वृषभस्तुराषाट्. —*c* ) ऋ 3·48 4 उग्रस्तुराषाळभिभूत्योजाः. —*d* ) आर्षेय 9; ऋ 1·100·3 तरद्वेषाः सासहिः पौंस्येभिः ; अ 3·21·3 यं जोहवीमि पृतनासु सासहिम्; पा 3·2·171 वार्तिक-सासहिवावहिचाचलिपापतीनां निपातनम्. Patañjali cites वृषा सहमानं सासहिः ( probably a quotation from lost literature ). —*e* ) The com. construes प्रभीम् अकर् मा.

कुहेव माऽवशामितो नया[1]तै कुहेव ते चित्र[a]तम प्रतिष्ठा ।
कुहा चिदेव स्वपि[b]ता पिता नो यो न वेद न हृतं हरन्तम् ॥ ५ ॥

1 ) Ms reads नयातैः.

*a* ) ऋ 6·38·1 अपादित उदु नश्चित्रतमः. —*b* ) Future of स्वप्—not स्व + पिता.

प्रत्यङ्ङ्वाङ् प्राङ्ङ्तरौ च नेह नाहमेनाननुपतास्थि[a]रद्धा ।
न मामिमे नूनमित्था पथो विदुर्ये मा नय[1]न्ति मिथु[b] चाकशा[c]नाः ॥ ६ ॥

1 ) Read न यन्ति ?

*a* ) °तास्थिः formation like सस्रि, वव्रि, चक्रि, पप्रि etc. in the Ṛgveda. —*b* ) ऋ 2·31·5 उत त्ये देवी सुभगे मिथूदृशा ( उषासा-नक्ता ). —*c* ) ऋ 1·164·20 अनश्नन्नन्यो अभिचाकशीति = मुं 3·1·1; श्वे 4·6; बृ 4·3·11.

परः स्मियानो वि[1]वरस्य शू[a]कं किं सीमिच्छरणं मन्यमानः ।
न ह त्वाहमप्रणीय त्वं[b]विष्ठामित्था जहामि शपमानमिन्नु ॥ ७ ॥

1 ) The com. reads अविवर्.

*a* ) Cp शूल and सूची; Avestā *sūkā*. —*b* ) ऋ 10·168·2 सं प्रेरते अनु वातस्य विष्ठाः ; अ 12·1·5 गवामश्वानां वयसश्च विष्ठाः ; तैब्रा 3·7·5·3 देवानां विष्ठामनु यो वितस्थे.

अहमास्मि जरितॄ[a][c]णामु दावा[b] अहमाशि[e]र्महमिदं दध[d]ग्वान् ।
अहं विश्वा भुवना विचक्षन्नहं देवानामासं[f]न्नवोर्दः[g] ॥ ८ ॥

Cp in general गीता 9·16 ff.

*a* ) ऐब्रा 3·38 यजमानो जारिता. —*b* ) Cp दावा in वसुदावा ( ऋ 2·27·12 ), वाजदावा ( ऋ 8·2·34 ) and भूरिदावा ( ऋ 9·87·4 ); पा 3·2·74. —*c* ) ऋ 1·134·6 विश्वा इत्ते धेनवो दुह् आशिरम्. —*d* ) Perf. parti. of दह् ? —*e* ) Com. reads

विचक्षत् and perhaps rightly. —*f*) आसन् ( Vedic locative ); cp ऋ 3·26·7 घृतं मे चक्षुरमृतं म आसन्. —*g*) अवोद: ( = अवस् + अद् ), cp ऋ 4·21·10 भक्षीय ते अवसो दैव्यस्य; cp similar words in ऋ—आमाद:, क्रव्याद:, मध्वद:, यवाद:, सोमाद:, हविरद: etc.

**मम प्रतिष्ठा भुव आण्डकोशा वि[a] चैमि सं[a] च हि नु यो[1] वि[b]रप्शी ।**
**[2]अ[c]हन्नहिं पर्वते शिश्रियाणमुग्रो नु[3] कं तवसा[c]वस्यु रद्धा ॥ ९ ॥**

1 ) Ms reads वा विराशि: (?). —2 ) ऋ 1·32·2 अहन्नहिं पर्वते शिश्रियाणम् seems to be copied अहन् नु अहिम् ? —3 ) No need of emending this as न्वहम्.

*a* ) श्वे 4·11. —*b* ) ऋ 4·17·20 एवा न इन्द्रो मघवा विरप्शी; 4·20.2 तिष्ठाति वज्री मघवा विरप्शी; —*c* ) " Helping willingly "; cp ऋ 4·16·11 यासि कुत्सेन सरथमवस्यु:; 5·31·10 कविश्चिदेषो अजगन्नवस्यु:; 5·46·1 तां वहामि प्रतरणीमवस्युवम्.

**प्र[a] वक्षणा आभिदं पर्वतानां यत् सीमिन्द्रो अकरोदनीकै[b]: ।**
**को[c] अद्धा वेद क इह प्रवोचत् को अन्नवदभिमा[d]तिं विजघ्नुषं[e]: ॥ १० ॥**

*a* ) ऋ 1·32·1 प्र वक्षणा अभिनत् पर्वतानाम्. —*b* ) ऋ 1·168·9 त्वेषमयासां मरुतामनीकम्; 6·47·28 इन्द्रस्य वज्रो मरुतामनीकम्; 8·96·9 तिग्ममायुधं मरुतामनीकम्. —*c* ) = ऋ 3·54·5; 10·129 6. —*d* ) ऋ 3·51·3 अभिमातिहनमिन्द्रम्. —*e* ) ऋ 1·32·14 जघ्नुष इन्द्रस्य.

**को म अवो दाशुषो विष्वगूतीरित्था ददृश्रे भुवनाधि विश्वा ।**
**[a]रूपंरूपं जनुषा[b] बोभवीमि मायाभिरेको अभिचाकशान: ॥ ११ ॥**

*a* ) ऋ 3·53·8 रूपंरूपं मघवा बोभवीति माया: कृण्वानस्तन्वं परि स्वाम्; 6·47·18 रूपंरूपं प्रतिरूपो बभूव...इन्द्रो मायाभि: पुरुरूप ईयते. —*b* ) जनुषा ( right from the birth or origin ) ऋ 1·102·8 अशत्रुरिन्द्र जनुषा सनादसि.

**विश्वं[a] विचक्षे यम[b]यन्नभी[c]को नेशे[d] मे कश्च महिमानमन्य: ।**
**अहं[e] द्यावा पृथिवी आततानो[1] विभर्मि घ[f]र्ममवसे[2] जनानाम् ॥ १२ ॥**

1 ) Divide as आततान + उ. —2 ) v. l. अवसेज्जनानाम् = अवसा + इत् + जनानाम्.

*a* ) श्वे 6·11 ( साक्षी ). —*b* ) बृ 3·7·1, 4–23. —*c* ) अ-भी-क. —*d* ) ईशे = ईष्टे ( 3rd per. sg. the usual form ईष्टे occurs only once in ऋ; ऋ 7·101·2 यो विश्वस्य जगतो देव ईशे. ईश् usually governs genitive. but here accusative. —*e* ) ऋ 10·88·3 यो भानुना पृथिवीं द्यामुतेमामाततान रोदसी अन्तरिक्षम्. —*f* ) ऋ 5·30·15 घर्मश्चित्तप्त: प्रवृजे य आसीत्; अ 7·73·6 घर्मं सिञ्च पय उस्रियाया: ; ऐब्रा 1·18 तस्मादध्वर्यू घर्मं संभरत: ; शब्रा 14·1·1·10 तद्यत् घृङिडत्यपतत्, तस्माद् घर्म:.

अहमु ह प्रवँतिं यज्ञियामिमामहं वेद भुवनस्य नाभिम् ।
आ[1]पिः पिता सू[b]रहमस्य विष्वङ्ङहं दिव्या आन्तरि[2]क्ष्यास्तुकाँ वहम् ॥ १३ ॥

1 ) v. l. प्रापिः. —2 ) v. l. आन्तरिक्षाः.

*a* ) प्रवति from प्र + √वन् ( like प्रगति from प्र + √गम् ); cp ऋ 10·96·1. प्र ते वन्वे वनुषो हर्यतं मदम्. —*b* ) ऋ 1·32·9 उत्तरा सूरधरः पुत्र आसीत्. —*c* ) स्तुकाः = स्तोकाः ? Then it would mean ' *drops.* ' Cp ऋ 10·95·16 घृतस्य स्तोकं सकृदह्न आश्नाम्, तादेवेदं तातृपाणा चरामि.

अहं वे[1]दानामुत यज्ञानामहं छन्दसामविदं रयीणाम् ।
अहं पचामि सरसः परस्य यदिदेतीव सरिरस्य मध्ये ॥ १४॥

1 ) v. l. देवानाम्.

अहमिन्नु परमो जातवेदा यमध्वर्युरभि लोकंपृणैधीत् ।
यमन्वा[1]ह नभसो न पक्षी काष्ठाँ[b] भिन्दन् गोभिरितोऽमुतश्च ॥ १५ ॥

1 ) Ms reads अन्ववा for अन्वाह.

*a* ) Is लोकंपृणा Vedic instrumental ? For लोकंपृणा cp तैसं 5·5·3·6 त्रयोदश लोकंपृणा उपदधाति; 5·5·6·2 आत्मा वै लोकंपृणा; वासं 12·54 लोकं पृण; छिद्रं पृण; शब्रा 6·1·2·25 तदेधते तस्माल्लोकंपृणा एव भूयसीरुपदध्यात्; 9·1·2·19 दशेष्टका उपधाय लोकंपृणयाभिमन्त्रयते; 10·5·2·15 तस्मादेका सती लोकंपृणा सर्वमग्निमनुविभवति. —*b* ) ऋ 4·58·7 काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः.

अहमु यन्नपतता रथेन द्विषडाँरेण प्रधिनैकचक्रः ।
अहमिन्नु दि[b]द्युतानो दिवे[c]दिवे तन्त्रं पुपुष्वाँ[d]नमृतं वहामि ॥ १६ ॥

*a* ) आर = अर ( *spoke* ) only here ! Cp द्वादशार in ऋ 1·164·11 द्वादशारं न हि तज्जराय वर्वर्ति चक्रं परिद्यामृतस्य. —*b* ) ऋ 3·7·4 व्यंगेभिर्दिद्युतानः सधस्थे. —*c* ) दिवेदिवे locative, not dative. —*d* ) ऋ 10·71·1 ऋचां त्वः पोषमास्ते पुपुष्वान्.

अहं दिशः प्रदिशः आदिशँश्च विष्वक् पुनानः पर्येमि लोकम् ।
अहं विश्वा ओषधीर्गर्भं आधां याभिरिदं धि[b]नुयुर्दाशुषः प्रजाः ॥ १७ ॥

*a* ) वासं 6·19 adds विदिशः and उद्दिशः. —*b* ) तांब्रा 4·10·1 तदेनमधिनोन्महन्मर्या व्रतं यदिदमधिन्वीदिति तन्महाव्रतस्य महाव्रतत्वम्. —*c* ) पा 6·1·12 for absence of reduplication; ऋ 3·60·5 धियेषितो मघवन् दाशुषो गृहे.

अहं चरामि भुवनस्य मध्ये पुनरुच्चावचं[a] व्यश्नुवानः ।
यो मां[b] वेद निहितं गुहा[c] चित् स इदित्था वोभवीद्[d] आशयध्यै[e] ॥ १८ ॥

a ) तैसं 7·4·3·6 उच्चावचान् हि स्तोमानुपयन्ति; शब्रा 2·3·4·32 उच्चावचा इव हि पशवः; 13·5·1·7 उच्चावचं बहु कर्म क्रियते; बृ 4·3·13 उच्चावचमीयमानः. —b ) क 1·14; 2·20; तै 2·1. —c ) ऋ 1·67·6 गुहा गुहं गाः ( गुहा is instrumental of गुहा fem. ); 9·6·9 गुहा चिद्दधिषे गिरः. —d) ऋ 3·53·8. रूपंरूपं मघवा वोभवीति; शब्रा 2·2·3·16 तिर एव एतन वोभवत्; बा 11 & 12. —e ) ऋ 2·17·6. येना पृथिव्यां नि क्रिविं शयध्यै; 6·62·3 मनोजवेभिरिषिरैः शयध्यै.

अहं पञ्चधा[a] दशधा चैकधा च सहस्रधा नैकधा चासमत्र ।
मया ततमितीदम्[b][1] अश्नुते तदन्यथाऽसद्यादि मे असद्विदुः ॥ १९ ॥

1 ) v. l. ततमितीतीदम् ( one additional इति ! ).

a) छां 7·26·2. —b ) गी 9·4.

न मामश्नोति[a] जरिता न कश्च न मा अश्नोति परि गोभिराभिः ।
न मेऽनाश्वानुत[b] दाश्वानजग्रभीत् सर्वं इन्मामुपयन्ति विश्वतः[c] ॥ २० ॥

a ) क 2·23; मुं 3·2·3. —b ) पा 3·2·109 उपेयिवाननाश्वाननूचानश्च; तैब्रा 1·1·4·2 नास्य ब्राह्मणोऽनाश्वान् गृहे वसेत्; 3·11·8·2 तस्य स्म तिस्रो रात्रीरनाश्वान् गृहे वसतात्; बृ 4·4·22 ( तपसानाशकेन ); छां 8·5·3 अनाशकायनम्; क 1·8–9. —c ) तै 1·4; गी 4·11.

क शरारुः[a] क सृमरः[b] क नूरणः सर्वमिदं त्वत्त्वदि[c]तो वहामि ।
यन्मदिमे बिभ्याति तन्म एकं ते मे अक्षन्[d]नहमु ताननु क्षम् ॥ २१ ॥

a ) ऋ 10·86·9 अवीरामिव मामयं शरारुरभिमन्यते; पा 3·2·173 शॄवन्द्योरारुः. —b ) तैसं 5·5·16·1 अरण्याय सृमरः ( also वासं 24·39 ); पा 3·2·160 सृघस्यदः क्मरच्. —c ) On the use of त्वत्-त्वत् cp ऋ 7·101·3 स्तरीरु त्वद् भवति सूत उ त्वत्. —d ) ऋ 1·82·2 अक्षन्नमीमदन्त हि; पा 2·4·37 लुङ्सनोर्घस्लृ; 6·4·98 गमहनजनखनघसां लोपः क्ङित्यनङि.

यत्तप्यथा बहुधा मे पुराचित् तन्नु भुवेऽमुहरणो बोभुवे[a] ।
ऋतस्य[b] पन्थामसि प्रपन्नोऽयसे स मे सत्यमिदेकमेहि[1] ॥ २२ ॥

1 ) v. l. ईहि ( from ई ? ).

a ) Cp बा 11, 18. —b ) ऋ 1·124·3 ऋतस्य पन्थामन्वेति साधु; 10·66·13 ऋतस्य पन्थामन्वेमि साधुया; अ 17·1·16 ऋतस्य पन्थामन्वेषि विद्वान्.

अहं ज्योतिरहमृतं विनद्धि[a]रहं जातं[b] जनि जनिष्यमाणम्[b] ।
अहं त्वमहमहं त्वमिन्नु त्वमहं चक्ष्व विचिकित्सीम ऋज्वां[c] ॥ २३ ॥

*a* ) Cp नद्धिः ( *bond* ) in ऐब्रा 1·11 यज्ञस्य वर्सनध्यै. —*b* ) Cp ऋ 1·66·4 यमो ह जातो यमो जनित्वं; 4·18·4 अन्तर्जातिषु उत ये जनित्वाः; 10·45·10 उज्जातेन भिनददुज्जनित्वैः; मां 1 भूतं भवद् भविष्यत्. —*c* ) °मा + ऋज्वा = °म ऋज्वा *as per* पा 6·1·128 ऋत्यकः; ऋज्वन् ( like यज्वन् ) means ऋजु.

विश्वशास्ता विधरणो[a] विश्वरूपो रुद्रः प्रणीती[b] तमनः[c] प्रजापतिः ।
हंसो विशोको अजरः पुराण ऋतीयमानो[d] अहमस्मि नाम ॥ २४ ॥

*a* ) Cp छां 8·4·1; बृ 4·4·22; 6·3·1; मै 7·7. —*b* ) ऋ 3·51·7 तव प्रणीती तव शूर शर्मन्; 4·4·14 त्वोता तव प्रणीत्यश्याम वाजान्. —*c* ) बा 1. —*d* ) पा 3·1·29 ऋतेरीयङ्.

अहमस्मि जरिता[a] सर्वतोमुखः[b] पर्यारणः परमेष्ठी नृचक्षाः ।
अहं विष्वङ्ङहमस्मि प्रसत्वा[c]नहमेकोऽस्मि यदिदं नु किंच ॥ २५ ॥

*a* ) ऐब्रा 3·38 जरिता यजमानः —*b* ) Cp ऋ 10·81·3 विश्वतश्चक्षुरुत विश्वतोमुखः —*c* ) Cp सत्वन् in ऋ 9·87·7 गा गव्यन्नभि शूरो न सत्वा.

॥ इति वाष्कलमन्त्रोपनिषत् ॥

---

# ॥ छागलेयोपनिषत् ॥

[ Like the बाष्कलमन्त्रोपनिषत्, this Upaniṣad was long known through its Perso-Latin-German translation. It is available in Sanskrit from one single Ms in Adyar Library, Madras. We have been fortunate in comparing the printed text with the original Ms. ]

ॐ ऋषयो वै सरस्वत्यां सत्त्रमासत[a] । तेऽथ[1] कवषमैलूषं[b] दास्याः पुत्र[c] इति दीक्षाया[d] आच्छिदन् । ते होचुः—अप वा एतदृग्यजुषादप[e] साम्न इति । स होवाच—भगवन्तो यदिदं सत्रमाध्वै[f] यदृचोऽधीध्वै यद्यजूंषि यत् सामानि कस्यायं महिमेति । ते होचुर्ब्राह्मणा वाव स्मस्तेषामेवामिति[2] । स होवाच—यदिदामिच्छाचिदिच्छाचिद्दीक्षध्यै[3] किं तद्येन ब्राह्मण इति । ते होचुः—यदिदमृग्यजुषैरेवोपवत्वन्तो[g] जुहुवुर्यद्वैनमुपाघ्रासिषुर्यदुपानेषतैतद्‌ ब्राह्मण इति ॥ १ ॥

Cp in general ऐब्रा 2·19; कौब्रा 12·1,3.

1 ) Ms reads तेषाम्. —2 ) Ms reads एवामिति; unnecessarily emended by editors as एवमिति; cp पा 5·4·11–12 which enables us to justify the form एवम् as well as एवाम्. —3 ) i. e. इत्थाचित् इत्थाचित् ( in this way ).

*a* ) सत्त्र ( also written as सत्र ). —*b* ) कवष ऐलूष is the author of several सूक्तs of the Rigveda ( 10· 30–34 ); ऐब्रा 2·19; कौब्रा 12· 1,3. —*c* ) शांब्रा 12·3 तं हेम उपोदुर्दास्या वै त्वं पुत्रोऽसि; cp पा 6·3·21–22 षष्ठ्या आक्रोशे, पुत्रे अन्यतरस्याम्. —*d* ) दीक्षायै + आच्छिदन्. —*e* ) पा 5·4·77 ( ऋग्यजुष ). —*f* ) The root is √आस् ( a solitary irregular form ); cp पा 7·1·43 यजध्वैनमिति च ( for यजध्वम् + एनम् ), ऋ 8·2·37. —*g* ) उपवतीs are certain *riks* ( e. g. ऋ 9·18·1; 9·18·6 ) having the word उप at the beginning. उपवत्त्वम् might be उपवत्या going with जुहुवुः ( ? ); होम, उपाघ्राण and उपनयन are the rites which make a person ब्राह्मण. On उपाघ्राण cp शब्रा 11·8·3·10 अथ यदैव उपाजिघ्रन्ति अथ जानन्ति; मैसं 1·5·5 अथ यदुपवत्पदमाह ......

स हाविदूरके[1] एव शवशायितमात्रेयमच्छावदमुपदर्शयन्नुवाच[a]—यदिदमृग्यजुषैरुपवत्या जुहावोपाघ्रासीदथोपानेष्ट नैतदत्यगादिति । किं तदिति होचुः । स होवाच—नैमिषेऽमी शुनकाः[b] सत्त्रमासत । तेषामात्रेयोऽच्छावदः सर्वाण्येवावर्तयद्याज्या यदनुवाक्या यत् प्रातरनुवाको यत् प्रउग यदाज्यं यन्मरुत्वतीयमित्यथ

यन्महावीरसंभरणानि यदग्नेरभिवर्तनानि यद्राजाभिक्रयणानि यदभिपावित्राणि यदौपयामानि यदुपमन्त्रणान्यथ यत् त्रिवृत् पञ्चदशः सप्तदश एकविंशं इति। क्वास्य तदगादिति। ते हामुहन्। अथैते सर्व एवोपसमेत्योचुरुप नो नयस्वेम एव त इति। स ह स्मयमान उवाच—संपश्यध्वा एव मा प्रमदत। न होत्तमानधम उपनेतेति। ते होचुर्मैव स्मोपनयथा गतिस्तु त्वमिदिति॥ २॥

1 ) Printed editions read अविदूरे without any justification.

*a* ) Cp अच्छावाक in ऐब्रा 6·14 अस्ति अच्छावाकस्य प्रवरः नेति. —*b* ) Not referred to elsewhere in Vedic literature; cp शौनक descendant of शुनक. —*c* ) Cp अ 8·9·20 कथं गायत्री त्रिवृतं व्याप कथं त्रिष्टुप्पञ्चदशेन कल्पते...अनुष्टुप् कथमेकविंशः. —*d* ) Cp सं + √ दृश् in क 6·9 न संदृशे. —*e* ) Cp the idea in छां 5·3·7; 5·11·7; बृ 7·2·7. —*f* ) बृ 4·3·32 एषास्य परमा गतिः; क 3·11, मै 1·4; 4·1.

स होवाच—कुरुक्षेत्र एवोपसमेत्य ये बालिशास्तानुपाध्वै। ते व इदं प्रवक्ष्यन्तीति। ते ह तत एवोपसमेत्य कुरुक्षेत्रमुपजग्मुः। ते ह बालिशानेवोपासदन्। तानिम उपसीदत एव विदांचक्रुरिति कामुका इति। ते होचुर्यात् किमिव बालिशानुपासदत महाशाला वै महाश्रोत्रिया वर्षीयांसः स यन्महाशाला महाश्रोत्रिया वर्षीयांसः कुरुक्षेत्रमध्यासत इति। ते हान्योन्यस्याभिसमीक्षामासुः। ते हापश्यन्न हास्मान्मिथुचिदेवासाववोचत्—बालिशानेव चैतान् विचक्षेमेति। ते होचुः—नमस्यानतीव वचो रेचयिष्यथ यदन्तर्नोऽसाविह प्राहैयात् (?)। यथैव तु स्मोपसन्ना यथानसूयवो यथोपश्रद्दिन इति॥ ३॥

*a* ) बालिशाः not known in Vedic literature. —*b* ) From उप + √ आस्. The form is irregular. —*c* ) वर्षीयांसः as opposed to बालिशाः; comparative of वृद्ध see पा 6·4·157. —*d* ) स यत् is like स यथा ( बृ 4·5·8,9,10 etc ). —*e* ) ऋ 6·18·8 स यो न मुहे न मिथू जनो भूत्; वा 6; आर्षेय 8 शौनक 4.

ते होचुः—किं वा अस्मत् प्रतीच्छथेति। ते होचुः—नैमिषेऽमी शुनकाः सत्रमासत। तेषामात्रेयोऽच्छावदः सर्वाण्येवावर्तयत्। यद्याज्या यदनुवाक्या यत् प्रातरनुवाको यत् प्रउगं यदाज्यं यन्मरुत्वतीयमित्यथ यन्महावीरसंभरणानि यदग्नेरभिवर्तनानि यद्राजाभिक्रयणानि यदभिषावित्राणि यदौपयामानि यदुपमन्त्रणान्यथ यत् त्रिवृत् पञ्चदशः सप्तदश एकविंश इति। क्वास्य तदगाद्यदयं शवशायित-

मशयिष्टेति । ते होचुः—न हासंवत्सरवासिनमनुब्रूयादिति नः पूर्वेऽन्वशिषन् । यत् संवत्सरं वत्स्यथाथ वेदिष्यथेति । ते ह संवत्सरमूषुः ॥ ४ ॥

*a* ) बृ 2·1·16 क्वैष तदाभूत्, कुत एतदागात्. —*b* ) ऐआ 3·2·6 नानन्तेवासिने प्रब्रूयान्नासंवत्सरवासिने नाप्रवक्त्रे. —*c* ) के 1·3 इति शुश्रुम पूर्वेषाम्.

ततो ह बालिशा ऊचुः—अवार्त्तं वा संवत्सरमिमे ब्राह्मणाः । हन्तैषामनुब्रवामेति । ते ह गृहीत्वैवैनान् पथोऽभिसमीयुः । ते ह संक्रीडत एव कूबरिणो रथकट्यामविन्दन् । ते होचुः—संपश्यध्वमिति । किं हीति । कूबरिणमेव सोम्या इति । तथेति । कथमिवेति । यथैवोपसृत्वरो वार्धिस्तिर्यगुल्लुलन्तीभिरिव वीचिभिः शफाभिरेवोपस्कन्दन्नुत्प्लवेदेवं हैवैषोभिसृत्वराणामेव धुर्याणां चङ्क्रमतामरीणामुत्प्लवतीति । यथैवासौ प्रतिसृत्वरेण समः समेत्र क्रीडेदेवं हैष संक्रीडतीति । यथैवासावितश्चेतोऽमुतश्चामुतश्च संप्रद्रवत इवापशुष्यत इवोपस्कन्दमभिमृद्नीताभिपातयेदेवं हैष इतश्चेतश्चामुतश्च सम्प्रद्रवत इवोपशुष्यत इवोपस्कन्दमभिमृद्नात्यभिपातयाति । यथैवासौ राजानं वा राजपुरुषं वा निलयनं प्रापयेदेवं हैवैष यन्तारं निलयनं प्रापयतीति । ते होचुः—अपीदं साधीयाँ इति । साधीय इति होचुः । ते ह तस्यैव पन्थामनुप्रातिष्ठन्नन्तं ह सायाहन्येवोपसंपादयामासुः ॥ ५ ॥

1 ) Ms reads चंचमताम्. —2 ) Ms reads अरिणाम्. —3 ) Ms reads सनः. —4 ) Ms reads यत्तान्. —5 ) The long final due to interrogative construction ? —6 ) Ms reads प्रातिष्ठन् न तं ह etc.

*a* ) Irregular form of √ वस् *to dwell*. —*b* ) ऋ 5·44·13 अनुब्रुवाणो अध्येति न स्वपन्. —*c* ) शब्रा 4·6·9·11 जघन्यायां कूबर्यां साम अभिगायान्ति; मैसं 2·1·11 सा कुसितायी वामदेवरथस्थ कूबरमाच्छिनत्; कासं 10·5 तस्य कुसिदायै पूर्वस्य अतिद्रुतस्य कूबरं न्यमृणत्. —*d* ) Cp पा 4·2·50,51 meaning a रथसमूह. —*e* ) On सृत्वर see पा 3·2·163. —*f* ) वार्धि ( वार् + धि ) '*sea*,' a late word not found in Vedic lit. —*g* ) Can शफा be शाप (*floating substance in a river*; cp ऋ 7·18·5 शापं सिन्धूनाम्; 10·28·4 प्रतीपं शापं नद्यो वहन्ति; अ 3·24·3 वृष्टे शापं नदीरिव. —*h* ) नि 2·2-3 तद्धितसमासेषु...प्रविभज्य निर्ब्रूयात् ।...राज्ञः पुरुषो राजपुरुषः. —*i* ) पा 6·3·110 संख्याविसायपूर्वस्य अह्नस्य अहन् अन्यतरस्याम् ङौ.

तं यदावसायाश्वांस्तक्षापोह्यापागात् । अथ व्यलिष्टं । अदीदृशत् । कथमिवेति । ते होचुर्यथैतं काष्ठभारमानद्धमनुपश्यामस्तथैवावशो भूस्थः स्पन्दते । नेङ्गते, न विवर्तते, न च वीर्तं इति । ते ह बालिशा ऊचुः—यदयमीदृगभूत् किमस्यापागादिति ।

तक्षैवेति। तथैवेतत् सोम्या इति। आत्मा वास्य प्रचोदयिता करणान्यश्वाः[g] शिरा नद्ध्यो[h]ऽस्थीन्युपग्रहा[i] असृगाञ्जनं कर्म प्रतोदो वाक्यं क्वाणनं त्वगुपनाह[j] इति। स यथा प्रचोदयित्रापोज्झितो नेङ्गन्न रुरुवीतैवं हैष प्राज्ञेनात्मनापोज्झितो न ब्रूते, न चैत्यपि न श्वसित्यपि[1] पूयत्यपि श्वान उपधावन्त्यपि काकाः पतन्त्यपि गृध्रा आस्कन्दन्त्यपि शिवा जिघत्सन्तीति। ते तत एव द्रागिव[k] व्यज्ञासिषुः। ते ह पादयोरेवाभिमृश्य बालिशानूचुः—न ह वाव नस्तद्येन निष्कुर्म[l] इममेवेत्यञ्जलिं कृत्वोपास्थिषतेत्याह भगवान् छागलेय[m]स्त इमे श्लोकाः—

यथैतत् कूबरस्तक्ष्णापोज्झितो नेङ्गते मनाक्[2]।
परित्यक्तोऽयमात्मना तद्वद्देहो विरोचते ॥
यदस्य प्रधय[n]श्चक्रा[n] युगम[n]क्षो[o] वरत्रिका[p]।
प्रतोद[q]श्चर्मकील .... .... ....
.... .... .... ....
.... .... .... .... ॥ ६ ॥

1) Ms reads स्पशत्यपि. —2) Ms reads मनः, an obvious error.

*a*) ऋ 1·104·1 विमुच्या वयो अवसायाश्वान्; नि 1·17. —*b*) ऋ 9·112·1 तक्षा रिष्टं रुतं भिषक् ब्रह्मा सुन्वन्तामिच्छति. —*c*) तैसं 6·2·5·1 यद्वा अनीशानो भारमादत्ते वि वै स लिशते; —*d*) तांब्रा 12·5·14 इयं वाव तृतीयमहर् अदीदशत्. —*e*) वीते— √इ with वि (Ātmane.?). —*f*) छां 6·4·1 अपागात्; बृ 5·2·12 किमेनं न जहाति. —*g*) क 3·4 इन्द्रियाणि हयानाहुः —*h*) ऐब्रा 1·11 बर्सनध्यै (पा 3·2·182 uses the word नद्ध्री). —*i*) Cp प्रग्रह in क 3·3. —*j*) तैसं 3·3·9·2 देवानामेष उपनाह आसीत्; अ 9·4·5 देवानां भाग उपनाह आसीत् —*k*) द्राक् is a later word. —*l*) ऋ 10·97·9 यदामयति निष्कृथ; अ 2·9·5 यश्चकार स निष्करत्। स एव सुभिषक्तमः; शब्रा 12·4·2 1 अनार्तेनैव तदार्तं यज्ञस्य निष्करोति. —*m*) पा 4·1·117 (छागल); 4·3·109 (छागलेयिन्). —*n*) ऋ 1·164·48 द्वादश प्रधयश्चक्रमेकम्; 2·39·4 नावेव नः पारयतं युगेव नभ्येव न उपधीव प्रधीव; ऐब्रा 4·15 परियद्वा एतद्देवचक्रम् ... यौ अग्निष्टोमौ तौ प्रधी; बृ 1·5·5 —*o*) ऋ 10·89·4 यो अक्षेणेव चक्रिया शचीभिः. —*p*) ऋ 10·60·8 यथा युगं वरत्रया नह्यन्ति. —*q*) अ 15·2·1 वातः सारथी रेष्मा प्रतोदः; तांब्रा 17·1·14 उष्णीषं प्रतोदश्च.

॥ इति छागलेयोपनिषत् ॥

---

# ॥ आर्षेयोपनिषत् ॥

[ This Upaniṣad was long known only through Perso-Latin-German translation only. The printed editions of Madras and Dr. Belvalkar have been duly compared by us with the original solitary Ms of the Adyar Library and we have accepted or rejected the emendations and readings contained therein. ]

ॐ ऋषयो वै ब्रह्मोद्यम[a]माह्वयितवा[b] ऊचुः परस्परा[1]मिवानुब्रुवाणाः[c] । तेषां विश्वामित्रो[d] विजितीयामिव[e] मन्यमान उवाच—यदेतदन्तरे[2] द्यावापृथिवी अनश्नुवदिव[3] सर्वमश्नवद्यदिदमाकाशमिवेतश्चेतश्च स्तनयन्ति[f] विद्योतमाना[f] इवावस्फूर्जयमाना[f] इव तद्ब्रह्मेति । तस्योपव्याख्यानम्—यदिदमग्नि[4]भिर्ज्वलयन्ति, पोप्लूयन्त्य[g]द्भिः, अभिषीवयन्ति वद्ध्रीभिः, अभिमथ्नन्ति वरत्राभिः[h], अभिघ्नन्त्ययोघनैः[i], विध्यन्ति सूचीभिः[j], निखानयन्ति शङ्कुभिः[k], अभितृन्दन्ति पड्वीशिकाभिः[l], अभिलिम्पन्ति मृत्स्नयाभिः[m], तक्ष्णुवन्ति वासीभिः[n], कृषन्ति फालिभिः, न ह एव शक्नुवत इति नास्येशीमहि न नमतीयीमहि[o] ॥ १ ॥

1 ) Printed edns. read परस्पराम्. —2 ) Shall we read अन्तरेण ? Cp शब्रा 1·1·3·4 यदिदं अन्तरेण द्यावापृथिवी. —3 ) Shall we read अनश्नुवत् ? —4 ) Ms reads इष्टम् for इदम्.

a ) ऐब्रा 5·25 अथ प्रजापतेस्तनुरनुद्रवाति ब्रह्मोद्यं च; बृ 3·8·1, 12 ब्रह्मोद्यं जेता; also ब्रह्मवाद्यमवदेताम्; जै 3·8·2 ब्रह्मवाद्यं वदति; cp पा 3·1·123 छन्दसि निष्टर्क्य... ब्रह्मवाद्य...उपचाय्यपृडानि; also ब्रह्मवद्य in शांब्रा 27.4 समाप्तं ब्रह्मवद्यम्. —b ) शब्रा 2·5·3·18 अथर्षभमाह्वयितवै ब्रूयात्. —c ) ऋ 5·44·13 अनुब्रुवाणो अध्येति न स्वपन्; बृ 1·4·16. —d ) पा 6·3·128, 130 विश्वस्य...मित्रे चर्षौ. —e ) विजितिः— *fight, victory* ; तैसं 2·4·2·3 तां वाव देवा विजितिमुत्तमामसुरैः व्यजयन्त; शब्रा 2·2·4·18 इमां विजितिं व्यजयन्त येयमेषां विजितिः. —f ) वासं 22·26 विद्योतमानाय स्वाहा, स्तनयते स्वाहा, अवस्फूर्जते स्वाहा; तैआ 2·14 विद्युदग्निः...स्तनयित्नुर्वषट्कारः, यदवस्फूर्जति सोऽनुवषट्कारः. —g ) ऐआ 1·3·5 या अन्तरिक्ष्यास्ता हि पोप्लूयन्त इव. —h ) See our note —o ) on वरत्रिका in छागलेय 6. —i ) पा 3·3·82. —j ) ऋ 2·32·4 सीव्यत्वपः सूच्याऽच्छिद्यमानया. —k ) ऋ 1·164·48 त्रिशता न शंङ्कवो अर्पिताः षष्टिर्न चलाचलासः. —l ) ऋ 1·162·14 यच्च पड्वीशमर्वतः; 10·97·16 अथो यमस्य पड्वीशात् सर्वस्माद्देवकिल्बिषात्; छां 5·1·12; 6·1·13. —m ) पा 5·4·39 f मृदस्तिकन्, सस्नौ प्रशंसायाम्; शब्रा 14·3·2·21 मात्स्नया मृदा संसृज्य. —n ) ऋ 8·19·23 वाशीमग्निर्भरत उत् च अव च; 8·29·3 वाशीमेको बिभर्ति हस्त आयसीम्;

10·101·10 वाशीभिस्तक्षत अश्मन्मयीभिः; अ 10·6·4 यत्त्वा शिक्वः परावधीत् तक्षा हस्तेन वास्या. —*o* ) ऋ 4·57·8 शुनं नः फाला विकृषन्तु भूमिम्; 10·117·7 कृषन्नित् फाल आशितं कृणोति. —*p* ) Note the आत्मनेपद use.

तदु ह जमदग्निर्नानुमेने । आर्तमिव वा एष तन्मेने यदिदमन्तरेणैनदुपयन्ति, पर्यास इवैष दिवस्पृथिव्योरिति । स होवाच — अन्तरिक्षं वा एतद्यदिदमित्थेत्थोपव्याख्ये इति । महिमानं त्वमुष्येह पश्यामीति यादिदमास्मिन्नन्वायत्तमिति । स यदिदमेतस्मिन्नन्वायत्तं वेदाथ तथोपास्तेऽन्वायत्तो हैवास्मिन् भवति । तदेतदविद्वानेवास्मिन्नन्वायत्तमुपास्ते वीव पद्येत्, आर्तिमृच्छेत् । तस्मादेवमुपासीत ॥ २ ॥

*a* ) बृ 3·5·1 आर्तम्. —*b* ) ऐब्रा 5·4 इमं नु मायिनं हुव इति पर्यासो हववान्; शब्रा 3·1·2·18 अग्नेः पर्यासो भवति. —*c* ) पा 6·3·30 दिवसश्च पृथिव्याम्. —*d* ) वि + √पद् in षब्रा 5·6 आरम्भा वा विपद्यन्ते. —*e* ) तैसं 2·2·2·3 ताजगार्तिमार्च्छति; 2·2·4·7 स ईश्वर आर्तिमार्तोः ……न आर्तिमार्च्छति; शब्रा 3·2·2·15 यदि दीक्षितमार्तिर्विन्देत्.

तमितरः पप्रच्छ—कतमत्त्वमनार्तं मन्यस इति । तं होवाच—यदिदमिति द्यावापृथिव्योरनारम्बमिव नोपयन्ति नाभिचक्षते नाश्नुवन्ति । तस्योपव्याख्यानम्—यदिदमितश्चेतश्चाण्डकोशादुदयन्ति नापद्यन्त इव न विस्रंसन्त इव न स्खलन्तीव न पर्यावर्तन्त इव । न ह वा एनत् केचिदुपावन्तो विन्दन्ति नाभिपश्यन्ति । यदिदमेक इदप एवाहुस्तम एके ज्योतिरेकेऽवकाशमेके परमं व्योमैक आत्मानमेक इति ॥३॥

1 ) Ms reads आण्डकोशा उदयन्ति.

*a* ) तैब्रा 1·4·3·4 अनार्तेनैव आर्तं यज्ञस्य निष्करोति; शब्रा 9·2·2·3 एतद्वै वनस्पतीनामनार्तं जीवं यदार्द्रम्; तैआ 6·3·3 येनापुनादिन्द्रमनार्तमार्त्यै. —*b* ) छां 2·9·4 अनारम्बणानि; बृ 3·1·6 अनारम्बणम्. —*c* ) ऋ 8·3·21 उपेव दिवि धावमानम्; तैसं 2·1·1·1 वरुणमेव स्वेन भागधेयेन उप धावति. —*d* ) ऋ 10·129·2 तम आसीत्तमसा गूळ्हमग्रे. —*e* ) Deussen's German trans. adds प्राणः after ज्योतिः. —*f* ) Deussen thinks the last sentence ( यद्व …… इति ) to be an interpolation, because it is irrelevant.

तदु ह भरद्वाजो नानुमेने । यदिह सर्वे वेत्थेत्थेति व्यूदिरे नास्य तद्रूपं पर्याप्तमिति । स होवाच—आर्तमिवेदं ते विज्ञानमपि स्विदेनद्रोद्रस्योरेव पर्यायेणोपवन्वीमहि यदिदमित्थेत्थोपव्याख्यास्याम इति । महिमानं त्वेवास्योपासे । यदिदमत्रान्वायत्तमिति । स यदिदमत्रान्वायत्तं वेदाथ तथैवोपास्तेऽत्रैवान्वायत्तो भवति । स य इहान्वायत्तमिदमविद्वानेवैददुपास्ते पापीयान् भवति, आर्तिमार्च्छेत्यवम्रियते यदेवमेतदन्वायत्तमुपास्ते सर्वमायुरेति वसीयान् भवति । स य एतदेनमुपास्ते ॥ ४ ॥

1 ) Ms reads अपर्यारिणमिति for पर्याप्तामिति. —2 ) Ms reads पर्यारेणे for पर्यायेण. —3 ) Shall we read उपास्से ( 2nd pers. sg. )? —4 ) Ms reads अन्त्राभत्तम्. —5 ) Shall we read अथ प्रेव मीयते?

*a* ) Deussen's translation presupposes भूताकाशम् in place of रोदस्योः —*b* ) बृ 3·9·2; श्वे 6·1.

तमितरः पप्रच्छ—कतमत् त्वमनार्तं मन्यस इति । स होवाच—यदेतस्मिन् मण्डलेऽर्चिर्दीप्यते बम्भ्रम्यमाणमिव चाकश्यमानमिव[a] जाज्वल्यमानमिव देदीप्यमानमिव लेलिहानं[1] तदेव मे ब्रह्म । तस्योपव्याख्यानम्—यदिदमद्धैव पराः[b] परावतोऽभिपद्यन्ते संपन्नमेवैतत् संमितमेव यथोपयातमात्मैवाभिचक्षत इति । य एतदभिपद्येव गृह्णीयादथो विस्फुरन्तीव धावन्तीवोत्प्लवन्तीवोपश्लिष्यन्तीव न हैवाभिपद्यन्ते । तदिदमान्तिके दवीयो नेदीय इव दूरतो न वा अस्य महिमानं कश्चातीति[c] ॥ ५ ॥

1 ) Add one इव here as before.

*a* ) शब्रा 2·3·2·13 अङ्गाराः चाकश्यन्त इव; 11·8·3·10 तस्मादेते चाकश्यमाना इवैव न जानन्ति. —*b* ) ऋ 10·58·11 यत्ते पराः परावतो मनो जगाम दूरकम्. —*c* ) क 6·1 तदु नात्येति कश्चन.

तदु ह न मेने गौतमो यादिदमार्तमिव स्तिमितमिव[a] पर्यायेण[1] पश्यन्तीवेमं मोघं संविदाना इति । य इमे पुण्ड्राः सुह्माः[b] कुलुम्भा[2] दरदा बर्बरा इति । न ह वा असंविदाना[c] एव द्रागिवाभि तत् पद्यन्त इति । महिमानं त्वेवास्योपासे । य एतदस्मिन्नन्तर्हिरण्मयः[d] पुरुषो हिरण्यवर्णो हिरण्यश्मश्रुरानखाग्रेभ्यो दीप्यमान इव । स य एवमेनमुपास्तेऽतीव[e] सर्वा भूतानि तिष्ठति सर्वमायुरेति वसीयान् भवति । न ह वा एष परमतीवोदेति[f] । यस्त्वेनं परमतीवोद्यन्तं पश्यन्नुपास्ते पापीयान् भवति वीव पद्यत आर्तिमृच्छति । यस्त्वेनं परमनूद्यन्तं[g] वेदाथ तथोपास्ते परं[h] ज्योतिरुपसंपद्यते सर्वमायुरेति वसीयान् भवति । स य एवमेनमुपास्ते ॥ ६ ॥

1 ) Ms reads पर्यारेण. —2 ) Shall we read उलुम्बराः i. e. उदुम्बराः ?

*a* ) Cp स्तीम in अ 11·8·34 अप्सु स्तीमासु वृद्धासु शरीरमन्तराहितम्. —*b* ) ऐब्रा 7·18 त एते अन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूतिबा इति. —*c* ) छां 8·7·2 असंविदानौ —*d* ) छां 1·6·6. —*e* ) बृ 2·1·2 अतिष्ठाः; कौ 4·3; श्वे 3·14 अत्यतिष्ठत्; cp ऋ 10·90·1. —*f* ) क 4·9. —*g* ) क 5·15. —*h* ) छां 8·3·4 परं ज्योतिरुपसंपद्य; मै 2·2.

तमितरः पप्रच्छ — कतमत् त्वमनार्तं मन्यस इति। तं होवाच — विस्फुरन्तीरेवेमा लेलायन्तीरिव संजिहाना इव नेदीयसितमा इव दवीयसितमा एव, दवीयसितमा इव नेदीयसितमा एवेति। यदपि बहुधाचक्षीरन्न किंच प्रतिपद्यत इति तन्मे ब्रह्मेति ॥ ७ ॥

तदु ह वसिष्ठो नानुमेने। यदिमा विस्फूर्जयत एवाभिपद्यन्ते वीव यन्ति मिथुं[a] चेति विचक्षतेऽकाण्ड[b] इवेमा न ह वै परमित्था कश्चाश्नोत्यसंविदान इव। अथ ये संविद्रे[1]ते तदेतदन्तर्विचक्षत इति। महिम्नः पश्येमाविजान (?) इति। स य एवमिमा महिम्न एवास्य पश्यन्नुपास्ते महिम्न एवाश्नोति सर्वमायुरेति वसीयान् भवति। [2]यास्त्विमा अवयतीरेवोपास्ते न पराः संपद्यमाना नो एव परेति पापीयान् भवति वीवपद्यते प्र[3]मीयते। अथ य इमाः पराः संपद्यमाना एवोपास्ते परैव संपद्यते सर्वमायुरेति वसीयान् भवति[2] ॥ ८ ॥

1) Read संविद्रे (cp ऋ 7·56·2). —2- -2) Missing in Deussen's translation. —3) Correctly प्रेव मीयते.

a) तैब्रा 3·7·11·5 अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु; तैआ 1·11·6 अस्माज्जाता मे मिथू चरन्. —b) अकाण्डे not in Vedic literature.

तमितरः पप्रच्छ — कतमत् त्वमनार्तं मन्यस इति। स हाविज्ञानमेव प्रतिपेदे नाध्यवसायामिव यत्रैतदित्थेत्थेत्यभिपश्यति। अथ नेति नेत्येतदित्थेत्थेति। स वा अयमात्मा[b]ऽनन्तोऽजरोऽपारो न वा अरेऽबाह्योऽनन्तरः सर्वविद् भारूपो वि[c]धंसः प्रसरणोऽन्त[d]र्ज्योतिर्विश्वभु[e]क् सर्वस्य [f]वशी सर्वस्येशा[1g]नः सर्वमाधिक्षियन् न तमश्नोति कश्चन ॥

परो[h]वरीयांसमभिप्रणु[i]त्यमन्तजुषाणं भुवनानि विश्वा।
यमश्नं[j]वन्न कुशि[k]कासो आग्निं वैश्वानर[1]ममृतजातं गमध्य[2]यी ॥
भरे[l]भरे षु तमुपह्वयाम प्रसासहिं यु[m]ध्मामिन्द्रं वरेण्यम्।
सत्रासाहमवसे जनानां पुरुहूतमृग्मिणं विश्ववेदसम् ॥
अहिघ्नं तमर्णवे शयानं वा[3]वृहाणं तवसा परेण ॥ ९ ॥

1 ) Ms reads सर्वमभिक्षिपन्. —2 ) गमध्यै is correct. —3 ) Read वावृधानम्.

*a* ) मै 6·10, 30; सांका 23 अध्यवसायो बुद्धिः. —*b* ) बृ 2·5·19. —*c* ) छां 8·1·5 ( विजिघत्सः ); 8·7·1,3. —*d* ) बृ 4·3·7. —*e* ) मै 5·1; 6·9. —*f* ) बृ 4·4·22; क 5·12; श्वे 3·18; 6·12. —*g* ) ऋ 1·154·2 अधिक्षियन्ति भुवनानि विश्वा. —*h* ) जै 1·10·5. —*i* ) शांब्रा 24·8 अभिप्रणोनुमः. —*j* ) ऋ 8·90·6 प्र ते सुम्ना नो अश्नवन्. —*k* ) ऋ 3·26·1 गीर्भी रण्वं कुशिकासो हवामहे; 3·29·15 द्युम्नवद् ब्रह्म कुशिकास एरिरे. —*l* ) ऋ 7·32·24 भरेभरे च हव्यः; 10·63·9 भरेषु इन्द्रं सुहवं हवामहे. —*m* ) ऋ 1·55·2 सनात् स युध्म ओजसा पनस्यते. —*n* ) ऋ 2·21·3 सत्रासाहो जनभक्षो जनंसहः च्यवनो युध्मः. —*o* ) ऋ 1·100·4 ऋग्मिभिर्ऋग्मी.

तद्ु ह प्रतिपेदिरे । ते वाभित्राद्यैवोपसमीयुः । नमोऽग्नये । नम इन्द्राय । नमः प्रजापतये । नमो ब्रह्मणे नमो ब्रह्मणे ॥ १० ॥

॥ इत्यार्षेयोपनिषत् ॥

# ॥ शौनकोपनिषत् ॥

[ This prose Upanisad, also like the three earlier ones, was long known through the Perso-Latin-German translation. The solitary MS of the Adyar Library has been duly consulted by us in editing the Sanskrit text given below, along with the two earlier printed texts, and correct readings restored. ]

ॐ देवासुराः संयत्ता आसन् । तेषामिन्द्रो न प्रत्यपद्यत[1] । ते ह वसूनेव प्रातःसवनेषु पुरोधाय व्याजिगीषन्त । ते ह तुन्नेषु नाराशंसेषु ऋषीणां यज्ञवास्त्वभ्यायन् हनिष्याम वा एतद्वो यद्देवान् न पराभावयिष्यथेति । ते ह बिभ्यत एव स्तोकानुदकल्पयन् विजेष्यध्वे वावैतानन्विति । ते ह तत एवार्जिमा[2]च्छैस्तानन्वितरान पराभावयन् । ततो हेन्द्रोऽपश्यत् । स ह गायत्रीमेव प्रतिसंदिदेश । सा होवाच — बिभेमि वा एतदेतेभ्यो यथैतत् पराह्वतान्निति । स प्रणवमेवास्याः पुरोगमकरोदेष वाव ते गोप्यायेति[3] । सा होवाच — यदेष पुरोगा उदेष[4] मे भागधेयी स्यादिति । स होवाच — न ह वावैष त्वद्भागधेयी भवति । महान् वा अस्य महिमा न ह वा महीयांसो भागक्लृप्तिमभ्याभजन्तीति । विश्वमिन्नु समन्वालभध्वमिति । सेनान्यास्तु प्रथमजानाप्यायायिष्यसीति । ओमिति होवाच । स होवाच यत् प्रथमं नाभ्यकीर्तयो[5] नामग्राहमथ नानुवत्स्य इति । नामग्राहमेतेन सर्वमभिपद्यन्ते सर्वं वा एष सर्वमश्नातीति । अक्षरं वा एषः । तस्मादोमित्यनुजानन्ति ओमिति प्रतिपद्यन्त ओमित्यभ्याददत ओमित्यभिनिधापयन्ति । तदेतदक्षरं जैत्रमित्वरं सर्वाणि भूतान्यभ्यात्तं[6] यदनेकमेकं नानावर्णं नानारूपं नानाशब्दं नानागन्धं नानारसं नानास्पर्शमिति । अथो खल्वाहुरिन्द्रो वावैतदक्षरमिति । सर्वाणि ह वा इमानि भूतान्येतदक्षरमन्वायत्तानि सर्वे वेदाः सर्वे यज्ञा इत्यथ खल्विन्द्रमन्वायत्तमिति ॥ १ ॥

1 ) Shall we add मुखं before प्रत्यपद्यत ? Cp ऐब्रा 2·25 वायुमुखं प्रथमः प्रत्यपद्यत. —2 ) Printed edition substitutes आर्तिम् which makes no sense ! —3 ) Shall we read गोपायितेति ? —4 ) Shall we read तदेष or उ एष ? —5 ) Ms reads °कीर्तयों for °यो which seems to be a double संधि as °कीर्तयः + ओम्. —6 ) Ms reads अभ्यातयत्.

*a*) तैसं 1·5·1·1; छां 1·2·1. —*b*) पा 8·2·56. —*c*) ऋ 10·57·3 मनो न्वा हुवामहे नाराशंसेन सोमेन; ऋ 10·85·6 नाराशंसी न्योचनी; अ 15·6·11 तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्च अनुव्यचलन्; 20·127·1 इदं जना उप श्रुत नराशंसः स्तविष्यते; कासं 14·5 अनृतं हि गाथा अनृतं नाराशंसी. —*d*) तैसं 2·6·3·2 तदृषयो यज्ञवास्त्वभ्यवायन्; ऐब्रा 2·1 ततो वै मनुष्याश्च ऋषयश्च देवानां यज्ञवास्त्वभ्यायन्; शब्रा 12·3·4·1 अथ मम यज्ञवास्त्वेव, यज्ञवास्तावेव अहमास इति. —*e*) ऋ 3·21·3 तुभ्यं स्तोका घृतश्चुतः; ऐब्रा 2·12 तद्यत् स्तोकाश्चोतन्ति ...... तस्मादियं स्तोकशो वृष्टिर्विभक्ता उपाचरति; शब्रा 13·1·3·2 स्तोकीयासु वा अहमश्वमेधं संस्थापयामि (=तैब्रा 3·8·6·1,2,3). —*f*) उद् + क्लृप्; cp अ 12·4·41 या वशा उदकल्पयन् देवा यज्ञादुदेत्य (*hapax legomenon*). —*g*) ऐब्रा 2·25 हन्त आजिम् अयाम (*to run a race.*) Here आर्च्छन् (ऋच्छ्) has been substituted. —*h*) A classical word occurring here first. —*i*) पुरोगः is not a Vedic word. पुरोगाः is Vedic. Cp ऋ 1·188·11 पुरोगा अग्निर्देवानां गायत्रेण समज्यते; 10·124·1 असो हव्यवाळुत नः पुरोगाः; तैसं 3·2·4·4 नमः सखीनां पुरोगाणां चक्षुषे. —*j*) ऋ 3·28·4 अग्ने यह्वस्य तव भागधेयं न प्रमिनन्ति विदथेषु धीराः; 10·52·1 प्र मे ब्रूत भागधेयं यथा वः; शब्रा 2·4·3·5 तदेनं स्वेन भागधेयेन निर्भजति; पा 4·1·30; वार्तिक ३ on पा 5·4·36 भागरूपनामभ्यो धेयः. —*k*) छां 3·14·2; बृ 4·4·1. —*l*) ऋ 9·106·2 सोमो जैत्रस्य चेतति; तैब्रा 2·4·7·5 इन्द्र जैत्राय जज्ञिषे. —*m*) क 4·3 (रूप, शब्द, गन्ध, रस and स्पर्श). —*n*) क 2·15 सर्वे वेदाः.

स मन्द्रेणैवान्वाभक्तो विदिद्युतेऽञ्जसैव भ्रातृव्यानपहनानीति । तस्मान्मन्द्रं प्रातःसवनमभवद् यद् गायत्री तद्गायत्रं यद्वसवः तद्वसव्यम् । स ह प्रणव उवाच— यदहं सर्वं भवानि यद्गायत्री वै पुरोगाः तत् किं मे स्यादिति । गायत्रमन्वेव, गायत्री-मन्वेव त्वा सर्वरूपामिमं कृत्वा हिङ्कुर्वन्ति । स हापश्यन्नैतदञ्जसैव सर्वा रूपाण्येव-मभिचक्षीरन्निति । स हान्तत एवात्मानमुपसंहृत्य तावदेवाग्राहयत् । स विशृङ्ग एवाभवत् । तस्माद् विशृङ्गमेवैतद् इहानुद्रवन्ति । तदाहुर्यद्वा एतस्य वीर्यं यच्छुक्रं यज्ज्योतिर्यदमृतं यदजर्यं तदव इति । तस्मात् त एवातो ज्योतिरमृतमजर्यं प्रतिपद्यन्ते । ततो हासुराः पराभवन् । स एष इन्द्रः सर्वं यद्गायत्री उद्गीथो वसवः प्रातःसवनमिति । तदाहुः—सर्वं वा एतदिन्द्रो यज्जगद्यथैवेति ॥ २ ॥

*a*) ऐब्रा 3·44 यदा वा एष प्रातरुदेति मन्द्रं तपति तस्मान्मन्द्रया वाचा प्रातःसवने शंसेत्. —*b*) बृ 1·4·9 सर्वं भविष्यन्तः; 4·3·20 इदं सर्वोऽस्मि. —*c*) शब्रा 13·4·2·2 तद् यत् सर्वरूपो भवति; ऐब्रा 4·26 सर्वरूप एष पशुः; जै 1·27·6 (सर्वरूपः); मुं 2·1·9 (सर्वरूपाः). —*d*) ऋ 1·32·15 राजा शमस्य (विशृङ्गस्य) च शृङ्गिणो वज्रबाहुः.

ततो हासुराः पुनरेवोदपतिषन्त । ते ह माध्यन्दिनस्यैव सवनस्य पवमानेषु यज्ञवास्त्वभ्यायन् । तेषां जरितारो बिभ्यत एव वसँतीवरीरुपाकल्पयन् । ते ह

ताभिरेव जिघांसन्। तेषामिन्द्रो रुद्रानेव सेनान्यो[b]ऽकः। ते हाक्षीयन्त। स ह त्रिष्टुभमेव प्रतिसंददत्[1]। साऽब्रवीत् — बिभेमि वा एतदेतेभ्यो यथौजीयांसो बलीयांस इमे पराभवान्निति। स ह प्रणवमेवोवाच—पुरोगायमेवारभस्वेति[c]। सोऽब्रवीत् — किं मेऽतः स्यादिति यद्[2]हं स त्वं ममैव रूपेण न्यूङ्खयिष्यन्ति[d] त्वामिति। स हापश्यत् — सर्वमेव न्यूङ्खयन्तो मामभिचक्षीरन्निति। स ह सर्वमेवात्मानमुपसंहृत्य शृङ्गमेवागूहयत्। स ह विशृङ्ग एवाभवत्। तस्मादित्थैव न्यूङ्खयन्ति। ततो हासुराः पराभवन्। तस्माद्रुद्रानेव माध्यन्दिनं सवनं त्रैष्टुभं चेति॥ ३॥

1) Read प्रतिसंदिदेश? —2) Ms reads यद् असै ह स त्वम्. असै Atmane-form, which, however, would be solitary.

a) तैसं 6·4 2·1 वसतु नु नः इदामिति तद् वसतीवरीणां वसतीवरीत्वम्; ऐब्रा 2·20 याश्चेमाः पूर्वेद्युर्वसतीवर्यो गृह्यन्ते; शब्रा 3·9·2·2 रसवन्तं यज्ञं करोति, तस्माद् वसतीवरीरच्छैति; जैब्रा 3·115 वसतीवरीष्ववनीय सोममभिषुत्य भक्षयेयुरिति. —b) ऋ 9·96·1 प्र सेनानीः शूरो अग्रे रथानाम्. —c) Cp उरुगाय (ऋ 8·29·7 त्रीण्येक उरुगायो वि चक्रमे). —d) ऋ 10·94·3 न्यूङ्खयन्ते अधि पक्व आमिषि; ऐब्रा 5·3 तद्यच्चतुर्थमहन्यूङ्खयन्ति; पा 1·2·34 यज्ञकर्मणि अजपन्यूङ्खसामसु.

ते हासुराः पुनरेवोदपतिषन्त। ते ह तृतीयस्येह सवनस्य पवमानेषु यज्ञवास्त्वभ्यायन्। तेषामिमे बिभ्यत एवांशूँनुपाकल्पयन्। ते ह तैरेव देवानपाजिघांसन्। तेषामिन्द्रो जगतीमेव प्रतिसंदिदेश। सो[1]ऽब्रवीत् — बिभेमि वा एतदेतेभ्यो यथौजीयांसो बलीयांस इमे पराहृतान्निति। तस्या इन्द्रः प्रणवमेव पुरोगामकरोत्। स होवाच—किं मेऽतः स्यादिति। स होवाचेन्द्रः—यत् त्वामुद्गीथेनोपवनिर्षयन्ते[b] तेनैव ते कल्पयिष्यन्तीति। सेनान्यो हि तह्यादित्यानकल्पयत्[c], तस्माज्जागतं तृतीयसवनमादित्यानाम्। स हापश्यत्—आदित्यो वा उद्गीथोऽसौ खल्वादित्यो ब्रह्म। न ह वा एनं मिथु चिदेमीति। स ह स्वेनैव रूपेणादित्यानगच्छत्। स ह तेनैव वज्रेणासुरान् पराभावयत्। तद्यत् स्वेनैव रूपेणाविस्तरामगच्छत् प्रतिष्ठा[d]मविन्दत्। प्रतिष्ठा ह वा एषा यत् प्रणवः। सर्वाणि ह वा इमानि भूतानि प्रणव एव प्रतितिष्ठन्ति। तस्य ह वा एषा प्रतिष्ठा यत्रासावात्मानमुपसंहृत्याजूगुपत्। तस्मात् तदेवोपन्वीतेति तदेवोपासीत। तदेतदृचाभ्युक्तम्—

[1]चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश॥ ४॥

1 ) The division is सा + उ + अब्रवीत्.

*a* ) ऋ 1·91·17 आप्यायस्व मन्दितम सोम विश्वेभिरंशुभिः; अ 6·49·2 अंशून् बभस्ति हरितेभिरासभिः; 11·1·9 निर्भिन्द्धि अंशून् यजमानाय साधु. —*b* ) उप + √ वन् occurs only here. —*c* ) शब्रा 10·5·3·10 आविस्तरां वाग्निः कर्मणा; ऐआ 2·3·2 य आत्मानमाविस्तरां वेद. —*d* ) तै 2·7 ( अभयं प्रतिष्ठाम् ). —*e* ) उपनुवीत ( ? ) —*f* ) ऋ 4·58·3; वासं 17·91; मैसं 1·6·2.

यदिमास्तिस्रोऽथासाविति चत्वारीति । यदिमे द्वे वाक्षरे त्रिभिरुपन्वन्ति[1] तत् त्रय इति । यत् प्रत्यक्षं तद् द्वे इति । यदुद्गीथं सप्तभिरभिप्रपद्यन्ते तत् सप्तेति । अथो खल्वाहुः —सप्तभिरेनं स्वारयन्तीति । यदीमाँस्त्रीनभिधत्ते तत् त्रिधेति । यदिन्द्र एवोद्गीथस्तद् वृषभ इति । तदेतदृचाभ्युक्तम्—

मरुत्वन्तं[b] वृषभं वावृधानं यद्रावयन्ति तद्रोरवीति ।

यदेष सर्वाणि भूतान्यनुप्रविष्टस्तन्मर्त्याँ आविवेशेति ।

तस्मादोमित्येकाक्षरमुपासीतेत्याह[c] भगवाञ् शौनकः[d] शौनक इति ॥ ५ ॥

1 ) न्वन्ति for नुवन्ति ( ? ).

*a* ) Popular etymology ! —*b* ) ऋ 3·47·5; 6·19·11. —*c* ) छां 1·1·1; 1·1·5. —*d* ) मुं 1·1·3.

॥ इति शौनकोपनिषत् ॥

---

# ॥ जैमिनीयोपनिषत् ॥

[ In the Vedic literature this is known as जैमिनीयोपनिषद्ब्राह्मण. We have canonized it as जैमिनीयोपनिषत् and included it in our collection. Although called a ब्राह्मण, it fully partakes of the nature of an Upaniṣad. Its text-tradition is laconic and at places, corrupt. We feel that its inclusion here will lead to its further intensive study, worthy of this ancient text. The traditional scheme of text-division is fourfold : अध्याय, अनुवाक, खण्ड and कण्डिका; but we have accepted Oertel's ( the first editor's ) scheme of अध्याय, खण्ड and कण्डिका and cited this in our earlier notes. The केनोपनिषत्, which has been transposed by us earlier ( No. 2 ), forms an integral part of this Upaniṣad ( IV. 18-IV. 21 )].

## १.१

प्रजापतिर्वा इदं त्रयेण[a] वेदेनाजयद्यदस्येदं जितं[b] तत् ॥ १ ॥ स ऐक्षत—
इत्थं चेद्वा अन्ये देवा अनेन वेदेन यक्ष्यन्त[c] इमां वाव ते जितिं जेष्यन्ति येयं मम ।
हन्त[d] त्रयस्य वेदस्य रसमाददा[d] इति ॥ २ ॥ स[e] भूरित्येवर्ग्वेदस्य रसमादत्त । सेयं
पृथिव्यभवत् । तस्य[1] यो रसः[f] प्राणेदत्[f] सोऽग्निरभवद्रसस्य रसः ॥ ३ ॥ भुव इत्येव
यजुर्वेदस्य रसमादत्त । तदिदमन्तरिक्षमभवत् । तस्य यो रसः प्राणेदत् स वायुरभवद्
रसस्य रसः ॥ ४ ॥ स्वरित्येव सामवेदस्य रसमादत्त । सोऽसौ द्यौरभवत्[g] । तस्य
यो रसः प्राणेदत् स आदित्योऽभवद्रसस्य रसः[e] ॥ ५ ॥ अथैकस्यैवाक्षरस्य रसं
नाशक्नोदादातुमोमित्येतस्यैव[h] ॥ ६ ॥ सेयं वागभवत् । ओमेव[i] नामैषा तस्या उ
प्राण एव रसः ॥ ७ ॥ तान्येतानि अष्टौ[j] । अष्टाक्षरा गायत्री । गायत्रं साम ब्रह्मो
गायत्री । तदु ब्रह्माभि[k]संपद्यते[l] । अष्टाशफाः[m] पशवस्तेनो पशव्यम्[n] ॥ ८ ॥

Cp in general जै 1·1·1–2 with जै 1·8·1–2.

1 ) Shall we read तस्याः for तस्य ( as तस्याः would then correctly refer to the earlier पृथिवी ) ?

*a* ) ऋ 10·45·2 विद्मा ते अग्ने त्रेधा त्रयाणि, विद्मा ते धाम ( = धामानि ) विभृता पुरुत्रा; अ 4·11·2 त्रयान् शक्रो वि मिमीते अध्वनः; जै 1·8·1, 3, 4, 10, cp त्रयी विद्या in जै 1·18·10; 1·19·2; 1·23·6; 1·45·3; 1·58·2; पा 5·2·43 द्वित्रिभ्यां तयस्यायज्वा; cp द्वया ह प्राजापत्या देवाश्चासुराश्च in बृ 1·3·1; for वेदेन cp ऋ 8·19·5 यः समिधा य आहुती यो वेदेन ददाश मर्तो अग्नये । यो नमसा स्वध्वरः. —*b* ) ऋ 10·53·11 सिषासनिर्वनते कार इज्जितिम्; अ 10·6·16 स एभ्यो जितिमिद् दुहे भूयो भूयः श्वः श्वः...; ऐब्रा 1·24 जितयो वै नाम एता यदुपसदः असपत्नां वा

एताभिर्देवा विजितिं व्यजयन्त; कौ 1·7 सा या ब्रह्मणो जितिः...तां जितिं जयति. —c) छां 1·10·6 राजासौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीत. —d) पा 8·1·52, 54 लोट् च; हन्त च. पीळयानि stands for आद्दे in जै 1·8·3. —e- -e) Cp गोब्रा 1·6 स (प्रजापतिः) खलु पृथिव्या एवाग्निं निरमिमीत, अन्तरिक्षाद्वायुं, दिव आदित्यम्. —f) जैब्रा 1·354 यज्ञस्य वै यत्र शिरोऽच्छियत तस्य यो रसः प्राणेदत् त एवोतीका अभवन्, cp जै 1·23·3–8; for अतिनेदन्ते see ऐब्रा 6·32 छन्दसां वै षष्ठेनाह्वातानां रसोऽत्यनेदत् स प्रजापतिराबिभेत्; बृ 3·1·8 या हुता अतिनेदन्ते. —g) द्यौः is both *mas.* and *fem.*; here it is masculine. —h) जै 1·8·4 अक्षरं पीळयितुम्. —i) मै 6·23 यः शब्दः तदोमित्येतदक्षरम्...एवं ह्याह। योऽसौ परापरो देवा (= देवः) ओङ्कारो नाम नामतः. —j) जै 1·6·6; 1·9·4; 1·33·11; 1·34·2. —k) छां 8·15·1 ब्रह्मलोकमभिसंपद्यते. —l) बृ 4·3·33 ये कर्मणा देवत्वमभिसंपद्यन्ते; 4·4·5 यत् कर्म कुरुते तदभिसंपद्यते. —m) ऋ 8·47·17 यथा कलां यथा शफं यथ ऋणं संनयामसि (where कला means $\frac{1}{16}$ and शफ means $\frac{1}{8}$); जैब्रा 1·135 तस्माद् द्विपाद् अष्टाशफानधितिष्ठति; 3·242 अथो अष्टाक्षरा वै गायत्री अष्टाशफाः पशवः; तांब्रा 3·8·2; 7·7·1; शब्रा 6·2·2·15 अष्टाशफो हि गौः; तैब्रा 1·2·1·26 अष्टाशफाश्च य इहाग्ने ये चैकशफा आशुगाः. —n) ऐब्रा 6·24 तस्मै ह यथा महद्भ्य ऋत्विग्भ्य एव निनाय तदेतत् पशव्यं च स्वर्ग्यं च शस्त्रम्; जैब्रा 1·217 तदेतत् पशव्यं साम; तांब्रा 24·3·2 अपशव्यं वा एतत् सत्रं यदच्छन्दोमम्; छां 2·22·1 विनर्दि साम्नो वृणे पशव्यम्.

## १·२

स यदोमिति सोऽग्निर्वागिति पृथिवी। ओमिति वायुर्वागित्यन्तरिक्षम्। ओमित्यादित्यो वागिति द्यौः। ओमिति प्राणो वागित्येव वाक् ॥ १ ॥ स य एवं विद्वानुद्गायत्योमित्येवाग्निमादाय पृथिव्यां प्रतिष्ठापयति। ओमित्येवादित्यमादाय दिवि प्रतिष्ठापयति। ओमित्येव प्राणमादाय वाचि प्रतिष्ठापयति ॥ २ ॥ तद्धैतच्छैलना[a] गायत्रं गायन्त्योवा[b]३च् ओवा३च् ओवा३च् हुं भा ओवा इति ॥ ३ ॥ तदुह तत[c] पराङिवाऽनायुष्यमिव[d]। तद्वायोश्चापां चानुवर्त्म गेयम् ॥ ४ ॥ यद्वै वायुः पराङेव पवेत क्षीयेत (सः[f]) स पुरस्ताद्वाति[g] स दक्षिणतः स पश्चात् स उत्तरतः स उपरिष्टात् स सर्वा दिशोऽनुसंवाति[h] ॥ ५ ॥ तदेतदाहुरिदानीं वा अयमितोऽवासी-दथेत्थाद्वातीति[i]। स यद्रेष्माणं जनमानो निवेष्टमानो वाति क्षयादेव बिभ्यत् ॥ ६ ॥ यदु ह वा आपः पराचीरेव प्रसृताः स्यन्देरन् क्षीयेरँस्ताः। यदङ्कांसि[k] कुर्वाणा निवेष्टमाना आवर्तान्[l] सृजमाना यन्ति क्षयादेव बिभ्यतीः। तदेतद्वायोश्चैवापां चानु-वर्त्म गेयम् ॥ ७ ॥

a) जैब्रा 1·118 तदु ह स्माह मार्जः शैलनो भ्रातृव्यान् वाव निधनेन तोषयतीति; जै 1·14·4; 1·22·8 सुचित्तः शैलनः; 2·4·6 प्रभूतिरिति शैलनाः; 2·4·8 अपरोधोऽनपरुद्ध इति पार्ष्णः शैलनः.

—*b*) जै 1·3·1 ओवा...ओवा इति करोत्येव; 3·39·1 ओवाच्...ओवा इति षोडशाक्षराण्यभ्यगायत —*c*) ऐब्रा 3·46 तद्ध तत् पराङेव यथा जग्धं न हैव तद्यजमानं भुनक्ति; ऐ 3·3 पराङत्यजिघांसत्; क 4·1 पराञ्चि खानि ... तस्मात् पराङ् पश्यति... —*d*) जैब्रा 1·175 वय एवैनं शकुनो भूत्वा स्वर्गं लोकं वहति तदु तद्नायुष्यमिव. —*e*) जैब्रा 1·333 नो ह अन्यस्यानुवर्त्म गेयम्...स्वधूरेव गेयम्; शब्रा 3·3·4·5 तदस्मा इदं सर्वमनुवर्त्म करोति यदिदं किञ्च; 4·4·1·9 तादिदं सर्वं मनसः कृतानुकरमनुवर्त्म. —*f*) Oertel adds सः (*sic*) which is a sister-form handed down from Indo-European times; cp ऋ 10·86·16 सेदीशे यस्य रोमशं...न सेशे यस्य रोमशम्. —*g*) अ 4·40·1–4, 7–8 ये पुरस्ताज्जुह्वति जातवेदः प्राच्या दिशो अभिदासन्त्यस्मान् ...ये दिशामन्तर्देशेभ्यः...सर्वाभ्यो दिग्भ्यो अभिदासन्त्यस्मान्... —*h*) तैब्रा 3·10·4·3 वायुर्भूत्वा सर्वा दिश आवाहि, सर्वा दिशोऽनु विवाहि, सर्वा दिशोऽनु संवाहि. —*i*) शब्रा 3·2·3·23 तस्मात् पञ्चेत्थाद्ङ्गुलयः पञ्चेत्थात्; 11·1·6·17 यदेव वेद इत्याद्दातीति; 13·4·4·5 षड् वैल्वाः त्रय इत्थात् त्रय इत्थात्; 14·1·2·1 स यद्वा एनानित्थाच्चेत्थाच्च संभरति तत् संभाराणां संभारत्वम्; तैआ 4·33·1 इत्थादुलूक आपप्तत्. —*j*) अ 6·102·2 रेष्माच्छिन्नं यथा तृणं मयि ते वेष्टतां मनः; 15·2·7 वातः सारथी रेष्मा प्रतोदः; वासं 16·39 नमो वात्याय च रेष्म्याय च; 25·2 संक्रोशैः प्राणान् रेष्माणं स्तुपेन; जैब्रा 1·11 यथा रेष्माणमुपमथ्न्यादेवम्. —*k*) ऋ 4·40·4 पथामङ्कांस्यन्वापनीफणत्. —*l*) शब्रा 12·9·2·4 यो ह वा अयमपामावर्तः स ह अवभृथः; छां 4·15·5 मानवमावर्तम्; जै 3·33·7 ब्रह्मण आवर्तः.

## १·३

ओवा ओवा ओवा हुं भा ओवा इति करोत्येव। एताभ्यां[a] सर्वमायुरेति ॥ १ ॥ स यथा वृक्षमाक्रमणैराक्रममाणं[b] इयादेवमेवैते द्वे–द्वे देवते संधायेमाँल्लोकान् रोहन्नेति ॥ २ ॥ एक उ एव मृत्युरन्वेत्यशनयैव[c] ॥ ३ ॥ अथ हिङ्करोति। चन्द्रमा वै हिङ्कारोऽन्नमु[d] वै चन्द्रमाः। अन्नेनाशनायां घ्नन्ति ॥ ४ ॥ तां–तामशनायामन्नेन हत्वोमित्येतमेवादित्यं सर्मयातिमुच्यते। एतदेव दिवश्छिद्रम् ॥ ५ ॥ यथा खं वाऽनसः स्याद्रथस्य वैवमेतादिवश्छिद्रम्। तद्रश्मिभिः संछन्नं दृश्यते ॥ ६ ॥ यद्वायत्रस्योर्ध्वं हिङ्कारात् तदमृतम्। तदात्मानं दध्यादथो यजमानम्। अथ यदितरत् सामोर्ध्वं तस्य प्रतिहारात् ॥ ७ ॥ स यथाद्भिरापः[h] संसृज्येरन् यथाग्निनाग्निः संसृज्येत यथा क्षीरे क्षीरमासिंच्यादे[i]वमेवैतदक्षरमेताभिर्देवताभिः संसृज्यते ॥ ८ ॥

*a*) एताभ्याम् = देवताभ्याम्; cp जै 1·3·8 एताभिः देवताभिः. —*b*) शब्रा 9·3·3·6 यथा वृक्षं रोहन्नुत्तरामुत्तरां शाखां समालम्भं रोहेत् तादृक्तत्; जैब्रा 2·420; ऐब्रा 3·19 स्वर्गस्य हैतल्लोकस्याक्रमणम् यन्निवित्, तामाक्रममाण इव शंसेत्; बृ 3·1·6 अथ केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमते. —*c*) जैब्रा 1·136 अशनया ह वै रथा अन्नमु वै रथन्तरम्। अन्नेनाशनयां घ्नन्ति। तां तामशनयामन्नेन हत्वा स्वर्गं लोकमारोहन्. But following the form अशनाया, जैब्रा 1·117 has the forms अशनायन्तीः and अशनायेयुः; बृ 1·2·1 अशनाया हि मृत्युः; जै 1·3·4; 3·12·2. —*d*) कौ 4·2 चन्द्रमसि पुरुषः...अन्नस्यात्मा; मै 6·5 अथ अन्नमापश्चन्द्रमा इति आप्यायनवत्येषा. —*e*)

Note the संधि – हत्वा + ओम् – according to पा 6·1·95 ओमाङोश्च. —*f*) पा 2·3·2 कर्मणि द्वितीया, कात्यायन—समयानिकषाहायोगेषु उपसंख्यानम्. —*g*) ऋ 8·91·7 खे रथस्य खे अनसः खे युगस्य शतक्रतो; शाट्यायनब्रा quoted by Sāyana on the above : तां खे रथस्यात्यवृहत् ..तां खे अनसोऽत्यवृहत् ..तस्येह यत् कल्याणतमं रूपाणां तद्रूपमास. —*h*) जैब्रा 1·181 यथाग्नावग्नीनभिसमादध्यात् तादृक् तत्. —*i*) शब्रा 3·5 3·3; 4·2·4·18 यथा मुख आसिञ्चेदेवं तत्. Oland suggests emendation आसिच्येत in line with संसृज्येत and संसृज्येरन्; जै 1·22·1; क 4·15.

## १·४

तं वा एतं हिङ्कारं हिं भा इति हिङ्कुर्वन्ति । श्रीर्वै भाः । असौ वा आदित्यो भा इति ॥ १ ॥ एतं ह वा एतं न्यङ्गमनु गर्भ इति । यद्ध इति स्त्रीणां प्रजननं निगच्छति तस्मात् ततो ब्राह्मण ऋषिकल्पो जायतेऽतिव्याधी राजन्यः शूरः ॥ २ ॥ एतं ह वा एतं न्यङ्गमनु वृषभ इति । यद्ध इति निगच्छति तस्मात् ततः पुण्यो बलीवर्दो दुहाना धेनुरुक्षा दशवाजी जायन्ते ॥ ३ ॥ एतं ह वा एतं न्यङ्गमनु गर्दभ इति । यद्ध इति निगच्छति तस्मात् स पापीयाञ्छ्रेयसीषु चरति । तस्मादस्य पापीयसः श्रेयो जायतेऽश्वतरो वाऽश्वतरी वा ॥ ४ ॥ एतं ह वा एतं न्यङ्गमनु कुभ्रं इति । यद्ध इति निगच्छति तस्मात् सोऽनार्यः सन्नपि राज्ञः प्राप्नोति ॥ ५ ॥ तं हैतमेके हिङ्कारं हिं भा ओवा इति बहिर्धेव हिङ्कुर्वन्ति बहिर्धेव वै श्रीः । श्रीर्वै साम्नो हिङ्कार इति ॥ ६ ॥ स य एनं तत्र ब्रूयाद् बहिर्धा न्वा अयं श्रियमधित पापीयान् भविष्यति । 'स यदा वै म्रियतेऽथाग्नौ प्रास्तो भवति । क्षिप्रे बत मरिष्यत्यग्नावेनं प्रासिष्यन्ति' इति । तथा हैव स्यात् ॥ ७ ॥ तस्मादु हैतं हिङ्कारं हिं वो इत्यन्तरिवैवाऽऽत्मन्नर्जयेत् । तथा ह न बहिर्धा श्रियं कुरुते सर्वमायुरेति ॥ ८ ॥

Cp in general जै 3·39·3 ff.

*a*) शब्रा 1·8·1·27 यदेव मित्रावरुणाभ्यां समगच्छत स एव मैत्रावरुणो न्यङ्गः...; जै 1·45·5; 2·12·1–2; 3·37·7. —*b*) ऋ 3 29·1 अस्तीदमधिमन्थनमस्ति प्रजननं कृतम्; वासं 19·48 इदं हविः प्रजननं मेऽस्तु; नि 3·21 शेपो वैतस इति पुंस्प्रजननस्य. —*c*) नि + गम् *inire feminam*; cp ऋ 10·10·12 पापमाहुर्यः स्वसारं निगच्छात्. अ 18·1·14 explains this further as भ्राता स्वसुः शयने यच्छयीय. —*d*) तैसं 7·5·18·1; वासं 22·22 आ ब्रह्मन् ( i. e. ब्राह्मणकुले ) ब्राह्मणो ब्रह्मवर्चसी जायताम्. —*e*) पा 5·3·67 ईषदसमाप्तौ कल्पब्देश्यदेशीयरः. —*f*) ऋ 5·62·9 यद् वंहिष्ठं नातिविधे सुदानू अच्छिद्रं शर्म भुवनस्य गोपा ( voc. dual ); अ 9·2·16 वर्म विततमनतिव्याध्यं कृतम्; जैब्रा 2·266 ऋषिर्ह स्म मन्त्रकृद् ब्राह्मण आजायते । अतिव्याधी राजन्यः शूरः ..; तैब्रा 3·9·19·3 एष वा अतिव्याधी नाम यज्ञः । आह वै तत्र

राजन्योऽतिव्याधी जायते; बृ 3·8·2 सपत्नातिव्याधिनौ. —*g*) शब्रा 12·4·2·10 तद्यथैवादो धावयतोऽश्वो वाऽश्वतरो वा गदायेत बलीवर्दो वा युक्तः तेन दण्डप्रजितेन तोत्रप्राजितेन ( w. r. for प्राजित ? ) यमध्वानं समीप्सति तं समश्नुते; तैब्रा 3·8·20·5 इलुवर्दाय स्वाहा। बलिवर्दाय स्वाहा। संवत्सरो वा इलुवर्दः, परिवत्सरो बालिवर्दः। तस्मादश्वमेधयाजी जरसा विस्रसा अमुं लोकमेति; वासं 2·2·22 दोग्ध्री धेनुर्वोढा अनड्वान् आशुः सप्तिः. —*h* ) ऋ 3·53·23 न गर्दभं पुरो अश्वं नयन्ति; तैसं 5·1·2·1 अश्वाद् गर्दभो असत्तरः; 5·1·2·3 पापीयानश्वाद् गर्दभः; वासं 11·46 प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा. —*i* ) मैसं 2·5·3 = जै 3·39·5 तस्य सहस्रस्याग्रे कुभ्र उदैत्; तैसं 2·1·5·2 substitutes उन्नत for कुभ्र; so कुभ्र perhaps means *a hump-backed bull* (MW). —*j* ) Shall we supply राज्यम् after राज्ञः ? Cp तैसं 2·6·6·5 य एवं वेद प्र राज्यं अनार्यं प्राप्नोति; शब्रा 2·4·4·6 राज्यमिह वै प्राप्नोति; or राज्ञः प्राप्नोति is idiomatic for पदम् or राज्यम्; see छां 1·10·6 यद् वत अन्नस्य लभेमहि, लभेमहि धनमात्राम्. —*k* ) न्वै = नु + वै; cp तैसं 1·5·9·6 मनुष्यायेन्न्वै योऽहरहराहृत्याथैनं याचति स इन्न्वै तमुपार्च्छति where इन् न्वै = इत् + नु + वै; तैब्रा 1·1·3·8 पुरुष इन्न्वै स्वाद्रेतसो बीभत्सते; शब्रा 10·6·1·3 संप्रति खलु न्वा अहं वैश्वानरं वेद; शब्रा 11·7·2·8 इति न्वा एतद् ब्राह्मणमुच्यते. —*l* ) ऋ 4·8·8 अति क्षिप्रेव विध्यति perhaps = क्षिप्रे + व ( for इव ); जैब्रा 2·67 स्नात्वा क्षिप्र उदेयात्; क्षिप्रे पाप्मनो व्यावृत्या इति; तैब्रा 3·9·1·3 क्षिप्रे यजमानमरण्यं मृतं हरेयुः; शब्रा 4·2·1·5 यद्ध स्म देवाः किञ्च कर्म कुर्वते तद्ध स्म मोहयित्वा क्षिप्र एव पुनरपद्रवतः ( शुक्रामन्थिनौ ).

## १·५

सैषाऽखला[a] देवताऽपसेधन्ती तिष्ठति। इदं वै त्वमत्र पापमकर्णेहैष्यासि[b]। यो वै पुण्यकृत् स्यात् स इहेयादिति ॥ १ ॥ स ब्रूयादपश्यो वै त्वं तद्यदहं तदकरवं तद्वै मा त्वं नाकारयिष्यस्त्वं वै तस्य कर्ताऽसीति ॥ २ ॥ सा ह वेद सत्यं माऽऽहेति। सत्यं हैषा देवता। सा ह तस्य नेशे[c] यदेनमपसेधेत्। सत्यमुपैव ह्वयते[d] ॥ ३ ॥ अथ होवाचैक्ष्वाको वा वार्ष्णोऽनुवक्ता वा सात्यकीर्तः। उतैषाऽखला देवताऽपसेद्धुमेव ध्रियतेऽस्यै दिशः ॥ ४ ॥ ( तद् ) दिवोऽन्तः। तदिमे द्यावापृथिवी संश्लिष्यतः। यावती[f] वै वेदिस्तावतीयं पृथिवी। तद्यत्रैतच्चात्वालं खातं तत् संप्रति[h] स दिव आकाशः ॥ ५ ॥ तद् बहिष्पवमाने स्तूयमाने मनसोद्गृह्णीयात् ॥ ६ ॥ स यथोच्छ्रायं प्रत्यस्य[1] प्रपश्येतैवमेवैतया देवतयेदममृतमभिपर्येति यत्रायमिदं तपतीति ॥ ७ ॥ अथ होवाच—॥ ८ ॥

1 ) v. l. प्रतियस्य ( Oertel ).

*a* ) अखला suggested by Caland as opposed to खला accepted by Oertel. —*b* ) Divide as अकर् + न + इह + एष्यासि; cp तैप्रातिशाख्य 7 अथ नकारो णकारम्. —*c* ) ईशे ( 3rd pers. sg. ); cp ऋ 10·121·3 य ईशे अस्य द्विपदश्चतुष्पदः. —*d* ) अ 1·1·4 उपास्मान् वाचस्पतिर्ह्वयताम्. —*e* ) छां 4·10·3 स ह व्याधिनानशितुं दध्रे; बृ 1·5·21 तानि ज्ञातुं

दध्रिरे. —*f* ) तैसं 2·6·4·3 एतावती वै पृथिवी यावती वेदिः. —*g* ) तैसं 6·1·3·8; जैब्रा 3·115 योनिर्वै यज्ञस्य चात्वालः. —*h* ) जै 3·31·2 तस्मै ह मीमांसमानानामेकश्चन संप्रत्यभिदधाति. —*i* ) छां 4·2·5 तस्या ह मुखमुपोद्गृह्णन्नुवाच. —*j* ) शब्रा 3·5·3·24 अथोच्छ्राया उपस्पृश्य वाचयति; पा 3·3·49 उदि श्रयतियौतिपूद्रुवः.

१·६

गोबलो वार्ष्णः[a] । क एतमादित्यमर्हति समयैतुम् । दूराद्वा एष एतत् तपति न्यङ्[b] । तेन वा एतं पूर्वेण सामपथस्तदेव मनसाऽऽहृत्योपरिष्टादेतस्यैतस्मिन्नमृते निदध्यादिति ॥ १ ॥ तदु होवाच शाट्यायनिः[c]—समयैवैतदेनं कस्तद्वेद । यद्वेता आपो वा अभितः, यद्वायुं वा एष उपह्वयते रश्मीन् वा एष तदेतस्मै व्यूहतीति ॥ २ ॥ अथ होवाचोलुक्यो जानश्रुतेयः[d]—यत्र वा एष एतत् तपत्येतदेवामृतम् । एतच्चेद्वै प्राप्नोति ततो मृत्युना पाप्मना[e] व्यावर्तते ॥ ३ ॥ कस्तद्वेद यत् परेणाऽऽदित्यमन्तरिक्षमिदमनालयन[f]मवरेण ॥ ४ ॥ अथैतदेवामृतम् । एतदेव मां यूयं प्रापयिष्यथ । एतदेवाहं नातिमन्य इति ॥ ५ ॥ तान्येतान्यष्टौ । अष्टाक्षरा गायत्री । गायत्रं साम ब्राह्मो गायत्री । तदु ब्रह्माभिसंपद्यते । अष्टाशफाः पशवस्तेनो पशव्यम् ॥ ६ ॥

*a* ) Cp जै 1·5·4 ऐक्ष्वाकः वार्ष्णः. —*b* ) ऐब्रा 7·30 तस्मान्न्यङ् रोहति न्यग्रोधः where न्यङ् is *adj.* and न्यक् is *adverb*. —*c* ) शब्रा 8·1·4·9 अपि ह स्माह शाट्यायनिः; जै 1·30·1; 2·2·8; 2·4·3; 2·9·10; 3·13·6 *et passim*. —*d* ) ऐब्रा 1·25 उपाविः जानश्रुतेयः; शब्रा 5·1·1·5 औपाविः जानश्रुतेयः; जै 3·40·2 नगरी जानश्रुतेयः, सायकः जानश्रुतेयः —*e* ) पाप्मना instead of पाप्मनः ( *abl.* ); cp जै 1·16·11 यस्त्वेतेन व्यावर्तयात् व्येव स पाप्मना वर्तेता इति; तांब्रा 24·11·3 वि पाप्मनाऽऽवर्तन्ते य एता उपयन्ति; but बृ 1·5·2 न स पाप्मनो ( *abl.* ) व्यावर्तते. —*f* ) जैब्रा 1·175 प्रथमितमिव वा एतत् यद् वयोऽनालयनमिव; तै 2·7 एतस्मिन्...अनिलयने अभयं प्रतिष्ठां विन्दते.

१·७

ता एता अष्टौ देवताः । एतावदिदं सर्वम् । ते........[1] करोति ॥ १ ॥ स नैषु लोकेषु पाप्मने भ्रातृव्याया[a]वकाशं[b] कुर्यात् । मनसैनं निर्भजेत्[c] ॥ २ ॥ तदेतदृचा[d]ऽभ्यनूच्यते—

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥ इति ॥

तद्यानि तानि गुहा त्रीणि निहिता नेङ्गयन्ती ( ति । इ ) म एव ते लोकाः ॥ ४ ॥ तुरीयं वाचो मनुष्या वदन्तीति । चतुर्भागो ह वै तुरीयं वाचः । सर्वयाऽस्य

वाचा सर्वैरेभिर्लोकैः सर्वेणास्य कृतं भवति य एवं वेद ॥ ५ ॥ स यथाऽश्मानमाखणमृत्वा लोष्टो विध्वंसत एवमेव स विध्वंसते य एवं विद्वाँसमुपवदति ॥ ६ ॥

1 ) No lacuna evinced by the Mss.

*a* ) तैब्रा 2·2·8·1 ते वै पाप्मना भ्रातृव्येणाजयन्त; पा 4·1·144 भ्रातुर्व्यत् च; 4·1·145 व्यन् सपत्ने. —*b* ) मै 6·22 यथोर्णनाभिः...अवकाशं लभतीति एवं स्वातन्त्र्यं लभते. —*c* ) ऋ 8·81·6 इन्द्र मा नो वसोर्निर्भाक्; अ 4·22·2 एमं भज ग्रामे अश्वेषु गोषु निष्टं भज यो अमित्रो अस्य; मनु 9·207 स निर्भाज्यः स्वकादंशात्. —*d* ) ऋ 1·164·25 also repeated at जै 1·40·1. —*e* ) कृतं suggests four i. e. *fulfilment*. —*f* ) जै 1·60·8;2·3·12–13; छां 1·2·7–8; बृ 1·3·8. —*g* ) अ 15·2·1 य एवं विद्वांसं व्रात्यमुपवदति; छां 7·6·1 अथ येऽल्पाः कलहिनः पिशुना उपवादिनस्ते.

## १·८

प्रजापतिर्वा इदं त्रयेण वेदेनाजयद्यदस्येदं जितं तत् ॥ १ ॥ स ऐक्षतेत्थं चेद्वा अन्ये देवा अनेन वेदेन यक्ष्यन्त इमां वाव ते जितिं जेष्यन्ति येयं मम ॥ २ ॥ हन्तेमं त्रयं वेदं पीळयानीति ॥ ३ ॥ स इमं त्रयं वेदमपीळयत् । तस्य पीळयन्नेकमेवाक्षरं नाशक्नोत् पीळयितुमोमिति यदेतत् ॥ ४ ॥ एष उ ह वाव सरसः । सरसा ह वा एवंविदस्त्रयी विद्या भवति ॥ ५ ॥ स इमं रसं पीळयित्वापानिर्धायोर्ध्वोऽद्रवत् ॥ ६ ॥ तं द्रवन्तं[1] चत्वारो देवानामन्वपश्यन्निन्द्रश्चन्द्रो रुद्रः समुद्रः । तस्मादेते श्रेष्ठा देवानाम् । ते ह्येनमन्वपश्यन् ॥ ७ ॥ स योऽयं रस आसीत् तदेव तपोऽभवत् ॥ ८ ॥ त इमं देवा अन्वैक्षन्त । तेऽभ्यपश्यन् । स तपो वा अभूदिति ॥ ९ ॥ इममु वै त्रयं वेदं मरीमृशित्वा तस्मिन्नेतदेवाक्षरमपीळितमविन्दन्नोमिति यदेतत् ॥ १० ॥ एष उ ह वाव सरसः । तेनैनं प्रायुवन् । यथा मधुना लाजान् प्रयुयादेवम् ॥ ११ ॥ तेऽभ्यतपन्त । तेषां तप्यमानानामाप्यायत वेदः । तेऽनेन च तपसाऽऽपीनेन च वेदेन तामु एव जितिमजयन् यां प्रजापतिरजयत् । त एते सर्व एव प्रजापतिमात्रा अयाँ३म् अया३म् इति ॥ १२ ॥ तस्मात् तप्यमानस्य भूयसी कीर्तिर्भवति भूयो यशः । स य एतदेवं वेदैवमेवाऽऽपीनेन वेदेन यजते । यदो याजयत्येवमेवाऽऽपीनेन वेदेन याजयति ॥ १३ ॥ तस्य हैतस्य नैव काचनाऽऽर्तिरस्ति य एवं वेद । स य एवैनमुपवदति स आर्तिमृच्छति ॥ १४ ॥

1 ) v. l. द्रवम्; cp ऋ 4·40·2 सत्वो द्रवो द्रवरः पतङ्गरः. Note the last syllable of the four gods : इन्द्र, चन्द्र, रुद्र and समुद्र who became प्रजापतिमात्राः ( जै 1·8·12 ).

*a* ) जै 1·1·1–2. —*b* ) जै 1·1·2 रसमाददे. —*c* ) जै 3·19·3–4. —*d* ) तांब्रा 15·3·23 अन्नं वै देवा अर्क इति वदन्ति, रसमस्य पुष्पमिति, सरसमेवान्नाद्यमवरुन्धे; 16·13 7 खल उत्तरवेदिरत्र हि रसः समवैति सरसमेव यज्ञं करोति; शब्रा 3·3·3·18 रसो वा आपः सरसमेव एतत् क्रीणाति. —*e* ) शब्रा 3·9·4·22 तस्य या जुष्टतमा तनूरास तामपनिदधे; 4·3·3·8 ते होचुः—अपनिधायैनमोज उपावर्तामहा इति; 5·1·4·10 जवो यस्ते वाजिन्नापि अन्यत्रापनिहितः. —*f* ) के 4·2 तस्माद्वा एते देवा अतितरामिवान्यान् देवान्...ते ह्येनन्नेदिष्ठं पस्पृशुः. —*g* ) शब्रा 4·5·1·10 अथेतरं विश्वे देवा अमरीमृश्यन्त ( काण्व *version* : तदु विश्वे देवा मरीमृशांचक्रिरे ). —*h* ) वासं 19·13 लाजाः सोमांशवो मधु; 19·81 त्वगस्य मांसमभवन् न लाजाः; जैब्रा 1·322 स यथा मधुना लाजान् प्रयुयात् एवमेतेनैवाक्षरेण सामन् रसं दधाति; जैब्रा 2·79 यथा मध्वासिच्य लाजाना-वपेत्. —*i* ) अयम् with *pluti*-mark 3 becomes अया३म्. —*j* ) वासं 30·9; 17 आर्त्यै परिवित्तम्...आर्त्यै जनवादिनम्; अ 8·8·9 आर्तिश्चानपवाचना; 10·2·10 आर्तिरवर्तिर्निर्ऋतिः कुतो नु पुरुषेऽमतिः; 12·2·38 मुहुर्गृध्यैः प्रवदति आर्तिं मर्त्यो नीत्य; आर्षेयब्रा २—वीव पद्येत्, आर्तिमृच्छेत्; 4—पापीयान् भवति, आर्तिमाच्छति अथ म्रियते; शब्रा 11·5·4·2–5 तथा हास्य ब्रह्मचारी न काश्चनार्तिमाच्छर्ति; 1·31·2·4 ईश्वरो वा एष आर्तिमार्तोः...नार्तिमाच्छति.

## १·९

तदाहुर्यदोवा[a] ओवा इति गीयते काऽत्रगर्भवति क सामेति ॥ १ ॥ ओमिति[b] वै साम वागित्यृक् । ओमिति मनो वागिति वाक् । ओमिति प्राणो वागित्येव वाक् । ओमितीन्द्रो[c] वागिति सर्वे देवाः । तदेतादिन्द्रमेव सर्वे देवा अनुयन्ति ॥ २ ॥ ओमित्येतदेवाक्षरम् । एतेन वै संसवे[d] परस्येन्द्रं वृञ्जीत । एतेन ह वै बंको दाल्भ्य आज-केशिनामिन्द्रं ववृजे । ओमित्येतेनैवाऽऽनिनाय ॥ ३ ॥ तान्येतान्यष्टौ[e] । अष्टाक्षरा गायत्री । गायत्रं साम ब्रह्मो गायत्री । तदु ब्रह्माभिसंपद्यते । अष्टाशफाः पशवस्तेनो पशव्यम् ॥ ४ ॥ तस्यैतानि नामानि । इन्द्रः कर्माक्षितिरमृतं[f] व्योमान्तो[f][g] वाचः । वंहोभूयः[h][1] सर्वं सर्वस्मादुत्तरं ज्योतिः । ऋतं सत्यं विज्ञानं विवाचनमप्रतिवाच्यम् । पूर्वं सर्वम् । सर्वा वाक् सर्वमिदमपि धेनुः पिन्वते परागर्वाक् ॥ ५ ॥

1 ) v. l. बहुभूयः.

*a* ) ओवा = ओम् + वाक् ( with the loss of the final consonants of both ? ) —*b*) छां 1·3·4 या वाक् सर्क्...यत् साम स उद्गीथः. —*c*) छां 2·23·2 एवमोङ्कारेण सर्वा वाक् संतृण्णा. —*d* ) ऐब्रा 1·3 तदाहुर्न पूर्वदीक्षिणः संसवोऽस्ति; तैब्रा 1·4·6·4 यो वै छन्दोभिरभिभवति स संसुन्वतोरभिभवति; जैब्रा 2·70. —*e* ) जै 4·7·2; छां 1·2·13; 1·12·1. —*f* ) These words stand for *numerals*; cp जै 1·10·4 पद्ममक्षितिव्योमान्तः; the same series also in जै 1·28·3 and 1·29·3; तांब्रा 17·14·1 with slight variations gives बद्व for पद्म; ऐब्रा 8·22 has द्वे द्वे सहस्रे बद्वानाम् आत्रेयो मध्यतोऽददात्. —*g* ) जै 1·10·4 ( where it indicates the highest number ) दशधा क्षरति...

निखर्वधा पद्ममक्षितिर्व्योमान्तः. —*h* ) ऋ 1·188·5 विराट् सम्राड् विभ्वीः प्रभ्वीर्बह्वीश्च भूयसीश्च याः; पा 6·3·158 बहोर्लोपो भू च बहोः. —*i* ) 1·9·5 in part parallel to ऐआ 5·3; the close correspondences between the two passages testifies that they are the versions of the same tradition.

## १·१०

सा पृथक् सलिलं कामदुघाक्षिति प्राणसंहितं चक्षुः श्रोत्रं वाक्प्रभूतं मनसा व्याप्तं हृदयाग्रं[1] ब्राह्मणभक्तम्[2]अन्नशुभं वर्षपवित्रं गोभगं पृथिव्युपरं तपस्तनु वरुणपरियतनमिन्द्रश्रेष्ठं सहस्राक्षरमयुतधारममृतं दुहाना सर्वानिमाँल्लोकानाभिविक्षरतीति ॥ १ ॥ तदेतत्[a] सत्यमक्षरं यदोमिति तस्मिन्नापः प्रतिष्ठिता[a] अप्सु पृथिवी पृथिव्यामिमे लोकाः ॥ २ ॥ यथा[b] सूच्यां[c] पलाशानि[d] संतृण्णानि स्युरेवमेतेनाक्षरेणेमे लोकाः संतृण्णाः[b] ॥ ३ ॥ तदिदमिमानतिविध्य दशधा[e] क्षरति शतधा सहस्रधाऽयुतधा प्रयुतधा ( नियुतधा )ऽर्बुदधा न्यर्बुदधा निखर्वधा पद्ममक्षितिर्व्योमान्तः ॥ ४ ॥ यथौघो विष्यन्दमानः परःपरोवरीयान्[f] भवत्येवमेवैतदक्षरं परःपरोवरीयो भवति ॥ ५ ॥ ते हैते लोका ऊर्ध्वा एव श्रिताः । इम एवं त्रयोदशमासाः ॥ ६ ॥ स य एवं विद्वान् उद्गायति स एवमेवैताँल्लोकानतिवहति[g] । ओमित्येतेनाक्षरेणामुमादित्यं मुख आधत्ते । एष ह वा एतदक्षरम् ॥ ७ ॥ तस्य सर्वमाप्तं भवति, सर्वं जितं, न हास्य कश्चन कामोऽनाप्तो भवति य एवं वेद ॥ ८ ॥ तद्ध पृथुर्वैन्यो[h] दिव्यान् व्रात्यान् पप्रच्छ—

स्थूणां दिवस्तम्भनीं सूर्यमाहुरन्तरिक्षे सूर्यः पृथिवीप्रतिष्ठः ।
अप्सु भूमीः शिश्रियरे भूरिभाराः किंस्विन्महीरधितिष्ठन्त्यापः ॥ ९ ॥ इति ॥

ते ह प्रत्यूचुः—

स्थूणामेव दिवस्तम्भनीं सूर्यमाहुरन्तरिक्षे सूर्यः पृथिवीप्रतिष्ठः ।
अप्सु भूमीः शिश्रियरे भूरिभाराः सत्यं[i] महीरधितिष्ठन्त्यापः ॥ १० ॥ इति ॥

ओमित्येतदेवाक्षरं सत्यम् । तदेतदापोऽधितिष्ठन्ति ॥ ११ ॥

1 ) v. l. हृदयोग्रम् ( noted by Oertel ). —2 ) v. l. for भक्तम् : अक्त्रम्, भ्रत्रम् and भृतम् ( Oertel ).

*a* ) जै 1·10·10–11. —*b*––*b* ) ऐब्रा 3·18 = ( जैब्रा 2·10 ) तद्यथा सूच्या वासः संदधदियात्; छां 2·23·4. —*c* ) ऋ 2·32·4 सीव्यत्वपः सूच्याच्छिद्यमानया; तैब्रा 3·9·6·4 त्रय्यः सूच्यो भवन्ति—अयस्मय्यः, रजताः, हरिण्यः; ऐआ 5·1·3 प्रागग्राभ्यां सूचीभ्यां समुता; आर्षेय 1

विध्यन्ति सूचीभिः. —d ) ऋ 10·27·8 बृहन्नच्छायो अपलाशो अर्वा; 10·135·1 यस्मिन् वृक्षे सुपलाशे देवैः संपिबते यमः; अ 6·30·3 बृहत्पलाशे सुभगे वर्षवृद्ध ऋतावरि; छां 4·14·3 यथा पुष्करपलाश आपो न श्लिष्यन्ते; 5·2·3 प्ररोहेयुः पलाशानि = बृ 6·3·7. —e ) दशधा etc. जै 1·28·3; 1·29·5; तांब्रा 17·14·1 which uses these numerals—दश, शत, सहस्र etc. जैब्रा 2·10 दशधा वा एतदतिविध्येमान् क्षरति; शतधा....इमान्, सहस्रधा...इमान्. —f ) तैसं 6·2·3·5 परोवरीयसीमवान्तरदीक्षामुपेयात्; ऐब्रा 1·25 परोवरीयांसो वा इमे लोका अर्वागंहीयांसः; कौब्रा 8·9 तां परोवरीयसीरभ्युपेयात्; छां 1·9·2; 2·7·1–2. —g ) शब्रा 13·8·4·6 अथो अग्निर्वै पथो अतिवोढा । स एनानतिवहति; बृ 1·3·16; जै 2·11·2; 3·9·3. —h ) ऋ 8·9·10 पृथी यद्वां वैन्यः सादनेष्वेव; अ 8·10·24 तां पृथिर्वैन्योऽधोक् तां कृषिं च सस्यं चाधोक्; तैब्रा 1·7·7·4 पृथिर्वैन्यः अभ्यषिच्यत । स राष्ट्रं नाभवत्; शब्रा 5·3·5·4 पृथी ह वैन्यो मनुष्याणां प्रथमोऽभिषिषिचे; जैब्रा 1·186 तस्मै क्षत्रं प्रायच्छत । स एव पृथुर्वैन्यः. —i ) These two verses cannot be traced in Vedic literature. —j ) ऋ 10·149·1–2 अस्कम्भने सविता द्यामदृंहत् ।...यत्रा समुद्रः स्कभितो व्यौनत्; ऋ 4·13·5 दिवः स्कम्भः समृतः पाति नाकम्. —k ) ऋ 1·164·13 तस्य नाक्षस्तप्यते भूरिभारः. —l ) ऋ 10·85·1 सत्येनोत्तभिता भूमिः.

## १·११

प्रजापतिः प्रजा असृजत। ता एनं सृष्ट्वा अन्नकाशिनी[a]रभितः[b] समन्तं[b] पर्यविशन्॥१॥ ता अब्रवीत्—किंकामाः[c] स्थेति। अन्नाद्य[d]कामा इत्यब्रुवन् ॥ २ ॥ सोऽब्रवीदेकं वावेदमन्नाद्यमस्राक्षि सामैव। तद्वः प्रयच्छानीति। तन्नः प्रयच्छेत्यब्रुवन् ॥ ३ ॥ सोऽब्रवीदिमान् वै पशून् भूयिष्ठमुपजीवामः। एभ्यः प्रथमं प्रदास्यामीति ॥ ४ ॥ तेभ्यो हिङ्कारं प्रायच्छत्। तस्मात् पशवो[e] हिङ्करिक्रतो[f] विजिज्ञासमाना इव चरन्ति ॥ ५ ॥ प्रस्तावं मनुष्येभ्यः। तस्मादु ते स्तुवत इवेदं मे भविष्यत्यदो[g] मे भविष्यतीति ॥ ६ ॥ आदिं वयोभ्यः। तस्मात् तान्याददान्युपापपाता[h]मिव चरन्ति ॥ ७ ॥ उद्गीथं देवेभ्योऽमृतम्। तस्मात् तेऽमृताः ॥ ८ ॥ प्रतिहार[i]मारण्येभ्यः[j] पशुभ्यः। तस्मात् ते प्रतिहतास्तन्तस्यमाना[1k] इव चरन्ति ॥ ९ ॥

1 ) v. l. तात्रस्यमानाः; cp the intensive form तात्रस्यते ( जैब्रा ).

a ) जैब्रा 1·88; 2·148–149; '*in search of food*'? —b ) अभितः, समन्तम् and परि a tautological expression as in जैब्रा 2·142. —c ) किंकाम = किंयु; cp ऋ 3·33·4 किंयुर्विप्रो नद्यो जोहवीति. —d ) वासं 3·5 पृष्ठेऽग्निं अन्नादं अन्नादाय आदधे; अ 12·5·10 अन्नं च अन्नाद्यं च; छां 6·2·4; बृ 1·3·27; तै 1·3. —e ) जैब्रा 3·213 ततो वै तं पशवोऽभिसमजानत ... तदु हिङ्कारं भवति. —f ) करिक्रत् intensive of कृ; ऋ 1·140.5 महि वर्पः करिक्रतः; तैसं 6·4·10·2 इन्द्रो हि एतानि रूपाणि करिक्रदचरत्; अ 4·18·3 अश्मानः...बहुलाः फट् करिक्रती; जै 1·25·2 तस्मात् पशवो वसन्ता ( *loc.* ) हिङ्करिक्रतः समुदायन्ति; निघण्टु 2·1·14 करिक्रत ( कर्मनामसु ); पा 7·4·65. —g ) गी16·13 इदमपि मे भविष्यति. —h ) उप + अपपातम्; is

this णमुल् ? —*i*) छां 2·9·6...स प्रतिहारः, तदस्य गर्भान्वायत्ताः. —*j*) ऋ 10·90·8 आरण्यान् ( पशून् ) ग्राम्याश्च ये. —*k*) ऋ 6·25·6 व्यचस्वन्ता यदि वि तंतसै ते.

१·१२

उप[a]द्रवं गन्धर्वाप्सरोभ्यः । तस्मात् त उप[b]द्रवं गृह्णन्त इव चरन्ति ॥ १ ॥ निधनं पितृभ्यः । तस्मादु ते निधनसं[c]स्थाः ॥ २ ॥ तद्यदेभ्यस्तत् साम प्रायच्छदेतमेवैभ्यस्त-दादित्यं प्रायच्छत् ॥ ३ ॥ स यदनुदितः स हिङ्कारोऽर्धोदितः प्रस्ताव आस[d]ङ्गवमादिर्माध्यन्दिन उद्गीथोऽपराह्णः प्रतिहारो यदुपास्त[e]मयं लोहितायाति स उपद्रवोऽस्तमित एव निधनम् ॥ ४ ॥ [f]स एष सर्वैर्लोकैः समः । तद्यदेष सर्वैर्लोकैः सम[g]स्तस्मादेष एव साम । स ह वै सामवित् स साम वेद य एवं वेद[f] ॥ ५ ॥ तेऽब्रुवन्—दूरे वा इदमस्मत् । तत्रेदं कुरु यत्रोपजीवामेति ॥ ६ ॥ तदृतूनभ्यत्यनयत् । स वसन्तमेव हिङ्कारमकरोत्, ग्रीष्मं प्रस्तावं, वर्षामुद्गीथं, शरदं प्रतिहारं, हेमन्तं निधनम् । मासार्धमासावेव सप्तमा[h]ववकरोत् ॥ ७ ॥ तेऽब्रुवन्नेदीयो न्वावैतर्हि । तत्रैव कुरु यत्रोपजीवामेति ॥ ८ ॥ तत् पर्जन्यमभ्यत्यनयत् । स[i] पुरोवातमेव हिङ्कारमकरोत् ॥ ९ ॥

*a*) छां 2·9·7. —*b*) उपद्रव = *harassment*; reference to the harmful nature of the Gandharvas? Cp अ 8·6·19 गन्धर्वान् वातोऽभ्रामिवाजतु. —*c*) तैसं 1·6·11·2 अरिष्टेन यज्ञेन संस्थां (*end*) गच्छति; ऐब्रा 7·17 अस्य अह्नः संस्थामाधिगच्छ; शब्रा 3·1·3·6 नेत् पुरा यज्ञस्य संस्थाया अन्तं गच्छानि; 9·4·4·15 संस्थारूपं वा एतद् यद्विमोचनम्. —*d*) तैब्रा 2·1·1·3 आसङ्गवं मात्रा सह चरति; for सङ्गव cp ऋ 5·76·3 उतायातं सङ्गवे प्रातरह्नः ( सङ्गव only once in ऋ ); अ 9·6·46 सङ्गवः प्र स्तौति in fact cp the whole *sūkta*; शब्रा 2·2·3·9 यदा सङ्गवोऽथ ग्रीष्मः; छां 2·9·4 अथ सङ्गववेलायां स आदिः. —*e*) शब्रा 7·3·2·19 तं वा उपास्तमयमादित्यस्य परिणयति; cp उपोदयम्, उपव्युषसम्.— *f*- -*f*) छां 2·9 in general. —*g*) बृ 1·3·22 यद्वेव समः प्लुषिणा ...... तस्मादु एव साम. —*h*) सप्तमौ = षष्ठसप्तमौ ( i. e. *the sixth & seventh* ); cp जै 1·13·1 below ते सप्तम्यावकरोत्; छां 2·5; 2·16. —*i*) शब्रा 1·5·2·18 पुरोवातं ससृजिरे, अभ्राणि समप्लावयन्; शब्रा 2·2·3·8 यदेव पुरस्ताद्वाति तद्वसन्तस्य रूपम्.

१·१३

जीमूता[a]न् प्रस्तावं स्तनयित्नुमुद्गीथं विद्युतं प्रतिहारं वृष्टिं निधनम् । यद् वृष्टात् प्रजाश्चौषधयश्च जाय[b]न्ते ते स[c]प्तम्यावकरोत् ॥ १ ॥ तेऽब्रुवन्नेदीयो न्वावैतर्हि । तत्रैव कुरु यत्रोपजीवामेति ॥ २ ॥ तद्यज्ञमभ्यत्यनयत् । स यजूंष्येव हिङ्कारमकरोदृचः प्रस्तावं सामान्युद्गीथं स्तोमं प्रतिहारं छन्दो निधनम् । स्वाहाकारवषट्कारावेव

सप्तमावकरोत् ॥ ३ ॥ तेऽब्रुवन् नेदीयो न्वावैतर्हि । तत्रैव कुरु यत्रोपजीवामेति ॥ ४ ॥ तत् पुरुषमभ्यत्यनयत् । स मनं एव हिङ्कारमकरोद्वाचं प्रस्तावं प्राणमुद्गीथं चक्षुः प्रतिहारं श्रोत्रं निधनं रेतश्चैव प्रजां च सप्तमीवकरोत् ॥ ५ ॥ तेऽब्रुवन्नत्र वा एनत् तदर्कर्यत्रोपजीविष्याम इति ॥ ६ ॥ स विद्यादहमेव सामास्मि मय्येता देवता इति ॥ ७ ॥

—*a*) *Hapax legomenon* in ऋ 6·75·1 जीमूतस्येव भवति प्रतीकम्; वासं 25·8 जीमूतान् हृदयौपशेन......; अ 11·5·14 जीमूता आसन् सत्वानः; ऐब्रा 2·19 जीमूतवर्षी ह प्रजाभ्यः पर्जन्यः स्यात्; शब्रा 11·8·1·2 जीमूतैश्च नक्षत्रैश्च दिवम् (अदृंहत्). —*b*) शब्रा 2·6·3·7 वृष्टादोषधयो जायन्ते. —*c*) जै 1·33·3 below; छां 2·7·1 प्राणेषु पञ्चविधं सामाकरोत्. —*d*) Shall we read सप्तमे *neuter dual?* —*e*) ऋ 2·12·4 यो दासं वर्णमधरं गुहाकः *et passim.* —*f*) बृ 1·4·10 अहं ब्रह्मास्मि etc.

## १·१४

न ह दूरेदेवतः स्यात् । यावद्ध वा आत्मना देवानुपास्ते तावदस्मै देवा भवन्ति ॥ १ ॥ अथ य एतदेवं वेदाऽहमेव सामास्मि मय्येताः सर्वा देवता इत्येवं हाऽस्मिन्नेताः सर्वा देवता भवन्ति ॥ २ ॥ तदेतद्देवश्रुत् साम । सर्वा ह वै देवताः शृण्वन्त्येवंविदं पुण्यायै साधवे । ता एनं पुण्यमेव साधु कारयन्ति ॥ ३ ॥ स ह स्माह सुचित्तः शैलनः यो यज्ञकामो मामेव स वृणीताम् । तत एवैनं यज्ञ उपनंस्यति । एवंविदं ह्युद्गायन्तं सर्वा देवता अनुसंतृप्यन्ति । ता अस्मै तृप्तास्तथा करिष्यन्ति यथैनं यज्ञ उपनंस्यतीति ॥ ४ ॥

*a*) ऋ 7·63·4 दूरेअर्थस्तरणिर्भ्राजमानः; अ 4·28·3 दूरेगव्यूती स्तुवन्नेमि उग्रौ. —*b*) ऋ 10·98·7 देवश्रुतं वृष्टिवनिं राणः. —*c*) नि 2·12 देवा एनं शृण्वन्ति. —*d*) पुण्याय = साधवे. —*e*) कौ 3·8 एष ह्येव एनं साधु कर्म कारयति. —*f*) तैसं 2·1·3·4 यमलं राज्याय सन्तं राज्यं नोपनमेत्; तैब्रा 1·1·8·4 उपैनं उत्तरो यज्ञो नमति.

## १·१५

देवा वै स्वर्गं लोकमैप्सन् । तं न शयाना नासीना न तिष्ठन्तो न धावन्तो नैव केनचन कर्मणाप्नुवन् ॥१॥ ते देवा प्रजापतिमुपाधावन् । स्वर्गं वै लोकमैप्सिष्म । तं न शयाना नासीना न तिष्ठन्तो न धावन्तो नैव केनचन कर्मणाऽऽपाम । तथा नोऽनुशाधि यथा स्वर्गं लोकमाप्नुयामेति ॥ २ ॥ तानब्रवीत्—साम्नाऽनृचेन स्वर्गं लोकं प्रयातेति । ते साम्नाऽनृचेन स्वर्गं लोकं प्रायन् ॥ ३ ॥ प्र वा इमे साम्नाऽ-

गुरिति । तस्मात् प्रसामि तस्मादु प्रसाम्यन्नमत्ति ॥ ४ ॥ देवा वै स्वर्गं लोकमायन् । त एतान्यृक्पदानि शरीराणि धून्वन्त आयन् । ते स्वर्गं लोकमजयन् ॥ ५ ॥ तान्या दिवः प्रकीर्णान्यशेरन् । अथेमानि प्रजापतिर्ऋक्पदानि शरीराणि संचित्याऽभ्यर्चत् । यदभ्यर्चत् ता एवर्चोऽभवन् ॥ ६ ॥

*a* ) ऐब्रा 7·15 शयानः...संजिहानः...उत्तिष्ठन्...चरन्; cp चत्तारो इरियापथा in Pāli Buddhism. —*b* ) See below जै 1·18·8 अस्यामृचि अस्वरायाम्; 1·21·9 ऋग्वा एषर्ते स्वराद्भवति; षब्रा 3·1; जैब्रा 1·259 यत् सामानृचं गायेन्मांसमेव जायेत, न अस्थि; पा 5·4·74 ऋक् पूरब्धूः पथामानक्षे. —*c* ) प्रसाम not elsewhere. —*d* ) शब्रा 3·9·1·9 तस्मायो वाचा प्रसाम्यन्नादो हैव भवति ( प्रसामि = अर्धं सम्यअनान्नस्य—शंकराचार्य on गी 6·16 ). —*e* ) छां 2·8·3 अन्नवानन्नादो भवति. —*f* ) छां 8·13 धूत्वा शरीरम्....

## १·१६

सैवर्गभवदियमेव श्रीः । अतो देवा अभवन् ॥ १ ॥ अथैषामिमामसुराः श्रियमविन्दन्त तदेवासुरमभवत् ॥ २ ॥ ते देवा अब्रुवन्—या वै नः श्रीरभूदविन्दन्त तामसुराः । कथं न्वेषामिमां श्रियं पुनरेव जयेमेति ॥ ३ ॥ तेऽब्रुवन्नृच्येव साम गायामेति । ते पुनः प्रत्याद्रुत्यर्चि सामागायन् । तेनास्माल्लोकादसुराननुदन्त ॥ ४ ॥ तद्वै माध्यन्दिने च सवने तृतीयसवने च नर्चोऽपराधोऽस्ति । स यत् ते[b] ऋचि गायति तेनास्माल्लोकाद् द्विषन्तं भ्रातृव्यं नुदते । अथ यदनृचे देवतासु प्रातःसवनं गायति तेन स्वर्गं लोकमेति ॥ ५ ॥ प्रजापतिर्वै साम्नेमां जितिमजयद्यास्येयं जितिस्ताम् । स स्वर्गं लोकमारोहत् ॥ ६ ॥ ते देवाः प्रजापतिमुपेत्याऽब्रुवन्नस्मभ्यमपीदं साम प्रयच्छेति । तथेति । तदेभ्यः साम प्रायच्छत् ॥ ७ ॥ तदेनानिदं साम स्वर्गं लोकं नाकामयत वोढुम् ॥ ८ ॥ ते देवाः प्रजापतिमुपेत्याऽब्रुवन्—यद्वै नः साम प्रादा इदं वै नस्तत् स्वर्गं लोकं न कामयते वोढुमिति ॥ ९ ॥ तद्वै पाप्मना संसृजतेति । कोऽस्य पाप्मेति । ऋगिति । तदृचा समसृजन् ॥ १० ॥ तदिदं प्रजापतेर्गर्हयमाणम तिष्ठदिदं वै मा तत् पाप्मना समस्राक्षुरिति । सोऽब्रवीद्यस्त्वैतेन व्यावर्तयाद् व्येव स पाप्मना वर्तोता इति ॥ ११ ॥ स य एतदृचा प्रातःसवने व्यावर्तयति व्येवं स पाप्मना वर्तते ॥ १२ ॥

*a* ) पाशिक्षा 52 स्वरतोऽपराधात्. —*b* ) ते ( *neu. dual* ). —*c* ) ऋ 10·117·3 स इद्भोजो यो गृहवे ददाति ( गृह् = गर्ह् ) अन्नकामाय चरते कृशाय; 5·32·12 किं ते ब्रह्माणो गृहते सखायः; 8·21·16 इन्द्र मा ते गृहामहि; मैसं 1·9·5 न चक्षुषो गृहे य एवं वेद; कासं 9·13 चक्षुषो गृहे.

## १·१७

तदाहुर्यदोवा ओवा इति गीयते क्वात्रगर्भवति क सामेति ॥ १ ॥ प्रस्तुवन्नेवाष्टाभिरक्षरैः प्रस्तौति अष्टाक्षरा गायत्री । अक्षरमक्षरं त्र्यक्षरम् । तच्चतुर्विंशतिः संपद्यन्ते । चतुर्विंशत्यक्षरा गायत्री ॥ २ ॥ तामेतां प्रस्तावेनर्चमाप्त्वा या श्रीर्याऽपचितिर्यः स्वर्गो लोको यद्यशो यदन्नाद्यं तान्यागायमान आस्ते ॥ ३ ॥

*a*) The plural verb implies अक्षराणि as the subject (understood) with चतुर्विंशतिः in apposition. —*b*) अ 1·10·4 ब्रह्म चाप चिकीहि नः; वासं 21·58 यशो न दधादिन्द्रियमूर्जमपचितिं स्वधाम्; शब्रा 3·4·1·5 अथास्मा उदकं हरन्ति, अथापचितिं कुर्वन्ति; छां 1·1·9 एतस्यैवाक्षरस्यापचित्यै; बृ 1·5·14 एतस्या एव देवताया अपचित्यै; पा 7·2·30 अपचितिश्च.

## १·१८

प्रजापतिर्देवानसृजत । तान् मृत्युः पाप्माऽन्वसृज्यत ॥ १ ॥ ते देवाः प्रजापतिमुपेत्याब्रुवन्—कस्मादु नोऽसृष्ठा मृत्युं चेन्नः पाप्मानमन्ववस्रक्ष्यन्नासिथेति ॥ २ ॥ तानब्रवीत्—छन्दांसि संभरत । तानि यथायतनं प्रविशत । ततो मृत्युना पाप्मना व्यावर्त्स्यथेति ॥ ३ ॥ वसवो गायत्रीं समभरन् । तां ते प्राविशन् । तान् साऽच्छादयत् ॥ ४ ॥ रुद्रास्त्रिष्टुभं समभरन् । तां ते प्राविशन् । तान् साऽच्छादयत् ॥ ५ ॥ आदित्या जगतीं समभरन् । तां ते प्राविशन् । तान् साऽच्छादयत् ॥ ६ ॥ विश्वेदेवा अनुष्टुभं समभरन् । तां ते प्राविशन् । तान् साऽच्छादयत् ॥ ७ ॥ तानस्यामृच्यस्वरायां मृत्युर्निरजानाद्यथा मणौ मणिसूत्रं परिपश्येदेवम् ॥ ८ ॥ ते स्वरं प्राविशन् । तान् स्वरे सतो न निरजानात् । स्वरस्य तु घोषेणान्वैत् ॥ ९ ॥ त ओमित्येतदेवाक्षरं समारोहन् । एतदेवाक्षरं त्रयी विद्या । यदद्दोऽमृतं तपति, तत् प्रपद्य ततो मृत्युना पाप्मना व्यावर्तन्त ॥ १० ॥ एवमेवैनं विद्वानोमित्येवमेवाक्षरं समारुह्य यददोऽमृतं तपति तत् प्रपद्य ततो मृत्युना पाप्मना व्यावर्ततेऽथो यस्यैवं विद्वानुद्गायति ॥ ११ ॥

*a*) Cp in general जैब्रा 1·283 ff. —*b*) *Perfect 2nd sg.* of आस् ? (hapax legomenon); if the reading is genuine Pāṇini would incorporate the root आस् in 3·1·38 उषविदजागृभ्योऽन्यतरस्याम्, provided that he had the form before him. —*c*) ऐब्रा 2·3; कौ 3·3; शब्रा 13·5·2·16 यथायतनं पर्युपविशन्ति; तांब्रा 5·6·7; 16·5·24 पृष्ठानि यथायतनं कल्पन्ते; जैब्रा 1·154 तस्मात् प्रजा यथायतनादनुद्धताः; तैब्रा 1·2·5·2 यथायतनात् देवता अवरुन्धे. —*d*) अ 11·8·13 ये संभारान् समभरन्; तैसं 2·6·2·5 वज्रं संभृत्य भ्रातृव्याय प्र हरति; ऋ 1·162·6 ये चार्वते पचनं संभरन्ति. —*e*) छां 1·4·2 देवा वै मृत्योर्बिभ्यतः त्रयीं

विद्यां प्राविशन् । ते छन्दोभिरच्छादयन्. —f) जै 1·15·3; 1·16·4; 1·21·9. —g) Contrast गी 7·7 सूत्रे मणिगणा इव. —h) छां 1·4·3 यथा मत्स्यमुदके परिपश्येत् which itself can be traced to ऋ 10·68·8...... पर्यपश्यन् मत्स्यं न दीन उदनि क्षियन्तम्. —i) बृ 4·3·5 अपि यत्र स्वः पाणिर्न विनिर्ज्ञायते. —j) छां 1·4·4 एष उ स्वरो यदेतत् (ओम्) अक्षरम्. —k) छां 1·1·9 तेनेयं त्रयी विद्या वर्तते.

## १·१९

अथैतदेकविंशं साम ॥ १ ॥ तस्य त्रय्येव विद्या हिङ्कारः । अग्निर्वायुरसावादित्यः प्रस्तावः । इम एव लोका आदिः । तेषु हीदं लोकेषु सर्वमाहितम् । श्रद्धा यज्ञो दक्षिणा एष उद्गीथः । दिशोऽवान्तरदिश आकाश एष प्रतिहारः । आपः प्रजा ओषधय एष उपद्रवः । चन्द्रमा नक्षत्राणि पितर एतन्निधनम् ॥ २ ॥ तदेतदेकविंशं साम । स य एवमेतदेकविंशं साम वेदैतेन हास्य सर्वेणोद्गीतं भवत्येतस्मादेव सर्वस्मादावृश्च्यते य एवं विद्वांसमुपवदति ॥ ३ ॥

a) Attempt at popular etymology. We can say *brāhmaṇawise* आर्धि सन्तमादिमित्याचक्षते परोक्षेण. —b) जै 1·57·9; 1·58·10 (स्तुतम् for उद्गीतम्). —c) जैब्रा 1·284 येन येन ह्येवैनं छन्दसा (आर्त्विज्यम्) कुर्वन्तमुपवदति तस्मादावृश्च्यते...; तैब्रा 3·3·10·1 यदग्नये सायं जुहुयादा सूर्याय वृश्च्येत.

## १·२०

इदमेवेदमग्रेऽन्तारिक्षमासीत् । तद्वेवाप्येतर्हि ॥ १ ॥ तद्यदेतदन्तरिक्षं य एवायं पवत एतदेवान्तरिक्षम् । एष ह वा अन्तरिक्षनाम ॥ २ ॥ एष उ एवैष विततः । तद्यथा पलाशे विष्कब्धे स्यातामक्षेण वा चक्रावेवमेतेनेमौ लोकौ विष्कब्धौ ॥ ३ ॥ तस्मिन्निदं सर्वमन्तः । तद्यदस्मिन्निदं सर्वमन्तस्तस्मादन्तर्यक्षम् । अन्तर्यक्षं ह वै नामैतत् । तदन्तरिक्षमिति परोक्षमाचक्षते ॥ ४ ॥ तद्यथा मूताः प्रबद्धाः प्रलम्बेरन्नेवं हैतस्मिन् सर्वे लोकाः प्रबद्धाः प्रलम्बन्ते ॥ ५ ॥ तस्यैतस्य साम्नस्तिस्र आगास्त्रीण्यागीतानि षड्विभूतयश्चतस्रः प्रतिष्ठा दश प्रगाः सप्त संस्था द्वौ स्तोभावेकं रूपम् ॥ ६ ॥ तद्यास्तिस्र आगा इम एव ते लोकाः ॥ ७ ॥ अथ यानि (त्रीणि) आगीतान्यग्निर्वायुरसावादित्य एतान्यागीतानि । न ह वै कांचन श्रियमपराध्नोति य एवं वेद ॥ ८ ॥

a) Idiomatic for अन्तरिक्षनामा? Cp बृ 1·4·7 असौनामायम् containing असौनाम? —b) जैब्रा 1·144 यथाक्षेण चक्रौ विष्टब्धौ (v. l. विष्कब्धौ)...... —c) चक्र (*mas.*); cp ऋ 4·1·3 आशुं न चक्रम्; 8·5·29 उभा चक्रा हिरण्यया. —c) ऋ 7·99·3

व्यस्तश्चा रोदसी विष्णवेते ( = विष्णो + एते ). —d) ऋ. 7·61·5 प्र यासु चित्रं ददृशे न यक्षम्; वासं 34·2 यदपूर्वं यक्षमन्तः प्रजानाम्; अ 8·7·38 महद्यक्षं भुवनस्य मध्ये; बृ 5·4·1; के 3·2 —e – –e ) An attempt at popular etymology, अन्तरिक्ष = अन्तरि + क्ष; for अन्तरि *loc.* cp उपरि *loc.*? —f) तैब्रा 1·6·10·5 मूते (*neut. dual?*) कृत्वा सजन्ति; शब्रा 2·6·2·17 तान् द्वयोर्मूतकयोरुपनह्य.... —g) जै 1·37·1 आग्नेयी एका ऐन्द्री एका वैश्वदेवी एका. —h) The precise meaning of आगीत, विभूति, प्रतिष्ठा and प्रगा is obscure. —i) जैब्रा 1·330 एक एकरूपमेव भा भा इति स्तोभन्ति. —j) जै 1·37·5 एकस्थां श्रियं ऋध्नोति ( न अपराध्नोति = ऋध्नोति ) — राध् and ऋध् being cognates.

## १·२१

अथ याः षड् विभूतय ऋतवस्ते ॥ १ ॥ अथ याश्चतस्रः प्रतिष्ठा इमा एव ताश्चतस्रो दिशः ॥ २ ॥ अथ ये दश प्रगा इम एव ते दश प्राणाः ॥ ३ ॥ अथ याः सप्त संस्था या एवैताः सप्त होत्राः[a] प्राचीर्[b]वषट्कुर्वन्ति ता एव ताः ॥ ४ ॥ अथ यौ द्वौ स्तोभावहोरात्रे[c] एव ते ॥ ५ ॥ अथ यदेकं रूपं कर्मैव तत् । कर्मणा हीदं सर्वं विक्रियते ॥ ६ ॥ तस्यैतस्य साम्नो देवा आजिम्[d]आयन् । स प्रजापतिर्हरसा[e] हिङ्कारमुद-जयदग्निस्तेजसा प्रस्तावं रूपेण बृहस्पतिरुद्गीथं स्वधया पितरः प्रतिहारं वीर्येणेन्द्रो निधनम् ॥७॥ अथेतरे देवा अन्तरिता[f] इवासन् । त इन्द्रमब्रुवन्—तव वै वयं स्मो[g]ऽनु न एतस्मिन् सामन्नाभजेति ॥ ८ ॥ तेभ्यः स्वरं प्रायच्छत् । तं प्रजापतिरब्रवीत्—कथेत्थमकः । सर्वं वा एभ्यः साम प्रादाः । एतावद्वा साम यावान् स्वरः । ऋग् वा एषर्ते स्वराद्भवतीति ॥ ९ ॥ सोऽब्रवीत्—पुनर्वा अहमेषामेतं रसमादास्य इति । तानब्रवीत्—उप मा गायत । अभि मा स्वरतेति । तथेति ॥ १० ॥ तमुपा[h]गायन् । तमभ्यस्वरन् । तेषां पुना रसमादत्त ॥ ११ ॥

a) होत्रा is *fem.*, cp ऐब्रा 6·1 एका वै होत्रा अकृता. —b) Oertel suggests प्राचीः = पराचीः. —c) Oertel already notes that अहोरात्रे is a rare *fem. dual*; cp मभा (CE) 12·166·9 अहोरात्राः पतन्त्येताः where, however, the reading एताः is relegated to Malayalam variants. Cp also वासं 14·30 अहोरात्रे अधिपत्नी आस्ताम्. —d) ऐब्रा 2·25 त आजिमयुः; शब्रा 2·4·3·4 आजिमेवास्मिन्नजामहै; 5·1·4·15 आजिं हि सरिष्यन्तो भवन्ति; छां 1·3·5 आजेः सरणम्. —e) ऋ 10·87·5 अशनिर्हरसा हन्त्वेनम्; अ 18·2·36 वनेषु शुष्मो अस्तु ते पृथिव्यामस्तु यद्धरः. —f) No Vedic parallel; cp अभिज्ञान-शाकुन्तल i·15f पादपान्तरित एव विश्रब्धं तावदेनां पश्यामि. —g) ऋ 8·92·32 त्वमस्माकं तव स्मसि; जै 1·57·5. —h) उप + गा = अभि + स्वर्.

## १.२२

स यथा मधुधाने[a] मधुनाळीभिर्मध्वासिञ्चादेवमेव तत् सामन्[b] पुना रसमासिञ्चत् ॥ १ ॥ तस्मादु ह नोपगायेत्[d]। इन्द्र एष यदुद्गाता। स यथाऽसावमीषां रसमादत्त एवमेष तेषां रसमादत्ते ॥ २ ॥ कामं ह तु यजमान उपगायेत्। यजमानस्य हि तद् भवति। अथो ब्रह्मचार्याचार्योक्तः ॥ ३ ॥ तदु वा आहुः। उपैव गायेत्। दिशो ह्युपगायन् दिशामेवं सलोकतां जयतीति ॥ ४ ॥ ते य एवेमे मुख्याः प्राणा एत एवोद्गातारश्चोपगातारश्च[e]। इमे ह त्रय उद्गातार इम उ चत्वार उपगातारः ॥ ५ ॥ तस्मादु चतुर एवोपगातॄन् कुर्वीत। तस्मादु होपगातॄन् प्रत्यभिमृशेत्। दिशः स्थ श्रोत्रं मे मा हिंसिष्टेति ॥ ६ ॥ स यः स रस आसीद्य एवायं पवत[f] एष एव स रसः ॥ ७ ॥ यथा मध्वालोपमद्यादिति[g] ह स्माह सुचित्तः[h] शलनः। एवमेतस्य रसस्यात्मानं पूरयेत। स एवोद्गाताऽऽत्मानं च यजमानं चामृतत्वं गमयतीति ॥ ८ ॥

*a*) Cp ऋ 6·69·6 कलशः सोमधानः. —*b*) छां 3·1·2 ता एवास्य प्राच्यो मधुनाड्यः. —*c*) Vedic locative. —*d*) तैसं 6·3·1·4 न अध्वर्युरुपगायेत्. —*e*) तैसं 3·3·2·1 बृहस्पतिरुद्गाता विश्वे देवा उपगातारः. —*f*) आत्मनेपद i. e. in the passive sense; छां. 4·16·1 एष ह वै यज्ञो योऽयं पवते; मुं 2·1·6 सोमो यत्र पवते. —*g*) आलोप *mouthful bite*, थेरगाथा 9·1055 ( verse ), थेरीगाथा 986 चत्तारि पञ्च आलोपे अभुत्वा उदकं पिवे. —*h*) जैब्रा 1·245.

## १.२३

अयमेवेदमग्र आकाश आसीत्। स उ एवाप्येतर्हि ॥ १ ॥ स यः स आकाशो वागेव सा। तस्मादाकाशाद्वाग् वदति ॥२॥ तामेतां वाचं प्रजापतिरभ्यपीळयत्। तस्या अभिपीळितायै रसः प्राणेदत्। त एवेमे लोका अभवन् ॥ ३ ॥ स इमाँल्लोकानभ्यपीळयत्। तेषामभिपीळितानां रसः प्राणेदत्। ता एवैता देवता अभवन्नग्निर्वायुरसावादित्य इति ॥ ४ ॥ स एता देवता अभ्यपीळयत्। तासामभिपीळितानां रसः प्राणेदत्। सा त्रयी विद्याऽभवत् ॥ ५ ॥ स त्रयीं विद्यामभ्यपीळयत्। तस्या अभिपीळितायै रसः प्राणेदत्। ता एवैता व्याहृतयोऽभवन् भूर्भुवः स्वरिति ॥ ६ ॥ स एता व्याहृतीरभ्यपीळयत्। तासामभिपीळितानां रसः प्राणेदत्। तदेतदक्षरमभवदोमिति यदेतत् ॥ ७ ॥ स एतदक्षरमभ्यपीळयत्। तस्याभिपीळितस्य रसः प्राणेदत्[a] ॥ ८ ॥

*a*) This is a contradiction of जै 1·1·6 अथ एकस्यैवाक्षरस्य रसं नाशक्नोदादातुमोमित्येतस्यैव.

## १·२४

तदक्षरदेव । यदक्षरदेव तस्मादक्षरम् ॥ १ ॥ यद्वेवाक्षरं नाक्षीयत तस्मादक्षयम्[a] । अक्षयं ह वै नामैतत् । तदक्षरमिति परोक्षमाचक्षते ॥ २ ॥ तद्धैतदेक ओमिति गायन्ति । तत् तथा न गायेत । ईश्वरो हैनदेतेन रसेनान्तर्धातोः[b] । अथो द्वे इवैवं भवत ओमिति । ओ इत्यु हैके गायन्ति । तदु ह तन्न गीतम् । नैव तथा गायेत । ओमित्येव गायेत् । तदेनदेतेन रसेन संदधाति ॥ ३ ॥ तदेतं रसं तर्पयति । रसस्तृप्तोऽक्षरं तर्पयति । अक्षरं तृप्तं व्याहृतीस्तर्पयति । व्याहृतयस्तृप्ता वेदाँस्तर्पयन्ति । वेदास्तृप्ता देवतास्तर्पयन्ति । देवतास्तृप्ता लोकाँस्तर्पयन्ति । लोकास्तृप्ता अक्षरं तर्पयन्ति । अक्षरं तृप्तं वाचं तर्पयति । वाक् तृप्ताकाशं तर्पयति । आकाशस्तृप्तः प्रजास्तर्पयति । तृप्यति प्रजया पशुभिर्य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ॥ ४ ॥

Cp in general छां 1·1·3 स एष रसानां रसतमः …… यदुद्गीथः.

*a*) जै 1·43·8 यत् क्षरं नाक्षीयतेति. —*b*) अन्तर्धातोः as opposed to संदधाति in 1·24·3; छां 6·16·1 अनृतेनात्मानमन्तर्धाय.

## १·२५

अयमेवेदमग्र आकाश आसीत् । स उ एवाप्येतर्हि ॥ १ ॥ स यः स आकाश आदित्य एव सः । एतस्मिन् ( हि ) उदिते सर्वमिदमाकाशते ॥ २ ॥ तस्य मर्त्यामृतयोर्वै तीराणि समुद्र एव । तद्यत् समुद्रेण परिगृहीतं तन्मृत्योराप्तमथ यत् परं तदमृतम् ॥ ३ ॥ स यो ह स समुद्रो य एवायं पवत एष एव स समुद्रः । एतं हि संद्रवन्तं सर्वाणि भूतान्यनुसंद्रवन्ति ॥ ४ ॥ तस्य द्यावापृथिवी एव रोधसी । अथ यथा नद्यां कंसानि वा प्रहीणानि स्युः सरांसि वैवमस्यायं पार्थिवः समुद्रः ॥ ५ ॥ स एष पार एव समुद्रस्योदेति । स उद्यन्नेष वायोः पृष्ठ आक्रमते । सोऽमृतादेवोदेति । अमृतमनुसञ्चरति । अमृते प्रतिष्ठितः ॥ ६ ॥ तस्यैतत् त्रिवृद्रूपं मृत्योरनाप्तं शुक्लं कृष्णं पुरुषः ॥ ७ ॥ तद्यच्छुक्लं तद्वाचो रूपमृचोऽग्नेर्मृत्योः । सा या सा वागृक् सा । अथ योऽग्निर्मृत्युः सः ॥ ८ ॥ अथ यत् कृष्णं तदपां रूपमन्नस्य मनसो यजुषः । तद्यास्ता आपोऽन्नं तत् । अथ यन्मनो यजुस्तत् ॥ ९ ॥ अथ यः पुरुषः स प्राणस्तत् साम तद्ब्रह्म तदमृतम् । स यः प्राणस्तत् साम । अथ यद्ब्रह्म तदमृतम् ॥ १० ॥

*a*) आकाश = आदित्य, identity based on popular etymology. —*b*) ऐब्रा 4·13 यथैव छिन्ना नौर्बन्धनात् तीरं तीरमृच्छन्ती प्लवेत; जैब्रा 2·297 दक्षिणे तीरे दीक्षन्ते; तांब्रा 22·18·7 सुदाम्नस्तीर उत्तरे. —*c*) Popular etymology of समुद्र. —*d*) ऋ 5·29·7 त्री...सरांसि सुतं पिबत्...सोमम्. —*e*) Cp the त्रिवृत्करण in छां 6 3·3 where instead of पुरुष, we have रोहितम्. —*f*) शब्रा 2·2·4·7 अत्स्यतश्चाग्नेर्मृत्योरात्मानमत्रायत; जैब्रा 1·12 स यो ह स मृत्युरग्निरेव सः. —*g*) कौब्रा 4·2 य एव एष आदित्ये पुरुषः; छां 1·6·6; 4·11·1; बृ 2·1·2; 3·9·12.

## १·२६

अथाध्यात्मम् । इदमेव चक्षु[a]स्त्रिवृच्छुक्लं कृष्णं पुरुषः ॥ १ ॥ तद्यच्छुक्लं तद्वाचो रूपमृचोऽग्नेर्मृत्योः। सा या सा वागृक् सा। अथ योऽग्निर्मृत्युः सः ॥२॥ अथ यत् कृष्णं तदपां रूपमन्नस्य मनसो यजुषः । तद्यास्ता आपो[b]ऽन्नं तत् । अथ यन्मनो यजुष्टत् ॥ ३ ॥ अथ यः पुरुषः स प्राणस्तत् साम तद्ब्रह्म तदमृतम् । स यः प्राणस्तत् साम । अथ यद्ब्रह्म तदमृतम् ॥ ४ ॥ सैषोत्क्रान्तिर्ब्रह्मणः । अथातः पराक्रान्तिः[c] सा या साऽऽक्रान्तिर्विद्युदेव सा । स यदेव विद्युतो विद्योतमानायै श्येतं रूपं भवति तद्वाचो रूपमृचोऽग्नेर्मृत्योः ॥६॥ यद्वेव विद्युतः संद्रवन्त्यै नीलं रूपं भवति तदपां रूपमन्नस्य मनसो यजुषः ॥ ७ ॥ य एवैष विद्युति पुरुषः स प्राणस्तत् साम तद्ब्रह्म तदमृतम् । स यः प्राणस्तत् साम । अथ यद्ब्रह्म तदमृतम् ॥ ८ ॥

*a*) जैब्रा 1·254 तस्मात् त्रिवृच्चक्षुः, शुक्लं कृष्णं कनीनिका (*sic*) (i. e. the अक्षिपुरुष ? ); 1·324 त्रैष्टुभमिदं चक्षुः शुक्लं कृष्णं पुरुषः ; शब्रा 12·8·2·26 त्रिवृद्वा इदं चक्षुः शुक्लं कृष्णं कनीनिका; जै 1·34·1. —*b*) शब्रा 2·1·1·3 तस्माद् यदेमं लोकमाप आगच्छान्ति अथेहान्नाद्यं जायते; जै 1·29·5; 1·33·5. —*c*) What are these — उत्क्रान्तिः and आक्रान्तिः ?

## १·२७

स हैषोऽमृतेन परि[a]वृढो मृत्युमध्या[b]स्तेऽन्नं[c] कृत्वा ॥ १ ॥ अथैष एव पुरुषो योऽयं चक्षुषि । य आदित्ये सोऽतिपु[d]रुषः । यो विद्युति स परमपुरुषः ॥ २ ॥ एते ह वाव त्रयः पुरुषाः । आ हाऽस्यैते जायन्ते ॥ ३ ॥ स योऽयं चक्षुष्येषोऽनुरूपो नाम । अन्वङ् ह्येष सर्वाणि रूपाणि । तमनुरू[e]प इत्युपासीत । अन्वञ्चि हैनं सर्वाणि रूपाणि भवन्ति ॥ ४ ॥ य आदित्ये स प्रतिरूपः । प्रत्यङ् ह्येष सर्वाणि रूपाणि । तं प्रतिरूप इत्युपासीत । प्रत्यञ्चि हैनं सर्वाणि रूपाणि भवन्ति ॥ ५ ॥ यो विद्युति स सर्वरूपः । सर्वाणि ह्येतस्मिन् रूपाणि । तं सर्वरूप इत्युपासीत । सर्वाणि ह्यस्मिन्

रूपाणि भवन्ति ॥ ६ ॥ एते ह वाव त्रयः पुरुषाः । आ हाऽस्यैते जायन्ते य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ॥ ७ ॥

*a*) नि 1·7 बृहदिति महतो नामधेयं परिवृढं भवति । ब्रह्मा परिवृढः श्रुततः; ब्रह्म परिवृढं सर्वतः. —*b*) ऋ 1·25·9 वेदा ये अध्यासते. —*c*) बृ 1·2·1; जै 1·3·3. —*d*) शब्रा 13·5·4·7 अश्वमेध्यमालभत क्रिवीणामतिपूरुषः. —*e*) Note the juxta-position of अनुरूप ( in 4 ), प्रतिरूप ( in 5 ) and सर्वरूप ( in 6 ).

## १·२८

अयमेवेदमग्र आकाश आसीत् । स उ एवाप्येतर्हि ॥ १ ॥ स यः स आकाश इन्द्र एव सः । स यः स इन्द्र एष एव स य एष एव तपति । स एष सप्तरश्मिर्वृषभस्तुविष्मान् ॥ २ ॥ तस्य वाङ्मयो रश्मिः प्राङ् प्रतिष्ठितः । सा या सा वागग्निः सः । स दशधा भवति शतधा सहस्रधाऽयुतधा प्रयुतधा नियुतधाऽर्बुदधा न्यर्बुदधा निखर्वधा पद्ममक्षितिर्व्योमान्तः ॥ ३ ॥ स एष एतस्य रश्मिर्वाग् भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च वदत्येतस्यैव रश्मिना वदति ॥ ४ ॥ अथ मनोमयो दक्षिणा प्रतिष्ठितः । तद्यत् तन्मनश्चन्द्रमाः सः । स दशधा भवति ॥५॥ स एष एतस्य रश्मिर्मनो भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च मनुत एतस्यैव रश्मिना मनुते ॥६॥ अथ चक्षुर्मयः प्रत्यङ् प्रतिष्ठितः । तद्यत् तच्चक्षुरादित्यः सः । स दशधा भवति ॥ ७ ॥ स एष एतस्य रश्मिश्चक्षुर्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च पश्यत्येतस्यैव रश्मिना पश्यति ॥ ८ ॥ अथ श्रोत्रमय उदङ् प्रतिष्ठितः । तद्यत्तच्छ्रोत्रं दिशस्ताः । स दशधा भवति ॥ ९ ॥ स एष एतस्य रश्मिः श्रोत्रं भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च शृणोत्येतस्यैव रश्मिना शृणोति ॥१०॥

*a*) This पाद occurs in ऋ 2·12·12 ( यः सप्तरश्मिर्वृषभस्तुविष्मान् ). See below 1·29·7. —*b*) On these numerals, see जै 1·29·5.

## १·२९

अथ प्राणमय ऊर्ध्वः प्रतिष्ठितः । स यः स प्राणो वायुः सः । स दशधा भवति ॥ १ ॥ स एष एतस्य रश्मिः प्राणो भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च प्राणित्येतस्यैव रश्मिना प्राणिति ॥२॥ अथाऽसुमयस्तिर्यङ् प्रतिष्ठितः । स ह स ईशानो नाम । स दशधा भवति ॥ ३ ॥ स एष एतस्य रश्मिरसुर्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्चासुमानेतस्यैव रश्मिनासुमान् ॥४॥ अथाऽन्नमयोऽर्वाङ् प्रतिष्ठितः । तद्यत् तदन्नमापस्ताः । स दशधा भवति शतधा सहस्रधाऽयुतधा प्रयुतधा-

नियुतधाऽर्बुदधा न्यर्बुदधा निखर्वधा पद्ममक्षितिर्व्योमान्तः ॥ ५ ॥ स एष एतस्य रश्मिरन्नं भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्चाश्नात्येतस्यैव रश्मि-नाश्नाति ॥ ६ ॥ स एव सप्तरश्मिर्वृषभस्तुविष्मान् । तदेतदृचाऽभ्यनूद्यते—

यः[a] सप्तरश्मिर्वृषभस्तुविष्मानवासृजत् सर्तवे सप्त सिन्धून् ।
यो रौहिणमस्फुरद्वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्रः ॥ ७ ॥

यः[b] सप्तरश्मिरिति सप्त ह्येत आदित्यस्य रश्मयः । वृषभ[c] इति । एष ह्येवासां प्रजानामृषभः । तुविष्मानिति महीयैवाऽस्यैषा ॥८॥ अवासृजत् सर्तवे सप्त सिन्धूनिति । सप्त ह्येते सिन्धवः । तैरिदं सर्वं सितम् । तद्यदेतैरिदं सर्वं सितं[d] तस्मात् सिन्धवः ॥ ९ ॥ यो रौहिणमस्फुरद्वज्रबाहुरिति । एष (हि) रौहिणमस्फुरद् वज्रबाहुः ॥१०॥ द्यामारोहन्तं स जनास इन्द्र इति । एष हीन्द्रः ॥ ११ ॥

*a*) ऋ 2·12·12. —*b*) Brāhmaṇa-wise comment on the Rigveda quotation. —*c*) जैब्रा 2·87 इन्द्रो वा अकामयत, ऋषभः सर्वासां प्रजानां स्यामिति. —*c*) तैसं 7·5·10·1 महीयामेव एषु दधाति; जै 1·46·2 महीया च रसश्च; 1·48·5 महीया मांसान्यस्य तानि । मांसैर्हि स महीयते. —*d*) Popular etymology !

## १·३०

तद्यथा गिरिं पन्थानः समुदियुरि[a]ति ह स्माह शाट्यायनि[b]रेवमेत आदित्यस्य रश्मय एतमादित्यं सर्वतोऽपियन्ति । स हैवं विद्वानोमित्याददान एतैरेतस्य रश्मिभिरेत-मादित्यं सर्वतोऽप्येति ॥ १ ॥ तदेतत् सर्वतोद्वारमनिषेधं[c] साम । अन्यतोद्वारं हैनदेक एवाऽभ्रङ्गमु[d]पासते । अतोऽन्यथा विद्युः ॥२॥ अथ य एतदेवं वेद स एवैतत् सर्वतो-द्वारमनिषेधं साम वेद ॥ ३ ॥ सा एषा विद्युत् । (यद्) एतन्मण्डलं समन्तं परितपति तत् साम । अथ यत् परमतिभाति स पुण्यकृत्यायै रसः । तमभ्यतिमुच्यते ॥४॥ तदेतदभ्रातृव्यं साम । न ह वा इन्द्रः कंचन भातृव्यं पश्यते । स यथेन्द्रो न कंचन भ्रातृव्यं पश्यत एवमेव न कंचन भ्रातृव्यं पश्यते य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ॥ ५ ॥

*a*) Wrong reading for —ईयुः ? —*b*) शब्रा 8·1·4·9; 10·4·5·20; साविब्रा 3·8; जै 1·6·2; 1·30·1; 2·2·8; 2·4·3; 3·13·6; 3·28·5; 4·16·1; 4·17·2. —*c*) जैब्रा 2·90 ताः ... निषेधेन निषिध्य आत्मन् दधिरे ... बृहत्सामा निषेधब्रह्मा; तांब्रा 15·9·11 निषेधेन देवाः पशून् पर्यगृह्णन्; आब्रा 2·17 अङ्गिरसां च उत्सेधानिषेधौ; 3·5 एषां निषेध उत्तमम्. —*d*) Cp

अभ्रङ्कष in पा 3·2·42. —e) शब्रा 1·6·1·8 आभक्तो ह वै तस्यां पुण्यकृत्यायां भवति; also साधुकृत्या in शब्रा 13·8·1·1; cp पापकृत्या in शब्रा 11·2·7·33 and 13·5·4·1. —f) ऐब्रा 4·2 अभ्रातृव्यं वा एतद् भ्रातृव्यहा (*sic*) साम यन्नानदम्; जै 1·45·6.

## १·३१

अयमेवेदमग्र आकाश आसीत्। स उ एवाऽप्येतर्हि। स यः स आकाश इन्द्र एव सः। स यः स इन्द्रः सामैव तत्॥ १ ॥ तस्यैतस्य साम्न इयमेव प्राची दिग्घिङ्कार ईयं[a] प्रस्ताव ईयमादिरियमुद्गीथोऽसौ[b] प्रतिहारोऽन्तरिक्षमुपद्रव ईयमेव[c] निधनम्॥२॥ तदेतत् सप्तविधं[d] साम। स य एवमेतत् सप्तविधं साम वेद यत् किञ्च प्राच्यां दिशि या देवता[e] ये मनुष्या ये पशवो यदन्नाद्यं तत् सर्वं हिङ्कारेणाप्नोति ॥३॥ अथ यद्दक्षिणायां दिशि तत् सर्वं प्रस्तावेनाप्नोति ॥ ४ ॥ अथ यत् प्रतीच्यां दिशि तत् सर्वमादिनाप्नोति ॥ ५ ॥ अथ यदुदीच्यां दिशि तत् सर्वमुद्गीथेनाप्नोति ॥ ६ ॥ अथ यदमुष्यां दिशि तत् सर्वं प्रतिहारेणाप्नोति ॥ ७ ॥ अथ यदन्तरिक्षे तत् सर्वमुपद्रवेणाप्नोति ॥ ८ ॥ अथ यदस्यां दिशि या देवता ये मनुष्या ये पशवो यदन्नाद्यं तत् सर्वं निधनेनाप्नोति ॥ ९ ॥ सर्वं हैवास्याप्तं भवति सर्वं जितं न हास्य कश्चन कामोऽनाप्तो भवति य एवं वेद ॥ १० ॥ स यद्ध किञ्च किञ्चैवं विद्वानेषु लोकेषु कुरुते स्वस्य[h] हैव तत् स्वतः[h] कुरुते। तदेतदृचाऽभ्यनूच्यते— ॥ ११ ॥

a) I.e. दक्षिणा दिक्. —b) I.e. प्रतीची दिक्. —c) I.e. उदीची दिक्. —d) I.e. द्युलोकः. —e) I.e. अधरा दिक् or पृथ्वी. —f) Cp छां 2·8 f. —g) The divinities of the different quarters; see बृ 3·9·20ff. —h) Note the idiom स्वस्य स्वतः कुरुते.

## १·३२

यद्[a] द्याव इन्द्र ते शतं शतं भूमीरुत स्युः।

न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी[b] इति ॥ १ ॥

यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युरिति। यच्छतं द्यावः स्युः शतं भूम्यस्[d]ताभ्य एष एवाकाशो ज्यायान्॥ २ ॥ न त्वा वज्रिन्त्सहस्रं सूर्या अन्विति। न ह्येतं सहस्रं चन सूर्या अनु ॥ ३ ॥ न जातमष्ट[f] रोदसी इति। न ह्येतं जातं रोदन्ति। इमे ह वाव रोदसी ताभ्यामेष एवाकाशो ज्यायान्। एतस्मिन् ह्येवैते अन्तः ॥ ४ ॥ स य आकाश इन्द्र एव सः। स यः स इन्द्र एष एव स य एष

तपति ॥ ५ ॥ स एषोऽभ्राण्यति[h] मुच्यमान एति । तद्यथैषोऽभ्राण्यति मुच्यमान एत्येवमेव स सर्वस्मात् पाप्मनोऽतिमुच्यमान एति य एवं वेदाथो यस्यैवं विद्वानुद्गायति ॥ ६ ॥

*a*) ऋ 8·70·5. —*b*) रोदसी *fem. sg*. The dual used as sg. The verb अष्ट is singular. —*c*) भूमीः is *nom. sg*. of भूमी. —*d*) भूम्यः is *nom. pl*. Cp ऋ 7·50·4 सर्वा नद्यो अशिमिदा भवन्तु. —*e*) क 5·15 न तत्र सूर्यो भाति. —*f*) Cp छां 3·14·3 ज्यायान् पृथिव्याः. —*g*) The author of the Upaniṣad understands रोदसी as dual. —*h*) अति is a preposition governing अभ्राणि.

## १·३३

त्रिवृत्साम चतुष्पात् । ब्रह्म तृतीयमिन्द्रस्तृतीयं प्रजापतिस्तृतीयमन्नमेव चतुर्थः पादः ॥ १ ॥ तद्यद्वै ब्रह्म स प्राणोऽथ य इन्द्रः सा वागथ यः प्रजापतिस्तन्मनोऽन्नमेव चतुर्थः पादः ॥ २ ॥ मन एव हिङ्कारो वाक् प्रस्तावः प्राण उद्गीथोऽन्नमेव चतुर्थः पादः ॥ ३ ॥ करोत्येव वाचा, नयति प्राणेन, गमयति मनसा । तदेतन्निरुद्धं यन्मनः । तेन यत्र कामयते तदात्मानं च यजमानं च दधाति ॥ ४ ॥ अथाधिदैवतम् । चन्द्रमा एव हिङ्कारोऽग्निः प्रस्ताव आदित्य उद्गीथ आप एव चतुर्थः पादः । तद्धि प्रत्यक्षमन्नम् ॥ ५ ॥ ता वा एता देवता अमावास्यां रात्रिं संयन्ति । चन्द्रमा अमावास्यां रात्रिमादित्यं प्रविशत्यादित्योऽग्निम् ॥६॥ तद्यत् संयन्ति तस्मात् साम । स ह वै सामवित् स साम वेद य एवं वेद ॥ ७ ॥ तासां वा एतासां देवतानामेकैकैव देवता साम भवति ॥ ८ ॥ एष एवादित्यस्त्रिवृच्चतुष्पाद्रश्मयो मण्डलं पुरुषः । रश्मय एव हिङ्कारः । तस्मात् ते प्रथमत एवोद्यतस्तायन्ते । मण्डलं प्रस्तावः पुरुष उद्गीथो या एता आपोऽन्तः स एव चतुर्थः पादः ॥ ९ ॥ एवमेव चन्द्रमसो रश्मयो मण्डलं पुरुषः । रश्मय एव हिङ्कारो मण्डलं प्रस्तावः पुरुष उद्गीथो या एता आपोऽन्तः स एव चतुर्थः पादः ॥ १० ॥ चत्वार्यन्यानि चत्वार्यन्यानि । तान्यष्टौ । अष्टाक्षरा गायत्री । गायत्रं साम ब्रह्मो गायत्री । तदु ब्रह्माभिसंपद्यते । अष्टाशफाः पशवस्तेनो पशव्यम् ॥ ११ ॥

*a*) A strange way of saying प्रथम, द्वितिय and तृतीय; cp बृ 1·2·3 आदित्यं तृतयिम् etc. —*b*) बृ 5·12·1 प्राणो ब्रह्मेत्याहुस्तन्न तथा (a refutation); बृ 4·1·3 प्राणो वै ब्रह्म; छां 4·10·5 प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म; तै 3·3 प्राणो ब्रह्मेति व्यजानात्; कौ 2·1–2 प्राणो ब्रह्मेति स्माह कौषीतकिः 1 ... स्म आह पैङ्ग्यः 2. —*c*) जै 1·13·5; छां 2·11·1. —*d*) छां

2·7·1; 2·11·1. —e) See below 2·2·8; 3·32·9 स एष प्राणो वाचा करोति मनोनेत्रः; शब्रा 4·6·7·5 सा यत्रेयं वागासीत् सर्वमेव तत्राक्रियत; शब्रा 8·1·2·9 वाग् वै विश्वकर्मा ऋषिः, वाचा हि इदं सर्वं कृतम्. —f) छां 4·15·6; 5·10·2 तत् पुरुषोऽमानव एनान् ब्रह्म गमयति, also बृ 6·2·15 पुरुषोऽमानस एत्य ....... —g) मनोनिरोध seems to enable a person to move wherever he likes; see the next sentence; मै 6·34; गी 6·20. —h) छां 2·2·1. —i) छां 2·20·1. —j) The same etymology below 1·40·6; 1·48·7; 1·51·2; 4·13·2. —k) On 1·33·8-10 see छां 1·6·3–4.

## १·३४

अथा^a^ध्यात्मम् । इदमेव चक्षुस्त्रिवृच्चतुष्पाच्छुक्लं कृष्णं पुरुषः । शुक्लमेव हिङ्कारः कृष्णं प्रस्तावः पुरुष उद्गीथो या इमा आपोऽन्तः स एव चतुर्थः पादः ॥ १ ॥ इदमादित्यस्यायनमिदं चन्द्रमसः । चत्वारीमानि चत्वारीमानि । तान्यष्टौ । अष्टाक्षरा गायत्री । गायत्रं साम ब्राह्मो गायत्री । तदु ब्रह्माभिसंपद्यते । अष्टाशफाः पशवस्तेनो पशव्यम् । ॥ २ ॥ स योऽयं पवते स एष एव प्रजापतिः । तद्वेव साम । तस्यायं देवो योऽयं चक्षुषि पुरुषः । स एष आहुतिमतिमत्योत्क्रा^b^न्तः ॥ ३ ॥ अथ यावेतौ चन्द्रमाश्चादित्यश्च यावेतावप्सु दृश्येते एतावेतयोर्देवौ ॥ ४ ॥ यद्ध वा इदमाहुर्देवानां देवा इति । एते ह ते । त एत आहुतिमतिमत्योत्क्रान्ताः ॥ ५ ॥ तद्ध पृथुर्वैन्यो^c^ दिव्यान् व्रात्या^d^न् पप्रच्छ —

ये^e^भिर्वात इषितः प्रवाति ये ददन्ते पञ्च दिशः स^f^मीचीः ।
य आहुतीरत्यमन्यन्त देवा अपां नेतारः कतमे त आसन् ॥ ६ ॥ इति ॥

ते ह प्रत्यूचुः —

इमा^g^मेषां पृथिवीं वस्त एकोऽन्तरिक्षं पर्येको बभूव ।
दिवमेको द^h^दते यो विधर्ता विश्वा आशाः प्रतिरक्षन्त्यन्ये ॥ इति ॥ ७ ॥

इमामेकां पृथिवीं वस्ते एक इत्यग्निर्ह सः ॥ ८ ॥ अन्तरिक्षं पर्येको बभूवेति वायुर्ह सः ॥ ९ ॥ दिवमेको ददते यो विधर्तेत्यादित्यो ह सः ॥ १० ॥ विश्वा आशाः प्रतिरक्षन्त्यन्य इति । एता ह वै देवता विश्वा आशाः प्रतिरक्षन्ति चन्द्रमा नक्षत्राणीति । ता एताः सामैव सत्यो^i^व्यूढोऽन्नाद्याय ॥ ११ ॥

a) See above 1·26·1. —b) Refer to पाद (c) of the ऋक् quoted in 1·33·6. —c) जैब्रा 1·277; ऋ 8·9·10 (पृथि वैन्य). —d) तांब्रा 24·18·2 दैवा व्रात्याः सत्रमासत; cp अ 15·1·1 f on व्रात्य. —e) अ 10·8·35. The सूक्त is called ज्येष्ठब्रह्मवर्णनम् (variants : सध्रीची for समीचीः; आहुतिम् for आहुतीः). —f) शब्रा 7·3·1·24 तस्मात् सर्वतः समीच्यो दिशः. —g) अ 10·8·36 (variants : एषां for एकः and

एके for अन्ये ). —*h* ) ददते is *3rd* pers. *sg*; cp नि 2·2 अक्रूरो ददते मणिम्. —*i* ) वस्ते from √ वस् *to illumine* ? Cp शब्रा 10 5·2·4 ... विवस्वान् एष हि अहोरात्रे विवस्ते. —*j* ) Obscure and corrupt.

## १·३५

अथैतत् साम । तदाहुः संवत्सरँ[a] एव सामेति ॥१॥ तस्य वसन्त एव हिङ्कारः । तस्मात् पशवो वसन्ता[b] हिङ्कारिकृतः समुदायन्ति[c] ॥ २ ॥ ग्रीष्मः प्रस्तावः । अनिरुक्तो वै प्रस्तावोऽनिरुक्तं[d] ऋतूनां ग्रीष्मः ॥ ३ ॥ वर्षा[e] उद्गीथः । उदिव वै वर्षं[e] गायति ॥ ४ ॥ शरत् प्रतिहारः । शरदि ह खलु वै भूयिष्ठा ओषधयः[f] पच्यन्ते ॥ ५ ॥ हेमन्तो निधनम् । निधनंकृता[g] इव वै हेमन्[h] प्रजा भवन्ति ॥ ६ ॥ तावेतावन्तौ संधत्तः । एतदन्वनन्तः संवत्सरः । तस्यैतावन्तौ यद्धेमन्तश्च वसन्तश्च । एतदनु ग्रामस्यान्तौ[i] समेतः । एतदनु निष्कस्यान्तौ समेतः । एतदन्वहिर्भोगान्[j] पर्याहृत्य शये[k] ॥ ७ ॥ तद्यथा ह वै निष्कः समन्तं ग्रीवा अभिपर्येक्त एवमनन्तं साम । स य एवमेतदनन्तं साम वेदानन्ततामेव जयति ॥ ८ ॥

*a* ) संवत्सरे एव; cp 1·36·1,4,10. below. —*b*) Vedic locative; cp पा 7·1·39; तैसं 2·1·2·5 त्रीणि वा आदित्यस्य तेजांसि, वसन्ता प्रातर्, ग्रीष्मे मध्यन्दिने, शरदि अपराह्णे; कासं 10·2 वसन्ता यजेत; शब्रा 7·2·4·26 वसन्ता प्रावृषि शरदि; तैब्रा 1·1·2·6 वसन्ता ब्राह्मणोऽग्निमादधीत ( *Krasis* : वसन्ते + आ = वसन्त + आ = वसन्ता ). —*c* ) Cp 1·12·7 above. —*d* ) अनिरुक्त means a mode of *sāman*-chant ? —*e*) शब्रा 2·2·3·7 वर्षादित् वर्षाः. —*f* ) क 1·6 सस्यमिव मर्त्यः पच्यते. —*g* ) षब्रा 3·1 तस्माद् हेमन्तं प्रजा निधनकृता इव आसते; cp वषट्कृताः in शब्रा 11·2·7·32 तस्माद्धेमन् वषट्कृताः पशवः सीदन्ति. —*h* ) शब्रा 1·5·4·5 तस्माद्धेमन् म्लायन्त्योषधयः; जैब्रा 1·167 तस्माद् हेमन्तुष्णाः कूप्या अप उदाहरन्ति. —*i* ) ग्राम and निष्क in juxta-position in छां 4·2·4 अयं ग्रामः, अयं निष्कः; for निष्क see ऋ 5·19·3 निष्कग्रीवः. —*j* ) ऋ 6·74·14 अहिरिव भोगैः पर्येति बाहुम्. —*k*) Third pers. sg. for शेते; cp ऋ 1·3·29 दानुः शये सहवत्सा न धेनुः.

## १·३६

अथैतत् पर्जन्ये साम । तस्य पुरोवात[a] एव हिङ्कारः । अथ यदभ्राणि संप्लावयति स प्रस्तावः । अथ यत् स्तनयति स उद्गीथः । अथ यद्विद्योतते स प्रतिहारः । अथ यद्वर्षति तन्निधनम् ॥ १ ॥ तदेतत् पर्जन्ये साम । स य एवमेतत् पर्जन्ये साम वेद वर्षुको[b] हास्मै पर्जन्यो भवति ॥ २ ॥ अथैतत् पुरुषे साम । तस्यायमेव हिङ्कारोऽयं प्रस्तावोऽयमुद्गीथोऽयं प्रतिहार इदं निधनम् ॥ ३ ॥ तदेतत् पुरुषे साम । स य एवमेतत् पुरुषे साम वेदोर्ध्व एव प्रजया पशुभिरारोहन्नेति ॥ ४ ॥ य उ एनत्

प्रत्यंग् वेद ये प्रत्यञ्चो लोकास्ताञ्जयति । तस्यायमेव हिङ्कारोऽयं प्रस्तावोऽयमुद्गीथोऽयं प्रतिहार इदं निधनम् । ये प्रत्यञ्चो लोकास्ताञ्जयति ॥ ५ ॥ यँ उ एनत् तिर्यग् वेद ये तिर्यञ्चो लोकास्ताञ्जयति । तस्य लोमैव हिङ्कारस्त्वक्प्रस्तावो मांसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनम् ॥ ६ ॥ तस्य त्रीण्याविर्गायति प्रस्तावं प्रतिहारं निधनम् । तस्मात् पुरुषस्य त्रीँण्यस्थीन्याविर्दन्ताश्च द्वयाँश्च नखाः । ये तिर्यञ्चो लोकास्ताञ्जयति ॥७॥ य उ एनत् सम्यग् वेद ये सम्यञ्चो लोकास्ताञ्जयति । तस्य मन एव हिङ्कारो वाक् प्रस्तावः प्राण उद्गीथश्चक्षुः प्रतिहारः श्रोत्रं निधनम् । ये सम्यञ्चो लोकास्ताञ्जयति ॥ ८ ॥ अथैतद्देवतासु साम । तस्य वायुरेव हिङ्कारोऽग्निः प्रस्ताव आदित्य उद्गीथश्चन्द्रमाः प्रतिहारो दिश एव निधनम् ॥ ९ ॥ तदेतद्देवतासु साम । स य एवमेतद्देवतासु साँम वेद देवतानामेव सलोकतां जयति ॥ १० ॥

*a*) तैसं 1·6·11·3–4; शब्रा 1·5·2·8; छां 2·3·1; 2·15·1. —*b*) शब्रा 7·5·2·37 तस्मादेतस्यां दिशि पर्जन्यो न वर्षुकः; पोषुक in वंशब्राह्मण २; लम्भुक in छां 5·5·2; cp पा 3·2·154 where लम्भुक and पोषुक ought to have been included. —*c*) Cp क 5·3 ऊर्ध्वं प्राणमुन्नयति, अपानं प्रत्यगस्यति; छां 3·13·35. —*d*) छां 2·19 एतं यज्ञायज्ञीयमङ्गेषु प्रोतम्. —*e*) To make up the number three, द्वयाः to be construed as द्विप्रकारकाः, i.e हस्तनखाः and पादनखाः. —*f*) छां 2·7·11. —*g*) छां 2·20 ( with minor variations ).

## १·३७

तस्यैतास्तिस्र आगा आग्नेय्यैकैन्द्र्येका वैश्वदेव्येका ॥ १ ॥ सा या मन्द्राँ साऽऽग्नेयी । तया प्रातःसवनस्योद्गेयम् । आग्नेयं वै प्रातःसवनमाग्नेयोऽयं लोकः । स्वयागया प्रातःसवनस्योद्गायत्यृध्नोतीमं लोकम् ॥ २ ॥ अथ या घोषिँण्युपब्दिमती सैन्द्री । तया माध्यन्दिनस्य सवनस्योद्गेयम् । ऐन्द्रं वै माध्यन्दिनं सवनम् । ऐन्द्रोऽसौ लोकः । स्वयागया माध्यन्दिनस्य सवनस्योद्गायत्यृध्नोत्यमुं लोकम् ॥ ३ ॥ अथ यां वीङ्ख्यन्निव प्रथयन्निव गायति सा वैश्वदेवी । तया तृतीयसवनस्योद्गेयम् । वैश्वदेवं वै तृतीयसवनम् । वैश्वदेवोऽयमन्तरालोकः । स्वयागया तृतीयसवनस्योद्गायत्यृध्नोतीममन्तरालोकम् ॥ ४ ॥ अथो उच्चाँ खल्वाहुरेकयैवागयोद्गेयं यदेवास्य मध्यं वाच इति । तद्यया वै वाचा व्यायच्छमान उद्गायति तदेवास्य मध्यं वाचः । तया वा एतया वाचा सर्वा वाच उपगच्छति । अव्याँसिक्तामेकस्थां श्रियमृध्नोति य एवं वेद ॥ ५ ॥ अथ या क्रौञ्चा सा बार्हस्पत्या । स यो ब्रह्मवर्चसकामः स्यात् स

तयोद्गायेत् । तद् ब्रह्म वै बृहस्पतिः । तद्दै ब्रह्मवर्चसमृध्नोति । तथा ह ब्रह्मवर्चसी भवति ॥ ६ ॥ अथ ह चैकितानेय[g] एकस्यैव साम्न आगां गायति गायत्रस्यैव । तदनवानं गेयम् । तत् साम्न एवा प्रतिहारादनवानं[h] गेयम् । तत् प्राणो वै गायत्रम् । तद्दै प्राणमृध्नोति । तथा ह सर्वमायुरेति ॥ ७ ॥

On the distribution of सवनs, see तैसं 7·1·1·4–6 and तांब्रा 6·1·6–11.

*a* ) ऐब्रा 3·44 तस्मान्मन्द्रया वाचा प्रातःसवने शंसेत् । .... बलीयस्या वाचा मध्यान्दिने ... बालिष्ठतमया ( *sic*—double superlative ) वाचा तृतीयसवने; also below 1·51·6 f; but differently छां 2·22·1 where विनर्दि साम्नः is regarded as अग्नि's उद्गीथ. —*b* ) ऋ 1·31·8 ऋध्याम कर्म अपसा नवेन; 1·84·16 य एषां भृत्यां ऋणधत् स जीवात् ( transitive use ). —*c* ) घोषिणी and उपब्दिमती together in जैब्रा 1·253 तस्मात् घोषीव उपब्दिमदिव गर्भा जायन्ते; ऐब्रा 4·9 तस्मात् स उच्चैर्घोष उपब्दिमान् क्षत्रस्य रूपम्; छां 2·22·1 assigns to इन्द्र–श्लक्ष्णं बलवत् साम्नः; ऋ 10·94·4 आघोषयन्तः पृथिवीमुपब्दिभिः; तैसं 3·1·9·1 यानूर्ध्वान् तानुपब्दिमतः...; शब्रा 11·2·7·32 साम्न इव उपब्दिः क्रियते. —*d* ) I. e. further on in this case. See below 1·37·7. —*e*) The verb व्यासिच् occurs only in आश्रौसू 3·10·25 अन्यतरा (?) दोषे व्यासिच्य प्रचरेयुः. —*f* ) छां 2·22·1 attributes क्रौञ्चं साम्नः to बृहस्पति, preceptor of gods, while तैसं 2·5·11·1 is assigned to the Asuras, यत् क्रौञ्चमन्वाह आसुरं तत्, यन्मन्द्रं मानुषं तत्, यदन्तरा तत् सदेवम्. —*g* ) जै 1·42·1; 2·5·2; वृ 1·3·24. चैकितानेय is brought into relation with सामन्; षब्रा 3·7 वासिष्ठः चैकितानेयः —*h* ) ऐब्रा 2·28 अनवानं द्विदेवत्यान् यजेत प्राणानां संतत्यै; 3·35 अनवानं प्रथमर्क् शंस्तव्या ( *sic* ); for अवान see 2·5·7 below.

## १·३८

अथ ब्रह्मदत्तं[a] चैकितानेयमुद्गायन्तं कुरव उपोदुः—उज्जहीहि साम दाल्भ्येति[b] ॥ १ ॥ स होपोह्यमानो नितरां[c] जगौ । तं होचुः—किमुपोह्यमानो नितराम-गासीरिति ॥ २ ॥ स होवाच—इदं वै लोमेत्[d]येतदेवैतत् प्रत्युपशृणमः । तस्मादु ये न एतदुपावादिषुर्लोमशानीव[e] तेषां श्मशानानि भवितारः[f] । अथ वयमुदेव गातारः स्म इति ॥ ३ ॥ अथ ह राजा जैवलिर्[h]गल्नसमाक्षायणं शामूल[i]पर्णाभ्यामुत्थितं पप्रच्छ— ऋचाऽऽगाता शालावत्या[j]३ साम्ना३ इति ॥ ४ ॥ नैव राजन्नृचेति होवाच न साम्नेति । तद्यूयं तर्हि सर्व एव पणाय्या[k] भविष्यथ य एवं विद्वांसोऽगायतेति ॥ ५ ॥ अथ यद्धाऽवक्ष्यदृचा च साम्ना चागामेति धीतेन[l] वै तद्यातयाम्ना[m]ऽमलाकाण्डे[n]नागातेति हैनाँस्तदवक्ष्यत् । तद्ध तदुवाच स्वरेण चैव हिङ्कारेण चागामेति ॥ ६ ॥

*a* ) See note on 1·37·7. —*b*) छां 1·2·13; 1·12·1,3. —*c*) शांब्रा 15·4 नितरां परिधानीयां शंसेत्. —*d*) तांब्रा 13·11·11 भरद्वाजस्य लोम भवति. —*e*) Perhaps a pun on the words लोम and लोमश. —*f*) Periphrastic future; cp वासं 18·59 अन्वागन्ता ( = आगमिष्यति ) यज्ञपतिर्वो अत्र; तैसं 5·7·7·1; ऐब्रा 1·27 यर्हि वाव वो मयाऽर्थो भविता तर्ह्येव वो अहं पुनरागन्ताऽस्मि इति; शब्रा 11·5·1·11 एकां रात्रिमन्ते शयितासे जात उ ते अयं तर्हि पुत्रो भवितेति; 11·5·1·14–16 ततो अग्निर्जनिता स एव स भवितेति; शब्रा 1·8·1·3 तर्हि वा अतिनाष्ट्रो भवितास्मि; 12·8·3·7 वयममुष्मिँल्लोके भवितास्म इति; जै 3·7·6 यत्र भूयिष्ठाः कुरुपञ्चालाः स्मागता भवितारः तत्र एष संवादः. —*g*) छां 1·2·8; 1·8·1; 5·3·1; बृ 6·2·1,4 प्रवाहणो जैवलिः. —*h*). जैब्रा 1·316 ता हैता गल्नुना आर्क्षाकायणः शालापत्य ( *sic* ) आरुणेराधि अधिजगे. —*i*) शामूलपर्ण is obscure. Cp जैब्रा 2·55 शामूलाजिनम्; ऋ 10·85·29 परा देहि शामुल्यम्. —*j*) The note —h) contains the form शालापत्य. —*k*) शब्रा 14·2·1·5 यो धनानां दाता वसुवित् पणाय्य इत्येवैतदाह; जैब्रा 2·299 अथ ये परिशिशिषिरे त इम एतर्हि पणाय्यतरा इव स्थूराणाम् । पापयामतरा इव हि ततः पुरा आसुः. —*l*) जैब्रा 1·156 धीतमिव वै तृतीयसवनम्, जागतं सुपर्ण आहरन्नधयत्; तदेतत् पीडितमिव; तांब्रा 8·4·1 दन्तैर्हि तत् दंष्ट्वा ( *sic* ) धयन्ती अहरत्; ऐब्रा 3·27 तस्य पतन्ती रसमधयत् तद्धीतरसं न अन्वाप्नोत्. —*m*) तैब्रा 3·2·3·9 यातयाम्ना हविषा यजेत. —*n*) छां 7·3·1 यथा वै द्वे वाऽमलके ... मुष्टिरनुभवति.

## १·३९

अथ ह सत्यँाधिवाक[a]श्चैत्ररथिः सत्ययज्ञं पौलुषित[b]मुवाच — प्राचीनयोगेति मम चेद्वै त्वं साम विद्वान् साम्नाऽऽर्त्विज्यं करिष्यसि नैव तर्हि पुनर्दीक्षामभिध्यातासीति[c] । मुहुर्दीक्षी[d] ह्यास ॥ १ ॥ स होवाच — यो वै साम्नः श्रियं विद्वान् साम्नाऽऽर्त्विज्यं करोति श्रीमानेव भवति । मनो वाव साम्नः श्रीरिति ॥ २ ॥ यो वै साम्नः प्रतिष्ठां विद्वान् साम्नाऽऽर्त्विज्यं करोति प्रत्येव तिष्ठति । वाग्वाव साम्नः प्रतिष्ठेति[e] ॥ ३ ॥ यो वै साम्नः सुवर्णं विद्वान् साम्नाऽऽर्त्विज्यं करोत्यध्य[f]स्य गृहे सुवर्णं गम्यते[f] । प्राणो वाव साम्नः सुवर्णमिति[g] ॥ ४ ॥ यो वै साम्नोऽपाचितिं विद्वान् साम्नाऽऽर्त्विज्यं करोत्यपचितिमान् भवति । चक्षुर्वाव साम्नोऽपचितिरिति ॥ ५ ॥ यो वै साम्नः श्रुतिं विद्वान् साम्नाऽऽर्त्विज्यं करोति श्रुतिमानेव भवति । श्रोत्रं वाव साम्नः श्रुतिरिति ॥६॥

*a* ) Occurs only here. —*b*) पौलुषित is probably the same as पौलुषि in छां 5·11·1 and शब्रा 10·6 1·1; cp प्राचीनयोग्य in छां 5·13·1. —*c*) Periphrastic future ( अभिध्याता ) coupled with simple future ( करिष्यसि ). —*d*) मुहुः in the Vedic sense : *quickly*; cp ऋ 2·4·5 जुजुर्वाँ यो मुहुरा युवाभूत्. —*e*) बृ 1·3·27; साविब्रा 1·1·12. —*f*) अधि + गम्यते in the verb ( Vedic usage ). —*g*) बृ 1·3·26 तस्य वै स्वर एव सुवर्णम्; साविब्रा 1·1·11.

१·४०

[a]चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।

गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥

वागेव साम[b] । वाचा हि साम गायति । वागेवोक्थम् । वाचा ह्युक्थं शंसति । वागेव यजुः । वाचा हि यजुरनुवर्तते ॥ २ ॥ तद्यत् किंचार्वाचीनं ब्रह्मणस्तद्वागेव सर्वम् । अथ यदन्यत्र[c], ब्रह्मोपदिश्यते । नैव हि तेनाऽऽर्त्विज्यं करोति । परोक्षेणैव तु कृतं भवति ॥ ३ ॥ तस्या एतस्यै वाचो मनः पादश्चक्षुः पादः श्रोत्रं पादो वागेव चतुर्थः पादः ॥ ४ ॥ तद्यद्वै मनसा ध्यायति तद्वाचा वदति । यच्चक्षुषा पश्यति तद्वाचा वदति । यच्छ्रोत्रेण शृणोति तद्वाचा वदति ॥ ५ ॥ तद्यदेतत् सर्वं वाचमेवाभि-समयाति तस्माद्वागेव साम । स ह वै सामवित् स साम वेद य एवं वेद ॥ ६ ॥ तस्या एतस्यै वाचः प्राणा एवाऽसुः[d] । एषु हीदं सर्वमसूतेति ॥ ७ ॥

*a*) ऋ 1·164·45. —*b*) बृ 1·3·22 वाग् वै साम. —*c*) अन्यत्र = पराचीनम् as opposed to अर्वाचीनम्. —*d*) शब्रा 6·6·2·6 प्राणो वा असुः. Popular etymology of असु ( as contained in असूत ).

१·४१

तेन हैतेनासुना देवा जीवन्ति, पितरो जीवन्ति, मनुष्या जीवन्ति, पशवो जीवन्ति, गन्धर्वाप्सरसो जीवन्ति, सर्वमिदं जीवति ॥ १ ॥ तदाहुः—यदसुनेदं सर्वं जीवति कः साम्नोऽसुरिति । प्राण इति ब्रूयात् । प्राणो ह वाव साम्नोऽसुः ॥ २ ॥ स एष प्राणो वाचि प्रतिष्ठितो वागु प्राणे प्रतिष्ठिता । तावेतावेवमन्योन्यस्मिन् प्रतिष्ठितौ । प्रतितिष्ठति य एवं वेद ॥ ३ ॥ तदेतदृचाऽभ्यनूच्यते—

[a]अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।

विश्वे देवा अदितिः पञ्च जना[b] अदितिर्जातमदितिर्जनित्वम् ॥

अदितिर्द्यौरदितिरन्तरिक्षमिति । एषा वै द्यौरेषान्तरिक्षम् ॥ ५ ॥ अदितिर्माता स पिता स पुत्र इति । एषा वै मातैषा पितैषा पुत्रः ॥ ६ ॥ विश्वे देवा अदितिः पञ्च जना इति । ये देवा असुरेभ्यः पूर्वे पञ्च जना आसन् य एवासावादित्ये पुरुषो यश्चन्द्रमासि यो विद्युति योऽप्सु योऽयमक्षन्नन्तरेष एव ते । तदेषैव ॥ ७ ॥ अदितिर्जात-मदितिर्जनित्वमिति । एषा ह्येव जातमेषा जनित्वम् ॥ ८ ॥

*a*) ऋ 1·89·10. —*b*) The same five पुरुषs are mentioned in बृ 2·1·2 and कौ 4·3; slightly different in छां 4·11·1; 4·12·1; 4·13·1 and 4·15·1,6. —*c*) ऋ 1·66·8 यमो ह जातो यमो जनित्वम्, जारः कनीनां पतिर्जनीनाम्; 8·89·6 यज्जातं यच्च जन्त्वम्.

## १·४२

आरुणिर्ह वासिष्ठं चैकितानेयं ब्रह्मचर्यमुपेयाय । तं होवाच—आजानासि सोम्य गौतम यदिदं वयं चैकितानेयाः सामैवोपास्महे कां त्वं देवतामुपास्स इति । सामैव भगवन्त इति होवाच ॥ १ ॥ तं ह पप्रच्छ—यदग्नौ तद् वेत्था३ इति । ज्योतिर्वा एतत् तस्य साम्नो यद्वयं सामोपास्मह इति ॥२॥ यत् पृथिव्यां तद् वेत्था३ इति । प्रतिष्ठा वा एषा तस्य साम्नो यद्वयं सामोपास्मह इति ॥ ३ ॥ यदप्सु तद् वेत्था३ इति । शान्तिर्वा एषा तस्य साम्नो यद्वयं सामोपास्मह इति ॥४॥ यदन्तरिक्षे तद् वेत्था३ इति । आत्मा वा एषा तस्य साम्नो यद् वयं सामोपास्मह इति ॥ ५ ॥ यद्वायौ तद् वेत्था३ इति । श्रीर्वा एषा तस्य साम्नो यद् वयं सामोपास्मह इति ॥ ६ ॥ यद्दिक्षु तद् वेत्था३ इति । व्याप्तिर्वा एषा तस्य साम्नो यद् वयं सामोपास्मह इति ॥ ७ ॥ यद्दिवि तद् वेत्था३ इति । विभूतिर्वा एषा तस्य साम्नो यद्वयं सामोपास्मह इति ॥ ८ ॥

## १·४३

यदादित्ये तद्वेत्था३ इति । तेजो वा एतत् तस्य साम्नो यद्वयं सामोपास्मह इति ॥ १ ॥ यच्चन्द्रमसि तद्वेत्था३ इति । भा वा एषा तस्य साम्नो यद्वयं सामोपास्मह इति ॥ २ ॥ यन्नक्षत्रेषु तद्वेत्था३ इति । प्रज्ञा वा एषा तस्य साम्नो यद्वयं सामोपास्मह इति ॥ ३ ॥ यदन्ने तद्वेत्था३ इति । रेतो वा एतत् तस्य साम्नो यद्वयं सामोपास्मह इति ॥ ४ ॥ यत् प[b]शुषु तद्वेत्था३ इति । यशो[b] वा एतत् तस्य साम्नो यद्वयं सामोपास्मह इति ॥ ५ ॥ यदृचि तद्वेत्था३ इति । स्तोमो वा एष तस्य साम्नो यद्वयं सामोपास्मह इति ॥ ६ ॥ यद्यजुषि तद्वेत्था३ इति । कर्म वा एतत् तस्य साम्नो यद्वयं सामोपास्मह इति ॥७॥ अथ किमुपास्स इति । अक्षरमिति । कतमत् तदक्षरमिति । यत् क्षरन्नाक्षीयतेति । कतमत् क्षरन्नाक्षीयतेति । इन्द्र इति ॥८॥ कतमः स इन्द्र[a] इति । योऽक्षन् रमत इति । कतमः स योऽक्षन् रमत इति । इयं देवतेति होवाच ॥ ९ ॥ योऽयं चक्षुषि पुरुष एष इन्द्र एष प्रजापतिः । (स) समः पृथिव्या सम आकाशेन समो दिवा समः सर्वेण भूतेन । एष परो दिवो दीप्यते । एष एवेदं

सर्वमित्युपासितव्यः ॥ १० ॥ स य एतदेवं वेद ज्योतिष्मान् प्रतिष्ठावान् शान्तिमान् आत्मवान् श्रीमान् व्याप्तिमान् विभूतिमान् तेजस्वी भावान् प्रज्ञावान् रेतस्वी यशस्वी स्तोमवान् कर्मवान् अक्षरवान् इन्द्रियवान् सामन्वी भवति ॥ ११ ॥ तदेतदृचाऽभ्यनूच्यते— ॥ १२ ॥

*a*) तै 3·10 says ज्योतिरिति नक्षत्रेषु. —*b*) तै 3·10 अथ दैवीः (समाज्ञाः)—यश इति पशुषु; तैब्रा 3·8·7·12 अश्वः पशूनां यशस्वितमः. —*c*) Popular etymology of अक्षर. —*d*) मै 7·11 पुरुषश्चाक्षुषो योऽयं दाक्षिणेऽक्षिण्यवास्थितः । इन्द्रोऽयम् ...; cp बृ 4·2·2. —*e*) जै 4·24·13. —*f*) With ref. to इन्द्र in 8 and 9 above and सामन्वि with ref. to सम in 10 above.

## १·४४

रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ।
इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश ॥ १ ॥

रूपंरूपं प्रतिरूपो बभूवेति । रूपंरूपं ह्येष प्रतिरूपो बभूव ॥ २ ॥ तदस्य रूपं प्रतिचक्षणायेति । प्रतिचक्षणाय ह्यस्यैतद्रूपम् ॥ ३ ॥ इन्द्रो मायाभिः पुरुरूप ईयत इति । मायाभिर्ह्येष एतत् पुरुरूप ईयते ॥ ४ ॥ युक्ता ह्यस्य हरयः शता दशेति सहस्रं हैत आदित्यस्य रश्मयः । तेऽस्य युक्तास्तैरिदं सर्वं हरति तस्माद्धरयः ॥ ५ ॥

रूपंरूपं मघवा बोभवीति मायाः कृण्वानः परि तन्वं स्वाम् ।
त्रिर्यद्दिवः परि मुहूर्तमागात् स्वैर्मन्त्रैरनृतुपा ऋतावा इति ॥६॥

रूपंरूपं मघवा बोभवीतीति । रूपंरूपं ह्येष मघवा बोभवीति ॥ ७ ॥ मायाः कृण्वानः परि तन्त्रं स्वामिति । मायाभिर्ह्येष एतत् स्वां तनुं गोपायति ॥८॥ त्रिर्यद्दिवः परि मुहूर्तमागादिति । त्रिर्ह वा एष एतस्य मुहूर्तस्येमां पृथिवीं समन्तः पर्यतीमाः प्रजाः संचक्षाणः ॥ ९ ॥ स्वैर्मन्त्रैरनृतुपा ऋतावेति । अनृतुपा ह्येष एतदृतावा ॥ १० ॥

*a*) ऋ 6·47·18; बृ 2·5·19; क 5·9–10; रूपंरूपम् used *adverbially*. —*b*) बृ 2·5·19 अयं वै हरयः, अयं वै दश च सहस्राणि बहूनि च अनन्तानि च. —*c*) Popular etymology of हरि; cp नि 7·24 हरयो हरणाः; षब्रा 1·1 पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी ताभ्यां हि इदं सर्वं हरति. —*d*) ऋ 3·53·8; नि 10·17 cites a निगम by saying यद् यद् रूपं कामयते तत् तद्देवता भवति. —*e*) ऋ reads तन्वं परि instead. —*f*) Faulty reading? समन्तम् or समन्ततः would be the correct reading. —*g*) An additional explanation; cp ऋ 6·58·2 संचक्षाणो भुवना देव ईयते.

१·४५

तद्ध पृथुर्वैन्यो दिव्यान् व्रात्याँन्[a] पप्रच्छ—

इन्द्र[b]मुक्थमृचमुद्गीथमाहुर्ब्रह्म[c] साम प्राणं व्यानम् ।

मनो वा चक्षुरपानमाहुः श्रोत्रं श्रोत्रियाँ[d] बहुधा वदन्ति ॥ १ ॥ इति ॥

ते प्रत्यूचुः—

ऋ[b]षय एते मन्त्रकृ[e]तः पुराजाः[f] पुनराजायन्ते वेदानां गुप्त्यै[g] कम्[h] ।

ते वै विद्वांसो वैन्य तद्वदन्ति समा[i]नं पुरुषं बहुधा निविष्टम् ॥ २ ॥ इति ॥

इमां ह वा तद्देवतां त्रय्यां विद्यायामिमां समानामभ्येक आपर्यन्ति[j], नैके । यो ह वावैतदेवं वेद स एवैतां देवतां संप्रति वेद ॥ ३ ॥ स एष इन्द्र उद्गीथः । स यदैष इन्द्र उद्गीथ आगच्छति नैवोद्गातुश्चोपगातॄणां च विज्ञायते । इत एवोर्ध्वः स्वरुदेति । स उपरि मूर्ध्नो लेलाँ[k]यति ॥ ४ ॥ स[l] विद्यादागमदिन्द्रः, नेह कश्चन पाप्मा न्यङ्ङः[m] परिशेक्ष्यत इति । तस्मिन् ह न कश्चन पाप्मा न्यङ्ङः परिशिष्यते ॥ ५ ॥ तदेतदभ्रातृव्यं साम । न ह वा इन्द्रः कंचन भ्रातृव्यं पश्यते । स यथेन्द्रो न कंचन भ्रातृव्यं पश्यत एवमेव न कंचन भ्रातृव्यं पश्यते, य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ॥ ६ ॥

*a* ) जैब्रा 2·221 दिव्या वै व्रात्या व्रात्यामधावयन् बुधेन स्थपतिना. —*b* ) These verses cannot be traced in Vedic literature. Metre of the verses appears irregular. Thought of the first verse similar to ऋ 1·164·46 इन्द्रं मित्रं वरुणमग्निमाहुः etc. The *hexad* of इन्द्र etc. to be compared with the अध्यात्म *hexad* beginning with प्राण. —*c* ) The fourth पाद similar to एकं सद्विप्रा बहुधा वदन्ति ( ऋ 1·164·46 ). —*d* ) पा 2·1·65 प्रवक्तृश्रोत्रियाध्यापकधूर्तैः; 5 2·82 श्रोत्रियंश्छन्दोऽधीते; अ 9·6·37 एष वा अतिथिर्यच्छ्रोत्रियः; ऐब्रा 1·25 अपि अश्लीलस्य श्रोत्रियस्य मुखं व्येव ज्ञायते तृप्तमिव; जै 2·6·11; छां 5·11·1 ते हैते महाश्रोत्रियाः समेत्य मीमांसां चक्रुः, कासं 23·4 तस्माच्छ्रोत्रियः स्त्रीकामतमः; बृ 4·3·33 श्रोत्रियोऽवृजिनोऽकामहतः; 6·4·12 तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेत्; मुं 1·2·12 श्रोत्रियं ब्रह्मनिष्ठम्. —*e* ) ऋ 9·114·2 ऋषे मन्त्रकृतां स्तोमैः कश्यपोद्वर्धयन् गिरः; ऐब्रा 6·1 तान् होवाच अर्बुदः काद्रवेयः सर्प ऋषिः मन्त्रकृत्; जैब्रा 2·219 परस्सहस्रा हास्य प्रजायां मन्त्रकृत आसुरपि हास्य स्त्रियो मन्त्रकृत आसुः; तांब्रा 13·3·24 शिशुर्वा आङ्गिरसो मन्त्रकृतां मन्त्रकृत् आसीत्; पा 3·2·89 सुकर्मपापमन्त्रपुण्येषु कृञः. For मन्त्रकार see पा 8·2·23 न शब्दश्लोक …… गाथा ……सूत्रमन्त्रपदेषु. —*f* ) ऋ 1·118·3 आहुर्विप्रासो अश्विना पुराजाः; 3·31·19 नव्यं कृणोमि सन्यसे पुराजाम्. —*g* ) तैसं 6·2·5·5 आत्मनो गुप्त्यै;

अ 6·122·3 तस्य गुप्तये दम्पती संश्रयेथाम्. —*h*) Expletive; नि 1·9 अनर्थकाः कमीमिद्विति। कम्, ईम्, इत् and उ. —*i*) See below 3·2·2. —*j*) छां 1·1·6. —*k*) मैसं 1·8·6 यदङ्गारेषु व्यवशान्तेषु लेलाय (*sic*) वीव भाति, तद्देवानामास्यम्; जैब्रा 1·299 प्रजापतिर्यस्माद्योनेः प्रजा असृजत सोऽलेलायदेव; बृ 4·3·7; मुं 1·1·2; श्वे 3·18; जै 1·51·3; 1·55·4; 1·58·7. —*l*) Cp जै 3·37·6f. —*m*) जैब्रा 1·10 तद्यथा हि हिरण्ये ध्माते न कश्चन न्यङ्गः पाप्मा परिशिष्यते ...... See below 2·12·1.

## १·४६

प्रजापतिर्वा[a]इदमग्र आसीत्। सोऽकामयत। बहुः स्यां प्रजायेय भूमानं[b] गच्छेयमिति ॥ १ ॥ स षोडशधात्मानं व्यकुरुत भद्रं च समाप्तिश्चाभूतिश्च संभूतिश्च भूतं च सर्वं च रूपं चापरिमितं च श्रीश्च यशश्च नाम चाग्रं च सजाताश्च[c] पयश्च महीया[d] च रसश्च ॥ २ ॥ तद्यद्भद्रं हृदयमस्य तत्। ततः संवत्सरमसृजत। तदस्य संवत्सरोऽनूपतिष्ठते ॥ ३ ॥ समाप्तिः कर्मास्य तत्। कर्मणा हि समाप्नोति। तत ऋतूनसृजत। तदस्यर्तवोऽनूपतिष्ठन्ते ॥ ४ ॥ आभूतिरन्नमस्य तत्। (तत्) चतुर्धा[e] भवति। ततो मासानर्धमासानहोरात्राण्युषसोऽसृजत। तदस्य मासा अर्धमासा अहोरात्राण्युषसोऽनूपतिष्ठन्ते ॥५॥ संभूती[f] रेतोऽस्य तत्। रेतसो हि संभवति ॥ ६ ॥

*a*) छां 6·2·3; तै 2·6. —*b*) छां 7·23·1 यो वै भूमा तत् सुखम्, नाल्पे सुखमस्ति; for the connection between बहु and भूमन्, cp पा 6·4·158 बहोर्लोपो भू च बहोः. —*c*) शब्रा 5·4·4·19 तं ग्रामणीः सजाताय प्रयच्छति. —*d*) See above 1·29·8; see below 1·48·5. —*e*) गी 15·14 पचाम्यन्नं चतुर्विधम्. —*f*) Cp ई 12, 14; cp संभव (pāli) means *seed*.

## १·४७

ततश्चन्द्रमसमसृजत। तदस्य चन्द्रमा अनूपतिष्ठते। तस्मात् स रेतसः प्रतिरूपः ॥१॥ भूतं प्राणोऽस्य सः। ततो वायुमसृजत। तदस्य वायुनूरपतिष्ठते ॥२॥ सर्वमपानोऽस्य सः। ततः पशूनसृजत। तदस्य पशवोऽनूपतिष्ठन्ते ॥ ३ ॥ रूपं व्यानोऽस्य सः। ततः प्रजा असृजत। तदस्य प्रजा अनूपतिष्ठन्ते। तस्मादासु प्रजासु रूपाण्यधिगम्यन्ते ॥४॥ अपरिमितं मनोऽस्य तत्। ततो दिशोऽसृजत। तदस्य दिशोऽनूपतिष्ठन्ते। तस्मात् ता अ[a]परिमिताः। अ[b]परिमितमिव हि मनः ॥५॥ श्रीर्वागस्य सा। ततः समुद्रमसृजत। तदस्य समुद्रोऽनूपतिष्ठते ॥६॥ यशस्तपोऽस्य तत्। ततोऽग्निमसृजत। तदस्याग्निरनूपतिष्ठते। तस्मात् स मथितादिव संतप्तादिव जायते ॥ ७ ॥ नाम चक्षुरस्य तत् ॥८॥

*a*) बृ 4·1·5 अनन्ता हि दिशः. —*b*) बृ 3·1·9 अनन्तं वै मनः.

१·४८

तत आदित्यमसृजत । तदस्यादित्योऽनूपतिष्ठते ॥ १ ॥ अग्रं मूर्धास्य सः । ततो दिवमसृजत । तदस्य द्यौरनूपतिष्ठते ॥ २ ॥ सजाता अङ्गान्यस्य तानि । अङ्गैर्हि सह जायते । ततो वनस्पतीनसृजत । तदस्य वनस्पतयोऽनूपतिष्ठन्ते ॥ ३ ॥ पयो लोमान्यस्य तानि । तत ओषधीरसृजत । तदस्यौषधयोऽनूपतिष्ठन्ते ॥ ४ ॥ महीया माँसान्यस्य तानि । माँसैर्हि सह महीयते । ततो वयाँस्यसृजत । तदस्य वयाँस्यनूपतिष्ठन्ते । तस्मात् तानि प्रपतिष्णूनि[a] । प्रपतिष्णूनीव महामाँसानि ॥ ५ ॥ रसो मज्जाऽस्य सः । ततः पृथिवीमसृजत । तदस्य पृथिव्यनूपतिष्ठते ॥ ६ ॥ स हैवं षोडशधाऽऽत्मानं विकृत्य सार्धं समैत् । तद्यत् सार्धं समैत्[1] तत् साम्नः सामत्वम् ॥ ७ ॥ स एवैष हिरण्मयः पुरुष उदतिष्ठत् प्रजानां जनिता[b] ॥ ८ ॥

1) v. l. समैतत्. Cp the variant अन्वैतत् for अन्वैत् in 3·38·10 below; for अन्वैतत्, see अ 18·3·40 चतुष्पदीमन्वैतद् व्रतेन.

a) Form uninstanced in earlier literature. —b) ऋ 3·1·12 जनिता यो जजान; वासं 12·102 मा मा हिंसीज्जनिता यः पृथिव्याः; 13·51 सोऽपश्यज्जनितारमग्रे; अ 4·1·7 त्वं विश्वेषां जनिता यथासः; छां 4·3·7 जनिता प्रजानाम्; श्वे 6·9 न चास्य कश्चिज्जनिता; पा 6·4·53 जनिता मन्त्रे; but जनयिता in जैब्रा 2·388 प्रजापतिः प्रजानां प्रजनयिता, and below in 3·38·3.

१·४९

देवासुरा अस्पर्धन्त । ते देवाः प्रजापतिमुपाधावञ्जयामाऽसुरानिति ॥ १ ॥ सोऽब्रवीन्न वै मां यूयं वित्थ नाऽसुराः । यद्वै मां यूयं विद्यात ततो वै यूयमेव स्यात[a] पराऽसुरा भवेयुरिति ॥ २ ॥ तद्वै ब्रूहीत्यब्रुवन् । सोऽब्रवीत् पुरुषः प्रजापतिः सामेति मोपाध्वम् । ततो वै यूयमेव भविष्यथ पराऽसुरा भविष्यन्तीति ॥ ३ ॥ तं पुरुषः प्रजापतिः सामेत्युपासत । ततो वै देवा अभवन् पराऽसुराः । स यो हैवं विद्वान् पुरुषः प्रजापतिः सामेत्युपास्ते भवत्यात्मना पराऽस्य द्विषन् भ्रातृव्यो भवति ॥ ४ ॥

a) Here स्यात = भवेत ( i. e अस् = भू = *to conquer* ).

१·५०

देवा वै विजिग्याना अब्रुवन्—द्वितीयं करवामहै । माऽद्वितीया भूमेति । तेऽब्रुवन् —सामैव द्वितीयं करवामहै । सामैव नो द्वितीयमास्त्विति ॥ १ ॥ त इमे द्यावापृथिवी अब्रुवन् । समेतं साम प्रजनयतमिति ॥ २ ॥ सोऽसावस्या अबीभत्सत । सोऽब्रवीत्

—बहु वा एतस्यां किंच किंच कुर्वन्त्यधिंष्ठीवन्त्यधिचरन्त्यध्यासते । पुनीत न्वेनामपूता वा इति ॥३॥ ते गाथामब्रुवन्—त्वया पुनामेति । किं ततः स्यादिति । शतंसनिः स्या इति । तथेति । ते गाथयाऽपुनन् । तस्मादुत गाथया शतं सुनोति ॥ ४ ॥ ते कुम्ब्यामब्रुवन्—त्वया पुनामेति । किं ततः स्यादिति । शतसनिः स्या इति । तथेति । ते कुम्ब्ययाऽपुनन् । तस्मादुत कुम्ब्यया शतं सुनोति ॥ ५ ॥ ते नाराशँसीमब्रुवन्—त्वया पुनामेति । किं ततः स्यादिति । शतसनिः स्या इति । तथेति । ते नाराशँस्याऽपुनन् । तस्मादुत नाराशँस्या शतं सुनोति ॥ ६ ॥ ते रैभीमब्रुवन्—त्वया पुनामेति । किं ततः स्यादिति । शतसनिः स्या इति । तथेति । ते रैभ्याऽपुनन् । तस्मादुत रैभ्या शतं सुनोति ॥ ७ ॥ सेयं पूता । अथामुमब्रवीद्—बहु वै किंच किंच पुमाँश्चराति । त्वमनुपुनीष्वेति ॥ ८ ॥

*a*) To पा 7·3·57 सन्लिटोर्जेः ( गी in IE times for जि, cp जिगीषा and विजिग्यान ) should be added this form which is the *medial present participle* from the intensive base; शब्रा 1·6·4·21 यथा महाराजो विजिग्यान एवं महेन्द्रोऽभवत् (the source of this is perhaps तैसं 6·5·5·3 महान् वै अयमभूत् यो वृत्रमवधीत् । तन्महेन्द्रस्य महेन्द्रत्वम् and तैसं 1·6·2·4 महेन्द्रस्य अहं देवयज्यया जेमानं महिमानं गमेयम् ); शब्रा 2·5·4·10 सर्वं जितं देवानामासीत् ... विजिग्यानानाम्; 2·6·3·6 विजिग्यानं मा प्रजाः श्रियै...अभिसंजानान्तै; 2·6·3·8 एष मा विजिग्यानं प्रीतः साधुना त्वत् अभिगोपायत् साधौ त्वत् विद्धत्. —*b*) For ष्ठीव् cp अ 5·19·3 ये ब्राह्मणं प्रति प्रष्ठीवन्; शब्रा 1·2·3·1 सो अपो अभितिष्ठेव ( perfect of ष्ठीव् ) अवष्ठ्यताः स्थ. —*c*) षब्रा 1·4 शतसनिमेव तत् आत्मानं च यजमानं च करोति; cp the words गोषाणि, वाजसनि, ऊर्जसनि, पितुषणि and हृदंसनि; but शतसा in ऋ 9·87·4 सहस्रसाः शतसा भूरिदावा. —*d*) For गाथा, नाराशंसी and रैभी see ऋ 10·85·6 रैभी आसीदनुदेयी नाराशंसी न्योचनी, सूर्याया भद्रमिद्वासो गाथयैति परिष्कृतम्; तैसं 7·5·11·2 गाथाभ्यः स्वाहा, नाराशंसीभ्यः स्वाहा, रैभीभ्यः स्वाहा; अ 20·127. 4–6 are called रैभीs; because they contain the word रेभ; ऐब्रा 6·32 तं परस्ताच्छन्दोभिः पर्यगृह्णन्; नाराशंस्या गायत्र्या रैभ्या त्रिष्टुभः; कौब्रा 30·5 नाराशंसी रैभीः कारव्या इन्द्रगाथाः. —*e*) सुनोति is the Ms. reading throughout, although सनोति should be expected; but cp ऐब्रा 4·17 where सिषासत्यः from सन्-सा and असुन्वन् from सु are used; cp ऋ 1·123·4 सिषासन्ती. *f*) कुम्ब्या or कुम्भ्या; शब्रा 11·5·7·11 तस्मादपि ऋचं वा यजुर्वा साम वा गाथां वा कुम्ब्यां वा अभिव्याहरेत्...व्रतस्य अव्यवच्छेदाय; ऐआ 2·3·6 ऋक् गाथा कुम्ब्या तन्मितम्; जै 1·53·9.

१·५१

स ऐळँबेनापुनीत । पूतानि ह वा अस्य सामानि, पूता ऋचः, पूतानि यजूँषि, पूतमनूक्तं, पूतं सर्वं भवति य एवं वेद ॥ १ ॥ ते समेत्य साम प्राजनयताम् । तद्यत् समेत्य साम प्राजनयतां तत् साम्नः सामत्वम् ॥२॥ तदिदं साम सृष्टमद् उत्क्रम्य लेलायदतिष्ठत् । तस्य सर्वे देवा ममत्विन आसन्—मम ममेति ॥ ३ ॥ तेऽब्रुवन्—वीदं भजामहा इति । तस्य विभागे न समपादयन् । तान् प्रजापतिरब्रवीत्—अपेत । मम वा एतत् । अहमेव वो विभक्ष्यामीति ॥ ४ ॥ सोऽग्निमब्रवीत्—त्वं वै मे ज्येष्ठः पुत्राणामसि । त्वं प्रथमो वृणीष्वेति ॥ ५ ॥ सोऽब्रवीन्मन्द्रं साम्नो वृणेऽन्नाद्यमिति । स य एतद्गायादन्नाद एव सोऽसत् । मामु स देवानामृच्छाद्य एवं विद्वाँसमेतद् गायन्तमुपवदादिति ॥ ६ ॥ अथेन्द्रमब्रवीत्—त्वमनुवृणीष्वेति ॥ ७ ॥ सोऽब्रवीदुग्रं साम्नो वृणे श्रियमिति । स य एतद्गायाच्छ्रीमानेव सोऽसत् । मामु स देवानामृच्छाद्य एवं विद्वाँसमेतद्गायन्तमुपवदादिति ॥ ८ ॥ अथ सोममब्रवीत्—त्वमनुवृणीष्वेति ॥ ९ ॥ सोऽब्रवीत्—वल्गु साम्नो वृणे प्रियमिति । स य एतद्गायात् प्रिय एव स कीर्तेः प्रियश्चक्षुषः प्रियः सर्वेषामसत् । मामु स देवानामृच्छाद्य एवं विद्वाँसमेतद्गायन्तमुपवदादिति ॥ १० ॥ अथ बृहस्पतिमब्रवीत्—त्वमनुवृणीष्वेति ॥ ११ ॥ सोऽब्रवीत्—क्रौञ्चं साम्नो वृणे ब्रह्मवर्चसमिति । स य एतद्गायाद् ब्रह्मवर्चस्येव सोऽसत् । मामु स देवानामृच्छाद्य एवं विद्वाँसमेतद्गायन्तमुपवदादिति ॥ १२ ॥

*a*) अ 6·16·3 ऐलब ऐलीत्; 11·2·30 ऐलबकारेभ्यः. —*b*) ऋ 10·42·4 त्वां जना ममसत्येष्विन्द्र संतस्थाना विह्वयन्ते समीके; cp अहंश्रेयस (-स्) in the Upanisads, छां 5·1·6; see 1·58·8 below. —*c*) Cp जै 1·37·1 ff.

१·५२

अथ विश्वान् देवानब्रवीद्—यूयमनुवृणीध्वमिति ॥ १ ॥ तेऽब्रुवन्—वैश्वदेवं साम्नो वृणीमहे प्रजननमिति । स य एतद्गायात् प्रजावानेव सोऽसत् । अस्मानु देवानामृच्छाद्य एवं विद्वाँसमेतद्गायन्तमुपवदादिति ॥ २ ॥ अथ पशूनब्रवीत्—यूयमनुवृणीध्वमिति ॥ ३ ॥ तेऽब्रुवन्—वायुर्वास्माकमीशे । स एव नो वरिष्यत इति । ते वायुश्च पशवश्चाब्रुवन्—निरुक्तं साम्नो वृणीमहे पशव्यमिति । स य एतद्गायात् पशुमानेव सोऽसत् । अस्मानु च स वायुं च देवानामृच्छाद्य एवं विद्वाँसमेतद्गायन्तमुपवदादिति ॥ ४ ॥ अथ प्रजापतिरब्रवीत्—अहमनुवरिष्य इति । ॥ ५ ॥ सोऽब्रवीत्—अनिरुक्तं साम्नो वृणे स्वर्ग्यमिति । स य एतद्गायात् स्वर्गलोक एव

सोऽसत् । मामु स देवानामृच्छाद्य एवं विद्वाँसमेतद्गायन्तमुपवदादिति ॥ ६ ॥ अथ वरुणमब्रवीत् — त्वमनुवृणीष्वेति ॥ ७ ॥ सोऽब्रवीत् — यद्वो न कश्चनाऽऽवृतस्तदहं परिहरिष्य इति । किमिति । अपध्वान्तं[b] साम्नो वृणेऽपशव्यमिति । स य एतद्गायादपशुरेव सोऽसत् । मामु स देवानामृच्छाद्य एतद्गायादिति ॥ ८ ॥ तानि वा एतान्यष्टौ गीतागीतानि साम्नः । इमान्यु ह वै सप्तगीतानि । अथेयमेव वारुण्यागाऽगीता ॥ ९ ॥ स यां ह कां चैवं विद्वानेतासां सप्तानामागानां गायति गीतमेवास्य भवत्येतानु कामान्राध्नोति य एतासु कामाः । अथेमामेव वारुणीमागां[c] न गायेत् ॥ १० ॥

a ) The common form ( 3rd pers. sg. ) in the Ṛgveda ( exceptions— ईष्टे in 5·87·3 and ईशते in 10·43·3 both, 3rd pers. sg ). —b ) छां 2·22·1 अपध्वान्तं वरुणस्य. —c ) छां 2·22·1 वारुणं त्वेव वर्जयेत्.

## १·५३

द्वयं वावेदमग्र आसीत् सच्चैवासच्च[a] ॥१॥ तयोर्यत् सत् तत् साम, तन्मनः, स प्राणः । अथ यदसत् सर्क्, सा वाक्, सोऽपानः ॥२॥ तद्यन्मनश्च प्राणश्च तत् समानम् । अथ या वाक् चापानश्च तत् समानम् । इदमायतनं मनश्च प्राणश्चेदमायतनं[b] वाक् चापानश्च । तस्मात् पुमान् दक्षिणतो योषामुपशेते[c] ॥ ३ ॥ सेयमृगास्मिन् सामन्[d] मिथुनमैच्छत् । तामपृच्छत्—का त्वमसीति । साऽहमस्मीत्यब्रवीत् । अथ वा अहममोऽस्मीति ॥ ४ ॥ तद्यत् सा चामश्च तत् सामाऽभवत् तत् साम्नः सामत्वम्[e] ॥ ५ ॥ तौ वै नौ संभवावेति । नेत्यब्रवीत् स्वसा[f] वै मम त्वमस्यन्यत्र मिथुनमिच्छस्वेति[f] ॥६॥ साऽब्रवीत्—न वै तं विन्दामि येन संभवेयम् । त्वयैव संभवानीति । सा वै पुनीष्वेत्यब्रवीत् । अपूता वा असीति ॥ ७ ॥ साऽपुनीत यदिदं विप्रा वदन्ति तेन । साऽब्रवीत्—क्वेदं भविष्यतीति । प्रत्यूहेत्यब्रवीत् । धीर्वा एषा । प्रजानां जीवनं वा एतद्भविष्यतीति । तथेति । तत् प्रत्यौहत् । तस्मादेषा धीरेव प्रजानां जीवनमेव ॥ ८ ॥ पुनीष्वेत्यब्रवीत् । साऽपुनीत गाथया साऽपुनीत कुम्ब्यया, साऽपुनीत नाराशँस्या, साऽपुनीत पुराणेतिहासेन[g], साऽपुनीत यदिदमादाय नाऽऽगायन्ति तेन ॥ ९ ॥ साऽब्रवीत्—क्वेदं भविष्यतीति । प्रत्यूहेत्यब्रवीत् । धीर्वा एषा । प्रजानां जीवनं वा

एतद्भविष्यतीति । तथेति । तत् प्रत्यौहत् । तस्मादेषा धीर्वँ[h] प्रजानां जीवनम्वँ[h] ॥ १० ॥ पुनीष्वेत्यब्रवीत् ॥ ११ ॥

*a* ) ऋ 10·129·1 नासदासीन्नो सदासीत् तदानीम्; 10·129·4 सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा; तै 2·7; छां 3·19·1; 6·2·1. —*b* ) v. l. इद्मायतना ( वाक् ) seems to be बहुव्रीहि compound; cp इद्मायतनं मनः above. —*c* ) शब्रा 1·1·1·20 = 2·5·2·17 उत्तरतो हि स्त्री पुमांसमुपशेते; शब्रा 6·3·1·10 = 7·5·1·6 दक्षिणतो वै वृषो योषामुपशेते. —*d* ) सामन् Vedic *locative*. सामन् is loosely treated as a male and masculine; cp अहममोऽस्मीति; in 1·54·2 स भरण्डकेष्णेन अपुनीत; शब्रा 4·6·7·11 साम योषामृचं सदसि अध्येति. —*e* ) For etymology cp ऐब्रा 3·23; बृ 1·3·24; छां 1·6·1. —*f* – –*f* ) ऋ 10·10·12 पापमाहुर्यः स्वसारं निगच्छात्, अन्येन मत् प्रमुदः कल्पयस्व. —*g* ) Unusual order; normal order is इतिहास-पुराण. —*h* ) Optional सन्धि of उ + एव.

## १.५४

सा मधुनाऽपुनीत । तस्मादु ब्रह्मचारी मधु नाश्नीयाद् वेदस्य पलाँव[a] इति । कामं ह त्वाचार्यदत्तमश्नीयात् ॥ १ ॥ अथर्क् सामाब्रवीत्— किंच किंच पुमाँश्चरति त्वमनुपुनीष्वेति । स भरण्डकेष्णेनाऽपुनीत[b] । पूतानि ह वा अस्य सामानि, पूता ऋचः, पूतानि यजूँषि, पूतमनूक्तं, पूतं सर्वं भवति य एवं वेद ॥ २ ॥ ताभ्यां सदो मिथुनाय पर्यश्रयन्[c] । तस्मादुपवसथीयां रात्रिं सदसि न शयीत । अत्र ह्येताव्रृक्सामे उपवसथीयां रात्रिं सदसि संभवतः[d] । स यथा श्रेयसँ उपद्रष्टैवं हि शश्वदीश्वरोऽनुलब्धः पराभवितोः ॥ ३ ॥ अथो आहुः—उद्गातुर्मुखे संभवतः । उद्गातुरेव मुखं नेक्षेतेति ॥ ४ ॥ तदु वा आहुः— काममेवोद्गातुर्मुखमीक्षेत । उपवसथीयां रात्रिं सदसि न शयीत । अत्र ह्येवैताव्रृक्सामे उपवसथीयां रात्रिं सदसि संभवत इति ॥ ५ ॥ तां संभविष्यन् आह— अमोऽहमस्मि[e] सा त्वं, सा त्वमस्यमोऽहम् । सा मामनुव्रता[f] भूत्वा प्रजाः प्रजनयावहै । एहि संभवावहा इति ॥ ६ ॥ तां संभवन्नत्यरिच्यत्[h], सोऽब्रवीन्न वै त्वाऽनुभवामि । विराड् भूत्वा प्रजनयावेति । तथेति ॥ ७ ॥ तौ विराड् भूत्वा प्राजनयताम् । हिङ्कारश्चाहावश्च प्रस्तावश्च प्रथमा चोद्गीथश्च मध्यमा च प्रतिहारश्चोत्तमा च निधनं च वषट्कारश्चैवं विराड् भूत्वा प्राजनयताम् । ते अमुमजनयतां योऽसौ तपति । ते व्यद्रवताम् ॥ ८ ॥

*a* ) अ 12·3·19 वर्षवृद्धं उप यच्छ शूर्पं तुषं पलावानप तद्विनक्तु. —*b* ) भरण्डक + इष्ण as in देष्ण, गेष्ण etc. It is an old comparative termination found in other Indo-European languages : Greek : ἥδιον-ος ( * hēd-íson-os ); *Lithuanian* : sald-ěsni-s. For the termination स्न cp तीक्ष्ण, कृष्ण, अक्ष्ण and मृत्स्न

( Cp पा 5·4·40 स-स्नौ प्रशंसायाम् ). —*c* ) शब्रा 9·2·1·1 उपवसथीयेऽहन् प्रातरुदिते आदित्ये वाचं विसृजते; तैब्रा 1·5·9·7 स एष उपवसथीयेऽहन् द्विदैवत्यः पशुरालभ्यते; ऐब्रा 3·45 तमुपवसथ्ये अहन्नाप्नुवन्. —*d* ) शब्रा 4·6·7·9f uses much of the vocabulary of this *kaṇḍikā*. —*e* ) Cp the युधिष्ठिर-द्रौपदी-अर्जुन episode in Mbh. —*f*) अ 12·2·71; शब्रा 14·9·4·19 = बृ 6·4·20; ऐब्रा 8·27; तैब्रा 3·7·1·9; गोब्रा 2·3·20. —*g* ) ऋ 10·34·2 अनुव्रतामप जायामरोधम्. —*h* ) Emendation after जै 1·57·5; ऐब्रा 3·23. —*j* ) Emendation after शब्रा 4·6·7·10 वि एव द्रवतः आग एव कुर्वाते.

## १·५५

मदध्यभू३न्मदध्यभू३दिति[a] । तस्माद्याहुर्मधुपुत्र[b] इति ॥ १ ॥ तस्मादुत स्त्रियो मधु नाश्नन्ति पुत्राणामिदं व्रतं चराम इति वदन्तीः ॥ २ ॥ तदयं तृचोऽनूदश्रयत । इयमेव गायत्र्यन्तरिक्षं त्रिष्टुबसौ जगती । तस्यैतत् तृचः ॥ ३ ॥ स उपरिष्टात् सामाध्याहितं तपति । सोऽध्रुव इवासीदलेलायदिव । स नोर्ध्वोऽतपत् ॥४ ॥ स देवानब्रवीत्—उन्मा गायतेति । किं ततः स्यादिति । श्रियं वः प्रयच्छेयम् । मामिह हँहेतेति[a] ॥ ५ ॥ तथेति । तमुदगायन् । तमेतदत्राऽहँहन् । तेभ्यः श्रियं प्रायच्छत् । सैषा देवानां श्रीः ॥ ६ ॥ तत एतदूर्ध्वस्तपति । स नार्वाङ्तपत् ॥ ७ ॥ स ऋषीनब्रवीत्—अनु मा गायतेति । किं ततः स्यादिति । श्रियं वः प्रयच्छेयम् । मामिह हँहेतेति ॥ ८ ॥ तथेति । तमन्वगायन् । तमेतदत्राऽहँहन् । तेभ्यः श्रियं प्रायच्छत् । सैषा ऋषीणां श्रीः ॥ ९ ॥ तत एतदर्वाङ् तपति । स न तिर्यङ्तपत् ॥ १० ॥ स गन्धर्वाप्सरसोऽब्रवीत्—आ मा गायतेति । किं ततः स्यादिति । श्रियं वः प्रयच्छेयम् । मामिह हँहेतेति ॥ ११ ॥ तथेति । तमागायन् । तमेतदत्राऽहँहन् । तेभ्यः श्रियं प्रायच्छत् । सैषा गन्धर्वाप्सरसां श्रीः ॥१२॥ तत एतत् तिर्यङ् तपति ॥ १३ ॥ तानि वा एतानि त्रीणि साम्न उद्गीतमनुगीतमागीतम् । तद्यथेदं वयमागायोद्गायाम एतदुद्गीतम् । अथ यद्यथागीतं तदनुगीतम् । अथ यत् किंचेति साम्नस्तदागीतम् । एतानि ह्येव त्रीणि साम्नः ॥ १४ ॥

This section treats of three triads; देव, उद्गीतम्, ऊर्ध्वम्; ऋषि, अनुगीतम्, अर्वाङ्; गन्धर्वाप्सरसः, आगीतम्, तिर्यङ्.

*a* ) मद् + अधि governing *ablative*, secondarily and less commonly; cp ऋ 1·6·9 दिवो रोचनादधि; 1·33·3 मा पणिर्भूदस्मदधि प्रवृद्धः; 1·48·7 सूर्यस्य रोचनादधि; —*b* ) Popular etymology ! —*c* ) अ 19·23·19 तृचेभ्यः स्वाहा; तैसं 1·5·8·3 अथो यदेतं तृचमन्वाह; शब्रा 1·4·1·33 वृषण्वन्तं त्रिचमन्वाह ( शब्रा throughout reads त्रिचम् ); नि 2·1 अथापि द्विवर्णलोपः । तृच इति; 7·20 तत् एतदेकमेव जातवेदसं गायत्रं तृचं दशतयीषु विद्यते ( ऋ 10·188 ); ऐआ 1·3 तृचो भवति; see below 1.56·10; पा 6·1·37 वार्तिक 1 ऋचि त्रेः

उत्तरपदादिलोपश्छन्दसि; पा 5·4·74 ऋक्पूरब्धूःपथामानक्षे· —*d*) ऋ 2·12·2 यः पृथिवीं व्यथमानामदृंहत्; 5·45·2 स्थूणेव सुमिता दृंहत द्यौः; तैसं 7·5·19·2 प्राणधृक् असि प्राणं मे दृंह; ( धृक् in प्राणधृक् from दृह्? )

## १·५६

आपो वा इदमग्रे महत् सलिलम्[a]आसीत् स ऊर्मिरूर्मिमस्कन्दत् । ततो हिरण्मयौ कुश्[b]यौ समभवताम् । ते एवर्क्[c]सामे ॥१॥ सेयमृगिदं सामाभ्यप्लवत । तामपृच्छत्— का त्वमसि । साऽहमस्मीत्यब्रवीत् । अथ वा अहममोऽस्मीति । तद्यत् सा चामश्च तत् साम्नः सामत्वम् ॥ २ ॥ तौ वै संभवावेति । नेत्यब्रवीत् । स्वसा वै मम त्वमसि । अन्यत्र मिथुनमिच्छस्वेति ॥ ३ ॥ सा पराप्लवत मिथुन[d]मिच्छमाना । सा समाः सहस्रं सप्ततीः पर्यप्लवत ॥ ४ ॥ तदेष श्लोक[e]ः—

स्त्री स्मैवाग्रे संचरन्ती इच्छन्ती सलिले पतिम् ।

समाः सहस्रं सप्ततीस्ततोऽजायत पश्यत[f]ः ॥ ५ ॥ इति ॥

असौ वा आदित्यः पश्यतः । एष एव तदजायत । एतेन हि पश्यति ॥ ६ ॥ साऽवित्त्वा न्यप्लवत । साऽब्रवीन्न वै तं विन्दामि येन संभवेयम् । त्[g]वयैव संभवानीति ॥ ७ ॥ सा वै द्वितीयामिच्छस्वेत्यब्रवीन्न वै मैकोद्यंस्[h]यसीति । सा द्वितीयां वित्त्वा न्यप्लवत ॥ ८ ॥ ( तृतीयाम् ) इच्छस्वैवेत्यब्रवीन्नो वाव मा द्वे उद्यंस्यथ इति । सा तृतीयां वित्त्वा न्यप्लवत । सोऽब्रवीदत्र वै मोद्यंस्यथेति ॥ ९ ॥ स यदेकयाग्रे समवदत तस्मादेकर्चे साम । अथ यद् द्वे अपासेध[i]त् तस्माद् द्वयोर्न कुर्वन्ति । अथ यत् तिसृभिः समपाद[j]यत् तस्मादु तृचे साम ॥१०॥ ता अब्रवीत्— पुनीध्वं नपूता[k] वै स्थेति ॥ ११ ॥

*a*) ऋ 10·129·3 अप्रकेतं सलिलं सर्वमा इदम्; 10·72·6 यद्दः सलिले अतिष्ठत; वासं 8·59 सलिलः प्रप्लुतः; बृ 4·3·32 सलिल ( *adj.* ) एको द्रष्टाऽद्वैतो भवति; श्वे 6·15 स एवाग्निः सलिले संनिविष्टः. —*b*) कुश्य ( *mas.* ) only here. —*c*) See पराप्लु and पर्यप्लु in 1·56·4 and निप्लु in 1·56·8. —*d*) पा 4·1·42 ...... कामुक, ...... मैथुनेच्छा· —*e*) Source untraced. —*f*) Adj. like दर्शत; cp अ 13·4·48 नमस्ते अस्तु पश्यत. —*g*) ऐब्रा 3·23 मिथुनं संभवाव प्रजात्या. —*h*) ऋ 1·10·1 उद्वंशामिव येमिरे; 6·71·5 उदू अयाँ उपवक्तेव बाहू. —*i*) अप + सिध् is the opposite of सं + वद्. —*j*) Shall we read समवादयत्? Cp समवदत above. —*k*) Is read by Caland as अपूताः—not much difference!

## १·५७

सा गायत्री गाथयाऽपुनीत नाराशँस्या त्रिष्टुब् रैभ्या जगती । भीमं बत मलमपावधिषतेति । तस्माद् भीमला[a] धियो वा एताः । धियो वा इमा मलमपावधिषतेति । तस्मादु भीमला । तस्मादु गायतां नाश्नीयात् । मलेन ह्येते जीवन्ति ॥ १ ॥ अथर्क् सामाब्रवीद्—बहु वै किंच किंच पुमाँश्चरति । त्वमनु ‹पुनी›ष्वेति । स ऊर्ध्वगणेनापुनीत ॥ २ ॥ पूतानि ह वा अस्य सामानि, पूता ऋचः, पूतानि यजूँषि, पूतमनूक्तं, पूतं सर्वं भवति य एवं वेद ॥ ३ ॥ ताभ्यां दिशो मिथुनाय पर्यौहन् । तां संभविष्यन्नह्वयत—अमोऽहमस्मि सा त्वं सा त्वमस्यमोऽहमिति ॥ ४ ॥ तामेतदुभयतो वाचात्यरिच्यत हिङ्कारेण पुरस्तात् स्तोभेन मध्यतो निधनेनोपरिष्टात् । अति तिस्रो ब्राह्मणायनीः[b] सदृशी रिच्यते य एवं वेद ॥ ५ ॥ तयोर्यः संभवतोरूर्ध्वः शूषोऽद्रवत्[c] (प्राणाः) ते । ते प्राणा एवोर्ध्वा अद्रवन् ॥ ६ ॥ सोऽसावादित्यः स [d]एष एव उद् अग्निरेव गी, चन्द्रमा एव थम्[d] । सामान्येव उदृच एव गी, यजूँष्येव थमित्यधिदेवतम् ॥ ७ ॥ अथाध्यात्मम् । प्राण एव उद्, वागेव गी, मन एव थम् । स एषोऽधिदेवतं चाध्यात्मं चोद्गीथः ॥ ८ ॥ स य एवमेतदधिदेवतं चाध्यात्मं चोद्गीथं वेदैतेन हास्य सर्वेणोद्गीतं भवत्येतस्मादु एव सर्वस्मादावृश्च्यते य एवं विद्वाँसमुपवदति ॥ ९ ॥

*a*) भी (म) मला = भीमला by haplology ? —*b*) ब्राह्मणायनाः in शब्रा 14·9·4·4 = बृ 6·4 4. —*c*) वासं 21·54 शूषं न मध्ये नाभ्याम्. —*d*- -*d*) छां 1·3.6; बृ 1·3·23.

## १·५८

तद्यदिदमाहुः क उदगासीरिति क एतमादित्यमगासीरिति ह वा एतत् पृच्छन्ति ॥ १ ॥ एतं ह वा एतं त्रय्या विद्यया गायन्ति । यथा वीणा[a]गाथिनो गापयेयुरेवम् ॥ २ ॥ स एष ह्रदः[b] कामानां पूर्णो यन्मनः । तस्यैषा कुल्या[b] यद्वाक् ॥ ३ ॥ तद्यथा वा अपो ह्रदात् कुल्ययोपरामुपनयन्त्येवमेवैतन्मनसोऽधि वाचोद्गाता यजमानं यस्य कामान् प्रयच्छति ॥ ४ ॥ स य उद्गातारं दक्षिणाभिराराधयति तं सा कुल्योपधावति । य उ एनं नाराधयति स उ तामपहन्ति ॥ ५ ॥ अथ वा अतः प[c]ंक्तिश्चैव प्रतिग्रहश्च । तद्भूममिति वै प्रदीयते । तद्वाचा यजमानाय प्रदेयं मनसाऽऽत्मने । तथा ह न सर्वं प्रयच्छति ॥ ६ ॥ तद्यदिदं संभवतो रेतोऽसिच्यत तदशयत् । यथा हिरण्यमविकृतं' लेलायदेवम् ॥ ७ ॥ तस्य सर्वे देवा ममत्विन आसन् मम ममेति ।

तेऽब्रुवन्—वीदं करवामहा इति । तेऽब्रुवन्—श्रेयो वा इदमस्मत् । आत्मभिरेवैनद् विकरवामहा इति ॥ ८ ॥ तदात्मभिरेव व्यकुर्वत । तेषां वायुरेव हिङ्कार आसाग्निः प्रस्ताव इन्द्र आदिः सोमबृहस्पती उद्गीथोऽश्विनौ प्रतिहारो विश्वेदेवा उपद्रवः प्रजापतिरेव निधनम् ॥ ९ ॥ एता वै सर्वा देवता एता हिरण्यम् । अस्य सर्वाभिर्देवताभिः स्तुतं भवति य एवं वेद । एताभ्य उ एव स सर्वाभ्यो देवताभ्य आवृश्च्यते य एवं विद्वाँसमुपवदति ॥ १० ॥

*a* ) शब्रा 13·1·5·1 ब्राह्मणा वीणागाथिनः; 13·4·3·5 राजन्यो वीणागाथी. —*b* ) ऋ 3·45·3 ह्रदं कुल्या इवाशत; 10·43·3 सोमास इन्द्रं कुल्या इव ह्रदं ( समक्षरन् ). —*c* ) उपराम्, only here, is adverb; cp उपरेण in वासं 6·2 पृथिवीमुपरेण अद्दृंहीः; शब्रा 3·7·1·3 उपरेण संमाय अवटं खनति. —*d* ) तैसं 5·4·7·2 प्रत्त्यै; ऐब्रा 2·40 प्रत्तिर्वै याज्या जै 3·6·1 —*e* ) मनसा = *in silence*; see above 1·5·6. —*f* ) जैब्रा 3·1 स इदं सर्वं व्यकरोत्, यथा ह वै हिरण्यमविकृतमेवामिदं ततः पुरा.

## १·५९

अथ ह ब्रह्मदत्तश्चैकितानेयः कुरुं जगामाभिप्रतारिणं[b] काक्षसेनिम् । स हास्मै मधुपर्कं ययाच ॥ १ ॥ अथ हास्य वै प्रपद्य पुरोहितोऽन्ते निषसाद शौनकः । तं हानामन्त्र्य मधुपर्कं पपौ ॥ २ ॥ तं होवाच—किं विद्वान्नो दाल्भ्याऽनामन्त्र्य मधुपर्कं पिबसीति । सामवैयं प्रपद्येति होवाच । तं ह तत्रैव पप्रच्छ—यद्वायौ तद्वेत्था३ इति । हिङ्कारो वा अस्य स इति ॥ ४ ॥ यदग्नौ तद्वेत्था३ इति । प्रस्तावो वा अस्य स इति ॥ ५ ॥ यदिन्द्रे तद्वेत्था३ इति । आदिर्वा अस्य स इति ॥ ६ ॥ यत् सोमबृहस्पत्योस्तद्वेत्था३ इति । उद्गीथो वा अस्य स इति ॥ ७ ॥ यदश्विनोस्तद्वेत्था३ इति । प्रतिहारो वा अस्य स इति । यद्विश्वेषु देवेषु तद्वेत्था३ इति । उपद्रवो वा अस्य स इति ॥ ९ ॥ यत् प्रजापतौ तद्वेत्था३ इति । निधनं वा अस्य तदिति होवाच । आर्षेयं वा अस्य तद्बन्धुता वा अस्य सेति ॥ १० ॥ स होवाच—नमस्तेऽस्तु भगवो विद्वानपा मधुपर्कमिति ॥ ११ ॥ अथ हेतरः पप्रच्छ—किंदेवत्यं सामवैयं प्रपद्येति । यद्देवत्यासु स्तुवत इति होवाच तद्देवत्यामिति ॥ १२ ॥ तदेतत् साध्वेव प्रत्युक्तम् । व्याप्तिर्वा अस्यैषेति होवाच ब्रूह्येवेति । मेदं ते नमोऽकर्मेति होवाच । मैव नोऽतिप्राक्षीरिति ॥ १३ ॥ स होवाच—अप्रक्ष्यं वाव त्वा देवतामप्रक्ष्यं वाव त्वा देवतायै देवताः । वाग्देवत्यं साम वाचो मनो देवता मनसः पशवः पशूनामोषधय ओषधीनामापः । तदेतदद्भ्यो जातं सामाप्सु प्रतिष्ठितमिति ॥ १४ ॥

*a*) A teacher in बृ 1·3·24; cp जै 1·38·1. —*b*) छां 4·3·5. —*c*) बृ 1·4·11 तस्माद् ब्राह्मणः क्षत्रियमधस्ताद् उपास्ते. —*d*) जैब्रा 1·219 वीर्यं वा एतत् साम्नो यन्निधनम्; वैर्यम् = वीर्यत्वम्? —*e*) ऐब्रा 7·25 तस्मात् तस्य पुरोहितस्य आर्षेयेण दीक्षामावेदयेयुः। पुरोहितस्य आर्षेयेण प्रवरं प्रवृणीरन्. —*f*) ऋ 4·4·11 महो रुजानि बन्धुता (*Instru.*) वचोभिः तन्मा पितुर्गोतमादन्वियाय; 10·144·5 एना जागार बन्धुता. —*g*) बृ 5·13·2 स ह स्माह पाणिना मा प्रातृद्. —*h*) Dative form identical with genitive. —*i*--*i*) साम a product of आपः again established in आपः through the intermediary links.

## १·६०

देवासुरा[a] अस्पर्धन्त। ते देवा मनसोदगायन्। तदेषामसुरा अभिद्रुत्य पाप्मनो समसृजन्। तस्माद् बहु किंच किंच मनसा ध्यायति। पुण्यं[b] चैनेन ध्यायति पापं[b] च ॥ १ ॥ ते वाचोदगायन्। तां तथैवाकुर्वन्। तस्माद् बहु किंच किंच वाचा वदति। सत्यं चैनया वदत्यनृतं च ॥ २ ॥ ते चक्षुषोदगायन्। तत् तथैवाऽकुर्वन्। तस्माद् बहु किंच किंच चक्षुषा पश्यति। दर्शनीयं चैनेन पश्यत्यदर्शनीयं च ॥ ३ ॥ ते श्रोत्रेणोदगायन्। तत् तथैवाकुर्वन्। तस्माद् बहु किंच किंच श्रोत्रेण शृणोति। श्रवणीयं चैनेन शृणोत्यश्रवणीयं च ॥ ४ ॥ तेऽपानेनोदगायन्। तं तथैवाकुर्वन्। तस्माद् बहु किंच किंचापानेन जिघ्रति[c]। सुरभि चैनेन जिघ्रति दुर्गन्धि च ॥ ५ ॥ ते प्राणेनोदगायन्। अथासुरा आद्रवँस्तथा[d] करिष्याम इति मन्यमानाः ॥ ६ ॥ स यथाऽश्मानमाखणमृत्वा लोष्टो विध्वँसेतैवमेवासुरा व्यध्वँसन्त। स एषोऽश्माऽऽखणो यत् प्राणः ॥ ७ ॥ स यथाऽश्मानमाखणमृत्वा लोष्टो विध्वँसत एवमेव स विध्वँसते य एवं विद्वाँसमुपवदति ॥ ८ ॥

*a*) Cp below 2·1; 2·10; छां 1·2; बृ 1·2= शब्रा 14·4·1. —*b*) जैब्रा 1·269 मनो वै रेतस्या मनसा सुहार्दसं (पुण्यं) च दुर्हार्दसं (पापं) च विजानाति. —*c*) बृ 3·2·2 अपानेन गन्धान् जिघ्रति; जै 2·1·16. —*d*) वासं 11·12 प्रतूर्तं वाजिन्नाद्रव; ऐब्रा 3·20 मां हानिष्यन्त आद्रवन्ति; शब्रा 14·7·1·17 पुनः प्रतियोन्याद्रवति; ब्रसू 1·3·34 तदाद्रवणात् सूच्यते हि.

॥ इति प्रथमोऽध्यायः ॥

---

## २·१

देवानां वै षडुद्गातार आसन्। वाक् च मनश्च चक्षुश्च श्रोत्रं चापानश्च प्राणश्च ॥ १ ॥ तेऽध्रियन्त तेनोद्गात्रा दीक्षामहै येनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमियामेति[a][b] ॥ २ ॥ तेऽब्रुवन्—वाचोद्गात्रा दीक्षामहा इति। ते वाचोद्गात्रादीक्षन्त। स यदेव वाचा वदति तदात्मन आगायदथ य इतरे कामास्तान् देवेभ्यः ॥ ३ ॥ तां पाप्माऽन्वसृज्यत। स यदेव वाचा पापं वदति स एव स पाप्मा ॥ ४ ॥ तेऽब्रुवन्—न वै नोऽयं मृत्युं न पाप्मानमत्यवाक्षीत्[c]। मनसोद्गात्रा दीक्षामहा इति ॥ ५ ॥ ते मनसोद्गात्राऽदीक्षन्त। स यदेव मनसा ध्यायति तदात्मन आगायदथ य इतरे कामास्तान् देवेभ्यः ॥ ६ ॥ तत् पाप्माऽन्वसृज्यत। स यदेव मनसा पापं ध्यायति स एव स पाप्मा ॥ ७ ॥ तेऽब्रुवन्—नो न्वाव[d] नोऽयं मृत्युं न पाप्मानमत्यवाक्षीत्। चक्षुषोद्गात्रा दीक्षामहा इति ॥ ८ ॥ ते चक्षुषोद्गात्राऽदीक्षन्त। स यदेव चक्षुषा पश्यति तदात्मन आगायदथ य इतरे कामास्तान् देवेभ्यः ॥९॥ तत् पाप्माऽन्वसृज्यत। स यदेव चक्षुषा पापं पश्यति (स एव स पाप्मा) ॥ १० ॥ तेऽब्रुवन्—नो न्वाव नोऽयं मृत्युं न पाप्मानमत्यवाक्षीत्। श्रोत्रेणोद्गात्रा दीक्षामहा इति ॥ ११ ॥ ते श्रोत्रेणोद्गात्राऽदीक्षन्त। स यदेव श्रोत्रेण शृणोति तदात्मन आगायदथ य इतरे कामास्तान् देवेभ्यः ॥१२॥ तत् पाप्माऽन्वसृज्यत। स यदेव श्रोत्रेण पापं शृणोति स एव स पाप्मा ॥ १३ ॥ तेऽब्रुवन्—नो न्वाव नोऽयं मृत्युं न पाप्मानमत्यवाक्षीत्। अपानेनोद्गात्रा दीक्षामहा इति ॥ १४ ॥ तेऽपानेनोद्गात्राऽदीक्षन्त। स यदेवापानेनापानिति तदात्मन आगायदथ य इतरे कामास्तान् देवेभ्यः ॥१५॥ तं पाप्मान्वसृज्यत। स यदेवापानेन पापं गन्धमपानिति स एव स पाप्मा ॥ १६ ॥ तेऽब्रुवन्—नो न्वाव नोऽयं मृत्युं न पाप्मानमत्यवाक्षीत्। प्राणेनोद्गात्रा दीक्षामहा इति ॥ १७ ॥ ते प्राणेनोद्गात्राऽदीक्षन्त। स यदेव प्राणेन प्राणिति तदात्मन आगायदथ य इतरे कामास्तान् देवेभ्यः ॥१८॥ तं पाप्मान्वसृज्यत। न ह्येतेन प्राणेन पापं वदति, न पापं ध्यायति, न पापं पश्यति, न पापं शृणोति, न पापं गन्धमपानिति ॥ १९ ॥ तेनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमायन्। अपहत्य हैव मृत्युमपहत्य पाप्मानं स्वर्गं लोकमेति य एवं वेद ॥ २० ॥

a) Cp 1·60 above and 2·10 below. —b) तैत्रा 2 2·3·5 वयं पूर्वे सुवर्गं लोकमियाम वयं पूर्वे. See below 2·10·2; 4·13·3; 4·14·7. —c) अति + वह्, see बृ 1·3·11, 12, 16. —d) न्वाव = नु + वाव; cp न्वै = नु + वै.

## २·२

सा या सा वागासीत् सोऽग्निरभवत् ॥१॥ अथ यत् तन्मन आसीत् स चन्द्रमा अभवत् ॥२॥ अथ यत् तच्चक्षुरासीत् स आदित्योऽभवत् ॥ ३ ॥ अथ यत् तच्छ्रोत्रमासीत् ता इमा दिशोऽभवन् । ता उ एव विश्वे देवाः ॥ ४ ॥ अथ यः सोऽपान आसीत् स बृहस्पतिरभवत् । यदस्यै वाचो बृहत्यै पतिस्तस्माद् बृहस्पतिः ॥ ५ ॥ अथ यः स प्राण आसीत् स प्रजापतिरभवत् । स एष पुत्री प्रजावानुद्गीथो यः प्राणः । तस्य स्वर एव प्रजा[b] । प्रजावान् भवति य एवं वेद ॥ ६ ॥ तं हैतमेके प्रत्यक्षमेव गायन्ति प्राणा३ प्राणा३ हुं भा ओवा इति ॥ ७ ॥ तदु होवाच शाट्यायनिस्तत एतमर्हति[c] प्रत्यक्षं गातुम् । यद्वाव वाचा करोति तदेतदेवास्य कृतं भवतीति ॥ ८ ॥ अथ वा अत ऋक्सा[d]म्नोरेव प्रजातिः । स यद्धिङ्करोत्यभ्येव तेन क्रन्दति । अथ यत् प्रस्तौत्येव तेन प्लवते । अथ यदादिमादत्ते रेत एव तेन सिञ्चति[e] । अथ यदुद्गायति रेत एव तेन सिक्तं संभावयति । अथ यत् प्रतिहरति रेत एव तेन संभूतं प्रवर्धयति । अथ यदुपद्रवति रेत एव तेन प्रवृद्धं विकरोति । अथ यन्निधनमुपैति रेत एव तेन विकृतं प्रजनयति । सैषा ऋक्साम्नोः प्रजातिः ॥ ९ ॥ स य एवमेतामृक्साम्नोः प्रजातिं वेद प्र हैनमृक्सामनी जनयतः ॥ १० ॥

*a*) Cp छां 1·2·11; बृ 1·3·20. —*b*) See below 3·32·9. —*c*) See 1·33·4 above. —*d*) But पा 5·4·7 ऋक्सामे with elision of न्; cp ऋ 10·85·11 ऋक्सामाभ्यामभिहितौ गावौ; 10·114·6 ऋक्सामाभ्याम् प्र रथं वर्तयन्ति. —*e*) Note सिञ्चति ~ सिक्तं, संभावयति ~ संभूतम्; प्रवर्धयति ~ प्रवृद्धम्.

## २·३

एष एवेदमग्र आसीद्य एष तपति । स एव सर्वेषां भूतानां तेजोहर इन्द्रियं वीर्यमादायोर्ध्व उदक्रामत् ॥ १ ॥ सोऽकामयत—एकमेवाक्षरं स्वादु मृदु देवानां वर्नीमेति ॥ २ ॥ स तपोऽतप्यत । स तपस्तप्त्वैकमेवाक्षरमभवत् ॥ ३ ॥ तं देवाश्चर्षयश्चोपसमैप्सन् । अथैषोऽसुरान् भूत[b]हनोऽसृजतैतस्य पाप्मनोऽनन्वागमाय ॥ ४ ॥ तं वाचोपसमैप्सन् । ते वाचं समारोहन् । तेषां वाचं पर्यादत्त । तस्मात् पर्यादत्ता वाक् । सत्यं च ह्येनया वदत्यनृतं च ॥ ५ ॥ तं मनसोपसमैप्सन् । ते मनः समरोहन् । तेषां मनः पर्यादत्त । तस्मात् पर्यादत्तं मनः । पुण्यं ह्येतेन ध्यायति पापं च ॥ ६ ॥ तं चक्षुषोपसमैप्सन् । ते चक्षुः समारोहन् । तेषां चक्षुः पर्यादत्त । तस्मात् पर्यात्तं चक्षुः । दर्शनीयं च ह्येनेन पश्यत्यदर्शनीयं च ॥ ७ ॥ ते श्रोत्रेणोप-

समैप्सन्। ते श्रोत्रं समारोहन्। तेन श्रोत्रं पर्यादत्त। तस्मात् पर्यात्तं श्रोत्रम्। श्रवणीयं चैनेन शृणोत्यश्रवणीयं च ॥ ८ ॥ तमपानेनोपसमैप्सन्। तेऽपानं समारोहन्। तेषामपानं पर्यादत्त। तस्मात् पर्यात्तोऽपानः। सुरभि ह्येनेन जिघ्रति दुर्गन्धि च ॥ ९ ॥ तं प्राणेनोपसमैप्सन्! तं प्राणेनोपसमाप्नुवन् ॥ १० ॥ अथासुरा भूतहन आद्रवन् मोहयिष्याम इति मन्यमानाः ॥ ११ ॥ स यथाऽश्मानमाखणमृत्वा लोष्टो विध्वंसेतैवमेवासुरा व्यध्वंसन्त। स एषोऽश्माखणो यत् प्राणः ॥ १२ ॥ स यथाऽश्मानमाखणमृत्वा लोष्टो विध्वंसत एवमेव स विध्वंसते य एवं विद्वांसमुपवदति ॥ १३ ॥

*a*) वनाम is an emendation of ओमिति (uncertain!) वनाम pl. form apparently incompatible with सः. —*b*) = भ्रूणहन्? Cp Pāli भूनहु which seems to point to this word, मज्झिमनिकाय Sutta 75,2 (मागन्दिय). —*c*) Cp पर्याददीत in शब्रा 11·4·1 2 यद्वै नो अयमर्घ न पर्याददीत हन्तैनं ब्रह्मोद्यमाह्वयामहै. —*d*) Mark the change from पर्यादत्त in 5, 6 to पर्यात्त in 7, 8, 9; cp below 2·13·3, which is noteworthy. —*e*) Cp 1·7·6 and 1·60·7–8 above; छां 1·2·7; बृ 1·3·7.

## २·४

स एष वशी दीप्ताग्र उद्गीथो यत् प्राणः। एष हीदं सर्वं वशे कुरुते ॥ १ ॥ वशीभवति वशे स्वान् कुरुते य एवं वेद। अस्य ह्यसावग्रे दीप्यते ३ अमुष्य वासः ॥ २ ॥ तं हैतमुद्गीथं शाट्यायनिराचष्टे वशी दीप्ताग्र इति। दीप्ताग्रा ह वा अस्य कीर्तिर्भवति य एवं वेद ॥ ३ ॥ आभूतिरिति कारीरादयः। प्राणं वा अनु प्रजा पशव आभवन्ति। स य एवमेतमाभूतिरित्युपास्त ऐवं प्राणेन प्रजया पशुभिर्भवति ॥ ४ ॥ संभूतिरिति सात्ययज्ञयः। प्राणं वा अनु प्रजाः पशवः संभवन्ति। स य एवमेतं संभूतिरित्युपास्ते समे(व) प्राणेन प्रजया पशुभिर्भवति ॥ ५ ॥ प्रभूतिरिति शैलनाः। प्राणं वा अनु प्रजा पशवः प्रभवन्ति। स य एवमेतं प्रभूतिरित्युपास्ते प्रैव प्राणेन प्रजया पशुभिर्भवति ॥६॥ भूतिरिति भाल्लविनः। प्राणं वा अनु प्रजा पशवो भवन्ति। स य एवमेतं भूतिरित्युपास्ते भवत्येव प्राणेन प्रजया पशुभिः ॥ ७ ॥ अपरोधोऽनपरुद्ध इति पार्ष्णः शैलनः। एष ह्यन्यमुपरुणद्धि नैतमन्यः। एष ह वास्य द्विषन्तं भ्रातृव्यमुपरुणद्धि य एवं वेद ॥ ८ ॥

*a*) आ + एव; cp in 5 समेव; in 6 प्रैव.

## २·५

एकवीर इत्यारुणेयः। एको ह्येवैष वीरो यत् प्राणः। आ हाऽस्यैको वीरो वीर्यवाञ्जायते य एवं वेद ॥ १ ॥ एकपुत्र इति चैकितानेयः। एको ह्येवैष पुत्रो यत् प्राणः ॥ २ ॥ स उ एव द्विपुत्र इति। द्वौ हि प्राणापानौ ॥ ३ ॥ स उ एव त्रिपुत्र इति। त्रयो हि प्राणोऽपानो व्यानः ॥ ४ ॥ स उ एव चतुष्पुत्र इति। चत्वारो हि प्राणोऽपानो व्यानः समानः ॥ ५ ॥ स उ एव पञ्चपुत्र इति। पञ्च हि प्राणोऽपानो व्यानः समानोऽवाँनः ॥ ६ ॥ स उ एव षट्पुत्र इति। षड्ढि प्राणोऽपानो व्यानः समानोऽवान उदानः ॥ ७ ॥ स उ एव सप्तपुत्र[b] इति। सप्त हीमे शीर्षण्याः प्राणाः ॥ ८ ॥ स उ एव नव[b]पुत्र इति। सप्त हि शीर्षण्याः प्राणाः। द्वाववाञ्चौ ॥ ९ ॥ स उ एव दशपुत्र इति। सप्त शीर्षण्याः प्राणा द्वाववाञ्चौ नाभ्यां दशमः ॥ १० ॥ स उ एव बहुपुत्र इति। एतस्य हीयँ सर्वाः प्रजाः ॥ ११ ॥ एतं ह स्म वैतदुद्गीथं विद्वाँसः पूर्वे ब्राह्मणाः कामा[d]गायिन आहुः—कति ते पुत्रानागास्याम इति ॥ १२ ॥

*a*) A new nomenclature. —*b*) अष्टपुत्र ought to intervene between these? —*c*) इयम् seems to refer to पृथ्वी. —*d*) Cp the phrase कामं आ + गै in तांब्रा 13·10·8 आगेयनेवास्मि आगायान्वि ·गायेत् प्रतिष्ठायै; बृ 1·3·2; 1·3·28; छां:1·2·13; 1·7·9; 1·12·2; 2·22·2.

## २·६

स यदि ब्रूयादेकं म आगायेति प्राण उद्गीथ इति विद्वानेकं मनसा ध्यायेत्। एको हि प्राणः। एको हास्याऽऽजायते ॥ १ ॥ स यदि ब्रूयाद्—द्वौ म आगायेति प्राण उद्गीथ इत्येव द्वौ मनसा ध्यायेत्। द्वौ हि प्राणापानौ द्वौ हैवास्याजायेते ॥ २ ॥ स यदि ब्रूयात्—त्रीन्म आगायेति। प्राण उद्गीथ इत्येव विद्वाँस्त्रीन्मनसा ध्यायेत्। त्रयो हि प्राणोऽपानो व्यानः। त्रयो हैवास्याऽऽजायन्ते ॥ ३ ॥ स यदि ब्रूयात्—चतुरो म आगायेति। प्राण उद्गीथ इत्येव विद्वाँश्चतुरो मनसा ध्यायेत्। चत्वारो हि प्राणोऽपानो व्यानः समानः। चत्वारो हैवास्याऽऽजायन्ते ॥ ४ ॥ स यदि ब्रूयात्—पञ्च म आगायेति। प्राण उद्गीथ इत्येव विद्वान् पञ्च मनसा ध्यायेत्। पञ्च हि प्राणोऽपानो व्यानः समानोऽवानः। पञ्च हैवास्याऽऽजायन्ते ॥ ५ ॥ स यदि ब्रूयात्—षण्म आगायेति। प्राण उद्गीथ इत्येव विद्वान् षण्मनसा ध्यायेत्। षड्ढि प्राणोऽपानो व्यानः समानोऽवान उदानः। षड्ढैवास्याऽऽजायन्ते ॥ ६ ॥ स यदि ब्रूयात्—सप्त म आगायेति। प्राण उद्गीथ इत्येव विद्वान् सप्त मनसा ध्यायेत्। सप्त

हीमे शीर्षण्याः प्राणाः। सप्त हैवास्याऽऽजायन्ते ॥७॥ स यदि ब्रूयान्नव म आगायेति। प्राण उद्गीथ इत्येव विद्वान्नव मनसा ध्यायेत्। सप्त शीर्षण्याः प्राणा द्वाववाञ्चौ। नव हैवास्याऽऽजायन्ते ॥ ८ ॥ स यदि ब्रूयाद्दश म आगायेति। प्राण उद्गीथ इत्येव विद्वान् दश मनसा ध्यायेत्। सप्त शीर्षण्याः प्राणा द्वाववाञ्चौ नाभ्यां दशमः। दश हैवास्याऽऽजायन्ते ॥ ९ ॥ स यदि ब्रूयात् — सहस्रं म आगायेति। प्राण उद्गीथ इत्येव विद्वान् सहस्रं मनसा ध्यायेत्। सहस्रं हैत आदित्यरश्मयः। तेऽस्य पुत्राः। सहस्रं हैवास्याजायन्ते ॥ १० ॥ एवं हैवैतमुद्गीथं पर आट्णार[b]: कक्षीवाँस्त्रसदस्यु[d]-रिति पूर्वे महाराजाः श्रोत्रियाः सहस्रपुत्रमुपनिषेदुः। ते ह सर्वे सहस्रपुत्रा आसुः ॥ ११ ॥ स य एवैवं वेद सहस्रं हैवास्य पुत्रा भवन्ति ॥ १२ ॥

This section is a mere repetition of 2·5.

—*a* ) सहस्रम् instead of बहु of 2·5·11; cp 2·9·10 below. —*b* ) Caland gives आण्हार as a variant in तांब्रा 25·16·3; तैसं 5·6·5·3 एतं वै पर आट्णारः, कक्षीवाँ औशिजः, वीतहव्यः श्रायसः, त्रसदस्युः पौरुकुत्स्यः प्रजाकामा अचिन्वत; कासं 22·3 पर आह्णार; शब्रा 13·5·4·4 तेन ह पर आट्णार ईजे कोसल्यो राजा; शाङ्खायनश्रौसू 16·9·11 gives the variant पर आल्हारो वैदेहः; नि 1·14 सान्ति अल्पप्रयोगाः कृतोऽपि ऐकपदिका यथा व्रततिर्दमूना जाट्य आट्णारः ....... —*c* ) ऋ 1·51·13 अददा अर्भां महते वचस्येव कक्षीवते वृचयामिन्द्र सुन्वते. —*d* ) ऋ 5·33·8 उत त्ये मा पौरुकुत्स्यस्य सूरेस्त्रसदस्योः हिरणिनो रराणः. —*e* ) अ 19·41·1 भद्रामिच्छन्त ऋषयः स्वर्विदः तपो दीक्षामुपनिषेदुरग्रे = तैसं 5·7·4 3 ( with variants ); जैब्रा 2·160 तमुह वृषशुष्मेण कुमारेण ...... उपनिषेदुः; 1·226 स एतन्मेधातिथिः काण्वः सामापश्यत् तेन ( काण्वायनाः ) उपन्यषीदन्; ऐआ 2·2·3 विश्वामित्रमेतदहः शांसिष्यन्तामिन्द्र उपनिषससाद ( *sic* ); see below 3·2·9 and 11.

## २·७

शर्यातो[a] वै मानवः प्राच्यां स्थल्या[b]मयजत। तस्मिन् ह भूतान्युद्गीथेऽपित्व-मेषिरे ॥ १ ॥ [d]तं देवा बृहस्पतिनोद्गात्रा दीक्षामहा इति पुरस्तादागच्छन्नयं त उद्गायत्विति बम्बेनाजद्विषेण पितरो दक्षिणतोऽयं त उद्गायत्वित्युशनसा काव्ये-नासुराः पश्चादयं त उद्गायत्वित्ययास्येनाङ्गिरसेन मनुष्या उत्तरतोऽयं त उद्गायत्विति ॥२॥ स हेक्षांचक्रे—हन्तैनान् पृच्छानि, कियतो वा एक ईशे, कियत एकः कियत एक इति ॥ ३ ॥ स होवाच बृहस्पतिम्—यन्मे त्वमुद्गायेः किं ततः स्यादिति ॥ ४ ॥ स होवाच—देवेष्वेव श्रीः स्यात्, देवेष्वीशा, स्वर्गमु त्वां लोकं गमयेयमिति ॥५॥ अथ होवाच बम्बमाजद्विषम्—यन्मे त्वमुद्गायेः किं ततः स्यादिति ॥ ६ ॥ स होवाच—पितृष्वेव श्रीः स्यात्, पितृष्वीशा, स्वर्गमु त्वां लोकं गमयेय-

मिति ॥ ७ ॥ अथ होवाचोशनसं काव्यम्—यन्मे त्वमुद्गायेः किं ततः स्यादिति ॥ ८ ॥ स होवाच—असुरेष्वेव श्रीः स्यात्, असुरेष्वीशा, स्वर्गमेव त्वां लोकं गमयेयमिति ॥ ९ ॥ अथ होवाचायास्यमाङ्गिरसम्—यन्मे त्वमुद्गायेः किं ततः स्यादिति ॥ १० ॥ स होवाच—देवानेव देवलोके दध्याम्, मनुष्यान् मनुष्यलोके, पितॄन् पितृलोके, नु[h]देयास्माल्लोकादसुरान्, स्वर्गमु त्वां लोकं गमयेयामिति ॥ ११ ॥

*a* ) ऋ 1·112·17 याभिः शर्यातमवथो महाधने; जैब्रा 3·120 तं तुष्टुवानं शर्यातो मानवो ग्रामेणाध्यवास्यत् ( *sic* ); शब्रा 4·1·5·2; see below 4·7·1. —*b* ) स्थाल्याम् corrected into स्थल्याम् after जैब्रा 3·128; for the distinction between स्थला and स्थली, see पा 4·1·42 ( काशिका – स्थली भवति अकृत्रिमा चेत्, स्थला अन्या ); for स्थला see तैसं 1·6·10·5. —*c* ) ऋ 10·71·6 न तस्य वाचि अपि भागो अस्ति; अ 10·8·5 तस्मिन् ह अपित्वमिच्छन्ते; शब्रा 4·1·3·11 हन्त अस्मिन्नपित्वमिच्छा इति; 9·1·1·18 क्षत्रमेव तद्विशि अपि भागं करोति; cp ऋ 9·69·1 अस्य व्रतेषु अपि सोम इष्यते; see also पा 1·4·96 अपिः पदार्थ...... समुच्चयेषु. —*d* ) On this whole cp शब्रा 3·1·1·2,6,7 प्राची हि देवानां दिक्...but for असुर s ( in the West ) शब्रा has सर्पाः. —*e* ) तैसं 6·6·8·4 एतान् वै ग्रहान् बम्बाविश्ववयसौ अवित्ताम्; मैसं 4·7·3 एतेषां वै वीर्येण बम्ब्रविश्ववयसा; कासं 29·7 बम्भाविश्ववयसौ; see 6 below. —*f* ) ऋ 10·67·1 अयास्य उक्थमिन्द्राय शंसन्; 10·108·8 अयास्यो अङ्गिरसो नवग्वाः; बृ 1·3·8 अयमास्येऽन्तः सोऽयास्यः. —*g* ) ईशा ( *f.* ) अ 11·9·25 ईशां व ऋषयश्चक्रुरमित्रेषु; 11·10·2 ईशां वो वेद राज्यम्; 15·1·5 स देवानामीशां पर्यैत् स ईशानोऽभवत्; वासं 21·57 ईशायै मन्युं राजानं बर्हिषा दधुः; शब्रा 5·3·1·13 मा मे अद्य ईशायां वात्सीत्. —*h* ) See अनुदत in 2·8·3 below.

## २·८

स होवाच—त्वं मे भगव उद्गाय य एतस्य सर्व[a]स्य यशो ( असि इ ) ति ॥१॥ तस्य हायास्य एवोज्जगौ । तस्मादुद्गाता वृत उत्तरतो निवेशनं लिप्सेत । एत[b]द्धानारुद्धनिवेशनं यदुत्तरत[b]ः ॥ २ ॥ उत्तरत आगतोऽयास्य आङ्गिरसः शर्यातस्य मानवस्योज्जगौ । स प्राणेन देवान् देवलोकेऽधात्, अपानेन मनुष्यान् मनुष्यलोके, व्यानेन पितॄन् पितृलोके, हिङ्कारेण वज्रेणास्माल्लोकादसुराननुदत ॥३॥ तान् होवाच—दूरं गच्छतेति । स दूरो ह नाम लोकः । तं ह जग्मुः । त एतेऽसुरा असंभा[d]व्यं पराभूताः ॥ ४ ॥ छन्दोभिरेव वाचा शर्यातं मानवं स्वर्गं लोकं गमयाञ्चकार ॥ ५ ॥ ते होचुरसुराः—एतं तं वेदाम यो[e] नोऽयामित्थमधत्तेति । तत आगच्छन् । तमेत्यापश्यन् ॥ ६ ॥ तेऽब्रुवन्नयं वा आस्य इति । यदब्रुवन्नयं वा आस्य इति तस्मादय[f]मास्यः । अयमास्यो ह वै नामैषः । तमयास्य इति परोक्षमाचक्षते ॥ ७ ॥ स प्राणो

वा अयास्यः । प्राणो ह वा एनान् स नुनुदे ॥ ८ ॥ स य एवं विद्वानुद्गायति प्राणेनैव देवान् देवलोके दधाति, अपानेन मनुष्यान् मनुष्यलोके, व्यानेन पितॄन् पितृलोके, हिङ्कारेणैव वज्रेणास्माल्लोकाद् द्विषन्तं भ्रातृव्यं नुदते ॥ ९ ॥

*a* ) Corrupt readings ! Is it सर्वस्येषा इति ? —*b* ) शब्रा 4·6·6·1 अथ अभये अनाष्ट्रे उत्तरतो यज्ञमुपचरिष्याम इति. —*c* ) बृ 1·3·9 सा वा एषा देवता दूर्नाम. —*d* ) ऐब्रा 3·39 तान् असंभाव्यं पराभावयत्, but असंभव्यम् in अ 5·8·12; 5·19·11 असंभव्यं पराभवन् —*e* ) बृ 1·3·8. —*f* ) छां 1·2·12 आस्यायदयते; बृ 1·3·8 अयमास्येऽन्तर् the same etymology below 2·11·8f.

## २·९

तं ह ब्रूयाद्दूरं गच्छेति । स यमेव लोकमसुरा अगच्छंस्तं हैव गच्छति ॥ १ ॥ छन्दोभिरेव वाचा यजमानं स्वर्गं लोकं गमयति ॥ २ ॥ ता एता व्याहृतयः[a] । प्रेत्येति वाग् ( इति ) भूर्भुवः स्वरिति ( उदिति[b] ) ॥३॥ तद् यत् प्रेति तत् प्राणस्तदयं लोकस्तदिमं लोकमस्मिँल्लोक आभजति ॥ ४ ॥ एत्यपानस्तदसौ लोकस्तदमुं लोकममुष्मिँल्लोक आभजति ॥ ५ ॥ वागिति तद्ब्रह्म तदिदमन्तरिक्षम् ॥ ६ ॥ भूर्भुवः स्वरिति सा त्रयी विद्या ॥ ७ ॥ उदिति[d] सोऽसावादित्यः । तद्यदुदित्युदिव श्लेषयति[e] ॥ ८ ॥ तद्यदेकमेवाऽभिसंपद्यते तस्मादेकवीरः । एको ह तु सन् वीर्यवान् भवति । आ हास्यैको वीरो वीर्यवाञ्जायते य एवं वेद ॥ ९ ॥ तदु होवाच शाट्यायनिर्बहुपुत्र एष उद्गीथ इत्येवोपासितव्यम् । बहवो ह्येत आदित्यरश्मयस्तेऽस्य पुत्राः । तस्माद् बहुपुत्र एष उद्गीथ इत्येवोपासितव्यम् ॥ १० ॥

*a* ) The five व्याहृतिs are प्र; आ ( अ ); वाक्; भूः, भुवः, स्वर्; उत्; cp जैब्रा 2·356 पञ्चभिर्वै व्याहृतिभिरिदं देवा अजयन्. For प्र, आ and उत् cp छां 2·९·1-2 प्रेति प्रस्तावः …… आ इति आदिः…… उदिति उद्गीथः. —*b* ) See 8 below. —*c* ) शब्रा 1·4·1·5 एत्युदानः. —*d* ) छां 1·3·7 आदित्य एव उत्. —*e* ) उद् + श्लिष् is *hapax legomenon.*

## २·१०

देवासुराः समयतन्तेत्याहुः । न ह वै तद्देवासुराः संयेतिरे[a] । प्रजापतिश्च ह वै मृत्युश्च संयेताते ॥ १ ॥ तस्य ह प्रजापतेर्देवाः प्रियाः पुत्रा अन्त आसुः[b] । तेऽध्रियन्त । तेनोद्गात्रा दीक्षामहै येनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमियामेति ॥ २ ॥ तेऽब्रुवन्—वाचोद्गात्रा दीक्षामहा इति ॥ ३ ॥ ते वाचोद्गात्राऽदीक्षन्त । तेभ्य इदं वागागायद्यदिदं वाचा वदति, यदिदं वाचा भुञ्जते ॥ ४ ॥ तां पाप्माऽन्वसृज्यत । स यदेव वाचा पापं वदति, स एव स पाप्मा ॥ ५ ॥

तेऽब्रुवन्—न वै नोऽयं मृत्युं, न पाप्मानमत्यवाक्षीत्। मनसोद्गात्रा दीक्षामहा इति ॥ ६ ॥ ते मनसोद्गात्राऽदीक्षन्त। तेभ्य इदं मन आगायद्यदिदं मनसा ध्यायति यदिदं मनसा भुञ्जते ॥ ७ ॥ तत् पाप्माऽन्वसृज्यत। स यदेव मनसा पापं ध्यायति स एव स पाप्मा ॥ ८ ॥ तेऽब्रुवन्—नो न्वाव नोऽयं मृत्युं, न पाप्मानमत्यवाक्षीत्। चक्षुषोद्गात्रा दीक्षामहा इति ॥ ९ ॥ चक्षुषोद्गात्राऽदीक्षन्त। तेभ्य इदं चक्षुरागायद्यदिदं चक्षुषा पश्यति यदिदं चक्षुषा भुञ्जते ॥ १० ॥ तत् पाप्माऽन्वसृज्यत। स यदेव चक्षुषा पापं पश्यति स एव स पाप्मा ॥ ११ ॥ तेऽब्रुवन्—नो न्वाव नोऽयं मृत्युं, न पाप्मानमत्यवाक्षीत्। श्रोत्रेणोद्गात्रा दीक्षामहा इति ॥१२॥ ते श्रोत्रेणोद्गात्राऽदीक्षन्त। तेभ्य इदं श्रोत्रमागायद् यदिदं श्रोत्रेण शृणोति यदिदं श्रोत्रेण भुञ्जते ॥ १३ ॥ तत् पाप्माऽन्वसृज्यत। स यदेव श्रोत्रेण पापं शृणोति स एव स पाप्मा ॥ १४ ॥ तेऽब्रुवन्—नो न्वाव नोऽयं मृत्युं, न पाप्मानमत्यवाक्षीत्। प्राणेनोद्गात्रा दीक्षामहा इति ॥ १५ ॥ ते प्राणेनोद्गात्राऽदीक्षन्त। तेभ्य इदं प्राण आगायद्यदिदं प्राणेन प्राणिति यदिदं प्राणेन भुञ्जते ॥ १६ ॥ तं पाप्माऽन्वसृज्यत स यदेव प्राणेन ( पापं ) प्राणिति स एव स पाप्मा ॥ १७ ॥ तेऽब्रुवन्—नो न्वाव नोऽयं मृत्युं, न पाप्मानमत्यवाक्षीत्। अनेन मुख्येन प्राणेनोद्गात्रा दीक्षामहा इति ॥ १८ ॥ तेऽनेन मुख्येन प्राणेनोद्गात्राऽदीक्षन्त ॥ १९ ॥ सोऽब्रवीद्—मृत्युरेष एषां स उद्गाता येन मृत्युमत्येष्यन्तीति ॥ २० ॥ न ह्येतेन प्राणेन पापं वदति, न पापं ध्यायति, न पापं पश्यति, न पापं शृणोति, न पापं गन्धमपानीति ॥ २१ ॥ तेनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमायन्। अपहत्य हैव मृत्युमपहत्य पाप्मानं स्वर्गं लोकमेति य एवं वेद ॥ २२ ॥

Cp 1·60 above.

*a* ) छां 1·2·1 संयेतिरे. —*b* ) The same phrase is repeated below 3·30·3; cp also जैब्रा 3·190 अथ ह वै वैखानसा इति ऋषिका इन्द्रस्य प्रिया आसुः. —*c* ) Third pers. sg. of भुज्, 1st conjugation?

## २·११

स यथा हत्वा प्रमृग्यातीयादेवमेवैतं मृत्युमत्यायत् ॥ १ ॥ स वाचं प्रथमामत्यवहत्। तां परेण मृत्युं न्यदधात्। सोऽग्निरभवत् ॥२॥ अथ मनोऽत्यवहत्। तत् परेण मृत्युं न्यदधात्। स चन्द्रमा अभवत् ॥ ३ ॥ अथ चक्षुरत्यवहत्। तत् परेण मृत्यु न्यदधात्। स आदित्योऽभवत् ॥ ४ ॥ अथ श्रोत्रमत्यवहत्। तत् परेण मृत्युं

न्यदधात् । ता इमा दिशोऽभवन् । ता उ एव विश्वे देवाः ॥ ५ ॥ अथ प्राणमत्यवहत् । तं परेण मृत्युं न्यदधात् । स वायुरभवत् ॥ ६ ॥ अथात्मने केवलमेवान्नाद्यमागायत् ॥ ७ ॥ स एष एवायास्यः[a] । आस्ये धीयते । तस्मादयास्यः । यद्वेव ( अयम् ) आस्ये रमते तस्माद्वेवायास्यः ॥८॥ स एष एवाङ्गिरसः । अतो हीमान्यङ्गानि रसं लभन्ते । तस्मादाङ्गिरसः । यद्द्वेवैषामङ्गानां[b] रसः, तस्माद्वेवाङ्गिरसः ॥ ९ ॥ तं देवा अब्रुवन्— केवलं वा आत्मनेऽन्नाद्यमागासीः । अनु न एतस्मिन्नन्नाद्यं आभज । एतदस्यानामर्यंत्वमस्तीति ॥ १० ॥ तं वै प्रविशतेति । स वा आकाशान् कुरुष्वेति । स इमान् प्राणानाकाशानकुरुत ॥ ११ ॥ तं वागेव भूत्वाग्निः प्राविशन् मनो भूत्वा चन्द्रमाश्चक्षुर्भूत्वादित्यः श्रोत्रं भूत्वा दिशः प्राणो भूत्वा वायुः ॥ १२ ॥ एषा वै दैवी परिषद्[d]दैवी सभा[e] दैवी संसत्[f] ॥ १३ ॥ गच्छति ह वा एतां दैवीं परिषदं दैवीं सभां दैवीं संसदं य एवं वेद ॥ १४ ॥

Cp in general बृ 1·3·10 ff पाप्मानं मृत्युमपहत्य ..तदासां पाप्मनो विन्यदधात्... अथैनां मृत्युमत्यवहत्.

*a*) See 2·8·7 above. —*b*) For this alternative etymology cp बृ 1·3·8,19. —*c*) Is अनामयत्व = अनामयत्त्व Cp तांब्रा 17·12·1 यः कामयेत अनामयता अमु लोकमियामिति; जैब्रा 2·167 पुण्यमेवास्मिँल्लोके कृत्वा अपापंकृत्य स्वर्गं लोकं गच्छेयमिति; also ऋ 10·137·7 अनामयित्नुभ्यां हस्ताभ्यां त्वामुप स्पृशामसि. —*d*) बृ 6·2·1 पञ्चालानां परिषद्-माजगाम; पा 5·2·112 रजःकृष्यासुतिपरिषदो वलच्. —*e*) ऋ 8·4·9 सदा चन्द्रो याति सभामुप; मैसं 4·7·4 निरिन्द्रिया स्त्री पुमानिन्द्रियवान्, तस्मात् पुमांसः सभां यन्ति, न स्त्रियः; शब्रा 3·3·4·14 अपि अस्य राजानः सभा-गा आगच्छन्ति; छां 5·3·6 स ह प्रातः सभा-ग उदेयाय. —*f*) ऋ 8·45·25 ता संसत्सु प्र वोचत; 8·92·20 रणन्ति सत संसदः; अ 7·12·3 अस्याः सर्वस्याः संसदो मामिन्द्र भगिनं कृणु; तैसं 7·4·2·1 श्रीर्हि मनुष्यस्य दैवी संसद्.

## २·१२

यत्रो ह वै क्व चैता देवता निस्पृशन्ति[a] न हैव तत्र कश्चन पाप्मा न्यङ्गः परिशिष्यते ॥ १ ॥ स विद्यान्नेह कश्चन पाप्मा न्यङ्गः[b] परिशेक्ष्यते । सर्वमेवैता देवताः पाप्मानं नियक्ष्यन्तीति । तथा हैव भवति ॥ २ ॥ य उ ह वा एवंविदमृच्छति यथैता देवता ऋत्वा नीयादेवं व्येति । एतासु ह्येवैनं देवतासु प्रपन्नमेतासु वसन्तमुपवदाति ॥ ३ ॥ तस्य हैतस्य नैव काचनार्तिरस्ति य एवं वेद । य एवैनमुपवदाति स आर्तिमार्च्छति[d] ॥ ४ ॥ स य एनम्[e]ऋच्छादेव ता देवता उपसृत्य[f] ब्रूयादयं माऽऽरत् स

इमामार्तिं न्येत्विति । तां हैवार्तिं न्येति ॥ ५ ॥ यावदँावासा उ हाऽस्येमे प्राणा अस्मिँल्लोके, एतावँदावासा उ हास्यैता देवता अमुष्मिँल्लोके भवन्ति ॥ ६ ॥ तस्मादु हैवं विद्वान्नैवागृहतायै बिभीयान्नालोकतायै । एता मे देवता अस्मिँल्लोके गृहान् करिष्यन्ति । एता अमुष्मिँल्लोके भवन्ति । तस्मादु लोकं प्रदास्यन्तीति ॥ ७ ॥ तस्मादु हैवं विद्वान्नैवागृहतायै बिभीयान्नालोकतायै । एता मे देवता अस्मिँल्लोके गृहेभ्यो गृहान् करिष्यन्ति स्वेभ्य आयतनेभ्य इति हैव विद्यात् ( एता ) देवता अमुष्मिँल्लोके लोकं प्रदास्यन्तीति ॥ ८ ॥ तस्मादु हैवं विद्वान्नैवागृहतायै बिभीयान्नालोकतायै एता म एतदुभयं संनंस्यन्तीति हैव विद्यात् । तथा हैव भवति ॥ ९ ॥

*a*) ऋ 8·96·11 नि स्पृश धिया तन्वि श्रुतस्य; 10·91·13 भूया अन्तरा हृद्यस्य निस्पृशे; 10·95·9 यदासु मर्तो अमृतासु निस्पृक्. —*b*) See above 1·45·5. —*c*) नि + इयात्; cp न्येति below; ऋ 10·161·2 यदि मृत्योरन्तिकं नीत एव; अ 12·4·20 तेषां सर्वेषामददत् हेडं न्येति मानुषः; बृ 4·3·36 न्येति अणिमानम्. —*d*) अ 12·2·38 आर्तिं मर्त्यो नीत्य. —*e*) एनम् stands for सः in the beginning and यः goes with अयम्. —*f*) छां 1·3·8 उपसरणानीत्युपासीत; 1·3·12 आत्मानमन्तत उपसृत्य. —*g*) Both these are बहुव्रीहि compounds; cp 2·12·3 above एतासु वसन्तम्; cp ऐ 2·12 तस्य त्रय आवसथाः. —*h*) तांब्रा 10·5·16 न अगृहताया भयम्. —*i*) शब्रा 14·4·1·33 न हैव अलोकताया आशाऽस्ति. —*j*) ऋ 6·54·2 यो गृहाँ अभिशासति; 10·85·26 गृहान् गच्छ गृहपत्नी यथासः; 10·86·20 नेदीयसो वृषाकपे अस्तमेहि गृहाँ उप; अ 7·81·3 अप्सु ते वरुण राजन् गृहो हिरण्ययो मिथः; नि 3·13 गृहाः कस्मात् गृह्णन्तीति सतः. —*k*) तैसं 2·2·6·1 देवानामायतने यतते; शब्रा 4·4·5·3 कूपा इव हि सर्पाणामायतनानि; छां 7·24·2 क्षेत्राण्यायतनानीति. —*l*) ऋ 10·87·4 इषूः संनममानः; अ 3·8·5 सं वो मनांसि सं व्रता समाकूतीर्नमामसि; वासं 26·1 ते मे संनमतामदः; शब्रा 2·3·4·16 ते अस्मै इमे संजानाने सर्वान् कामान् संनमतः.

## २·१३

देवा वै ब्रह्मणो वत्सेन वाचमदुह्रन् । अग्निर्ह[a] वै ब्रह्मणो वत्सः ॥ १ ॥ सा या सा वाग् ब्रह्मैव तत् । अथ योऽग्निर्मृत्युः सः ॥ २ ॥ तामेतां वाचं यथा धेनुं[a] वत्सेनोपसृज्य प्रत्तां दुहीतैवमेव देवा वाचं सर्वान् कामानदुह्रन् ॥ ३ ॥ दुहे ह वै वाचं सर्वान् कामान् य एवं वेद । स हैषोऽग्निर्[b] वाचं देवीमुदिन्ये[c] वद वद वदेति ॥ ४ ॥ तद्यदिह पुरुषस्य पापं कृतं भवति तदाविष्करोति[d] । यदिहैनदपि रहसीव कुर्वन्मन्यतेऽथ हैनदाविरेव करोति । तस्मादाव पापं न कुर्यात् ॥ ५ ॥

*a*) तैसं 2·2·8·4 यस्मै प्रत्तमिव सन्न प्रदीयेत; 2·3·6·2 यथा वत्सेन प्रत्तां गां दुहे (3rd sg.) एवमिमाँल्लोकान् प्रत्तान् काममन्नाद्यं दुहे; शब्रा 12·9·2·11 यद्वा वै वत्सो मातरं धयति, अथ सा प्रत्ता दुहे (3rd sg.); पा 7·4·47 अच उपसर्गात् तः. —*b*) Double negative; cp the popular etymology of नासत्या (न + अ + सत्या). —*c*) Only here. —*d*) शब्रा 2·5·2·20 निरुक्तं वा एनः कनीयो भवति; सत्यं हि भवति.

## २·१४

एष उ वाव देवानां नेदिष्ठमुपचर्यो यदग्निः ॥ १ ॥ तं साधूपचरेत्। य एनमस्मिँल्लोके साधूपचरति तमेषोऽमुष्मिँल्लोके साधूपचरति। अथ य एनमस्मिँल्लोके नाद्रियते तमेषोऽमुष्मिँल्लोके नाद्रियते। तस्माद्वा अग्निं साधूपचरेत् ॥ २ ॥ तं नैव हस्ताभ्यां स्पृशेत्, न पादाभ्यां, न दण्डेन ॥ ३ ॥ हस्ताभ्यां स्पृशति यदस्यान्तिकमवनेनिक्ते[b] ॥ ४ ॥ अथ यदभिप्रसारयति[c] तत् पादाभ्याम् ॥ ५ ॥ स एनमास्पृष्ट ईश्वरो[d] दुर्धायां[e] धातोः। तस्माद्वा अग्निं साधूपचरति। सुधायां[f] हैवैनं दधाति ॥ ६ ॥

*a*) ऋ 1·103·6 य आदृत्या परिपन्थीव शूरः; 8·66·2 य आदृत्या शशमानाय सुन्वते; नि 2·4 अध्यापिता ये गुरुं नाद्रियन्ते; आद्रियते is used in active sense; पा 7·4·28 रिङ्शयग्लिङ्क्षु. —*b*) ऋ 9·71·3 नेनिक्ते अप्सु यजते परीमणि; शब्रा 1·2·5·23 पाणी अवनेनिक्ते; पा 7·4·75 निजां त्रयाणां गुणः श्लौ. —*c*) शब्रा 3·1·1·7 तस्मादु ह न प्रतीचीनशिराः शयीत नेत् देवानभिप्रसार्य शया इति. —*d*) पा 3·4·13 ईश्वरे तोसुन्-कसुनौ. —*e*) ऋ 10·109·4 भीमा जाया ब्राह्मणस्योपनीता दुर्धां दधाति परमे व्योमन्; cp also ऋ 1·140·11 इदमग्ने सुधितं दुर्धितादधि. —*f*) शब्रा 2·2·2·6 त एनमुभये देवाः प्रीताः ...... सुधायां दधाति; ऐब्रा 3·19 सुधायां ह वै वाजी सुहितो दधाति.

## २·१५

एष उ ह वाव देवानां महाशनतमो[a] यदग्निः ॥ १ ॥ तन्न व्रत्यमाददानोऽश्नीयात्। यो वै महाशनेऽनश्नत्यश्नातीश्वरो हैनमभिषङ्क्तोः[b]। पूतिमिव[c] हाश्नीयात् ॥ २ ॥ अथो ह प्रोक्तेऽशने ब्रूयात् — समिन्त्स्वाग्निमिति[d]। स यथा प्रोक्तेऽशने श्रेयाँसं परिवेष्ट्वै[f] ब्रूयात् तादृक् तत् ॥ ३ ॥ एतदु ह वाव साम यद्वाक्। यो वै चक्षुः साम श्रोत्रं सामेत्युपास्ते न ह तेन करोति ॥ ४ ॥ अथ य आदित्यः साम चन्द्रमाः सामेत्युपास्ते न हैव तेन करोति ॥ ५ ॥ अथ यो वाक् सामेत्युपास्ते स एवानुष्ठ्या साम वेद। वाचा हि साम्नाऽऽर्त्विज्यं क्रियते ॥ ६ ॥ स यो वाचः स्वरो जायते सोऽग्निर्वाग् वेव वाक्। तदत्रैकधा साम भवति ॥ ७ ॥ स य एवमेतदेकधा साम भवद्वेदैवं हैतदेकधा साम भवतीत्येकधेव श्रेष्ठः स्वानां भवति ॥ ८ ॥ तस्मादु हैवंविदमेव साम्नाऽऽर्त्विज्यं कारयेत। स ह वाव साम वेद साम वेद ॥ ९ ॥

*a* ) नि 2·27 अश्वः कस्मात् अश्नुतेऽध्वानं महाशनो भवतीति वा; गी 3·37 महाशनो महापाप्मा. —*b* ) अभि + सज् only here in the sense of "*to put a slur upon.*" —*c* ) अ 8·8·2 पूर्ति सेनां कृणोत्वमूम्; शब्रा 1·1·3·5 स हतः पूतिः अभि प्र सुस्राव; मभा ( Cal. Edn. ) 9·2259 स पूतिना विस्रवता वेदनार्तो महामुनिः. *d* ) शब्रा 6·2·1·25 ताभिर्मा समित्स्वेति; 11·5·4·5 समित्स्वात्मानं तेजसा ब्रह्मवर्चसेन. —*e* ) बृ 1·4·11; तै 1·4; 1·11. —*f* ) ऋ 10·62·10 उत दासा परिविषे; 10·68·6 दद्भिर्न जिह्वा परिविष्टमादत्; तैसं 6·3·1·2 तं पर्यविशन् य एवं वेद विन्दते परिवेष्टारम्; कासं 36·7 कनीयान् ज्यायांसं परिवेवेष्टि; अ 9·6·51 यत् परिवेष्टारः पात्रहस्ताः; वासं 30·12 वर्षिष्ठाय नाकाय परिवेष्टारम्; ऐब्रा 8·21 मरुतः परिवेष्टारः; तांब्रा 15·7·3 प्रजापतिं वा एतेन अह्ना परिवेविषाति । यद्वै श्रेष्ठे परिविष्यमाणे वदति अन्नाद्यस्य सोऽवग्रहः; छां 4·3·5; जै 3·1·21. —*g* ) अनुष्ठ्या ( *adv.* ); ऋ 1·95·2 ऋतून् प्रशासद् वि दधादनुष्ठु; 4·4·14 अनुष्ठ्या कृणुहि अह्वयाण; ऐब्रा 1·8 यदेव अनुष्ठ्या चक्षुषा प्रजानाति; 2·6 षड्विंशतिरस्य वङ्क्रयः ता अनुष्ठ्योच्च्यावयतात्; 2·40 यतरो विवदमानयोराह–अहमनुष्ठ्या चक्षुषा अदर्शमिति, तस्य श्रद्दधाति; शब्रा 2·1·2·12 तद्वा अनुष्ठया यद्धस्तेन प्रदीयते; 2·2·4·17 अग्निरनुष्ठ्या स्वं रेतः प्रजनयिष्यते; जैब्रा 3·115 अनुष्ठ्या अस्य रेतः सिक्तं प्रजायते; जै 3·33·4.

॥ इति द्वितीयोऽध्यायः ॥

---

## ३·१

एका ह वाव कृत्स्ना देवताऽर्धदेवता एवान्याः । अयमेव योऽयं[a] पवते ॥ १ ॥ एष एव सर्वेषां देवानां ग्रहः[b] ॥ २ ॥ स हैषोऽस्तं नाम । अस्तमिह हेह पश्चाद् ग्रहानाचक्षते ॥ ३ ॥ स यदादित्योऽस्तमगादिति ग्रहानगादिति हैतत् । तेन सोऽसर्वः । स एतमेवाप्येति ॥ ४ ॥ अस्तं चन्द्रमा एति । तेन सोऽसर्वः । स एतमेवाप्येति ॥ ५ ॥ अस्तं नक्षत्राणि यन्ति । तेन तान्यसर्वाणि । तान्येतमेवापियन्ति ॥ ६ ॥ अन्वग्निर्गच्छति[d] । तेन सोऽसर्वः । स एतमेवाप्येति ॥ ७ ॥ एत्यहः । एति रात्रिः । तेन ते असर्वे । ते एतमेवापीतः ॥ ८ ॥ मुह्यन्ति दिशो न वै ता रात्रिं प्रज्ञायन्ते । तेन ता असर्वाः । ता एतमेवापियन्ति ॥ ९ ॥ वर्षति च पर्जन्य उच्च[e] गृह्णाति । तेन सोऽसर्वः । स एतमेवाप्येति ॥ १० ॥ क्षीयन्त आप एवमोषधय एवं वनस्पतयः । तेन तान्यसर्वाणि[h] । तान्येतमेवापियन्ति ॥११॥ तद्यदेतत् सर्वं वायुमेवाप्येति तस्माद्वायुरेव साम ॥ १२ ॥ स ह वै सामवित् स ( कृत्स्नं ) साम वेद य एवं वेद ॥ १३ ॥ अथाध्यात्मम् । न वै स्वपन्[k] वाचा वदति । सेयमेव प्राणमप्येति[l] ॥ १४ ॥ न मनसा ध्यायति । तदिदमेव प्राणमप्येति ॥ १५ ॥ न चक्षुषा पश्यति । तदिदमेव प्राण-

मप्येति ॥ १६ ॥ न श्रोत्रेण शृणोति । तदिदमेव प्राणमप्येति ॥ १७ ॥ तद्यदेतत् सर्वं प्राणमेवाभिसमेति तस्मात् प्राण एव साम ॥ १८ ॥ स ह वै सामवित् स कृत्स्नं साम वेद य एवं वेद ॥ १९ ॥ तद्यदिदमाहुः—न बताद्य वातीति ( स ) हैतत् पुरुषेऽन्तर्नि-रमते स पूर्णः स्वेदमान आस्ते ॥ २० ॥ तद्ध शौनकं च कापेयमभिप्रतारिणं च ( काक्षसेनिम् ) ब्राह्मणः परिवेविष्यमाणा उपावव्राज ॥ २१ ॥

For 3·1 and 3·2 cp in general छां 4·3.

*a* ) ऐब्रा 8·28 अयं वै ब्रह्म योऽयं पवते; but at शब्रा 3·9·2·5 we have सर्वं वा इदमन्यद् इलयति यदिदं किंच अपि योऽयं पवते; बृ 1·5·22. —*b* ) Shall we emend this into गृहाः which always occurs in plural; cp शब्रा 4·6·5·1 एष वै ग्रहः य एष तपति । येन इमाः सर्वाः प्रजाः गृहीताः. —*c* ) जैब्रा 3·123 कुमारि स्थविरो वाऽयमसर्वो नालं पतित्वनाय; शब्रा 5·1·4·5 असर्वो हि वै समभवत्, तस्मान्न सर्वैः पदैः प्रतितिष्ठति; 6·3·1·23 यदि उ असर्वैः असर्वमनुवेत्स्याम इति. —*d* ) Instead of अनु अग्निर्गच्छति, अस्तमग्निर्गच्छति in जैब्रा 2·49 यदा वा अग्निरुद्वायाति वायुमेवाप्येति. —*e* ) मोह *versus* प्रज्ञा; cp बृ 2·4·13 न वा अरे मोहं ब्रवीमि—अलं वा अरे इदं विज्ञानाय. —*f* ) Accusative of time. —*g* ) ऋ 5·83·10 अवर्षीर्वर्षम् उदु षू गृभाय. —*h* ) तानि ( *neu. pl.* though all words are feminine ). —*i* ) कृत्स्नं added after the manner of 19. —*j* ) This implies that the earlier disquisition is अधिदैवतम्. —*k* ) Later स्वपन् and अप्येति are etymologically shown to be related in छां 6·8·1 तस्मादेनं स्वपितीत्याचक्षते; स्वमपीतो भवति. —*l* ) जैब्रा 2·50 यदा वै तूष्णीमास्ते प्राणमेव वागप्येति; कौ 3·3. —*m* ) No corresponding entities have been mentioned in the Devatā sections above ( नक्षत्राणि, अहः, रात्रिः, पर्जन्यः, आपः, ओषधयः and वनस्पतयः ). —*n*) शब्रा 1·1·3·2 सोऽयमेक इवैव पवते । सोऽयं पुरुषेऽन्तः प्रविष्टः. —*o* ) ऋ 10·42·1 नि रामय जरितः सोम इन्द्रम्; अ 14·2·5 नि अश्विना हृत्सु कामा अरंसत. —*p* ) But ब्रह्मचारी in छां 4·3·5.

## ३·२

तौ ह बिभिक्षे । तं ह नाऽऽददृाते[a] को वा को वेति मन्यमानौ ॥ १ ॥

तौ[b] होपजगौ —

महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपाः ।

तं कापेय न विजानन्त्येकेऽभिप्रतारिन् [d] बहुधा निविष्टम् ॥ २ ॥ इति ॥

स होवाच — अभिप्रतारीमं वाव प्रपद्य प्रतिब्रूहीति त्वया वा अयं प्रत्युच्य इति ॥ ३ ॥

तं ह प्रत्युवाच —

आत्मा देवानामुत मर्[g]त्यानां हि[h]रण्यद[i]न्तो रपसो न सू[h]नुः।

महान्तमस्य महिमानमाहुरनद्यमानो यद[j]दन्तमत्ति ॥ ४ ॥ इति ॥

महात्मनश्चतुरो (देव) एक इति। वाग् वा अग्निः स महात्मा देवः। स यत्र स्वपिति तद् वाचं प्राणो गि[k]रति ॥ ५ ॥ मनश्चन्द्रमाः स महात्मा देवः। स यत्र स्वपिति तन्मनः प्राणो गिरति ॥ ६ ॥ चक्षुरादित्यः स महात्मा देवः। स यत्र स्वपिति तच्चक्षुः प्राणो गिरति ॥ ७ ॥ श्रोत्रं दिशस्ता महात्मानो देवाः। स यत्र स्वपिति तच्छ्रोत्रं प्राणो गिरति ॥ ८ ॥ तद्यन्महात्मनश्चतुरो देव एक इत्येतद्ध तत् ॥ ९ ॥ कः स जगारेति। प्रजापतिर्वै कः। स हैतज्जगार ॥ १० ॥ भुवनस्य गोपा इति। स उ वाव भुवनस्य गोपाः ॥ ११ ॥ तं कापेय न विजानन्त्येक इति। न ह्येतमेके विजानन्ति ॥ १२ ॥ अभिप्रतारिन् बहुधा निविष्टमिति। बहुधा ह्येत्रैष निविष्टो यत् प्राणः ॥ १३ ॥ आत्मा देवानामुत मर्त्यानामिति। आत्मा ह्येष देवानामुत मर्त्यानाम् ॥ १४ ॥ हिरण्यदन्तो रपसो न सूनुः। न[l] ह्येष सूनुः। सूनुरूपो ह्येष सन्न सूनुः ॥ १५ ॥ महान्तमस्य महिमानमाहुरिति। महान्तं ह्येतस्य महिमानमाहुः ॥ १६ ॥ अनद्यमानो यददन्तमत्ति। अनद्यमानो ह्येषोऽदन्तमत्ति ॥ १७ ॥

*a*) छां 4·3·5 तस्मा उ ह न ददतुः. —*b*) छां 4·3·6 स होवाच. —*c*) छां 4·3·6. —*d*) छां 4·3·6 reads अभिपश्यन्ति मर्त्याः. —*e*) छां 4·3·6 reads वसन्तम्; cp जैब्रा 2·27 सप्त पश्यन्ति बहुधा निविष्टौ. —*f*) छां 4·3·7. —*g*) छां 4·3·7 reads जनिता प्रजानाम् for उत मर्त्यानाम्. —*h*- -*h*) छां 4·3·7 reads हिरण्यदंष्ट्रो बभसोऽनसूरिः. —*i*) दन्त and दंष्ट्रा both occur in ऋ 2·13·4; 6·75·11; 10·87·3. —*j*) छां 4·3·7 reads अनन्नम् for अदन्तम्. —*k*) Cp जगार in 3·2·2 above; 3·2·10 प्रजापतिर्वै कः; for कः see ऋ 10·121·1–9 कस्मै देवाय हविषा विधेम. —*l*) A probable origin of the identity न = इव.

## ३·३

तस्यैष श्रीरात्मा समु[a]द्गूढो यदसावादित्यः। तस्माद् गायत्रस्य स्तोत्रे [b]णावान्यान्नेच्छ्रिया अवच्छिद्या इति ॥ १ ॥ स एष एवोक्[c]थम्। यत् पुरस्तादवानीति। तदेतदुक्थस्य शिरः, यद्दक्षिणतः स दाक्षिणः पक्षः, यदुत्तरतः स उत्तरः पक्षः, यत् पश्चात् (तत्) पुच्छ[d]म् ॥ २ ॥ अयमेव प्राण उक्थस्यात्मा। स य एवमेतमुक्थस्यात्मानमात्मन् प्रतिष्ठितं वेद स हामुष्मिँल्लोके साङ्गः स[e]तनुः (सर्वः[f]) संभवति ॥ ३ ॥ श[g]श्वद्ध वा अमुष्मिँल्लोके यदिदं पुरुषस्याऽऽण्डौ[h] शिश्नं क[i]र्णौ नासिके यत् किञ्चानस्थिकं

नं संभवति ॥ ४ ॥ अथ य एवमेतमुक्थस्यात्मानमात्मन् प्रतिष्ठितं वेद स हैवामुष्मिँ-
ल्लोके साङ्गः सतनुः सर्वः संभवति ॥ ५ ॥ तदेतद्वै[k] श्वामित्रमुक्थम् । तदन्नं[l] वै विश्वं
प्राणो[l] मित्रम् ॥ ६ ॥ तद्ध विश्वामित्रः श्रमेण[m] तपसा[m] व्रतचर्येणेन्द्रस्य प्रियं धामोप[n]-
जगाम ॥ ७ ॥ तस्मा उ हैतत् प्रोवाच यदिदं मनुष्यानागतम् ॥ ८ ॥ तद्ध स उपनिषसाद[o]
ज्योतिरेतदुक्थमिति ॥ ९ ॥ ज्योतिरिति द्वे अक्षरे, प्राण इति द्वे, अन्नमिति द्वे । तदेतदन्न
एव प्रतिष्ठितम् ॥ १० ॥ अथ हैनं जमदग्निरुपनिषसादाऽऽयुरेतदुक्थमिति ॥ ११ ॥
आयुरिति द्वे अक्षरे, प्राण इति द्वे, अन्नमिति द्वे । तदेतदन्न एव प्रतिष्ठितम् ॥ १२ ॥
अथ हैनं वसिष्ठ उपनिषसाद गौरेतदुक्थम् । तदेतदन्नमेव । अन्नं हि गौः ॥ १३ ॥
तदाहुः—यदस्य प्राणस्य पुरुषः शरीरमथ केनाऽन्ये प्राणाः शरीरवन्तो भवन्तीति
॥ १४ ॥ स ब्रयाद्यद्वाचा वदति तद्वाचः शरीरं, यन्मनसा ध्यायति तन्मनसः शरीरं,
यच्चक्षुषा पश्यति तच्चक्षुषः शरीरं, यच्छ्रोत्रेण शृणोति तच्छ्रोत्रस्य शरीरम् । एवमु
हान्ये प्राणाः शरीरवन्तो भवन्तीति ॥ १५ ॥

*a*) Only here! —*b*) Note the change of न to ण in the संहिता; cp 1·5·1 above. —*c*) बृ 5·13·1. —*d*) Perhaps an attempt at etymology. —*e*) जैब्रा 1·321 यथा सर्व एव साङ्गाः सतनवो अमृताः संभवामेति; ऐब्रा 1·21 सतनुमेव एनं तत् करोति—सरूपं करोति; शब्रा 12·8·3·31 तथा कृत्स्न एव सर्वतनूः साङ्गः संभवति; तैआ 5·9·3 सात्मानमेव सतनुं करोति; ऐआ 1·3·8 सोऽत्र आ लोमभ्य आ नखेभ्यः सर्वः साङ्ग आप्यते; जै 4·8·9; 4·9·9; 4·10·8,9,18. —*f*) Restore here as per 5th कण्डिका where it occurs. —*g*) If शश्वत् = probably (German: *wohl*, which interpretation suits almost all Brāhmaṇa passages), then न may be retained; see note *j*) below; cp शब्रा 5·4·3·2 for शश्वत्. —*h*) आण्डौ (*mas. dual*); अ 9·7·13 मन्युराण्डौ प्रजा शेपः; वासं 20·9 आनन्दनन्दावाण्डौ मे भगः सौभाग्यं पसः; 25·1 वृषणमाण्डाभ्याम्; cp ऋ 1·105·8 मूषो न शिश्ना व्यदन्ति माऽऽध्यः. —*i*) ऐब्रा 1·21 अक्षी इव कर्णाविव नासेव इति अङ्गसमाख्या. —*j*) Oertel suggests dropping of न (we think rightly:) on account of अ 4·34·2 अनस्थाः पूताः पवनेन शुद्धाः शुचयः शुचिमपि यन्ति लोकम्. —*k*) Cp similar etymology in ऐब्रा 6·20 विश्वस्य ह वै मित्रं विश्वामित्र आस; see पा 6·3·130 मित्रे चर्षौ. —*l*) In बृ 5·12·1 the juxta-position of प्राण and अन्न is found: अन्नं वै वि प्राणो वै रम्. —*m*) जैब्रा 2·217 ऋषयो ह वै स्वर्गं लोकं जिग्युः—**श्रमेण तपसा व्रतचर्येण**, 3·352 देवा वै **श्रमेण तपसा व्रतचर्येण** असुरान् रक्षांसि अभ्यभवन्. —*n*) कौ 3·1. —*o*) जैब्रा 2·217 has अकामयत instead of उपनिषसाद; are they identical in meaning? Cp छां 1·3·12 ... स (कामः) समृध्येत आत्मानमन्ततः उपसृत्य स्तुवीत कामम्.

## ३·४

तदेतदुक्थं सप्तविधं शस्यते। स्तोत्रियो[a]ऽनुरूपो[b] धाय्या[c] प्रगाथः[d] सूक्तं[e] निवित्[f] परिधानीया[g] ॥ १ ॥ इयमेव स्तोत्रियोऽग्निरनुरूपो वायुर्धाय्याऽन्तरिक्षं प्रगाथो द्यौः सूक्तमादित्यो निवित्। तस्माद्[h] बह्वृचा[i] उदिते निविदमधीयन्ते[h]। आदित्यो हि निवित्। दिशः परिधानीयेत्यधिदेवतम् ॥ २ ॥ अथाध्यात्मम् — आत्मैव स्तोत्रियः प्रजाऽनुरूपः प्राणो धाय्या मनः प्रगाथः शिरः सूक्तं चक्षुर्निविच्छ्रोत्रं परिधानीया ॥ ३ ॥ तद्धैतदेके त्रिष्टुभा परिदधत्यनुष्टुभैके। त्रिष्टुभा त्वेव परिदध्यात् ॥ ४ ॥ तद्धैतदेक एता व्याहृतीरभिव्याहृत्य शंसन्ति। महान् मह्या समधत्त, देवो देव्या समधत्त, ब्रह्म[j] ब्राह्मण्या समधत्त। तद्यत् समधत्त समधत्तेति ॥ ५ ॥ तस्मादिदानीं पुरुषस्य शरीराणि प्रतिसंहितानि[k]। पुरुषो ह्येतदुक्थम् ॥ ६ ॥ महान् मह्या समधत्तेति। अग्निर्वै महान्। इयमेव मही ॥ ७ ॥ देवो देव्या समधत्तेति। वायुर्वै देवोऽन्तरिक्षं देवी ॥ ८ ॥ ब्रह्म ब्राह्मण्या समधत्तेति। आदित्यो वै ब्रह्म द्यौर्ब्राह्मणी ॥ ९ ॥ तासां वा एतासां देवतानां द्वयोर्द्वयोर्देवतयोर्नव नवाक्षराणि संपद्यन्ते। एतदिमे लोकास्त्रिणवा[l] भवन्ति ॥ १० ॥ तद्ब्रह्म वै त्रिवृत्[m]। तद् ब्रह्मणाऽभिव्याहृत्य शंसन्ति। एष उ एव स्तोमः सोऽनुचरः ॥११॥ यदिदमाहुरेकस्तोम इति—अयमेव योऽयं पवते। एषोऽधिदेवतम्। प्राणोऽध्यात्मम्। तस्य शरीरमनुचरः[n] ॥ १२ ॥ तद्यथा ह वै मणौ[o] मणिसूत्रं संप्रोतं स्यात् — ॥ १३ ॥

*a*) वासं 19·24 आश्रावयेति स्तोत्रियाः। प्रत्याश्रावो अनुरूपः। यजेति धाय्यारूपम्। प्रगाथा येयजामहाः।...; 19·25 पदैराप्नोति निविदः; cp ऐब्रा 3·23f ( for the first five ) —*b*) शब्रा आत्मा वै स्तोत्रियः; प्रजा अनुरूपः, पत्नी धाय्या, पशवः प्रगाथः, गृहाः सूक्तम्. —*b*) शब्रा 13·5·1·2 सार्धं स्तोत्रियं शस्त्वा सार्धमनुरूपं शंसेत्; ऐब्रा 3·24 स्तोत्रियं शंसति, अनुरूपं शंसति. —*c*) तैसं 2·2·10·2 मानवी ऋचौ धाय्ये कुर्यात्; ऐब्रा 3·18 धाय्याभिर्वै प्रजापतिरिमाँल्लोकानधयत्, यं यं काममकामयत,...यत्र यत्र वै यज्ञस्य च्छिद्रं निरजानन्, तद्धाय्याभिरापिदधुः, तद्धाय्यानां धाय्यत्वम्; 6·21 ता हैके पुरस्तात् प्रगाथानां शंसन्ति, धाय्या इति वदन्तः; शब्रा 1·4·1·37 तस्मादुपरिष्टादेव धाय्ये दध्यात्; see also note *a*) above; पा 3·1·129 ( धाय्या = सामिधेनी ). —*d*) पा 4·2·55 सोऽस्यादिरिति च्छन्दसः प्रगाथेषु ( प्रगथनात् प्रकर्षगानाद्वा प्रगाथः—काशिका ); ऐब्रा 3·16,17,24; 4·10,24; तांब्रा 4·4·1 पञ्चसु मास्सु बार्हताः प्रगाथा आप्यन्ते; 9·1·1 ते देवा एतमनुष्टुप्शिरसं प्रगाथमपश्यन्. —*e*) सूक्त = the principal part of a शस्त्र; ऐब्रा 2·33 निविदं शस्त्वा सूक्तं शंसति, क्षत्रं वै निवित्, विट् सूक्तम्; 3·11 एकैकं वै निविदः पदमृचं सूक्तं प्रति; शब्रा 13·5·1·8 सार्धमेव सूक्तमावपेत्. —*f*) ऐब्रा 2·33–34 द्वादशपदा वा एषा निवित् ( अग्निर्देवेद्धः, अग्निर्मन्विद्धः, अग्निः सुषमित्...सोऽध्वरा करति जातवेदाः ); 6·33 तं वा एतमैतशप्रलापं शंसति पदावग्राहं यथा निविदम्, तस्य उत्तमेन पदेन प्रणौति, यथा निविदः. —*g*) ऐब्रा 6·15

अथ कस्मादेषां त्रिष्टुभः परिधानीया भवन्तीति; 6·23 अथ यत् अहीनपरिधानीयाभिः परिदध्युः. —h- -h ) A parenthetical observation ! —i ) ऐब्रा 2·36 तस्माद्यो ब्राह्मणो बह्वृचो वीर्यवान् स्यात्; शब्रा 10·5·2·20 उक्थमिति बह्वृचाः...तं यथायथोपासते तदेव भवति; तांब्रा 5·6·6 कथमध्वर्युः बह्वृचः साम गायेत्; पा 4·3·129. —j ) Shall we read here ब्रह्मा, although further on the text reads ब्रह्म ? —k ) प्रतिसंहितानि parallel to समधत्त. —l ) वासं 10·14 त्रिणवत्रयस्त्रिंशौ स्तोमौ; तैसं 5·2·6·3 त्रिणवाभिर्भ्रातृव्यवतस्त्रिवृतमेव वज्रं संभृत्य भ्रातृव्याय प्रहरति; तैब्रा 2·2·4·6 त्रिणवेन स्तोमेन एभ्यो लोकेभ्यः असुरान् प्राणुदत; शब्रा 12·3·1·6 पार्श्वे पर्शुस्त्रिणवेन अभिक्लृप्ते; तांब्रा 3·1·2 वज्रो वै त्रिणवः. —m ) ऋ 1·118·2 त्रिवन्धुरेण त्रिवृता रथेन त्रिचक्रेण सुवृता यातमर्वाक्; 1·140·2 अभि द्विजन्मा त्रिवृद् अन्नमृज्यते; अ 10·8·17 अग्निं द्वितीयं त्रिवृतं च हंसम्; छां 6·3·3; श्वे 1·4. —n ) ऐब्रा 8·1 राथन्तरी प्रतिपद्, राथन्तरोऽनुचरः; आभ्यां प्रतिपदानुचराभ्यां शंसति; शब्रा 13·5·1·9. —o ) जैब्रा 2·245 यथो ह वै मणौ मणिसूत्रमोतं स्यात्; शब्रा 12·3·4·2 यथा त उक्थानि मणिरिव सूत्र ओतानि भविष्यन्ति, सूत्रमिव वा मणौ; तांब्रा 20·16·6; गी 7·7; निदानकथा ( para 78 Bombay Uni. Ed. विप्पसन्नमणिरतने आवुतपण्डुसुत्तं विय पस्साति.

## ३·५

एवं हैतस्मिन् सर्वमिदं संप्रोतं गन्धर्वाप्सरसः पशवो मनुष्याः ॥ १ ॥ तद्ध मुञ्जः[a] सामश्रवसः प्रययौ । तस्मै ह श्वाजनिर्वैश्यः[b] प्रेयाय ॥ २ ॥ तस्य हान्तरिक्षात् पतित्वा नवनीतपिण्ड[c] उरसि निपपात । तं हादायानुदधौ ॥ ३ ॥ ततो हैव स्तोमं ददर्शान्तरिक्षे[d] विततं बहुशोभमानम्[d] । तस्यो ह युक्तिं[e] ददर्श ॥ ४ ॥ बहिष्पवमानमासद्य टीत्र (?) वियि (?) प्राण्य इति कुर्यात् टीत्र (?) ग्राहित्र (?) अपान्य इति वाचा । दिदृक्षेतै-वाक्षिभ्यां शुश्रूषेतैव कर्णाभ्याम् । स्वयमिदं मनोयुक्तम् ॥ ५ ॥ तद्यत्र वा इषुरत्यग्रो[f] भवति न वै स ततो हिनस्ति । तदु वा एतं नोपाप्नुयात् । प इत्येवापान्यात् । तद्यथा विम्बेन[g] मृगमानयेदेवमेवैनमेत । देवतयाऽऽनयाति । स युक्तः करोति । एष एवापि युक्तः ॥ ६ ॥

a ) षब्रा 3·7 एतद्ध स्माह मुञ्जः सामश्रवसः—एतं ह वै वयं साम्नः पोषं विद्मेति; cp कुषीतकः सामश्रवसः in तांब्रा 17·4·3. —b) Name proper only here in Brāhmaṇa literature. —c ) तैसं 2·3·10·1 यन्नवमैत् तन्नवनीतमभवत्; मैसं 2·3·4 यन्नवमैत् तन्नवनीतम्; ऐब्रा 1·3 नवनीतेन अभ्यञ्जन्ति; शब्रा 3·1·3·7 तद्वै नवनीतं भवति. —d) के 3·12 आकाशे...बहुशोभमानाम्. —e ) ऐब्रा 6·23 तद्यच्चतुर्विंशे अहन् युज्यन्ते सा युक्तिः ( as opposed to विमुक्तिः ); विमुच्यन्ते सा विमुक्तिः. —f ) तैसं 2·6·5·4 न अत्यग्रं प्रहरेत्. —g ) पा 3·3·124 जालमानायः ( काशिका—आनायो मृगाणाम् ); cp बिम्बजाल in पाली—जातक 1·39.

३·६

योऽसौ साम्नः प्रत्तिं[a] वेद, प्र हास्मै दीयते ॥ १ ॥ ददा इति ह वा अयमग्नि-र्दीप्यते, तथेति वायुः पवते, हन्तेति चन्द्रमाः, ओमित्यादित्यः ॥ २ ॥ एषा ह वै साम्नः प्रत्तिः । एतां ह वै साम्नः प्रत्तिं सुदक्षिणः[b] क्षैमिर्विदांचकार ॥ ३ ॥ तां हैतां होतुर्वाऽऽज्ये गायेन्मैत्रावरुणस्य वा, तां ददा३ तथा३ हन्ता३ हिं भा ओवा इति । प्र ह वास्मै दीयते ॥ ४ ॥ (सोऽ) प्यन्यान् बहूनुपर्युपरि[c] य एवमेतां साम्नः प्रत्तिं वेद ॥ ५ ॥ य उ ह वा अबन्धुर्[d]बन्धुमत् साम वेद, यत्र हाप्येनं न विदुर्यत्र रोषन्ति[e], यत्र परीव चक्षते[f], तद्धाऽपि श्रैष्ठ्यमाधिपत्यमन्नाद्यं पुरोधां[g] पर्येति ॥ ६ ॥ अग्निर्ह वा अबन्धुर्बन्धुमत् साम । कस्माद्ध्य् ह्येनं दार्वोः[h] कस्माद्वा पर्यावृत्य मन्थति स श्रैष्ठ्यायाधि-पत्यायान्नाद्याय पुरोधायै जायते ॥ ७ ॥ स यत्र ह वा अप्येवंविदं न विदुर्यत्र रोषन्ति यत्र परीव चक्षते तद्धापि श्रैष्ठ्यमाधिपत्यमन्नाद्यं पुरोधां पर्येति ॥ ८ ॥

*a*) तैसं 5·4·7·2 प्रत्त्यै; ऐब्रा 2·40 याज्या वै प्रत्तिः; जै 1·58·6. —*b*) जैब्रा 2·113; 3·192; जै 3·7·5; 3·8·6. —*c*) तैसं 6·2·4·2 तमिन्द्र उपर्युपर्यत्यक्रामत्; शब्रा 3·2·1·29 अथ दक्षिणां भ्रुवमुपर्युपरि ललाटमुपस्पृशति; 5·1·2·18 उपर्युपर्येवाक्षमध्वर्युः; 5·4·1·8 सर्वमेवेदमुपर्युपरि भवति; पा 8·1·7 उपर्यध्यधसः सामीप्ये. —*d*) ऋ 8·21·4 वयं हि त्वा बन्धुमन्तोऽबन्धवः. —*e*) ऋ 8·4·8 न दानो अस्य रोषति; 8·99·4 सोऽस्य कामः विधतो न रोषति; ऐब्रा 4·10 न या रोषति न ग्रथत्; जै 3·27·2. —*f*) ऋ 6·52·14 मा वो वचांसि परिचक्ष्याणि वोचम्; 7·100·6 किमित्ते विष्णो परिचक्ष्यं भूत्; ऐब्रा 7·20 श्यापर्णान् परिचक्षाणः; शब्रा 3·9·4·17 योऽन्वेवेमं मानुषं ब्राह्मणं हन्ति तं न्वेव परिचक्षते—अथ किं य एतम्; 10·5·2·5 तस्मादुक्थशंसं भूयिष्ठं परिचक्षते; तै 3 8 अन्नं न परिचक्षीत. —*g*) अ 5·24·1f अस्मिन् ब्रह्मणि...अस्यां पुरोधायां स्वाहा; तैसं 2·1·2·9 पुरोधायां स्पर्धमानः; 7·4·1·1 गच्छेयं पुरोधामिति; तांब्रा 15·4·7 पुरोधाकामः समन्तेन स्तुवीत. —*h*) दार्वोः = two अरणीs? तैसं 2·5·8·3 अस्मिन् दारावार्द्रे अग्निं जनयाव; तैब्रा 1·4·7·3 यस्माद्दारोरुद्दायेत् तस्य अरणी कुर्यात्.

३·७

स्वयमु तत्र यत्रैनं विदुः ॥ १ ॥ सुदक्षिणो ह वै क्षैमिः प्राचीनशालिर्जा[a]बालौ ते ह सब्रह्म[c]चारिण आसुः ॥ २ ॥ ते हेमे बहु जर्प्यस्य[b] चान्यस्य चानूचिरे प्राचीनशालिश्च जाबालौ च ॥ ३ ॥ अथ ह स्म सुदक्षिणः क्षैमिर्यदेव यज्ञस्याञ्जो यत् सुविदितं तद्ध स्मैव पृच्छति ॥ ४ ॥ तस्य उ ह वा अपोदितां व्याक्रोश[d]माना श्चेरुः । शूद्रो दुरनूचान[e] इति ह स्म सुदक्षिणं क्षैमिमाक्रोशन्ति प्राचीनशा[f]लिश्च जाबालौ च ॥ ५ ॥ स ह स्माह सुदक्षिणः क्षैमिः । यत्र भूयिष्ठाः कुरुपाञ्चालाः[g] समागता भवि[h]तारस्तन्न एष संवादः । नानुपदृष्टे[i] शूद्रा इव संवदिष्यामह इति ॥ ६ ॥ ता उ ह वै

जाबालौ दिदीक्षाते शुक्रश्च गोश्रुच्च । तयोर्ह प्राचीनशालिर्वृत उद्गाता ॥ ७ ॥ स तद्ध सुदक्षिणोऽनुबुबुधे जाबालौ हाऽदीक्षिषातामिति । स ह संग्रहीतारमुवाच— आनयस्वारे जाबालौ हादीक्षिषातां तद्गमिष्यात्र इति ॥ ८ ॥

*a* ) Not in Brāhmaṇa literature except here ? पा 6·3·86 चरणे ब्रह्मचारिणि. —*b*) शब्रा 10·1·5·2 यज्जप्यं तद् वात्सप्रम्; मनु 2·87 जप्येनैव तु संसिध्येत्. —*c*) तैब्रा 2·3·9·9 उत मे अपवदेयुः. —*d* ) आक्रुश् in तैसं 7·5·9·3 आ अन्यः क्रोशति, प्र अन्यः शंसति; cp पाली—अक्कोसन–पसंसा; पा 3·2·147 देवि–क्रुशोश्च उपसर्गे. —*e* ) Cp अनूचान in ऐब्रा 2·2 ये वा अनूचानास्ते कवयः; शब्रा 10·6·1·3 यन्नु भगवन्तः अनूचाना अनूचानपुत्राः; छां 6·1·2. —*f* ) जै 3·10·2. —*g* ) See कुरुपञ्चालाः in 3·8·7 and the references given there. —*h*) See जै 1·38·3 and the references given there. —*i*) उपद्रष्टृ in अ 11·3·54 स य एवंविदुष उपद्रष्टा भवति; तैसं 3·3 8·5 अग्निर्वा उपद्रष्टा वायुरुपश्रोता आदित्योऽनुख्याता; 7·5·8·1 अग्निमेवोपद्रष्टारं कृत्वा ऋद्धिमुपयन्ति; शब्रा 3·4·2·5 सोऽयं प्रजानामुपद्रष्टा प्रविष्टः; गी 13·22 उपद्रष्टाऽनुमन्ता च. —*j* ) शब्रा 3·2·2·30 धीक्षितो ह वै नामैतत् यद्दीक्षित इति । ( दीक्ष् a secondary base from दह् or दिह् ? ). —*k* ) अ 9·1·24 अन्वेनं प्रजा अनु प्रजापतिर्बुध्यते; शब्रा 2·2·3·17 कृतकर्मेव हि स तर्हि भवति; सर्वो हि कृतमनुबुध्यते. —*l* ) वासं 16·26 नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च; तैसं 1·8·9·2; ऐब्रा 2·25 तुरीये हैव संग्रहीतारो वदन्ते; तैब्रा 1·7·3·5 आश्विनं द्विकपालं संग्रहीतुर्गृहे.

## ३·८

तस्य ह ज्ञातिका अश्रुमुखा इवाऽऽसुरन्यतरां वा अयमुपागादिति ॥ १ ॥ अथ ह स्म वै यः पुरा ब्रह्मवाद्यं वदत्यन्यतरामुपागादिति ह स्मैनं मन्यन्ते । अथो ह स्मैनं मृतमिवैवोपासते ॥ २ ॥ तं ह संग्रहीतोवाच—अथ यद्भगवस्ते ताभ्यां न कुशलं कथेत्यमात्येति ॥ ३ ॥ ओमिति होवाच गन्तव्यं म आचार्यः सुर्यमानमन्यतेति ॥ ४ ॥ स ह रथमास्थाय प्रधावयांचकार । तं ह स्म प्रतीक्षन्ते ॥ ५ ॥ कं जानीतेति । सुदक्षिण इति । न वै नूनं स इदमभ्यवेयादिति । स एवेति ॥ ६ ॥ स ह सोपानादेवान्तर्वेद्यवस्थायोवाच—अङ्ग न्वित्थं गृहपता३ इति । तं ह नानूदतिष्ठासत् । स होवाच— अनूत्थाता म एधि । कृष्णाजिनोऽसी ( ति )। तदिमे कुरुपञ्चाला अविदुरनूत्थातैव त इति होचुः ॥ ७ ॥ तं ह कनीयान् भ्रातोवाच — अनूत्तिष्ठ भगव उद्गातारमिति । तं हानूत्तस्थौ ॥ ८ ॥ स होवाच— 'त्रिर्वै गृहपते पुरुषो जायते । पितुरेवाग्रेऽधि जायतेऽथ मातुरथ यज्ञात् ॥ ९ ॥ त्रिर्वेव म्रियत इति । स यद्ध वा एनमेतत् पिता योन्यां रेतो भूतं सिञ्चति—॥ १० ॥

*a*) ऋ 7·55·5 ससन्तु सर्वे ज्ञातयः; छां 6·15·1; कौ 1·4. —*b*) अ 11·9·7 प्रतिघ्नाना अश्रुमुखी. —*c*) तैसं 2·5·8·3 · नृमेधश्च परुच्छेपश्च ब्रह्मवाद्यमवदेताम्—अस्मिन् दारावार्द्रे अग्निं जनयाव यतरो नौ ब्रह्मीयानिति; also ब्रह्मोद्यम्—बृ 3·8·1; also ब्रह्मवद्यम्; cp पा 3·1·106; 3·1·123; शब्रा 4·6·9·20 अथ वाकोवाक्ये ब्रह्मोद्यं वदन्ति; 11·4·1·2 हन्तैनं ब्रह्मोद्यमाह्वयामहा इति; 11·5·9·1 ब्रह्मोद्यमग्निहोत्रं विविदिषामीति; 13·2·6·9 होता च ब्रह्मा च ब्रह्मोद्यं वदतः. —*d*) A euphemistic expression similar to शब्रा 5·1·3·13 स क्व ततः स्यात्. —*e*) सुयम mostly about *horses*; ऋ 3·61·2 आ त्वा वहन्तु सुयमासो अश्वाः; 5·55·1 ईयन्ते अश्वैः सुयमेभिराशुभिः. —*f*) सोपान not in Vedic literature; perhaps from सूपायन; cp ऋ 10·18·11 सूपायना अस्मै भव सूपवञ्चना. —*g*) छां 3·19·13 घोषा उलूलवो अनूदतिष्ठन्. —*h*) Is this n. p.? Cp कार्ष्णाजिनिः in ब्रसू 3·1·9; पा 6·2·165 संज्ञायां मित्राजिनयोः. —*i*) वासं (काण्व) 11·3 एष वः कुरवो राजा, एष वः पञ्चाला राजा, सोमोऽस्माकं ब्राह्मणानां राजा; तैब्रा 1·8·4·1–2 तस्मात् शिशिरे कुरुपञ्चालाः प्राञ्चो यान्ति...जघन्ये नैदाघे प्रत्यञ्चः कुरुपञ्चाला यान्ति; शब्रा 3·2·3·15 तस्मादत्रोत्तरा वाग्वदति कुरुपञ्चालत्रा; बृ 3·9·19; कौ 4·1; जै 3·7·6; 3·8·7; 4·7·2; पा 2·4·56 देव...पुरुमर्त्येभ्यो द्वितीयासप्तम्यर्थे बहुलम् (पुरुषु वसति, पुरुत्रा वसति). —*j*) ऐ 2·4 तदस्य तृतीयं जन्म; cp the three births of अग्नि in ऋ 4·1·7 त्रिरस्य ता...देवस्य जनिमान्यग्नेः; also ऋ 1·95·3; 10·45·1. —*k*) Shall we read रेतोभूतं as one word? Cp मैसं 3·4·7 and 3·8·7 हविर्भूतो वा एषः.

## ३·९

—तत् प्रथमं म्रियते ॥१॥ अन्धमिव वै तमो योनिः लोहितस्तोको[a] वा वै स तदाभवत्यपां वा स्तोकः। किं हि स तदा भवति ॥ २ ॥ स यस्तां देवतां वेद, यां च ततोऽनुसंभवति, या चैनं तं मृत्युमतिवहति[b], स उद्गाता मृत्युमतिवहतीति ॥ ३ ॥ अथ य एनमेतद्दीक्षयन्ति तद्द्वितीयं म्रियते। वपन्ति[c] केशश्मश्रूणि निकृन्तन्ति नखान्। प्रत्यञ्जन्त्यङ्गानि[d]। प्रत्यञ्चत्यङ्गुलीः। अपवृतोऽपवेष्टित आस्ते। न जुहोति। न यजते। न योषितं[f] चरति। अमानुषीं[e] वाचं वदति। मृतस्य वावैष तदा रूपं भवति ॥ ४ ॥ स यस्तां देवतां वेद, यां च स ततोऽनुसंभवति, या चैनं तं मृत्युमतिवहति, स उद्गाता मृत्युमतिवहतीति ॥ ५ ॥ अथ य एनमेतदस्माल्लोकात् प्रेतं चित्यामादधति[h][i] तत् तृतीयं म्रियते ॥ ६ ॥ स यस्तां देवतां वेद, यां च स ततोऽनुसंभवति, या चैनं तं मृत्युमतिवहति, स उद्गाता मृत्युमतिवहतीति ॥ ७ ॥ एतावद्धवोक्त्वा रथमास्थाय प्रधावयांचकार ॥ ८ ॥ तं ह जाबालं प्रत्येतं कनीयान् भ्रातोवाच—कां भवाञ्छूद्रको वाचमवादीति[k]। हस्तिना गार्धमैषीरिति[l] ॥ ९ ॥ प्र हैवैनं[m] तच्छशंस यः कथमवोचद्भगव इति। यस्त्रयाणां मृत्यूनां साम्नातिवाहं वेद स उद्गाता मृत्युमतिवहतीति ॥ १० ॥

*a* ) स्तोक in ऋ 3·21·1 where स्तोकाः is aligned with श्चोतन्ति which has led Yāska to derive it from श्चुत् in नि 2·1 as an instance of आद्यन्तविपर्यय; see also ऋ 10·95·16 घृतस्य स्तोकं सकृदह्न आश्नाम्; अ 6·124·1 अपां स्तोको अभ्यपतद् रसेन. —*b* ) बृ 1·3·11,16. —*c* ) जैब्रा 1·22 उप्त्वा केशश्मश्रूणि नखान् निकृत्य...see below जै 4·6·4. —*d* ) Is it अभि-अञ्ज्? —*e* ) Is this प्रत्यचन्ति? (अन्ते?); for अचति (ते) see शब्रा 3·4·3·3,5,9 (where संतरामङ्गुलीरचते) अचते is connected with अंगुलीः as here. The root अच् is not instanced anywhere else. —*f* ) Cp मैथुनं चर् in छां 3·17·3; also बृ 4·3·15,16,17 रत्वा चरित्वा ( where मैथुनम् seems to be left out before चरित्वा ); छां 4·4·2 बह्वहं चरन्ती परिचारिणी where also मैथुनम् seems to be left out. Shall we read यौषितम्? शब्रा 2·5·2·20 अन्यस्य सती अन्येन चरति. —*g* ) ऋ 10·95·8 अमानुषीषु मानुषो निषेवे. —*h* ) चिति (*f.*) from the root चि; तैसं 5·4·2·1 अधृतेव वा एषा यन्मध्यमा चितिः; शब्रा 6·1·2·17 यच्चिनोति तस्माच्चितयः. —*i* ) बृ 2·4·10 यथा आर्द्रैधाग्नेरभ्याहितस्य; 4·5·11; 5·11·1 यं प्रेतमग्नावभ्यादधति; 5·14·8; छां 6·7·3 महतोऽभ्याहितस्याग्नेः; all of which show that (अभि +) आ + धा is the proper root to express the idea of supplying fuel to fire. —*j* ) शब्रा 12·9·1·17 एता एव देवता अनुसंभवति. —*k*) अवादि = अवादीत्? —*l*) ऋ 5·47·7 अशीमहि गाधमुत प्रतिष्ठाम्; 6·24·8 गम्भीरे चिद् भवति गाधमस्मै; 10·106·9 पाद्वेव गाधं तरते विदाथः; शब्रा 12·2·1·2 गाधमेव प्रतिष्ठा; गाधं विद् in Rigveda = गाधमिष् here? नि 2·24 स नदीस्तुष्टाव गाधा भवत; पा 6·2·4 गाधलवणयोः प्रमाणे. —*m* ) एनत् refers to the कनीयान् जाबालः. —*n* ) Cp this with आतिवाहिकाः in ब्रसू 4·3·4.

## ३·१०

तं वाव भगवस्ते पितोद्गातारममन्यतेति होवाच । तदु ह प्राचीनशाला विदुर्य एषामयं वृतं उद्गाताऽऽस । तस्मिन् ह नाऽनुविदुः ॥ १ ॥ ते होचुः—अनुधावत काण्ड्वियमिति । त हानुससुः । ते ह काण्ड्वियमुद्गातारं चक्रिरे ब्रह्माणं प्राचीनशालिम् ॥ २ ॥ तं हाभ्यवेक्ष्योवाच—एवमेष ब्राह्मणो मोघाय वादाय नाग्लायत् । स नाऽणुं साम्नोऽन्विच्छतीति । अति हैवैनं तच्चक्रे ॥ ३ ॥ स यद्ध वा एनमेतत् पिता योन्यां रेतोभूतं सिञ्चत्यादित्यो हैनं तद्योन्यां रेतोभूतं सिञ्चति, स हास्य तत्र मृत्योरीशे ॥ ४ ॥ अथो यदेवैनमेतत् पिता योन्यां रेतोभूतं सिञ्चति, तद्ध वाव स ततोऽनुसंभवति प्राणं च । यदा ह्येव रेतः सिक्तं प्राण आविशत्यथ तत् संभवति ॥५॥ अथो यदेवैनमेतद्दीक्षयन्त्यग्निर्हैवैनं तद्योन्यां रेतोभूतं सिञ्चति । स हैवास्य तत्र मृत्योरीशे ॥ ६ ॥ अथो यामेवैतां वैसर्जनीयामाहुतिमध्वर्युर्जुहोति, तामेव स ततोऽनुसंभवति

छन्दांसि चैव ॥ ७ ॥ अथ य एनमेतदस्माल्लोकात् प्रेतं चित्यामादधति, चन्द्रमा हैवैनं तद्योन्यां रेतोभूतं सिञ्चति । स उ हैवास्य तत्र मृत्योरीशे ॥ ८ ॥ अथो यदेवैनमेतदस्माल्लोकात् प्रेतं चित्यामादधति, अथो या एवैता अवोक्षणीया आपस्ता एव स ततोऽनुसंभवति प्राणम्वेव । प्राणो ह्यापः ॥ ९ ॥ तं ह वा एवंविदुद्गाता यजमानमोमित्येतेनाक्षरेणाऽऽदित्यं मृत्युमतिवहति, वागित्यग्निं, हुमिति वायुं, भा इति चन्द्रमसम् ॥ १० ॥ तान् वा एतान् मृत्यून् साम्नोद्गाताऽऽत्मानं च यजमानं चातिवहत्योमित्येतेनाक्षरेण प्राणेनामुनादित्येन ॥ ११ ॥ तस्यैष श्लोकः—

उतैषां ज्येष्ठ उत वा कनिष्ठ उतैषां पुत्र उत वा पितैषाम् ।
एको ह देवो मनसि प्रविष्टः पूर्वो ह जज्ञे स उ गर्भेऽन्तः ॥ १२ ॥ इति ॥

तद्यदेषोऽभ्युक्त इममेव पुरुषं योऽयमाच्छन्नोऽन्तरोमित्येतेनैवाक्षरेण प्राणेनैवामुनैवादित्येन [ ............ ] ॥ १३ ॥

Paragraphs 1–3 are obscure.

*a*) छां 1·10·6 स मा सर्वैरार्त्विज्यैर्वृणीत; 1·11·2 भगवतो वा अहमवित्त्या अन्यानवृषि. —*b*) ऋ 4·27·1 अन्वेषामवेदं जनिमानि; 10·17·5 पूषा एषा आशा वेद सर्वाः; शब्रा 1·5·1·6 एष वै देवाननु विद्वान् यदग्निः. —*c*) Only here in Vedic literature; जैब्रा 1·24 काण्डिव्य is a name of प्रिय जानश्रुतेय. —*d*) जै 3·7·5. —*e*) ऋ 10·55·5 यच्चिकेत सत्यमित्तन्न मोघम्; 10·165·6 यदूलूको वदति मोघमेतत्; शब्रा 3·2·4·6 तस्मादप्येतर्हि मोघसंहिता योषाः. —*f*) शब्रा 2·3·3·4 सामि ह्यस्मै स ग्लायति; 3·8·5·10 यद्य अभ्यवायनाय ग्लायेत्; नि 1·20 उपदेशाय ग्लायन्तोऽवरे...ग्रन्थं समाम्नासिषुः; पा 3·4·65. —*g*) बृ 3·8·8 अनणु; 4·1·1 अण्वन्तान्; 4·4·8 अणुः पन्था विततः पुराणः; क 1·21 अणुरेष धर्मः; 2·13 अणुमेतमाप्य; 2·20 अणोरणीयान्; मुं 2·2·2 यदणुभ्योऽपि अणु. —*h*) *3rd sg.* as in ऋ 1·71·9 एकः सत्रा सूरो वस्व ईशे; it is the more usual form in the ऋ; ईष्टे being *hapax legomenon* (ऋ 5·87·3 न येषामिरी सधस्थ ईष्ट आँ); also ईशते in one place (ऋ 10·43·3 स इन्द्रायो मघवा वस्व ईशते). —*i*) तैसं 6·3·2·1–2 वैसर्जनानि जुहोति. —*j*) छां 6·7·1 आपोमयः प्राणः. —*k*) अ 10·8·28 (with slight variants). —*l*) The paragraph is laconic; it lacks the verb.

## ३·११

त्रिर्ह वै पुरुषो म्रियते त्रिर्जायते ॥ १ ॥ स हैतदेव प्रथमं म्रियते यद्रेतः सिक्तं संभूतं भवति । स प्राणमेवाभिसंभवति । आशामभिजायते ॥ २ ॥ अथैतद्द्वितीयं म्रियते यद्दीक्षते । स च्छन्दांस्येवाभिसंभवति । दक्षिणामभिजायते ॥ ३ ॥ अथैतत् तृतीयं म्रियते यन्म्रियते । स श्रद्धामेवाभिसंभवति । लोकमभिजायते ॥ ४ ॥ तदेतद्

त्र्यावृद्[e] गायत्रं गायति । तस्य प्रथमयाऽऽवृ[f]तेममेव लोकं जयति यदु चास्मिँल्लोके । तदेतेन चैनं प्राणेन सम[g]र्धयति यमभिसंभवति एतां चास्मा आशां प्रयच्छति यामभिजायते ॥ ५ ॥ अथ द्वितीययाऽऽवृतेदमेवान्तरिक्षं जयति यदु चान्तरिक्षे । तदेतैश्चैनं छन्दोभिः समर्धयति यान्यभिसंभवति । एतां चास्मै [h]दक्षिणां प्रयच्छति यामभिजायते ॥ ६ ॥ अथ तृतीययावृतामुमेव लोकं जयति यदु चामुष्मिँल्लोके । तदेतया चैनं श्रद्धया समर्धयति ययैवैनमेतच्छ्रद्धयाऽग्नावभ्यादधाति सम[i]यमितो भविष्यतीति । एतं चास्मै लोकं प्रयच्छति यमभिजायते ॥ ७ ॥

*a*) शब्रा 7·3·1·45 इदमेवैतद्रेतः सिक्तमाप्यायाति. —*b*) ऋ 2·41·12 इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत्; वासं 11·63 आशा दिशश्च आपृण; 22·27 दिग्भ्यः स्वाहा, आशाभ्यः स्वाहा; अ 4·15·8 आशामाशां वियोततां, वाता वान्तु दिशो दश; तैसं 5·7·8·2 चतस्र आशाः प्रचरन्त्वग्नयः; नि 6·1 आशा उपदिशो भवन्ति—अभ्यशनात् (आभि + √अश्). In this sense आशा is not used in the Upaniṣads. —*c*) छां 7·12·1 आकाशे जायते, आकाशमभिजायते. —*d*) प्र 6·4 प्राणाच्छ्रद्धाम्. —*e*) तैब्रा 2·1·3·4 त्रिः पर्यग्नि करोति, त्र्यावृद्धि यज्ञः; शब्रा 13·1·7·2 त्र्यावृतो वै देवास्त्र्यावृत इमे लोकाः; cp त्रिवृत्. —*f*) ऋ 3·42·3 आवृते सोमपीतये; अ 10·5·37 सूर्यस्यावृतमन्वावर्ते. —*g*) वासं 11·8 ऋचा स्तोमं समर्धय; शब्रा 1·3·1·27 सत्येनैवैतत् समर्धयति; शब्रा 14·8·15·10 असावस्मै कामो मा समर्धीति = बृ 5·14·7 समृद्धीति. —*h*) दक्षिणा is here the sacrificial gift. —*i*) Construe अयम् इतः संभविष्यति.

## ३·१२

एतद्वै तिसृभिरावृद्भिरिमाँश्च लोकान् जयत्येतैश्चैनं भूतैः समर्धयति यान्यभिसंभवति ॥ १ ॥ अथ वा अतो हिङ्कारस्यैव । तं ह स्वर्गे लोके सन्तं मृत्यु[a]रन्वेत्यशँनया ॥ २ ॥ श्रीर्वा एषा प्रजापतिः साम्नो यद्धिङ्कारः । तमिदुद्गाता श्रिया प्रजापतिना हिङ्कारेण मृत्युमपसे[b]धति ॥ ३ ॥ हुं मेत्याह, माऽत्र नु गा यत्रैतद्यजमान इति हैतत् ॥ ४ ॥ स यथा श्रेयसा सिद्धः पापीयान् प्रतिविजत एवं हैवास्मान्मृत्युः पाप्मा प्रतिविजते ॥ ५ ॥ यन्मेत्याह, चन्द्रमा वै माँ[d] मासः । एष ह वै मा मासः । तस्मान्मेत्याह । भा इति हैतत् परोक्षेणेवं । यस्माद्वेव मेत्याह यद्वेव मेत्याहैतानि त्रीणि । तस्मान्मेति ब्रूयात् ॥ ६ ॥

*a*) See notes on 1·1·3 above. —*b*) ऋ 6·47·29 दूराद्दवीयः अप सेध शत्रून्; 10·98·12 अपामीवामप रक्षांसि सेध; अ 5·19·9 तं वृक्षा अप सेधन्ति च्छायां नो मोप गा इति; वासं 34·26 अप सेध रक्षसो यातुधानान्; मनु 11·198 संवत्सरं यवाहारस्तत् पापमपसेधति. —*c*) सिध् *to drive away; repel*: ऋ 1·105·11 ते सेधन्ति पथो वृकम्; 8·35·16 हतं रक्षांसि सेधतममीवाः; तांब्रा 10·3·13 तस्मात् (पशवः) वाचा सिद्धा वाचाहूता आयन्ति; जैब्रा 3·5 (यन्ति instead of

आयन्ति ). —*d* ) Is this मास्? Cp ऋ 10·52·3 अहरहर्जायते मासि मासि and मास in ऋ 7·61·4 अयन्मासा अयज्वनामवीराः. —*e* ) ऐब्रा 3·33 तद्यन्मानुषं तन्मादुषं सन् मानुषमित्याचक्षते परोक्षेण, परोक्षप्रिया इव हि देवाः; ऐ 3·14; बृ 4·2·2.

## ३·१३

हुं भा इति ब्रह्मवर्चसकामस्य । भातीव हि ब्रह्मवर्चसम् ॥ १ ॥ हुं बो इति पशुकामस्य । बो इति ह वै पशवो वाश्यन्ते ॥ २ ॥ हुं बगिति श्रीकामस्य । बगिति ह श्रियं पर्णायन्ति ॥ ३ ॥ हुं भा ओवा इत्येतदेवोपगीतम् ॥ ४ ॥ महद्दिवाभिपरिवर्तयन् गायेदिति ह स्माह नाकः, महाग्रामो महानिवेशो भवतीति । स यथा स्थाणुमर्पयित्वेतरेण वेतरेण वा परियायात् तादृक् तत् ॥ ५ ॥ तदु होवाच शाट्यायनिः— कस्मै कामाय स्थाणुमर्पयेत् । अथोपगीतमेवैतत् । नैवैतदाद्रियेतेति ॥ ६ ॥ [ इति ] नु हिङ्काराणाम् । अथ वा अतो निधनमेव । ओ वा इति द्वे अक्षरे । अन्तो वै साम्नो निधनमन्तः स्वर्गो लोकानामन्तो ब्रध्नस्य विष्टपम् ॥ ७ ॥ तमेतदुद्गाता यजमानमोमित्येतेनाक्षरेणान्ते स्वर्गे लोके दधाति ॥८॥ य उ ह वा अपक्षो वृक्षाग्रं गच्छत्यव वै स ततः पद्यते । अथ यद्वै पक्षी वृक्षाग्रे, यदसिधारायां, यत् क्षुरधारायामास्ते, न वै स ततोऽवपद्यते । पक्षाभ्यां हि संयत आस्ते ॥ ९ ॥ तमेतदुद्गाता यजमानमोमित्येतेनाक्षरेण स्वरपक्षं कृत्वान्ते स्वर्गे लोके दधाति । स यथा पक्ष्यविभ्यदासीतैवमेव स्वर्गे लोकेऽविभ्यदास्तेऽथाऽऽचरति ॥ १० ॥ ते ह वा एते अक्षरे देवलोकश्चैव मनुष्यलोकश्च । आदित्यश्च ह वा एते अक्षरे चन्द्रमाश्च ॥ ११ ॥ आदित्य एव देवलोकश्चन्द्रमा मनुष्यलोकः । ओमित्यादित्यो वागिति चन्द्रमाः ॥१२॥ तमेतदुद्गाता यजमानमोमित्येतेनाक्षरेणादित्यं देवलोकं गमयति ॥ १३ ॥

*a* ) अ 19·71·1 द्रविणं ब्रह्मवर्चसम्; वासं 22·22 आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम्; तैसं 2·5·10·2 चतुर्विंशतिरनुब्रूयाद् ब्रह्मवर्चसकामस्य; शब्रा 13·1·5·3 न क्षत्रे ब्रह्मवर्चसं रमते; ऐब्रा 1·4 तेजस्कामो ब्रह्मवर्चसकामः । तेजो वै ब्रह्मवर्चसम्; तैब्रा 2·1·3·2 न प्रतिषिञ्चेत् ब्रह्मवर्चसकामस्य । समिद्धमिव हि ब्रह्मवर्चसम्; कौ 2·16 प्रजायते प्रजया...ब्रह्मवर्चसेन; छां 3·18·3 भाति च तपाति च ब्रह्मवर्चसेन य एवं वेद; बृ 6·4·28 श्रिया यशसा ब्रह्मवर्चसेन; पा 5·4·78 ब्रह्महस्तिभ्यां वर्चसः. —*b*) ऐब्रा 1·5 श्रीकामः यशस्कामः...पशुकामः कुर्वीत. —*c* ) वाश् ( *1st Conj.* ) ऋ 5·54·2 वाशाति त्रितः; अ 12·5·20 वाश्यमानाभि स्फूर्जति; ऐब्रा 5·27 यस्याग्निहोत्री वाश्येत; शब्रा 12·4·1·12 यस्याग्निहोत्री दोह्यमाना वाश्येत. —*d* ) पन् and पण् seem to be interchangeable; ऋ 7·45·2 नूनं सो अस्य महिमा पनिष्ट; 3·34·6 महो महानि पनयन्त्यस्य कर्म; 1·160·5 पनाय्यमोजो अस्मे समन्वितम्; 6·69·5 इन्द्राविष्णू तत् पनयाय्यं वाम्; 6·75·6 अभीशूनां महिमानं पनायत; जैब्रा 2·239 कथोदन्वः पणायसि; नि 2·26 पाणिः पणायतेः पूजाकर्मणः; पा 3·1·28...पनिपणिभ्य

आयः. —*e*) = नाक मौद्गल्य in तै 1·9 (?); शब्रा 12·5·2·1; बृ 6·4·4. —*f*) Cp महाग्राम (तत्पुरुष) in ऋ 10·78·6 महाग्रामो न यामन्नुत त्विषः as opposed to बहुव्रीहि here. —*g*) ऋ 6·71·2 निवेशने प्रसवे चासि भूमनः; 9·69·7 शं नो निवेशे द्विपदे चतुष्पदे; 10·142·7 समुद्रस्य निवेशनम्. —*h*) स्थाणुमर्पय (स्थाणुमृच्छ is the standard phrase and अर्पय is the causal of ऋच्छ् (पा 7·3·78 अर्ति-ऋच्छ्; 7·3·36 पुग्णौ); ऋ 10·40·13 स्थाणुं पथेष्ठामप दुर्मतिं हतम्; तैसं 3·2·4·3 एता वै देवताः सदस्यार्तिमार्पयन्ति....न सदस्यार्तिमार्च्छति; 6·1·2·4 यज्ञस्थाणुमृच्छेत्; अ 5·22·6 तां वज्रेण समर्पय; 6·66·1 समर्पयेन्द्र महता वधेन; 10·9·1 सपत्नेषु वज्रमर्पयैतम्; 10·4·1 अहीनामपमा रथः स्थाणुमारदथार्षत्; 14·2·48 स्थाणावघ्या सजामि; शब्रा 3·6·2·5 अश्वः श्वेतः स्थाणौ सेवते; बृ 6·3·7 अपि य एनं शुष्के स्थाणौ निषिञ्चेत्; छां 5·2·3 यद्यप्येनच्छुष्काय स्थाणवे ब्रूयात्; क 5·7 स्थाणुमन्येऽनुसंयन्ति; मै 2·6 स्थाणुमिव तिष्ठमानाः; नि 1·16 नैष स्थाणोरपराधः; 1·19 स्थाणुरयं भारहारः किलाभूत्. —*i*) शाट्यायनिनः referred to in Sāyaṇa's भाष्य on ऋ 1·105; शब्रा 8·1·4·9 अपि हास्म शाट्यायनिः. —*j*) दृ (द्रियते) with आ occurs in the Brāhmaṇas. Here and there in active sense, though passive in form; cp शब्रा 1·7·4·12 यद्यु कामयेतापि नाद्रियेत; 2·3·3·8 यथा हैवास्मिँल्लोके न संयतमाद्रियते; ऐब्रा 3·7 किं स यजमानस्य पापभद्रमाद्रियेत; बृ 6·3·2 अनादृत्य वसतिं कुमारः प्रदुद्राव; cp Jain (Ardhamāgadhī) canon उवासगदसाओ 7 गोसालं मंखलिपुत्तं एज्जमाणं पासित्ता नो आढाइ (= आद्रियते)...अणाढायमाणे (अनाद्रियमाणः) तुसिणीए संचिट्ठइ. —*k*) ब्रध्नस्य विष्टपम् *range of the ruddy one* (i. e. Sun)—Caland. ऋ 8·69·7 उदद्ब्रध्नस्य विष्टपम्; 9·113·10 यत्र ब्रध्नस्य विष्टपम्; वासं 18·51 तेन वयं गमेम ब्रध्नस्य विष्टपम्; 30·12 ब्रध्नस्य विष्टपाय अभिषेक्तारम्;[1] शब्रा 8·4·1·23 स्वाराज्यं वै ब्रध्नस्य विष्टपम्; तांब्रा 18·7·13 स्वर्गमेव तल्लोकं रूढ्वा ब्रध्नस्य विष्टपमभ्यतिक्रामति; for विष्टप cp ऋ 8·80·5 इमानि त्रीणि विष्टपा तानिन्द्र वि रोहय; 10·123·2 ऋतस्य सानावधि विष्टपि भ्राट्; जैब्रा 3·223 समुद्रस्याधि विष्टपे; 3·219 तद्यथा ह वै ब्रध्नस्य विष्टपानि एवमेतानि विशालस्य विष्टपानि; जै 3·19·7; नि 2·14 विष्टप् आदित्यो भवति. —*l*) ऋ 4·13·5 न्यङ् उत्तानोऽव पद्यते न; 6·54·3 न कोशोऽव पद्यते; 6·120·2 माव पत्सि लोकात्; ऐब्रा 4·4 नेच्छन्दसां कृच्छ्रादवपद्यै; तैब्रा 1·2·4·2 अवाचोऽवपादादबिभयुः; 1·5·12·1 तस्यावाच एवावपादादबिभयुः; तांब्रा 12·13·11 न श्रिया अवपद्यते; छां 2·9·6 नावपद्यन्ते. —*m*) बृ 3·3·2 यावती क्षुरस्य धारा; क 3·14 क्षुरस्य धारा निशिता दुरत्यया. —*n*) ऋ 1·136·2 पन्था ऋतस्य समयंस्त रश्मिभिः; 6·67·1 सं या रश्मेव यमतुर्यमिष्ठा; नि 5·8 संयतरश्मिः. —*o*) *Hapax legomenon*; a बहुव्रीहि.

## ३·१४

तं हागतं पृच्छति—कस्त्वमसीति। स यो ह नाम्ना वा गोत्रेण[b] वा प्रब्रूते तं हाह—यस्तेऽयं मय्यात्माभूदेष ते स इति ॥१॥ तस्मिन् हात्मन् प्रतिपन्न्। तमृतवः संप्रधार्य[c] पद्गृहीतिमपकर्षन्ति[d][d1]। तस्य हाहोरात्रे लोकमाप्नुतः ॥२॥ तस्मा उ हैतेन प्रब्रुवीत—कोऽहमस्मि सुवस्त्वम्[e]। स त्वां स्वर्ग्यं स्वरगामिति ॥३॥ को ह वै प्रजापतिः। अथ हैवंविदेव सुवर्गः[f]। स हि सुवर्गच्छति ॥४॥ तं हाह—

यस्त्वमसि सोऽहमस्मि, योऽहमस्मि स त्वमस्येहीति ॥ ५ ॥ स एतमेव सुकृतरसं प्रविशति । यदु ह वा अस्मिँल्लोके मनुष्या यजन्ते यत् साधु कुर्वन्ति तदेषामूर्ध्वमन्नाद्यमुत्सीदति । तदमुं चन्द्रमसं मनुष्यलोकं प्रविशति ॥ ६ ॥ तस्येदं मानुषनिकाशनमण्डमुदरेऽन्तः प्रविशति । तस्योर्ध्वमन्नाद्यमुत्सीदति स्तनावभि । स यदाजायतेऽथाऽस्मै माता स्तनमन्नाद्यं प्रयच्छति ॥ ७ ॥ अजातो ह वै तावत् पुरुषो यावन्न यजते स यज्ञेनैव जायते । स यथाण्डं प्रथमंनिर्भिण्णमेवमेव ॥ ८ ॥ तदा तं ह वा एवंविदुद्गाता यजमानमोमित्येतेनाक्षरेणादित्यं देवलोकं गमयति । वागित्यस्मा उत्तराक्षरेण चन्द्रमसमन्नाद्यमक्षितिं प्रयच्छति ॥ ९ ॥ अथ यस्यैतदविद्वानुद्गायति, न हैवैनं देवलोकं गमयति, नो एनमन्नाद्येन समर्धयति ॥ १० ॥ स यथाण्डं विदिग्धं शयीताऽन्नाद्यमलभमानमेवमेव विदिग्धः शेतेऽन्नाद्यमलभमानः ॥ ११ ॥ तस्मादु हैवंविदमेवोद्गापयेत । एवंविदि हैवोद्गातरिति हूतः प्रतिगृणुयात् ॥ १२ ॥

Cp in general जैब्रा 1·18.

*a* ) कौ 1·5. —*b* ) छां 4·4·1 किंगोत्रोऽहमस्मीति. —*c* ) वासं 7·38 त्वं राजासि प्रतिपत् सुतानाम् = ऋ 3·47·1 where ऋ has प्रदिवः for प्रतिपत्; तैसं 1·7·10·4 ब्रह्मैव प्रातिपदं कुरुते. cp Pāli पटिपदा ( e. g. at दीघनिकाय 1·156 ). —*d* ) The reading संप्रधार्य पद् of Oertel is doubtful. संपलाय्य ( the reading of जैब्रा 1·18 ) seems to be correct; भट्टिकाव्य 15·47 व्यक्रुक्षत् वानरानीकं संपलायिष्ट चायति । हस्ताभ्यां नश्यदक्राक्षीद् भीमे चोपाधिताननेः —*d1* ) Cp पादगृह्य in ऋ 4·18·12 यत् प्राक्षिणाः पितरं पादगृह्य; 10·27·4 प्र तं क्षिणां पर्वते पादगृह्य; cp कर्णगृह्य and हस्तगृह्य in ऋ. —*e* ) सुवस् = स्वस् = स्वर्. —*e1* ) सुवर्गः = स्वर्गः. —*f* ) Transition to the Upaniṣadic doctrine of the identity of God and Ātman. —*g* ) The root काश् *to appear to see, to show,* in Veda; cp ऋ 1·164·20 अनश्नन्नन्यो अभि चाकशीति. —*h* ) ऋ 10·68·7 आण्डेव भित्त्वा शकुनस्य गर्भम्; छां 3·19·1 आण्डकपाले. —*i*) ऋ 8·63·2 दिवो मानं नोत्सदन्. —*j* ) Cp यज्ञोपवीत, wearing which a man becomes द्विज i. e. *twice-born.* —*k* ) ऋ 1·104·8 आण्डा मा नो...निर्भेत्; जैब्रा 2·12 यथा ह वा इदं आण्डान् निर्भिंद्येरन्; ऐ 1·4 तस्य अभितप्तस्य मुखं निरभिद्यत यथाण्डम्; note the ण in निर्भिण्ण.

## ३·१५

वागिति हेन्द्रो विश्वामित्रायोक्थमुवाच । तदेतद्विश्वामित्रा उपासते वाचमेव ॥१॥ मनुर्ह वसिष्ठाय ब्रह्मत्वमुवाच । तस्मादाहुः—वासिष्ठमेव ब्रह्मेति ॥ २ ॥ तदु वा आहुः—एवंविदेव ब्रह्मा । क उ एवंविदं वासिष्ठमर्हतीति ॥ ३ ॥ प्रजापतिः प्राजिजनिषत । स तपोऽतप्यत । स ऐक्षत—हन्त नु प्रतिष्ठां जनयै, ततो याः प्रजाः

स्रक्ष्ये ता एतदेव प्रतिष्ठास्यन्ति, नाप्रतिष्ठाश्चरन्तीः प्रदाविष्यन्त[d] इति ॥ ४ ॥ स इमं लोकमजनयदन्तरिक्षलोकममुं लोकामिति । तानिमाँस्त्रीँल्लोकाञ् जनयित्वाऽभ्यश्राम्यत् ॥ ५ ॥ तान् समतपत् । तेभ्यः संतप्तेभ्यस्त्रीणि शुक्राण्युदायन्नग्निः पृथिव्या वायुरन्तरिक्षादादित्यो दिवः ॥ ६ ॥ स एतानि शुक्राणि पुनरभ्येवाऽऽतपत् । तेभ्यः संतप्तेभ्यस्त्रीण्येव शुक्राण्युदायन्नृग्वेद एवाग्नेर्यजुर्वेदो वायोः सामवेद आदित्यात् ॥ ७ ॥ स एतानि शुक्राणि पुनरभ्येवातपत् । तेभ्यः संतप्तेभ्यस्त्रीण्येव शुक्राण्युदायन्, भूरित्येवर्ग्वेदात्, भुव इति यजुर्वेदात, स्वरिति सामवेदात् तदेव ॥ ८ ॥ तद्ध वै त्रय्यै विद्यायै शुक्रम् । एतावदिदं सर्वम् । स यो वै त्रयीं विद्यां विदुषो लोकः सोऽस्य लोको भवति य एवं वेद ॥ ९ ॥

*a* ) विश्वामित्राः means the descendants of विश्वामित्र; cp ऋ 3·53·13 विश्वामित्रा अरासत; 10·89·17 विश्वामित्रा उत ते इन्द्र नूनम्. —*b* ) षब्रा 1·5·1,3 ( reads मनो for मनुः ) वागित्येव विश्वामित्राय । मनो ब्रह्म वसिष्ठाय; is मनुः a wrong reading for मनः ? —*c* ) Cp in general ऐब्रा 5·32; शब्रा 11·5·8·1–4. —*d* ) For the root द्रघ् see ऋ 1·23·5 पश्चात् स दघ्या यो अघस्य धाता; 7·56·21 मा पश्चाद् दघ्म रथ्यो विभागे; also cp आदघ्न ( i. e. आस् + दघ्न ) in ऋ 10·71·7; also ऋ 6·42·1 अरङ्गमाय जग्मये अपश्चाद्दघ्वने. —*e* ) ऐब्रा 5·32; शब्रा 11·5·8·4.

## ३·१६

अयं वाव यज्ञो योऽयं पवते । तस्य वाक् च मनश्च वर्तन्यौ । वाचा च ह्येव एतन्मनसा च वर्तते ॥ १ ॥ तस्य होताऽध्वर्युरुद्गातेत्यन्यतरां वाचा वर्तनिं संस्कुर्वन्ति । तस्मात् ते वाचा कुर्वन्ति । ब्रह्मैव मनसाऽन्यतराम् । तस्मात् स तूष्णीमास्ते ॥ २ ॥ स यद्ध सोऽपि स्तूयमाने वा शस्यमाने वा वावद्यमान आसीतान्यतरामेवास्यापि तर्हि स वाचा वर्तनिं संस्कुर्यात् ॥ ३ ॥ स यथा पुरुष एकपाद् यन् भ्रेषन्नेति[a], रथो वैकचक्रो वर्तमानः, एवमेव तर्हि यज्ञो भ्रेषन्नेति ॥ ४ ॥ एतद्ध तद्विद्वान् ब्राह्मण उवाच—ब्रह्माणं प्रातरनुवाक उपाकृते वावद्यमानमासीनमर्धं वा इमे तर्हि यज्ञस्यान्तरगुरिति । अर्धं हि ते तर्हि यज्ञस्याऽन्तरीयुः ॥ ५ ॥ तस्माद् ब्रह्मा प्रातरनुवाक उपाकृते वाचंयम आसीतापरिधानीयाया आ वषट्कारादितरेषां स्तुतशस्त्राणामेवासंस्थायै पवमानानाम् ॥ ६ ॥ स यथा पुरुष उभयपाद् यन् भ्रेषं न न्येति, रथो वोभयाचक्रो[b] वर्तमानः, एवमेतर्हि यज्ञो भ्रेषं न न्येति ॥ ७ ॥

Cp in general ऐब्रा 5·33; कौब्रा 6·11; षब्रा 1·5·4; छां 4·16.

*a* ) ऋ 7·20·6 नू चित् स भ्रेषते जनो न रेषत्. —*b* ) Cp उभयादत् in ऋ 10·90·10 and उभयापदी in जै 4·14·3.

## ३·१७

स यदि यज्ञ ऋक्तो भ्रेषन्नियात्, ब्रह्मणे प्रब्रूतेत्याहुः। अथ यदि यजुष्टो ब्रह्मणे प्रब्रूतेत्याहुः। अथ यदि सामतो ब्रह्मणे प्रब्रूतेत्याहुः। अथ यद्यनुपस्मृतात् कुत इदमजनीति ब्रह्मणे प्रब्रूतेत्येवाहुः ॥ १ ॥ स ब्रह्मा प्राङ् उदेत्य स्रुवेणाऽऽग्नीध्र आज्यं जुहुयाद्भूर्भुवः स्वारित्येताभिर्व्याहृतिभिः ॥ २ ॥ एता वै व्याहृतयः सर्व-प्रायश्चित्तयः। तद्यथा लवणेन सुवर्णं संदध्यात्, सुवर्णेन रजतं, रजतेन त्रपु, त्रपुणा लोहायसं, लोहायसेन कार्ष्णायसं, कार्ष्णायसेन दारु, दारु च चर्म च श्लेष्मणैवमेवं-विद्वाँस्तत् सर्वं भिषज्यति ॥ ३ ॥ तदाहुः—यदहौषीन्मे ग्रहान् मेऽग्रहीदित्यध्वर्यवे दक्षिणा नयन्त्यशंसीन्मे वषट् अकर्म इति होत्र उदगासीन्म इत्युद्गात्रेऽथ किञ्चक्रुष ब्रह्मणे तूष्णीमासीनाय समाँवतीरेवेतरैर्ऋत्विग्भिर्दक्षिणा नयन्तीति ॥ ४ ॥ स ब्रूयात्—अर्धभाग्घ वै स यज्ञस्यार्धं ह्येष यज्ञस्य वहतीति। अर्धा ह स्म वै पुरा ब्रह्मणे दक्षिणा नयन्तीति। अर्धा इतरेभ्य ऋत्विग्भ्यः ॥ ५ ॥ तस्यैष श्लोकः—

[b]मयीदं मन्ये भुवनादि सर्वं मयि लोका मयि दिशश्चतस्रः।

मयीदं मन्ये निमिषद्यदेजाति मय्याप ओषधयश्च सर्वाः ॥ ६ ॥ इति ॥

मयीदं मन्ये भुवनादि सर्वमित्येवंविदं ह वावेदं सर्वं भुवनमन्वायत्तम् ॥ ७ ॥ मयि लोका मयि दिशश्चतस्र इत्येवंविदि ह वाव लोकाः, एवंविदि दिशश्चतस्रः ॥ ८ ॥ मयीदं मन्ये निमिषद्यदेजति मय्याप ओषधयश्च सर्वा इत्येवंविदि ह वावेदं सर्वं भुवनं प्रतिष्ठितम् ॥ ९ ॥ तस्मादु हैवंविदमेव ब्रह्माणं कुर्वीत। स ह वाव ब्रह्मा य एवं वेद ॥ १० ॥

Cp in general जैब्रा 1·358; छां 4·17·7

*a*) तैसं 1·6·10·5 समावती एतान् यज्ञस्याशीर्गच्छेत्; कासं 11·3 सर्वेष्वेव समावद्वसाथ; 19·2 तस्मादेष समावत् पशूनां रेतो दधानानां कनिष्ठः (गर्दभः); शब्रा 11·1·6·34 समावन्त्येव अस्थीनि. —*b*) Source? —*c*) मुं 2·2·1 एजत् प्राणन्निमिषच्च यत्.

## ३·१८

अथ वा अतः स्तोमभागानामेवानुमन्त्राः ॥ १ ॥ तद्धैतदेके स्तोमभागैरेवानु-मन्त्रयन्ते। तत् तथा न कुर्यात् ॥ २ ॥ देवेन सवित्रा प्रसूतः प्रस्तोतर्देवेभ्यो वाचमित्येषु हैकेऽनुमन्त्रयन्ते सविता वै देवानां प्रसविता सवित्रा प्रसूता इदमनु मन्त्रयामह इति वदन्तः। तदु तथा न कुर्यात् ॥ ३ ॥ भूर्भुवः स्वरिति उ हैकेऽनुमन्त्रयन्त एषा वै त्रयी विद्या त्रय्यै वेदं विद्ययानुमन्त्रयामह इति वदन्तः। तदु तथा नो एव कुर्यात् ॥ ४ ॥ ओमित्येवानुमन्त्रयेत ॥ ५ ॥ अथैष वासिष्ठस्यैकस्तोमभागानुमन्त्रः। तेन हैतेन वासिष्ठः

प्रजातिकामोऽनुमन्त्रयांचक्रे देवेन सवित्रा प्रसूतः प्रस्तोतर्देवेभ्यो वाचमिष्य भूर्भुवः स्वरोमिति । ततो वै स बहुः प्रजया पशुभिः प्राजायत ॥ ६ ॥ स एव तेन वासिष्ठस्यैकस्तोमभागानुमन्त्रणेनानुमन्त्रयेत । बहुरेव प्रजया पशुभिः प्रजायते । इयं त्वेव स्थितिरोमित्येवानुमन्त्रयेत ॥ ७ ॥

*a*) स्थिति means '*a rule, a prescription.*' शब्रा 4·6·5·4 एषैव स्थितिः; 6·1·2·25 अन्या त्वेवातः स्थितिः; 13 4·3·4 पूर्वा त्वेव स्थितिः; नि 8·22 आग्नेया इति तु स्थितिः । भक्तिमात्रमितरत्.

## ३·१९

अथैष वाचा वज्रमुद्गृह्णाति । यदाह सोमः पवत इति वोपावर्तध्वमिति वा वाचैव तद्वाचो वज्रं विगृह्णते, वाचः सत्येनातिमुच्यते । तस्मादोमित्येवानुमन्त्रयेत ॥ १ ॥ देवा वा अनया त्रय्या (विद्यया) सरसयोर्ध्वाः स्वर्गं लोकमुदक्रामन् । ते मनुष्याणामन्वागमाद्बिभ्यतस्त्रयं वेदमपीळयन् ॥ २ ॥ तस्य पीळयन्त एकमेवाक्षरं नाशक्नुवन् पीळयितुमोमिति यदेतत् ॥ ३ ॥ एष उ ह वाव सरसः । सरसा ह वा एवंविदस्त्रयी विद्या भवति ॥ ४ ॥ स यां ह वै त्रय्या विद्यया सरसया जितिं जयति यामृद्धिमृध्नोति जयति तां जितिमृध्नोति तामृद्धिं य एवं वेद ॥ ५ ॥ एतद्ध वा अक्षरं त्रय्यै विद्यायै प्रतिष्ठा । ओमिति वै होता प्रातिष्ठितः, ओमित्यध्वर्युः, ओमित्युद्गाता ॥ ६ ॥ एतद्ध वा अक्षरं वेदानां त्रिविष्टपम् । एतस्मिन् वा अक्षर ऋत्विजो यजमानमाधाय स्वर्गे लोके समुद्वहन्ति तस्मादोमित्येवानुमन्त्रयेत ॥ ७ ॥

*a*) Quotation from वासं 7·21; also शब्रा 4·6·7·19; see below 3·34·2. —*b*) शब्रा 4·6·7·19. —*c*) *Taken apart?* —*d*) वासं 18·59 अन्वागन्ता यज्ञपतिर्वो अत्र; शब्रा 2·4·3·5 तद्विश्वे देवा अन्वाजग्मुः. —*e*) See above 1·8·4–5. —*f*) Cp गोब्रा 1·5·25.

## ३·२०

गुहाऽसि देवोऽस्युपवास्युप तं वायस्व योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ १ ॥ महिनासि, बहुलासि, बृहत्यासि, रोहिण्यसि, अपन्नाऽसि ॥ २ ॥ संभूर्देवोऽसि समहं भूयासम् । आभूतिरस्याभूयासम् । भूतिरसि भूयासम् ॥ ३ ॥ यास्ते प्रजा उपदिष्टा नाहं तत्र ताः पर्येमि । उप ते ता दिशामि ॥ ४ ॥ नाम मे शरीरं मे प्रतिष्ठा मे । तन्मे त्वयि तन्मे मोपहृथा इतीमां पृथिवीमवोचत् ॥ ५ ॥ तमियमागतं पृथिवी प्रतिनन्दत्ययं ते भगवो लोकः । सह नावयं लोक इति ॥ ६ ॥

यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥ ७ ॥ किं नु ते मयीति । नाम मे, शरीरं मे, प्रतिष्ठा मे । तन्मे त्वयि तन्मे पुनर्देहीति । तदस्मा इयं पृथिवी पुनर्ददाति ॥ ८ ॥ तामाह—प्र मा वहेति । किमभीति । आग्निमिति । तमाग्निमभि प्रवहति ॥ ९ ॥ सोऽग्निमाह — अभिजिदसि, आभिजय्यासम् । लोकजिदसि, लोकं जय्यासम् । अत्तिरसि, अन्नमद्यासम् । अन्नादो भवति यस्त्वैवं वेद ॥ १० ॥ संभूर्देवोऽसि, समहं भूयासम् । आभूतिरासि, आभूयासम् । भूतिरसि, भूयासम् ॥ ११ ॥ यास्ते प्रजा उपदिष्टा नाहं तव ताः पर्येमि । उप ते ता दिशामि ॥ १२ ॥ तपो मे, तेजो मे, अन्नं मे, वाङ् मे । तन्मे त्वयि । तन्मे मोपहृथा इत्यग्निमवोचत् ॥ १३ ॥ तं तथैवागतमग्निः प्रतिनन्दत्ययं ते भगवो लोकः । सह नावयं लोक इति ॥ १४ ॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥ १५ ॥ किं नु ते मयीति । तपो मे, तेजो मे, अन्नं मे, वाङ् मे । तन्मे त्वयि । तन्मे पुनर्देहीति । (तद्) अस्मा अग्निः पुनर्ददाति ॥ १६ ॥ तमाह — प्र मा वहेति ॥ १७ ॥

*a*- -*a*) Standard formula; अ 2·11·3; कौ 2·8. —*b*) ऋ 6·61·13 प्र या महिम्ना महिनासु चेकिते. —*c*) वासं 6·24 अग्नेर्वो अपन्नगृहस्य. —*d*) See below 3·20·11 —*e*) Rare form; cp मभा (CE) 4·46·17 यथा च न पराजय्यात् तथा नीतिर्विधीयताम्. —*f*) A rare occurrence : बृ 2·2·4 अत्तिर्ह वै नामैतत् यदत्त्रिरिति.

## ३·२१

किमभीति । वायुमिति । तं वायुमभि प्रवहति ॥१॥ स वायुमाह—यत् पुरस्ताद्वासीन्द्रो राजा भूतो वासि । यद्दक्षिणतो वासीशानो भूतो वासि । यत् पश्चाद्वासि वरुणो राजा भूतो वासि । यदुत्तरतो वासि सोमो राजा भूतो वासि । यदुपरिष्टादव वासि प्रजापतिर्भूतोऽव वासि ॥ २ ॥ व्रात्योऽस्येकव्रात्योऽनवसृष्टो देवानां बिलमप्यधाः ॥ ३ ॥ तव प्रजास्तवौषधयस्तवापो विचलितमनु विचलन्ति ॥ ४ ॥ संभूर्देवोऽसि, समहं भूयासम् । आभूतिरासि आभूयासम् । भूतिरसि, भूयासम् ॥ ५ ॥ यास्ते प्रजा उपदिष्टा नाहं तव ताः पर्येमि । उप ते ता दिशामि ॥ ६ ॥ प्राणापानौ मे, श्रुतं मे । तन्मे त्वयि । तन्मे मोपहृथा इति वायुमवोचत् ॥ ७ ॥ तं तथैवागतं वायुः प्रतिनन्दत्ययं ते भगवो लोकः । सह नावयं लोक इति ॥ ८ ॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥ ९ ॥ किं नु ते मयीति । प्राणापानौ मे, श्रुतं मे । तन्मे त्वयीति । तन्मे पुनर्देहीति । तदस्मै वायुर्ददाति ॥ १० ॥ तमाह—प्र मा वहेति । किमभीति । अन्तरिक्षलोकामिति । तमन्तरिक्षलोकमभि प्रवहति ॥ ११ ॥ तं तथैवागतमन्तरिक्षलोकः प्रतिनन्दत्ययं ते भगवो लोकः । सह नावयं लोक इति ॥ १२ ॥ यद्वाव मे त्वयीत्याह

तद्वाव मे पुनर्देहीति ॥ १३ ॥ किं नु ते मयीति । अयं म आकाशः स मे त्वयि । तन्मे पुनर्देहीति । तमस्मा आकाशमन्तरिक्षलोकः पुनर्ददाति ॥ १४ ॥ तमाह—प्र मा वहेति ॥ १५ ॥

*a*) अ 7·35·2 अहमश्मना बिलमप्यधाम् (our text emended after this). —*b*) पुनर् used as a preposition (उपसर्ग) as in पुनर्दाय (ऋ 10·109·7) पुनर्दाय ब्रह्मजायाम्.

## ३·२२

किमभीति । दिश इति । तं दिशोऽभि प्रवहति । तं तथैवागतं दिशः प्रतिनन्दन्त्ययं ते भगवो लोकः । सह नोऽयं लोक इति ॥ २ ॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ॥ ३ ॥ किं नु तेऽस्मास्विति । श्रोत्रमिति । तदस्मै श्रोत्रं दिशः पुनर्ददति ॥ ४ ॥ ता आह—प्र मा वहतेति । किमभीति । अहोरात्रयोर्लोकमिति । तमहोरात्रयोर्लोकमभि प्रवहन्ति ॥ ५ ॥ तं तथैवागतमहोरात्रे प्रतिनन्दतोऽयं ते भगवो लोकः । सह नोऽयं लोक इति ॥ ६ ॥ यद्वाव मे युवयोरित्याह तद्वाव मे पुनर्दत्तमिति ॥ ७ ॥ किं नु त आवयोरिति । अक्षितिरिति । तामस्मा अक्षितिमहोरात्रे पुनर्दत्तः ॥ ८ ॥ ते आह—प्र मा वहतमिति ॥ ९ ॥

*a*) ऋ 8·103·5 स धत्ते अक्षिति श्रवः; बृ 1·5·1; कौ 3·2.

## ३·२३

किमभीति । अर्धमासानिति । तमर्धमासानभि प्रवहतः ॥ १ ॥ तथैवागतमर्धमासाः प्रतिनन्दन्त्ययं ते भगवो लोकः । सह नोऽयं लोक इति ॥ २ ॥ यद्वाव मे युष्मास्वित्याह तद्वाव पुनर्दत्तेति ॥ ३ ॥ किं नु ते अस्मास्विति । इमानि क्षुद्राणि पर्वाणि । तानि मे युष्मासु । तानि मे प्रतिसंधत्तेति । तान्यस्यार्धमासाः पुनः प्रतिसंदधति ॥ ४ ॥ तानाह—प्र मा वहतेति । किमभीति । मासानिति । तं मासानभि प्रवहन्ति ॥ ५ ॥ तं तथैवागतं मासाः प्रतिनन्दन्त्ययं ते भगवो लोकः । सह नोऽयं लोक इति ॥ ६ ॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ॥ ७ ॥ किं नु तेऽस्मास्विति । इमानि स्थूलानि पर्वाणि । तानि मे युष्मासु तानि मे प्रतिसंधत्तेति । तान्यस्य मासाः पुनः प्रतिसंदधति ॥ ८ ॥ तानाह—प्र मा वहतेति ॥ ९ ॥

## ३·२४

किमभीति । ऋतूनिति । तमृतूनाभि प्रवहन्ति ॥ १ ॥ तं तथैवागतमृतवः प्रतिनन्दन्ति—अयं ते भगवो लोकः । सह नोऽयं लोक इति ॥ २ ॥ यद्वाव मे

युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ॥ ३ ॥ किं नु तेऽस्मास्विति । इमानि ज्यायांसि पर्वाणि । तानि मे युष्मासु तानि मे प्रतिसंधत्तेति । तान्यस्यर्तवः पुनः प्रतिसंदधति ॥४॥ तानाह—प्र मा वहतेति । किमभीति । संवत्सरमिति । तं संवत्सरमाभि प्रवहन्ति ॥ ५ ॥ तं तथैवागतं संवत्सरः प्रतिनन्दति — अयं ते भगवो लोकः । सह नावयं लोक इति ॥ ६ ॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥ ७ ॥ किं नु ते मयीति । अयं म आत्मा[a] । स मे त्वयि तन्मे पुनर्देहीति । तमस्मा आत्मानं संवत्सरः पुनर्ददाति ॥ ८ ॥ तमाह—प्र मा वहेति ॥ ९ ॥

*a*) ऋ 10·33·9 शतात्मा चन जीवति.

## ३·२५

किमभीति । दिव्यान् गन्धर्वानिति । तं दिव्यान् गन्धर्वानाभि प्रवहति ॥ १ ॥ तं तथैवागतं दिव्या गन्धर्वाः प्रतिनन्दन्ति — अयं ते भगवो लोकः । सह नोऽयं लोक इति ॥ २ ॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ॥ ३ ॥ किं नु तेऽस्मास्विति । गन्धो[a] मे, मोदो[b] मे, प्रमोदो[b] मे । तन्मे युष्मासु, तन्मे पुनर्दत्तेति । तदस्मै दिव्या गन्धर्वाः पुनर्ददति ॥ ४ ॥ तानाह—प्र मा वहतेति । किमभीति । अप्सरस इति । तमप्सरसोऽभि प्रवहन्ति ॥ ५ ॥ तं तथैवागतमप्सरसः प्रतिनन्दन्ति—अयं ते भगवो लोकः । सह नोऽयं लोक इति ॥ ६ ॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति । किं नु तेऽस्मास्विति । हसो मे, क्रीळा मे, मिथुनं मे[c] । तन्मे युष्मासु, तन्मे पुनर्दत्तेति । तदस्मा अप्सरसः पुनर्ददति ॥ ८ ॥ ता आह—प्र मा वहतेति ॥ ९ ॥

*a*) गन्ध and गन्धर्व are here interrelated. —*b*) तै 2·5 मोदो दक्षिणः पक्षः, प्रमोद उत्तरः पक्षः. —*c*) ऋ 10·18·3 नृतये हसाय; छां 7·25. आत्मक्रीडः आत्ममिथुनः आत्मानन्दः.

## ३·२६

किमभीति । दिवमिति । तं दिवमभि प्रवहन्ति ॥ १ ॥ तं तथैवागतं द्यौः प्रतिनन्दति—अयं ते भगवो लोकः । सह नावयं लोक इति ॥ २ ॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥ ३ ॥ किं नु ते मयीति । तृप्तिरिति । सकृत् तृप्तेव ह्येषा । तामस्मै तृप्तिं द्यौः पुनर्ददाति ॥ ४ ॥ तमाह—प्र मा वहेति । किमभीति । देवानिति । तं देवानाभि प्रवहति ॥ ५ ॥ तं तथैवागतं देवाः प्रतिनन्दन्ति—अयं ते भगवो लोकः ।

सह नोऽयं लोक इति ॥ ६ ॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ॥ ७ ॥ किं नु तेऽस्मास्विति । अमृतमिति[b] । तदस्मा अमृतं देवाः पुनर्ददाति ॥ ८ ॥ तानाह—प्र मा वहतेति ॥ ९ ॥

*a*) तै 3·10 वृत्तिरिति वृष्टौ. —*b*) तै 3·10 प्रजातिरमृतमानन्द इत्युपस्थे.

## ३·२७

किमभीति[a] । आदित्यमभि प्रवहन्ति । स आदित्यमाह—विभूः परस्तात्, संपत् पश्चात् । सम्यङ् त्वमसि । समीचो मनुष्यानरोषीः । रुषतस्त ऋषिः पाप्मानं हन्ति । अपहतपाप्मा भवति यस्त्वैवं वेद ॥ २ ॥ संभूर्देवोऽसि, समहं भूयासम् । आभूतिरसि, आभूयासम् । भूतिरसि, भूयासम् ॥ ३ ॥ यास्ते प्रजा उपदिष्टा नाहं तत्र ताः पर्येमि । उप ते ता दिशामि ॥ ४ ॥ ओजो मे, बलं मे, चक्षुर्मे । तन्मे त्वयि मोपहृथा इत्यादित्यमवोचत् ॥ ५ ॥ तं तथैवागतमादित्यः प्रतिनन्दति—अयं ते भगवो लोकः । सह नावयं लोक इति ॥ ६ ॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥ ७ ॥ किं नु ते मयीति । ओजो मे, बलं मे, चक्षुर्मे । तन्मे त्वयि । तन्मे पुनर्देहीति । तदस्मा आदित्यः पुनर्ददाति ॥ ८ ॥ तमाह—प्र मा वहेति । किमभीति । चन्द्रमसमिति । तं चन्द्रमसमभि प्रवहति ॥ ९ ॥ स चन्द्रमसमाह—सत्यस्य[b] पन्था न त्वा जहाति । अमृतस्य पन्था न त्वा जहाति ॥ १० ॥ नवो[c] नवो भवासि जायमानो भरो नाम ब्राह्मण उपास्से । तस्मात् ते सत्या उभये देवमनुष्या अन्नाद्यं भरन्ति । अन्नादो भवति यस्त्वैवं वेद ॥ ११ ॥ संभूर्देवोऽसि, समहं भूयासम् । आभूतिरसि, आभूयासम्, भूतिरसि, भूयासम् । ॥ १२ ॥ यास्ते प्रजा उपदिष्टा नाहं तव ताः पर्येमि । उप ते ता दिशामि ॥ १३ ॥ मनो मे, रेतो मे, प्रजा मे, पुनः संभूतिर्मे । तन्मे त्वयि तन्मे मोपहृथा इति चन्द्रमसमवोचत् ॥ १४ ॥ तं तथैवागतं चन्द्रमाः प्रतिनन्दति—अयं ते भगवो लोकः । सह नावयं लोक इति ॥ १५ ॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥ १६ ॥ किं नु ते मयीति । मनो मे, रेतो मे, प्रजा मे, पुनः संभूतिर्मे । तन्मे त्वयि । तन्मे पुनर्देहीति । तदस्मै चन्द्रमाः पुनर्ददाति ॥ १७ ॥ तमाह—प्र मा वहेति ॥ १८ ॥

*a*) Shall we supply आदित्यमिति । तम् *à la* 3·26 *a*? —*b*) Is this metrical? —*c*) ऋ 10·85·19 (with भवति for भवासि).

## ३·२८

किमभीति । ब्रह्मणो लोकमिति । तमादित्यमभि प्रवहति ॥ १ ॥ स आदित्यमाह—प्र मा वहेति । किमभीति । ब्रह्मणो लोकमिति । तं चन्द्रमसमभि प्रवहति ।

स एवमेते देवते अनुसंचरति ॥ २ ॥ एषोऽन्तोऽतः पर[a]ः प्रवाहो नास्ति। यानु कांश्चातः प्राचो लोकानभ्यवादिष्म, ते सर्व आप्ता भवन्ति, ते जितास्तेष्वस्य कामचारो भवति य एवं वेद ॥ ३ ॥ स यदि कामयेत पुनरिहाऽऽजा[b]येयेति, यस्मिन् कुलेऽभिध्यायेद्यादि ब्राह्मणकुले यदि राज[c]कुले तस्मिन्नाजायते। स एतमेव लोकं पुनः प्रजानन्नभ्यारोहन्नेति ॥ ४ ॥ तदु होवाच शाट्यायनिर्बहुर्व्या[d]हितो वा अयं बहुशो लोकः। एतस्य वै कामाय नु ब्रुवते (वा) श्राम्यन्ति वा, क एतत् प्रास्य पुनरिहेयादत्रै[e]वं स्यादिति ॥ ५ ॥

जै 3·28·1 f is similar to बृ 5·12 and कौ 1·2, differing considerably.

*a*) बृ 2·3·6 नाहि एतस्मादन्यत् परमस्ति. —*b*) क 1·6 सस्यमिवाजायते; कौ 4·11 प्रतिरूपो हैवास्य प्रजायामाजायते. —*c*) वासं 22·22 आ ब्रह्मन् ब्राह्मणो जायताम्। आ राष्ट्रे...... —*d*) बृ 5·11·1 एतद्वै परमं तपः, यद्व्याहितस्तप्यते; छां 7·10·1 व्याधीयन्ते प्राणाः. —*e*) बृ 5·10·1 स लोकमागच्छति अशोकमहिमम्.

## ३·२९

उच्चैः[a]श्रवा ह कौपयेयः कौरव्यो राजास। तस्य ह केशी दार्भ्यः पाञ्चालो राजा स्व[b]स्रीय आस। तौ हान्योन्यस्य प्रियावासतुः ॥ १ ॥ स होच्चैःश्रवाः कौपयेयोऽस्माल्लोकात् प्रे[c]याय। तस्मिन् प्रेते केशी दार्भ्योऽरण्ये मृगयां चचाराप्रियं विनिनीषमाणः ॥ २ ॥ स ह तथैव पल्यय[d]मानो मृगान् प्रसरन्नन्तरेणैवोच्चैःश्रवसं कौपयेयमाधिजग[e]ाम ॥ ३ ॥ तं होवाच—दृप्[f]यामि सं[g]वी३ज्जानामि। न दृप्यसीति होवाच जानासि। स एवास्मि यं मा मन्यस इति ॥ ४ ॥ अथ यद्भगव आहुरिति होवाच य आविर्भवन्त्यन्येऽस्य लोकमु पश्यन्तीत्यथ कथमशक्तो म आविर्भवितुमिति ॥ ५ ॥ ओमिति होवाच, यदा वै तस्य लोकस्य गोप्तारमविदेऽतस्त आविरभूवमाप्रियं चास्य विनेष्याम्यनु चैनं शासिष्यामीति ॥ ६ ॥ तथा भगव इति होवाच। तं वै नु त्वा परिष्वजा इति। तं ह स्म परिष्वजमानो यथा[h] धूमं वाऽपीयाद्वायुं वाकाशं वाग्न्यर्चिं वाऽपो वैवं ह स्मैनं व्येति। न ह स्मैनं परिष्वङ्गायोपल[i]भते ॥ ७ ॥

*a*) Cp उपमश्रवाः (ऋ 10·33·6–7). —*b*) तैसं 2·5·1·1 विश्वरूपो वै त्वाष्ट्रः स्वस्रीयोऽसुराणाम्. —*c*) छां 8·3·1 यो यो हि अस्य इतः प्रैति. —*d*) शब्रा 2·3·2·5 आपि कामं पल्ययेत; बृ 4·3·2 पल्ययते कर्म कुरुते; पा 8·2·19. —*e*) Cp the story of भृगु in शब्रा 11·6·1·1f; जैब्रा 1·42–44. —*f*) ऐब्रा 6·33 अदृपत् पिता नः; 2·7 स यां वै दृप्तो वदति उन्मत्तः सा वै राक्षसी वाक्; शब्रा 3·2·1·9 दृप्स्यति वा प्र वा

पतिष्यति. —g) Why प्लुत? —h) Cp Homer, *Iliad* 23·99: He spake and reached forth with hands, but clasped him not; for like a vapour the spirit was gone beneath the earth with a faint shriek.' i) छां ८·3·1 दर्शनाय लभते.

## ३·३०

स होवाच — यद्वै ते पुरा रूपमासीत् तत् ते रूपम्। न तु त्वा परिष्वङ्गायोपलभ इति॥ १॥ ओमिति होवाच, ब्राह्मणो वै मे साम विद्वान् साम्नोदगायत्। स मेऽशरीरेण साम्ना शरीराण्यधुनोत्। तद्यस्य वै किल साम विद्वान् साम्नोद्गायति देवतानामेव सलोकतां गमयति॥ २॥ पैतङ्गः[a] प्राजापत्य इति होवाच प्रजापतेः प्रियः[b] पुत्र आस। स तस्मा एतत् सामाब्रवीत्। तेन स ऋषीणामुदगायत्। त एत ऋषयो धूतशरीरा[c] इति॥ ३॥ एतेनो एव साम्नेति होवाच प्रजापतिर्देवानुदगायत्। त एत उपरि देवा धूतशरीरा इति॥ ४॥ तस्मिन् हैनमनुशशास। तं हानुशिष्योवाच—यः स्मैवैतत् साम विद्यात् स स्मैव त उद्गायत्विति॥ ५॥ स हानुशिष्ट आजगाम। स ह स्म कुरुपञ्चालानां ब्राह्मणाननु[d]पृच्छमानश्चरति॥ ६॥

a) Name of the ऋषि of ऋ 10·177; कौब्रा 25·8 (?). —b) Cp 2·10·1 above. —c) छां 8·13·1 धूत्वा शरीरम्. —d) बृ 3·1·1; कौ 4·1.

## ३·३१

व्यूढ[a]च्छन्दसा वै द्वादशाहेन यक्ष्यमाणोऽस्मि। स यो वस्तत् साम वेद यदहं वेद, स एव मे उद्गास्यति। मीमांसध्व[b]मिति॥ १॥ तस्मै ह मीमांसमानानामेकश्चन (न) संप्रत्यभिदधाति॥ २॥ स ह तथैव पल्ययमानः श्मशाने वा वने वाऽऽन्ध्रती शयानमुपधावयांचकार[c]। तं ह याचमानः प्रजहौ॥ ३॥ तं होवाच—कोऽसीति। ब्राह्मणोऽस्मि प्रातृ[d]दो भाल्ल इति॥ ४॥ स किं वेत्थेति सामेति॥ ५॥ ओमिति होवाच। व्यूढच्छन्दसा वै द्वादशाहेन यक्ष्यमाणोऽसि। स यदि तत् साम वेत्थ यदहं वेद, त्वमेव म उद्गास्यसि। मीमांसस्वेति॥ ६॥ तस्मै ह मीमांसमानस्तदेव संप्रत्याभिदधौ॥ ७॥ तं होवाच—अयं म उद्गास्यतीति॥ ८॥ तस्मै ह कुरुपञ्चालानां ब्राह्मणा असूयन्त आहुः—एषु ह वा अयं कुल्येषु सत्सूद्गास्यति। कस्मा अयमलमिति॥ ९॥ अलं न्वै मह्यमिति ह स्माह। सैवालम्भ[e]स्यालम्मता। यदुद्गातास्य हालम्भमेवोज्जगौ। तस्मादलम्मो राजोद्गातेत्याख्यापयन्ति॥ १०॥

*a*) ऐब्रा 4·27 प्रजापतिर्व्यूढच्छन्दसं द्वादशाहमपश्यत्; शब्रा 4·5·9·1 तवैतद्द्वादशाहेन व्यूढच्छन्दसा यजते; तांब्रा 10·5·14 यत्कामो व्यूढच्छन्दसा यजते सोऽस्मै कामः समृध्यते; जैब्रा 3·7 स एतं व्यूढच्छन्दसा द्वादशाहमपश्यत्. —*b*) तैसं 7·5·7·1 उत्सृज्या३म् नोत्सृज्या ३ मिति; कासं 36·14 अभिधार्या३ नाभिधार्या३ इति मीमांसन्ते; अ 9·1·3 पृथङ् नरो बहुधा मीमांसमानाः; 12·4·42 तां देवा अमीमांसन्त वशेया३मवशेति; ऐब्रा 4·27 तस्मादप्येतर्हि गव्यं मीमांसमानाः पृच्छन्ति–सन्ति तत्रोषा इति; शब्रा 14·4·2·29 एतान्निदितं मीमांसितम्; बृ 2·8·1 अथातो व्रतमीमांसा; छां 5·11·1 महाश्रोत्रियाः समेत्य मीमांसां चक्रुः; तै 2·8 सैषाऽऽनन्दस्य मीमांसा; के 2·1 अथ नु मीमांस्यमेव ते मन्ये विदितम्. —*c*) आवृती शयानम्—for the long vowel (ई), cp ऋ 7·103·2 सरसी शयानम्; आवृत् (*lodging, inn*), cp ऋ 3·43·3 आवृते सोमपीतये; 5·46·1 नास्या वश्मि विमुचं नावृतम्. —*d*) बृ 5·12·1 तद्ध स्माह प्रातृदः पितरम् ।...स ह स्माह पाणिना मा प्रातृद. —*e*) ऋ 10·135·2 असूयन्नभ्यचाकशम्, तस्मा अस्पृहयं पुनः; शब्रा 1·2·5·4 ते ह असुरा असूयन्त इवोचुः; 3·2·1·19 तस्मादु स्त्री पुंसोपमन्त्रिताऽऽरकादिवाग्रेऽसूयति. —*f*) पा 4·1·139–140. —*g*) तांब्रा 13·10·8 को न्वयं कस्मा अलमिलन्नु वै मह्यमिति तदलम्मस्यालम्मत्वम्.

## ३·३२

तद्ध सात्यकीर्ता[a] आहुर्या[b] वयं देवतामुपास्महे एकमेव वयं तस्यै देवतायै रूपं गव्यादिशाम एकं वाहन[b1] एकं हस्तिन्येकं पुरुष एकं सर्वेषु भूतेषु । तस्या एवेदं देवतायै सर्वं रूपमिति ॥ १ ॥ तदेतदेकमेव रूपं प्राण एव । यावद्ध्येव प्राणेन प्राणिति, तावद्रूपं भवति यद्रूपं भवति ॥ २ ॥ तदथ यदा प्राण उत्क्रामति दार्वेवे[c1] भूतोऽनर्थ्यः परिशिष्यते न किंचन रूपम् ॥ ३ ॥ तस्यान्तरात्मा तपः । तस्मात् तप्यमानस्योष्णतरः प्राणो भवति ॥ ४ ॥ तपसोऽन्तरात्माग्निः । स निरुक्तः । तस्मात् स दहति ॥ ५ ॥ अथाधिदेवतम् । इयमेवैषा देवता योऽयं पवते । तस्मिन्नेतस्मिन्नापोऽन्तः । तदन्नम् । सोऽरूक्ष[d] उपासितव्यः । यदस्मिन्नापोऽन्तस्तेनारूक्षः ॥ ६ ॥ तस्यान्तरात्मा तपः । तस्मादेष आतपत्युष्णतरः पवते ॥ ७ ॥ तपसोऽन्तरात्मा विद्युत् । स निरुक्तः । तस्मात् सोऽपि दहति ॥ ८ ॥ तानि वा एतानि चत्वारि साम[e] प्राणो वाङ् मनः स्वरः । स एष प्राणो वाचा[f] करोति मनोनेत्रः । तस्य स्वर[g] एव प्रजाः । प्रजावान् भवति य एवं वेद ॥ ९ ॥

*a*) Only here in Vedic literature; a school of teachers. —*b*) ऐब्रा 4·9 गर्दभः सर्वेषां वाहनानामवाशिष्टः; शब्रा 1·8·2·9 येन वाहनेन धावयेत्. —*b*1) ऋ 6·3·4 द्रविर्न (*smelter*) द्रावयति दारु धक्षत्. —*c*) शब्रा 3·8·3·15 (अपक्रामति for उत्क्रामति; and शेते for परिशिष्यते); 4·1·5·2 इमं जीर्णिं कृत्यारूपं अनर्थ्यं मन्यमाना लोष्टैर्विपिपिषुः. —*d*) ऋ 4·11·1 अरुक्षितं दृशे आ रूपे अन्नम्; तै 1·11 अलूक्षा धर्मकामाः स्युः. —*e*) Nom. pl. like धाम in ऋ 10·45·2 विद्मा ते धाम विभृता पुरुत्रा ? —*f*) See above 1·33·4. —*g*) Cp above 2·2·6; छां 1·13·2 प्राणः स्वरः.

## ३·३३

स यो वायुः प्राण एव सः । योऽग्निर्वागेव[a] सा । यश्चन्द्रमा मन एव तत् । य आदित्यः[b] स्वर एव सः । तस्मादेतमादित्यमाहुः स्वरं[c] एतीति ॥ १ ॥ स यो ह वा अमूर्देवता उपास्ते या अमूराधिदेवतं दूरूपा[d] वा एता दुरनुसंप्राप्या इव । कस्तद्वेद यद्येता अनु वा संप्राप्नुयान्न वा ॥ २ ॥ अथ य एना अध्यात्ममुपास्ते स हान्तिदेवो[e] भवति । निर्जीर्यन्तीर्[f] वा इत एताः । अ [ त ] स्य वा एताः शरीरस्य सह प्राणेन निर्जीर्यन्ति । क उ एव तद्वेद यद्येता अनु वा संप्राप्नुयान्न वा ॥ ३ ॥ अथ य एना उभयीरेकधा भवन्तीर्वेद स एवानुष्ठ्या[g] साम वेद, स आत्मानं वेद, स ब्रह्म वेद ॥४॥ तदाहुः — प्रादेश[h]मात्राद्वा इत एता एकं भवन्ति । अतो ह्ययं प्राणः स्वर्य उपर्युपरि वर्तत इति ॥ ५ ॥ अथ हैक आहुः — चतुरङ्गुलाद्वा इत एता एकं भवन्तीति । अतो ह्येवायं प्राणः स्वर्य उपर्युपरि वर्तत इति ॥ ६ ॥ स एष ब्रह्मण आवर्तः[i] । स य एवमेतं ब्रह्मण आवर्तं वेदाभ्येनं प्रजाः पशव आवर्तन्ते सर्वमायुरेति ॥ ७ ॥ स यो हैवं विद्वान् प्राणेन प्राण्यापानेनापान्य मनसैता उभयीर्देवता आत्मन्येत्य मुख आधत्ते तस्य सर्वमाप्तं भवति, सर्वं जितम् । न हास्य कश्चन कामोऽनाप्तो भवति य एवं वेद ॥ ८ ॥

*a* ) छां 3·13·3 सा वाक् सोऽग्निः. —*b* ) छां 1·3·2 स्वर इति इममाचक्षते. —*c* ) छां 1·5·1 ओमित्येष स्वरन्नेति. —*d* ) Only here in Vedic literature. —*e* ) ऋ 1·180·7 पाथो हि ष्मा वृषणावान्तिदेवम्. —*f* ) Cp निर्जरा in Jain philosophy. —*g* ) Cp अनुष्ठुया in ऋ 4·4·14 ( अनुष्ठ्या from अनुष्ठुया ? ); ऐब्रा 1·8 यदेवानुष्ठ्या चक्षुषा प्रजानात्यथ प्रजानाति; शब्रा 1·4·2·17 अनुष्ठ्या यजेति यदाह सुयजा च यजेति. —*h* ) शब्रा 3·5·4·5तान् प्रादेशमात्रं विना परिलिखति; छां 5·18·1 प्रादेशमात्रमभिविमानम्. —*i* ) छां 4·15·6 मानवमावर्तं नावर्तन्ते.

## ३·३४

तदेतन्मिथुनं यद्वाक् च प्राणश्च । मिथुनमृक्सामे[a] । आचतुरं[b] वाव मिथुनं प्रजननम् ॥ १ ॥ तद्यत्राद आह सोमः[c] पवत इति वोपावर्तध्वमिति वा तत् सहैव वाचा मनसा प्राणेन स्वरेण हिङ्कुर्वन्ति । तद् हिङ्कारेण मिथुनं क्रियते ॥ २ ॥ सहैव वाचा मनसा प्राणेन स्वरेण निधनमुपयन्ति । तन्निधनेन मिथुनं क्रियते ॥ ३ ॥ तत् सप्तविधं साम्नः । सप्तकृत्व उद्गातात्मानं च यजमानं च शरीरात् प्रजनयति ॥४॥ यादृशस्यो ह वै रेतो भवति तादृशं संभवति, यदि वै पुरुषस्य पुरुष एव, यदि गोगौरेव, यद्यश्वस्याश्व एव; यदि मृगस्य मृग एव । यस्यैव[d] रेतो भवति तदेव संभवति ॥ ५ ॥

तद्यथा ह वै सुवर्णं हिरण्यमग्नौ प्रास्यमानं कल्याणतरं-कल्याणतरं भवति, एवमेव कल्याणतरेण-कल्याणतरेणात्मना संभवति य एवं वेद । तदेतदृचाभ्यनूच्यते—॥७॥

a) छां 1·1·5 ऋक्च साम च; पा 5·4·77. —b) मैसं 1·7·3 आचतुरं हि द्वन्द्वं मिथुनम्; जैब्रा 3·42 आचतुरं मिथुनं प्रजननम्; पा 8·1·15 द्वन्द्वं रहस्यमर्यादावचन......, काशिका-आचतुरं हीमे पशवो द्वन्द्वं मिथुनायन्ते. —c) See above 3·19·1. —d) शब्रा 6·6·1·6 यादृग्वै योनौ रेतः सिच्यते तादृग् जायते; 7·4·1·1 यादृशाद्वै जायते तादृङ्ङेव भवति; छां 5·10·6 यो रेतः सिञ्चति तद्भूय एव भवति. —e) तैसं 1·5·1·2 तस्माद्रजतं हिरण्यमदाक्षिण्यम्, अश्रुजं हि; तैब्रा 1·4·7·4 सुवर्णं हिरण्यं द्वेधा विच्छिद्य ( Note the contrast between सुवर्णं हिरण्यम् and रजतं हिरण्यम् ). —f) बृ 4·4·4 नवतरं कल्याणतरं रूपम्.

## ३·३५

पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः ।
समुद्रे अन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः ॥ १ ॥ इति ॥

पतङ्गमक्तमिति । प्राणो वै पतङ्गः । पतन्निव ह्येष्वङ्गेष्वतिरथमुदीक्षते । पतङ्ग इत्याचक्षते ॥ २ ॥ असुरस्य माययेति । मनो वा असुरम् । तद्ध्यसुषु रमते तस्यैष माययाक्तः ॥ ३ ॥ हृदा पश्यन्ति मनसा विपश्चित इति । हृदैव ह्येते पश्यन्ति यन्मनसा विपश्चितः ॥ ४ ॥ समुद्रे अन्तः कवयो विचक्षत इति । पुरुषो वै समुद्र एवंविद उ कवयः । त इमां पुरुषेऽन्तर्वाचं विचक्षते ॥ ५ ॥ मरीचीनां पदमिच्छन्ति वेधस इति । मरीच्य इव वा एता देवता यदग्निर्वायुरादित्यश्चन्द्रमाः ॥ ६ ॥ न ह वा एतासां देवतानां पदमस्ति । पदेनो ह वै पुनर्मृत्युरन्वेति ॥ ७ ॥ तदेतदनन्वितं साम पुनर्मृत्युना । अति पुनर्मृत्युं तरति य एवं वेद ॥ ८ ॥

a) ऋ 10·177·1. —b) Popular etymology. —c) अतिरथम् is used adverbially ? —d) See नि 3·9 for various etymologies. —e) ऋ 10·129·4 हृदि प्रतीष्या कवयो मनीषा; क 6·9 हृदा मनीषा मनसाभिक्लृप्तः; श्वे 4·17. —f) ऋ 4·58·1 समुद्रादूर्मिर्मधुमाँ उदारत्; प्र 6·5 समुद्रायणाः...पुरुषायणाः. —g) मरीच्यः (*f. nom. pl.*) ऋ 10·57·12 यत्ते मरीचीः प्रवतो मनो जगाम दूरकम्; अ 4·38·5 मरीचीर्वा या अनुसंचरन्ति; वासं 18·39 सूर्यो गन्धर्वो मरीचयोऽप्सरसः; 25·9 मरीचिभिर्विप्रुड्भिः; शब्रा 5·3·4·21 अथ मरीचीः अञ्जलिना संगृह्य; ऐ 1·2 अम्भो मरीचीर्मरम्; प्र 4·2 यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः... एकीभवन्ति; मै 6·31 अप्सरसो मानवीयाश्च मरीचयो नाम.

## ३·३६

पतङ्गो वाचं मनसा बिभर्ति तां गन्धर्वोऽवदद्गर्भे अन्तः ।
तां द्योतमानां स्वर्यं मनीषामृतस्य पदे कवयो नि पान्ति ॥ १ ॥ इति ॥

पतङ्गो वाचं मनसा बिभर्तीति । प्राणो वै पतङ्गः । स इमां वाचं मनसा बिभर्ति ॥ २ ॥ तां गन्धर्वोऽवदद्गर्भे अन्तरिति । प्राणो वै गन्धर्वः पुरुष उ गर्भः । स इमां पुरुषेऽन्तर्वाचं वदति ॥ ३ ॥ तां द्योतमानां स्वर्यं मनीषामिति । स्वर्या ह्येषा मनीषा यद्वाक् ॥ ४ ॥ ऋतस्य पदे कवयो नि पान्तीति । मनो वा ऋतमेवंविद उ कवयः । ओमित्येतदेवाक्षरममृतम् । तेन यदृचं मीमांसन्ते यद्यजुर्यत् साम तदेनां निपान्ति ॥ ५ ॥

*a*) ऋ 10·177·2.

## ३·३७

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः ॥ १ ॥ इति ॥

अपश्यं गोपामनिपद्यमानमिति । प्राणो वै गोपाः । स हीदं सर्वमनिपद्यमानो गोपायति ॥ २ ॥ आ च परा च पथिभिश्चरन्तमिति । तद्ये च ह वा इमे प्राणा अमी च रश्मय एतैर्ह वा एष एतदा च परा च पथिभिश्चराति ॥ ३ ॥ स सध्रीचीः स विषूचीर्वसान इति । सध्रीचीश्च ह्येष एतद्विषूचीश्च प्रजा वस्ते ॥ ४ ॥ आ वरीवर्ति भुवनेष्वन्तरिति । एष ह्येवैषु भुवनेष्वन्तरा वरीवर्ति ॥ ५ ॥ स एष इन्द्र उद्गीथः । स यदैष इन्द्र उद्गीथ आगच्छाति नैवोद्गातुश्चोपगातॄणां च विज्ञायते । इत एवोर्ध्वः स्वरुदेति । स उपरि मूर्ध्नो लेलायति ॥ ६ ॥ स विद्यादागमदिन्द्रो नेह कश्चन पाप्मा न्यङ्गः परिशेक्ष्यत इति । तस्मिन् ह न कश्चन पाप्मा न्यङ्गः परिशिष्यते ॥ ७ ॥ तदेतद्भ्रातृव्यं साम । न ह वा इन्द्रः कंचन भ्रातृव्यं पश्यते । स यथेन्द्रो न कंचन भ्रातृव्यं पश्यत एवमेव (न) कंचन भ्रातृव्यं पश्यते य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ॥ ८ ॥

*a*) ऋ 10·177·3. —*b*) ऋ 10·162·5 जारो भूत्वा निपद्यते; 10·146·5 स्वादोः फलस्य जग्ध्वाय यथाकामं निपद्यते. —*c*) ई 1 ईशावास्यमिदं सर्वम्. —*d*) See above 1·45·6f. —*e*) बृ 4·3·7; मुं 1·2·2,4; श्वे 3·18.

## ३·३८

प्रजापतिं ब्रह्मासृजत । तमपश्यमसुखमसृजत ॥ १ ॥ तमप्रपश्यमसुखं शयानं ब्रह्माविशत् । पुरुष्यं तत् । प्राणो वै ब्रह्म । प्राणो वावैनं तदाविशत् ॥ २ ॥ स उदतिष्ठत् प्रजानां जनयिता । तं रक्षांस्यन्वसचन्त ॥ ३ ॥ तमेतदेव साम गायन्न-त्रायत । यद्गायन्नत्रायत तद्गायत्रस्य गायत्रत्वम् ॥४॥ त्रायत एनं सर्वस्मात् पाप्मनो

मुच्यते य एवं वेद ॥ ५ ॥ तमुपास्मै गायता नर इत्यृचाऽऽश्रवणीयेनोपागायन् ॥ ६ ॥ यदुपास्मै गायता नर इति तेन गायत्रमभवत् । तस्मादेषैव प्रतिपत् कार्या ॥ ७ ॥ पवमानायेन्दावा आभि देवमिया-हुंभा-क्षाता इति षोडशाक्षराण्यभ्यगायन्त । षोडशकलं वै ब्रह्म । कलाश एवैनं तद् ब्रह्माविशत् ॥ ८ ॥ तदेतच्चतुर्विंशत्यक्षरं गायत्रम् । अष्टाक्षरः प्रस्तावः । षोडशाक्षरं गीतम् । तच्चतुर्विंशतिः संपद्यते । चतुर्विंशत्यर्धमासः संवत्सरः । संवत्सरः साम ॥ ९ ॥ ता ऋचः शरीरेण मृत्युरन्वैत् । तद्यच्छरीरवत्तन्मृत्योरात्तम् । अथ यदशरीरं तदमृतम् । तस्याशरीरेण साम्ना शरीराण्यधूनोत् ॥ १० ॥

*a*) ऋ 1·148·5 अन्धा अपश्या न दभन् अभिख्या; छां 7·26·2 न पश्यो मृत्युं पश्यति; सर्वं ह पश्यः पश्यति; मु 3·1·3 यदा पश्यः पश्यते रुक्मवर्णम्. —*b*) ऋ 7·29·4 उतो घा ते पुरुष्या३ इदासन् (the only occurrence in ऋ). —*c*) See above 1·48·8. —*d*) Similar etymology in बृ 5·15·7. —*e*) ऋ 9·11·1. —*f*) शब्रा 1·5·1·1 यज्ञो वा आश्रावणम् ...तस्मात् प्रवरायाश्रावयाति. —*g*) ऐब्रा 3·29 तस्मात् सावित्री प्रतिपद् भवति; जैब्रा 2·221 आनुष्टुप् प्रतिपद् भवति. —*h*) ऋ 9·11·1 पवमानाय इन्दवे अभि देवाँ इयक्षते. —*i*) शब्रा 11·1·6·36 षोडशकलो वै पुरुषः; बृ 1·5·14; छां 6·7·1; प्र 6·1; see below 4·25·2. —*j*) Cp पर्वशः etc. in ऋ 1·57·6 त्वं...पर्वशः चकर्तिथ. —*k*) See समैत् in 1·48·7 above. —*l*) छां 8·12·1 आत्तं मृत्युना.

## ३·३९

ओवा३चोवा३चोवा३च् हुं भा ओवा इति षोडशाक्षराण्यभ्यगायत । षोडशकलो वै पुरुषः । कलाश एवास्य तच्छरीराण्यधूनोत् ॥ १ ॥ स एषोऽपहतपाप्मा धूतशरीरः । तदेकैकियावृत्तियुदासङ्गायत्यो इति उदास (?) । आ इति आवृत् । यत् वागिति तद्ब्रह्म । तदिदमन्तरिक्षं, सोऽयं वायुः पवते । हुमिति चन्द्रमाः । भा इत्यादित्यः ॥ २ ॥ एतस्य ह वा इदमक्षरस्य क्रतोर्भातीत्याचक्षते ॥ ३ ॥ एतस्य ह वा इदमक्षरस्य क्रतोरभ्रमित्याचक्षते ॥ ४ ॥ एतस्य ह वा इदमक्षरस्य क्रतोः कुभ्रमित्याचक्षते ॥ ५ ॥ एतस्य ह वा इदमक्षरस्य क्रतोः शुभ्रमित्याचक्षते ॥ ६ ॥ एतस्य ह वा इदमक्षरस्य क्रतोर्ऋषभ इत्याचक्षते ॥ ७ ॥ एतस्य ह वा इदमक्षरस्य क्रतोर्दर्भ इत्याचक्षते ॥ ८ ॥ एतस्य ह वा इदमक्षरस्य क्रतोर्यो भातीत्याचक्षते ॥ ९ ॥ एतस्य ह वा इदमक्षरस्य क्रतोः संभवतीत्याक्षते ॥ १० ॥ तत् किञ्च भा३ इति च भा३ इति च तदेतन्मिथुनं गायत्रम् । प्र मिथुनेन जायते य एवं वेद ॥ ११ ॥

*a*) The text seems to be obscure and corrupt. —*b*) जै 3·39·3f are similar to जै 1·4·2 f. —*c*) मैसं 2·5·3 तस्य सहस्रस्य अग्रतः कुभ्र उदैत्; तैसं 2·1·5·2 भवति साहस्री लक्ष्मर्यिद्धुन्नतः.

## ३·४०

तदेतदमृतं गायत्रम् । एतेन वै प्रजापतिरमृतत्वमगच्छदेतेन देवा एतेनर्षयः ॥ १ ॥ तदेतद् ब्रह्म प्रजापतयेऽब्रवीत् । प्रजापतिः परमेष्ठिने प्राजापत्याय । परमेष्ठी प्राजापत्यो देवाय सवित्रे । देवः सविताग्नये । अग्निरिन्द्राय । इन्द्रः काश्यपाय । काश्यप ऋष्यशृङ्गाय काश्यपाय । ऋष्यशृङ्गः काश्यपो देवतरसे श्यावसायनाय काश्यपाय । देवतराः श्यावसायनः काश्यपः श्रुषाय वाह्नेयाय काश्यपाय । श्रुषो वाह्नेयः काश्यप इन्द्रोताय दैवापाय शौनकाय । इन्द्रोतो दैवापः शौनको दृतय ऐन्द्रोतये शौनकाय । दृतिरैन्द्रोतिः शौनकः पुलुषाय प्राचीनयोग्याय । पुलुषः प्राचीनयोग्यः सत्ययज्ञाय पौलुषये प्राचीनयोग्याय । सत्ययज्ञः पौलुषिः प्राचीनयोग्यः सोमशुष्माय सात्ययज्ञाय प्राचीनयोग्याय । सोमशुष्मः सात्ययज्ञिः प्राचीनयोग्यो हृत्स्वाशयायाऽऽल्लकेयाय माहाव्रषाय राज्ञे । हृस्वाशय आल्लकेयो माहाव्रषो राजा जनश्रुताय काण्ड्वियाय । जनश्रुतः काण्ड्वियः सायकाय जानश्रुतेयाय काण्ड्वियाय । सायको जानश्रुतेयः काण्ड्वियो नगरिणे जानश्रुतेयाय काण्ड्वियाय । नगरी जानश्रुतेयः काण्ड्वियः शङ्गाय शाट्यायनाय आत्रेयाय । शङ्गः शाट्यायनिरात्रेयो रामाय क्रातुजातेयाय वैयाघ्रपद्याय । रामः क्रातुजातेयो वैयाघ्रपद्यः—॥ २ ॥

Only very few of these names in this section occur in the वंश ब्राह्मण. A number of names are repeated in the वंश at 4·16f below.

## ३·४१

शङ्खाय बाभ्रव्याय । शङ्खो बाभ्रव्यो दक्षाय कात्यायनय आत्रेयाय । दक्षः कात्यायनिरात्रेयः कँसाय वारकये । कँसो वारकिः प्रोष्ठपादाय वारक्याय । प्रोष्ठपादो वारक्यः कँसाय वारक्याय । कँसो वारक्यो जयन्ताय वारक्याय । जयन्तो वारक्यः कुबेराय वारक्याय । कुबेरो वारक्यो जयन्ताय वारक्याय । जयन्तो वारक्यो जनश्रुताय वारक्याय । जनश्रुतो वारक्यः सुदत्ताय पाराशर्याय । सुदत्तः पाराशर्योऽषाढायोत्तराय पाराशर्याय । अषाढ उत्तरः पाराशर्यो विपाश्चिते शकुनिमित्राय पाराशर्याय । विपाश्चिच्छकुनिमित्रः पाराशर्यो जयन्ताय पाराशर्याय । जयन्तः पाराशर्यः—॥ १ ॥

३·४२

श्यामजयन्ताय लौहित्याय। श्यामजयन्तो लौहित्यः पल्लिगुप्ताय लौहित्याय। पल्लिगुप्तो लौहित्यः सत्यश्रवसे लौहित्याय। सत्यश्रवा लौहित्यः कृष्णधृतये सात्यकये। कृष्णधृतिः सात्यकिः श्यामसुजयन्ताय लौहित्याय। श्यामसुजयन्तो लौहित्यः कृष्णदत्ताय लौहित्याय। कृष्णदत्तो लौहित्यो मित्रभूतये लौहित्याय। मित्रभूतिर्लौहित्यः श्यामजयन्ताय लौहित्याय। श्यामजयन्तो लौहित्यः त्रिवेदाय कृष्णराताय लौहित्याय। त्रिवेदः कृष्णरातो लौहित्यो यशस्विने जयन्ताय लौहित्याय। यशस्वी जयन्तो लौहित्यो जयकाय लौहित्याय। जयको लौहित्यः कृष्णराताय लौहित्याय। कृष्णरातो लौहित्यो दक्षजयन्ताय लौहित्याय। दक्षजयन्तो लौहित्यो विपश्चिते दृढजयन्ताय लौहित्याय। विपश्चिद् दृढजयन्तो लौहित्यो वैपश्चिताय दार्ढजयन्तये दृढजयन्ताय लौहित्याय। वैपश्चितो दार्ढजयन्तिर्दृढजयन्तो लौहित्यो वैपश्चिताय दार्ढजयन्तये गुप्ताय लौहित्याय ॥ १ ॥ तदेतदमृतं[a] गायत्रमथ यान्यन्यानि गीतानि काम्यान्येव तानि काम्यान्येव तानि ॥ २ ॥

*a*) काम versus अमृतत्व; cp क 4·2 पराचः कामाननुयन्ति बालाः...अथ धीरा अमृतत्वं विदित्वा.

॥ इति तृतीयोऽध्यायः ॥

---

४·१

श्वेताश्वो[a] दर्शतो हरिनीलोऽसि हरितस्पृशः[b] समानबुद्धो[b] मा हिंसीः। न मां त्वं वेत्थ प्रद्रव ॥ १ ॥ यदभ्यवचरणोऽभ्यवैषि स्वपन्तं पुरुषमकोविदमश्ममयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥ २ ॥ यदभ्यवचरणोऽभ्यवैषि स्वपन्तं पुरुषमकोविदमयस्मयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥ ३ ॥ यदभ्यवचरणोऽभ्यवैषि स्वपन्तं पुरुषमकोविदं लोहमयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥ ४ ॥ यदभ्यवचरणोऽभ्यवैषि स्वपन्तं पुरुषमकोविदं रजतमयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥ ५ ॥ यदभ्यवचरणोऽभ्यवैषि स्वपन्तं पुरुषमकोविदं सुवर्णमयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥ ६ ॥

आयुर्माता मतिः पिता नमस्त आविशोषण।
ग्रहो नामासि विश्वायुस्तस्मै ते विश्वाहा नमः ॥

नमस्ताम्राय[h] नमो नमो वरुणाय नमो जिघांसते ॥ ७ ॥ यक्ष्म[i] राजन्मा मां हिंसीः । राजन् यक्ष्म मा हिंसीः । तयोः संविदानयो[j]ः सर्वमा[k]युरयान्यहम् ॥ ८ ॥

*a* ) जै 4·1·1 reads like an अनुष्टुप् verse; श्वेताश्व later an epithet of अर्जुन; cp the words श्वेतवाह्, श्वेतवाहन and the name of the Upaniṣad श्वेताश्व-तर. —*b* ) These words seem to be obscure. —*c* ) शब्रा 1·3·8·4 नेत् पुरस्तान्नाष्ट्रा रक्षांस्यभ्यवचरान्. —*d* ) को + विद्; cp मनु 7·26 धर्मकामार्थकोविदम्. —*e* ) अ 5·10·1 अश्मवर्म मे असि; cp ऋ 10·101·10 अश्मन्मयीभिः वाशीभिः. —*f* ) पा 1·4·20 अयस्मयादीनि छन्दसि. —*g* ) Source ? —*h* ) वासं 16·39 नमस्ताम्राय च अरुणाय च. —*i* ) ऋ 1·122·9 स्वयं स यक्ष्मं हृदये निधत्ते; 10·97·13 साकं यक्ष्म प्रपत; 10·161·1 अज्ञातयक्ष्मादुत राजयक्ष्मात् ग्राहिर्जग्राह; cp सोमराजन् and यक्ष्मराजन् ( waning of the moon ); सुश्रुत 5·445·7 राज्ञश्चन्द्रमसो यस्मात् अभूदेष किलामयः । तस्मात् तं राजयक्ष्मेति केचिदाहुर्मनीषिणः. —*j* ) ऋ 3·54·6 समानेन क्रतुना संविदाने; अ 11·2·14 भवा रुद्रौ सयुजा संविदानौ; शब्रा 10·6·1·2 ते ह प्रातरसंविदाना; छां 8·7·3 तौ ह असंविदानावेव. —*k* ) छां 2·11·2; बृ 6·4·14 *et passim.*

४·२

पुरुषो वै यज्ञः ॥ १ ॥ तस्य यानि चतु[a]र्विंशतिर्वर्षाणि तत् प्रातःसवनम् । चतुर्विंशत्यक्षरा गायत्री । गायत्रं प्रातःसवनम् ॥ २ ॥ तद्वसूनाम् । प्राणा वै वसवः । प्राणा हीदं सर्वं वस्वा[b]ददते ॥ ३ ॥ स यद्येनमेतस्मिन् काल उपतपदुपद्रवेत्, स ब्रूयात्—प्राणा वसव इदं मे प्रातःसवनम् । माध्यन्दिनेन सवनेनानुसंतनुतेति । अगदो[b] हैव भवति ॥ ४ ॥ अथ यानि चतुश्चत्वारिंशतं वर्षाणि तन्माध्यन्दिनं सवनम् । चतुश्चत्वारिंशदक्षरा त्रिष्टुप् । त्रैष्टुभं माध्यन्दिनं सवनम् ॥ ५ ॥ तद्रुद्राणाम् । प्राणा वै रुद्राः । प्राणा हीदं सर्वं रो[c]दयन्ति ॥ ६ ॥ स यद्येनमेतस्मिन् काल उपतपदुपद्रवेत्, स ब्रूयात्—प्राणा रुद्रा इदं मे माध्यन्दिनं सवनम् । तृतीयसवनेनानुसंतनुतेति । अगदो हैव भवति ॥ ७ ॥ अथ यान्यष्टाचत्वारिंशतं वर्षाणि तत् तृतीयसवनम् । अष्टाचत्वारिंशदक्षरा जगती । जागतं तृतीयसवनम् ॥ ८ ॥ तदादित्यानाम् । प्राणा वा आदित्या[d]ः । प्राणा हीदं सर्वमाद[d]दते ॥ ९ ॥ स यद्येनमेतस्मिन् काल उपतपदुपद्रवेत्, स ब्रूयात्—प्राणा आदित्या इदं मे तृतीयसवनमायुषाऽनुसंतनुतेति । अगदो हैव भवति ॥१०॥ एतद्ध तद्विद्वान् ब्राह्मण उवाच महिदास ऐतरेय उपतपति किमिदमुपतपासि योऽहमनेनोपतपता न प्रेष्यामीति । स ह षोडशशतं वर्षाणि जिजीव । प्र ह षोडशशतं वर्षाणि जीवति नैनं प्राणः साम्या[e]युषो जहाति य एवं वेद ॥११॥

Cp in general छां 3·16·1f.

1 ) v. l. चतुर्विंशति वर्षाणि ( common to छां also ).

*a* ) Inferior reading ! Cp 4·1·9 below, which reads likewise, but suits the etymology of आदित्य; cp शब्रा 11·6·3–6 एते हि इदं सर्वं वासयन्ते; जैब्रा 2·77 एतेषु हीदं वसु सर्वं हितम्, तस्माद्वसवः = बृ 3·9·4. —*b* ) ऋ 10·16·6 अग्निष्टद्विश्वादगदं कृणोतु; अ 5·4·6 तमु मे अगदं कृधि; पा 6·3·70 कारे सत्यागदस्य ( मुम् ). —*c* ) जैब्रा 2·77; शब्रा 11·6·3·7. —*d* ) जैब्रा 2·77 इदं सर्वमाददाना यन्ति = शब्रा 2·1·2·18 and 11·6·3·8. —*e* ) ऐआ 2·1·8; छां 3·16·7. —*f* ) शांआ 2·17, a rare form ! —*g* ) ऋ 1·89·9 मा नो मध्या रीरिषतायुर्गन्तोः.

## ४·३

[a]त्र्यायुषं कश्यपस्य जमदग्नेस्त्र्यायुषम् ।
त्रीण्यमृतस्य पुष्पाणि त्रीण्यायूंषि मेऽकृणोः ॥ १ ॥
स नो मयोभूः पित[b]वाविशस्व शान्तिको[c] यस्तनुवे स्योनः ॥ २ ॥
[d]येऽग्नयः पुरीष्याः प्रविष्टाः पृथिवीमनु ।
तेषां त्वमस्युत्तमः प्र णो जीवातवे सुव ॥ ३ ॥

*a* ) वासं 3·62 ( with variations ); अ 5·28·7 ( with variations ). —*b* ) ऋ 1·187·3 उप नः पितवाचर । मयोभूः...... —*c*) A late word; only here in Vedic literature. —*d* ) Quotation from तैसं 5·5·7·5; cp ऋ 3·22·4 पुरीष्यासो अग्नयः; वासं 3·40 अयमग्निः पुरीष्यः; 18·67 ( with variations ).

## ४·४

अरण्यस्य[a] वत्सोऽसि विश्वनामा विश्वाभिर्रक्षणोऽपां पक्वोऽसि वरुणस्य दूतोऽन्तर्धि[b]र्नाम ॥ १ ॥ यथा त्वममृतो मर्त्येभ्योऽन्तर्हितोऽस्येवं त्वमस्मानघायुभ्यो[c]ऽन्तर्धेहि । अन्तर्धिरसि स्तेनेभ्यः[d] ॥ २ ॥

*a* ) मनु 7·35 राजा सृष्टोऽभिराक्षिता. —*b* ) अ 12·2·44 अन्तर्धिर्देवानां परिधिर्मनुष्याणाम्; पा 1·4·28 अन्तर्धौ येनादर्शनमिच्छति; 1·4·71 तिरोऽन्तर्धौ. —*c* ) ऋ 1·120·7 पातं नो वृकादघायोः; वासं 4·34 मा त्वा वृका अघायवो विदन्; गी 3·16 अघायुरिन्द्रियारामः where शङ्कर, perhaps wrongly, takes the word as अघ + आयुः; cp पा 7·4·37 अश्वाघस्य आत्. —*d* ) ऋ 2·23·16 मा नः स्तेनेभ्यः...रिपवो अन्येषु जागृधुः; 2·28·10 स्तेनो यो दिप्सति नः.

## ४·५

व्युषि सविता भवसि, उदेष्यन् विष्णुः, उद्यन् पुरुषः, उदितो बृहस्पतिः, अभिप्रयन् मघवेन्द्रो वैकुण्ठः[b], मध्यन्दिने भगः, अपराह्ण उग्रो देवो लोहितायन्, अस्तमिते यमो भवसि ॥ १ ॥ अस्मसु सोमो राजा निशायां पितृराजः स्वप्ने मनुष्यान् प्रविशसि पयसा पशून् ॥ २ ॥ विरात्रे भवो भवसि, अपररात्रेऽङ्गिराः, अग्निहोत्रवेलाया भृगुः ॥ ३ ॥ तस्य तदेतदेव मण्डलमूधः। तस्यैतौ स्तनौ यद् वाक् च प्राणश्च। ताभ्यां मे धुक्ष्वाऽध्यायं ब्रह्मचर्यं प्रजां पशून् स्वर्गं लोकं सजातवनस्याम्[d] ॥ ४ ॥ एता आशिष आशासे। भूर्भुवः स्वः। उदिते शुक्रमादिश। तदात्मन् दधे ॥ ५ ॥

*a*) अ 13·3·21 निम्रुचास्तिस्रः। व्युषो ह तिस्रः. See below 4·10·10 ff. —*b*) शब्रा 14·5·1·6 = बृ 2·1·6 इन्द्रो वैकुण्ठः; कौ 4·2. —*c*) Only here in Vedic literature. Cp व्यध्व in अ 13·2·31 अर्वाङ् परस्तात् प्रयतो व्यध्वे; 4·40·6 व्यध्वाया दिशो (*mid-way quarter*) अभिदासन्ति अस्मान्; शब्रा 6·3·3·5 अथ वल्मीकवपा सुषिरा व्यध्वे निहिता भवति; 9·2·3·15 व्यध्वे व्यध्वे ह्येष इतः. —*d*) तैसं 2·6·9·7 सजातवनस्यामाशास्ते; cp गिर्वणस्यु in ऋ 10·111·1 स हि वीरो गिर्वणस्युर्विदानः.

## ४·६

भगेरथो[a] हैक्ष्वाको राजा कामप्रेण[b] यज्ञेन यक्ष्यमाण आस ॥ १ ॥ तदु ह कुरुपञ्चालानां ब्राह्मणा ऊचुः — भगेरथो ह वा अयमैक्ष्वाको राणा कामप्रेण यज्ञेन यक्ष्यमाणः। एतेन कथां[c] वदिष्याम इति ॥ २ ॥ तं हाभ्येयुः। तेभ्यो हाऽऽगतेभ्योऽपचितिं[d]श्चकार ॥ ३ ॥ अथ हैषां सभाग[f] आवव्राजोप्त्वा केशश्मश्रूणि नखान्निकृत्याऽऽज्येनाभ्यज्य दण्डोपानहं बिभ्रत् ॥ ४ ॥ तान् होवाच—ब्राह्मणा भगवन्तः कतमो वस्तद्वेद यथाऽऽश्रावितप्रत्याश्राविते देवान् गच्छत इति ॥ ५ ॥ अथ होवाच कतमो वस्तद्वेद यद्विदुषः सूद्गाता[g] सुहोता स्वध्वर्युः सुमानुषाविदाजायत इति ॥ ६ ॥ अथ होवाच—कतमो वस्तद्वेद यच्छन्दांसि प्रयुज्यन्ते यत् तानि सर्वाणि संस्तुतान्यभिसम्पद्यन्त इति ॥ ७ ॥ अथ होवाच—कतमो वस्तद्वेद यथा गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपिगच्छत इति ॥ ८ ॥ अथ होवाच— कतमो वस्तद्वेद यथा दक्षिणाः प्रतिगृहीता न हिंसन्तीति ॥ ९ ॥

*a*) Unknown in early Vedic literature; perhaps = भगीरथ. —*b*) ऋ 1·158·2 कामप्रेणेव मनसा चरन्तः; अ 10·8·4 यः शतौदनां पचति कामप्रेण स कल्पते; शब्रा 10·2·6·4 कामप्रो लोकः। अमृतं वै कामप्रम्; शब्रा 11·1·6·18 अनेन त्वा कामप्रेण यज्ञेन याजयानि. —*c*) छां 1·8·1 हन्तोद्गीथे कथां वदामः; बृ 4·3·1 समेनेन वदिष्ये. —*d*) वासं

21·58 दधदिन्द्रियमूर्जमपचितिं स्वधाम्; शब्रा 3·4·1·5 अथास्मा उदकं हरन्ति, अथापचितिं कुर्वन्ति; छां 1·1·9; बृ 4·5·14. —*e*) जैब्रा 1·22; a practically identical passage. —*f*) छां 5·3·6. —*g*) तैसं 7·1·8·1 आ अस्य चत्वारो वीरा जायन्ते, सुहोता सूद्गाता स्वध्वर्युः सुसभेयः = सुमानुषवित् in this passage. मानुषवित् only here in Vedic literature.

४·७

एतान् हैनान् पञ्च प्रश्नान् पप्रच्छ ॥ १ ॥ तेषां ह कुरुपञ्चालाना बको दाल्भ्योऽनूचान आस ॥ २ ॥ स होवाच—यथाऽऽश्रावितप्रत्याश्राविते देवान् गच्छत इति प्राच्यां वै राजन् दिश्याश्रावितप्रत्याश्राविते देवान् गच्छतः। तस्मात् प्राङ् तिष्ठन्ना-श्रावयति, प्राङ् तिष्ठन् प्रत्याश्रावयतीति ॥ ३ ॥ अथ होवाच— यद्विदुषः सूद्गाता सुहोता स्वध्वर्युः सुमानुषविदाजायत इति, यो वै मनुष्यस्य संभूतिं वेदेति होवाच तस्य सूद्गाता सुहोता स्वध्वर्युः सुमानुषविदाजायत इति, प्राणा उ ह वाव राजन् मनुष्यस्य संभूतिरेवेति ॥ ४ ॥ अथ होवाच—यच्छन्दांसि प्रयुज्यन्ते यत् तानि सर्वाणि संस्तुतान्यभिसंपद्यन्त इति गायत्रीषु ह वाव राजन् सर्वाणि च्छन्दांसि संस्तुतान्यभि-संपद्यन्त इति ॥ ५ ॥ अथ होवाच—यथा गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपिगच्छत इति वषट्कारेणो वाव राजन् गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपिगच्छत इति ॥ ६ ॥ अथ होवाच—यथा दक्षिणाः प्रतिगृहीता न हिंसन्तीति ॥ ७ ॥

*a*) छां 1·2·13; see above 1·9·3. —*b*) ई 12, 13, 14.

४·८

यो वै गायत्र्यै मुखं वेदेति होवाच तं दक्षिणाः प्रतिगृहीता न हिंसन्तीति ॥ १ ॥ अग्निर्ह वाव राजन् गायत्रीमुखम्। तस्माद्यदग्नावभ्यादधाति भूयानेव स तेन भवति वर्धते। एवमेवैवंविद्वान् ब्राह्मणः प्रतिगृह्णन् भूयानेव भवति वर्धत उ एवेति ॥ २ ॥ स होवाच— अनूचानो वै किलायं ब्राह्मण आस। त्वामहमनेन यज्ञेनैमीति ॥ ३ ॥ तस्य वै ते यथोद्गास्यामीति होवाच यथैकराडेव भूत्वा स्वर्गं लोकमेष्यसीति ॥ ४ ॥ तस्मा एतेन गायत्रेणोद्गीथेनोज्जगौ। स हैकराडेव भूत्वा स्वर्गं लोकमियाय। तेन हैतेनैकराडेव भूत्वा स्वर्गं लोकमेति [य एवं वेद] ॥ ५ ॥ ओं वा इति द्वे अक्षरे। ओं वा इति चतुर्थे। ओं वा इति षष्ठे। हुं भा ओं वागित्यष्टमे ॥ ६ ॥ तेन हैतेन प्रैतदिशोऽस्य भयईस्याऽऽसमर्त्यस्योज्जगौ ॥ ७ ॥ तं होवाच— किं त आगास्या-

मीति । स होवाच— हरी मे देवाश्वावागायेति । तथेति । तौ हास्मा आजगौ । तौ हैनमाजग्मतुः ॥ ८ ॥ स वा एष उद्गीथः कामानां संपदो वा३चों वा३चों वा३च् हुं भा ओं वागिति । साङ्गो हैव सतनुरमृतः संभवति य एतदेवं वेदाथो यस्यैवं-विद्वानुद्गायति ॥ ९ ॥

*a*) बृ 5·14·8. —*b*) बृ 5·14·8. —*c*) ऋ 8·37·3 एकराळस्य भुवनस्य राजसि; अ 3·4·1 विशां पतिरेकराट् त्वं विराज; ऐब्रा 8·15 पृथिव्यै समुद्रपर्यन्ताया एकराळिति. —*d*) चतुर्थे = तृतीयचतुर्थे. —*e*) षष्ठे = पञ्चमषष्ठे. —*f*) अष्टमे = सप्तमाष्टमे. —*g*) N. p. प्रतीदर्श श्वैक्न in शब्रा 2·4·4·3; प्रतीदर्श ऐभावत in शब्रा 12·8·2·3. —*h*) Descendant of असमाति; only here in Vedic literature. —*i*) जैब्रा 1·321 सर्वो हैव साङ्गः सतनुरमृतः संभवति; शब्रा 12·8·3·31 तथा कृत्स्न एव सर्वतनूः साङ्गः संभवति; see 3·3·4 above.

## ४·९

पुरुषो वै यज्ञः पुरुषो होद्गीथः । अथैत एव मृत्यवो यदग्निर्वायुरादित्यश्चन्द्रमाः ॥१॥ ते ह पुरुषं जायमानमेव मृत्युपाशैरभिदधाति । तस्य वाचमेवाग्निरभिदधाति प्राणं वायुश्चक्षुरादित्यः श्रोत्रं चन्द्रमाः ॥ २ ॥ तदाहुः— स वा उद्गाता यो यजमानस्य प्राणेभ्योऽधि मृत्युपाशानुन्मुञ्चतीति ॥ ३ ॥ तद्यस्यैवंविद्वान् प्रस्तौति य एवास्य वाचि मृत्युपाशस्तमेवास्योन्मुञ्चति ॥ ४ ॥ अथ यस्यैवंविद्वानुद्गायति य एवास्य प्राणे मृत्युपाशस्तमेवास्योन्मुञ्चति ॥ ५ ॥ अथ यस्यैवं विद्वान् प्रतिहरति य एवास्य चक्षुषि मृत्युपाशस्तमेवास्योन्मुञ्चति ॥ ६ ॥ अथ यस्यैवं विद्वान्निधनमुपैति य एवास्य श्रोत्रे मृत्युपाशस्तमेवास्योन्मुञ्चति ॥ ७ ॥ एवं वा एवंविदुद्गाता यजमानस्य प्राणेभ्योऽधि मृत्युपाशानुन्मुञ्चति ॥ ८ ॥ तदाहुः—स वा उद्गाता यो यजमानस्य प्राणेभ्योऽधि मृत्युपाशानुन्मुच्याथैनं साङ्गं सतनुं सर्वमृत्योः स्पृणातीति ॥ ९ ॥

*a*) See 4·2·1 above. —*b*) ऋ 5·50·4 यत्र वह्निरभिहितो दुद्रवत् द्रोण्यः पशुः; 10·85·11 ऋक्सामाभ्यामभिहितौ गावौ; अ 4·36·10 अभि तं निर्ऋतिर्धत्ताम् । अश्वमिवाश्वाभिधान्या; 8·10·2 तस्या इन्द्रो वत्स आसीत्, गायत्री अभिधानी, अभ्रमूधः; शब्रा 6·3·1·26 ते मौञ्जीभिरभिधानीभिरभिहिता भवन्ति. —*c*) ऋ 1·25·11 उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत, अवाधमानि जीवसे. —*d*) तै 1·4; 1·7; 2·9.

## ४·१०

तद्यस्यैवंविद्वान् हिङ्करोति य एवास्य लोमसु मृत्युपाशस्तस्मादेवैनं स्पृणाति ॥ १ ॥ अथ यस्यैवंविद्वान् प्रस्तौति य एवास्य त्वचि मृत्युपाशस्तस्मादेवैनं स्पृणाति ॥ २ ॥ अथ यस्यैवंविद्वान् आदिमादत्ते य एवास्य माँसेषु मृत्युपाशस्तस्मादेवैनं

स्पृणाति ॥ ३ ॥ अथ यस्यैवंविद्वानुद्गायति य एवास्य स्नावसु मृत्युपाशस्तस्मादेवैनं स्पृणाति ॥ ४ ॥ अथ यस्यैवंविद्वान् प्रतिहरति य एवास्याङ्गेषु मृत्युपाशस्तस्मादेवैनं स्पृणाति ॥ ५ ॥ अथ यस्यैवंविद्वानुपद्रवति य एवास्यास्थिषु मृत्युपाशस्तस्मादेवैनं स्पृणाति ॥ ६ ॥ अथ यस्यैवंविद्वान् निधनमुपैति य एवास्य मज्जसु मृत्युपाशः स तस्मादेवैनं स्पृणाति ॥ ७ ॥ एवं वा एवंविदुद्गाता यजमानस्य प्राणेभ्योऽधि मृत्युपाशानुन्मुच्याथैनं साङ्गं सतनुं सर्वमृत्योः स्पृणाति ॥ ८ ॥ तदाहुः स वा उद्गाता यो यजमानस्य प्राणेभ्योऽधि मृत्युपाशानुन्मुच्याथैनं साङ्गं सतनुं सर्वमृत्योः स्पृत्वा स्वर्गे लोके सप्तधा[a] दधातीति ॥ ९ ॥ स वा एष इन्द्रो वैमृधं[b] उद्यन् भवति सविता, उदितो मित्रः, सङ्गवकाल इन्द्रः, वैकुण्ठो मध्यन्दिने समावर्तमानो शर्वः, उग्रो देवो लोहितायन्, प्रजापतिरेव संवेशेऽस्तमितः ॥ १० ॥ तद्यस्यैवंविद्वान् हिङ्करोति य एवास्योद्यतः स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥ ११ ॥ अथ यस्यैवंविद्वान् प्रस्तौति य एवास्योदिते स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥ १२ ॥ अथ यस्यैवंविद्वानादिमादत्ते य एवास्य संगवकाले स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥ १३ ॥ अथ यस्यैवंविद्वानुद्गायति य एवास्य मध्यन्दिने स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥ १४ ॥ अथ यस्यैवंविद्वान् प्रतिहरति य एवास्यापराह्णे स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥ १५ ॥ अथ यस्यैवंविद्वानुपद्रवति य एवास्यास्तं यतः स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥ १६ ॥ अथ यस्यैवंविद्वान् निधनमुपैति य एवास्यास्तमिते स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥ १७ ॥ एवं वा एवंविदुद्गाता यजमानस्य प्राणेभ्योऽधि मृत्युपाशानुन्मुच्याथैनं साङ्गं सतनुं सर्वमृत्योः स्पृत्वा स्वर्गे लोके सप्तधा दधाति ॥ १८ ॥

*a*) सप्तधा = by means of seven विभक्तिs; see above 1–7 and 18 below. —*b*) तैसं 2·2·7·4 इन्द्राय वैमृधाय पुरोडाशमेकादशकपालं निर्वपेद् यं मृधो आभि प्र वेपेरन्; 2·5·3·1 इन्द्रं वैमृधम् ( वृत्रं जघ्निवांसम् ).

## ४·११

षड्ढ वै देवताः स्वयंभुवोऽग्निर्वायुरसावादित्यः प्राणोऽन्नं वाक् ॥ १ ॥ ताः श्रैष्ठ्ये[a] व्यवदन्त—अहं श्रेष्ठाऽस्म्यहं श्रेष्ठ्यास्म्य् ( स्मि? ) मां श्रियमुपाध्वमिति ॥२॥ ता अन्योन्यस्यै श्रेष्ठतायै नातिष्ठन्त। ता अब्रुवन्— न वा अन्योन्यस्यै श्रेष्ठतायै तिष्ठामह एताः संप्रब्रवामहै यथा श्रेष्ठाः स्म इति ॥ ३ ॥ ता अग्निमब्रुवन्— कथं त्वं श्रेष्ठोसीति ॥ ४ ॥ सोऽब्रवीत्— अहं देवानां मुखमास्मि, अहमन्यासां प्रजानाम्। मयाऽऽहुतयो हूयन्ते। अहं देवानामन्नं विकरोमि[b], अहं मनुष्याणाम् ॥ ५ ॥ स यन्न

स्याममुखा एव देवाः स्युरमुखा अन्याः प्रजाः। नाहुतयो हूयेरन्। न देवानामन्नं विक्रियेत, न मनुष्याणाम् ॥६॥ तत इदं सर्वं पराभवेत् ततो न किंचन परिशिष्येतेति ॥ ७ ॥ एवमेवेति होचुः— नैवेह किंचन परिशिष्येत यत् त्वं न स्या इति ॥ ८॥ अथ वायुमब्रुवन्— कथमु त्वं श्रेष्ठोऽसीति ॥ ९ ॥ सोऽब्रवीत्— अहं देवानां प्राणोऽस्मि, अहमन्यासां प्रजानाम्। यस्मादहमुत्क्रमामि ततः स प्रप्लवते ॥ १० ॥ स यदहं न स्यां तत इदं सर्वं पराभवेत्, न ततो किंचन परिशिष्येतेति ॥ ११ ॥ एवमेवेति होचुर्नैवेह किंचन परिशिष्येत यत् त्वं न स्या इति ॥ १२ ॥

*a*) अ 1·9·3 सजातानां श्रैष्ठ्य आ धेह्येनम्; 10·6·31 मणिः श्रैष्ठ्याय मूर्धतः; बृ 5·13·2; 6·1·7 (अहंश्रेयसे); छां 5·1·6 (अहंश्रेयसि); 5·2·6 स मा जैष्ठ्यं श्रैष्ठ्यं गमयतु; कौ 2·6;2·14; 4·20. —*b*) In the sense of '*digestion*'? गी 15·14 पचाम्यन्नं चतुर्विधम्.

## ४·१२

अथादित्यमब्रुवन्— कथमु त्वं श्रेष्ठोऽसीति ॥ १ ॥ सोऽब्रवीत्— अहमेवोद्यन्नहर्भवाम्यहमस्तं यन् रात्रिः। मया चक्षुषा कर्माणि क्रियन्ते। स यदहं न स्यां नैवाहः स्यान्न रात्रिः। न कर्माणि क्रियेरन् ॥ २ ॥ तत इदं सर्वं पराभवेत्, ततो न किंचन परिशिष्येतेति ॥ ३ ॥ एवमेवेति होचुः— नैवेह किंचन परिशिष्येत यत् त्वं न स्या इति ॥ ४ ॥ अथ प्राणमब्रुवन्—कथमु त्वं श्रेष्ठोऽसीति ॥ ५ ॥ सोऽब्रवीत्— प्राणो भूत्वाग्निर्दीप्यते। प्राणो भूत्वा वायुराकाशमनुभवति। प्राणो भूत्वाऽऽदित्य उदेति। प्राणादन्नं प्राणाद्वाक् ॥ ६ ॥ स यदहं न स्यां तत इदं सर्वं पराभवेत्, ततो न किंचन परिशिष्येतेति ॥ ७ ॥ एवमेवेति होचुः—नैवेह किंचन परिशिष्येत यत् त्वं न स्या इति ॥ ८ ॥ अथान्नमब्रुवन्— कथमु त्वं श्रेष्ठमसीति ॥ ९ ॥ तदब्रवीत्— मयि प्रतिष्ठायाग्निर्दीप्यते। मयि प्रतिष्ठाय वायुराकाशमनुविभवति। मयि प्रतिष्ठायादित्य उदेति। मदेव प्राणो मद्वाक् ॥ १० ॥ स यदहं न स्यां तत इदं सर्वं पराभवेत्, ततो न किंचन परिशिष्येतेति ॥ ११ ॥ एवमेवेति होचुः— नैवेह किंचन परिशिष्येत यत् त्वं न स्या इति ॥१२॥ अथ वाचमब्रुवन्—कथमु त्वं श्रेष्ठासीति ॥१३॥ साऽब्रवीत्—मयैवेदं विज्ञायते मयाऽदः। स यदहं न स्याम्, नैवेदं विज्ञायते नाऽदः ॥१४॥ तत इदं सर्वं पराभवेत्, नैवेह किंचन परिशिष्येतेति ॥ १५ ॥ एवमेवेति होचुः— नैवेह किंचन परिशिष्येत यत् त्वं न स्या इति ॥ १६ ॥

*a*) छां 7·3·1 यथा वै द्वे वामलके द्वे वा कोले द्वौ वाक्षौ मुष्टिरनुभवति.

## ४·१३

ता अब्रुवन्—एता वै किल सर्वा देवताः। एकैकामेवानु स्मः। यन्नु नः सर्वासां देवतानामेका चन न स्यात्तत इदं सर्वं पराभवेत्, ततो न किंचन परिशिष्येत। हन्त सार्धं समेत्य यच्छ्रेष्ठं तदसामेति ॥ १ ॥ ता एतस्मिन् प्राण ओकारे वाच्यकारे समायन्। तद्यत् समायन्, तत् साम्नः सामत्वम् ॥ २ ॥ ता अब्रुवन्—यानि नो मर्त्यान्यनपहतपाप्मान्यक्षराणि तान्युद्धृत्यामृतेष्वपहतपाप्मसु शुद्धेष्वक्षरेषु गायत्रं गायामाग्नौ वायावादित्ये प्राणेऽन्ने वाचि। तेनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमियामेति ॥ ३ ॥ एत्यग्नेरमृतमपहतपाप्म शुद्धमक्षरम्। ग्निरित्यस्य मर्त्यमनपहतपाप्माक्षरम् ॥ ४ ॥ वेति वायोरमृतमपहतपाप्म शुद्धमक्षरम्। युरित्यस्य मर्त्यमनपहतपाप्माक्षरम् ॥ ५ ॥ एत्यादित्यस्यामृतमपहतपाप्म शुद्धमक्षरम्। त्येत्यस्य मर्त्यमनपहतपाप्माक्षरम् ॥ ६ ॥ प्रेति प्राणस्यामृतमपहतपाप्म शुद्धमक्षरम्। णेत्यस्य मर्त्यमनपहतपाप्माक्षरम् ॥ ७ ॥ एत्यन्नस्यामृतमपहतपाप्म शुद्धमक्षरम्। नमित्यस्य मर्त्यमनपहतपाप्माक्षरम् ॥ ८ ॥ वेति वाचोऽमृतमपहतपाप्म शुद्धमक्षरम्। गित्यस्यै मर्त्यमनपहतपाप्माक्षरम् ॥ ९ ॥ ता एतानि मर्त्यान्यनपहतपाप्मान्यक्षराण्युद्धृत्यामृतेष्वपहतपाप्मसु शुद्धेष्वक्षरेषु गायत्रमागायन्नग्नौ वायावादित्ये प्राणेऽन्ने वाचि। तेनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमायन् ॥ १० ॥ अपहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमेति य एवं वेद ॥ ११ ॥

*a*) For 4–9 cp बृ 2·3·1 (स–ति–यम्).

## ४·१४

ता ब्रह्माब्रुवन्—त्वयि प्रतिष्ठायैतमुद्यच्छामेति। ता ब्रह्माब्रवीदास्येन प्राणेन युष्मानास्येन प्राणेन मामुपाप्नवाथेति ॥ १ ॥ ता एतेन प्राणेनौकारेण वाच्यकारमनिमेष्यन्त्यो हिङ्कारादकारमोकारेण वाचमनुस्वरन्त्य उभाभ्यां प्राणाभ्यां गायत्रमगायन्—ओवा३चोवा३चोवा३च् हुं भा वो वा इति ॥ २ ॥ स यथोभयापदी प्रतितिष्ठत्येवमेव स्वर्गे लोके प्रत्यतिष्ठन्। प्रति स्वर्गे लोके तिष्ठति य एवं वेद ॥ ३ ॥ य उ ह वा एवंविदस्माल्लोकात् प्रैति स प्राण एव भूत्वा वायुमप्येति, वायोरध्यभ्राण्यभ्रेभ्योऽधि वृष्टिं वृष्ट्यैवेमं लोकमनुविभवति ॥ ४ ॥ ऋषयो ह सत्रमासांचक्रिरे। ते पुनः पुनर्वल्लीभिर्वल्लीभिः प्रतिपद्भिः स्वर्गस्य लोकस्य द्वारं नानु चन बुबुधिरे ॥ ५ ॥ त उ श्रमेण तपसा व्रतचर्येणेन्द्रमवरुरुधिरे ॥ ६ ॥ तं होचुः—स्वर्गं वै लोकमैप्सिष्म। ते पुनः पुनर्वल्लीभिर्वल्लीभिः प्रतिपद्भिः स्वर्गस्य लोकस्य द्वारं नानु चनाशुत्स्महि। तथा

नोऽनुशाधि यथा स्वर्गस्य लोकस्य द्वारमनुप्रज्ञायानार्ता:[d] स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमियामेति ॥ ७ ॥ तान् होवाच— को वः स्थविरतम इति ॥ ८ ॥

*a* ) Irregular form. —*b* ) छां 5·10·5–6. —*c* ) छां 8·7·2. The intrusion of चन between अनु and बुबुधिरे is *tmesis*. —*d* ) Cp आर्त in बृ 3·4·2 अतोऽन्यदार्तम्; कौ 3·3 यत्रैतत् पुरुष आर्तो मरिष्यन्. —*e*) उद्दचम्-ऋ 1·53·11 य उदृचीन्द्र देवगोपाः; 10·77·7 य उदृचि यज्ञे अध्वरेष्ठाः.

## ४·१५

अहमित्यगस्त्यः ॥ १ ॥ स वा एहीति होवाच तस्मै तेऽहं तद्व वक्ष्यामि यद्विद्वाँसः स्वर्गस्य लोकस्य द्वारमनुप्रज्ञायानार्ताः स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमेष्यथेति ॥ २ ॥ तस्मा एतं गायत्रस्योद्‌गीथंमुपनिषदममृतमुवाचाग्नौ वायावादित्ये प्राणेऽन्ने वाचि ॥ ३ ॥ ततो वै ते स्वर्गस्य लोकस्य द्वारमनुप्रज्ञायानार्ताः स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमायन् ॥ ४ ॥ एवमेवैनं विद्वान् स्वर्गस्य लोकस्य द्वारमनुप्रज्ञायानार्तः स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमेति ॥ ५ ॥

*a* ) उद्गीथम्, उपनिषदम्, अमृतम् should be noted carefully.

## ४·१६

एवं वा एतं गायत्रस्योद्गीथमुपनिषदममृतमिन्द्रोऽगस्त्यायोवाच । अगस्त्य इषाय श्यावाश्वये । इषः श्यावाश्विर्गौषूक्तये । गौषूक्तिर्ज्वालायनाय । ज्वालायन शाट्यायनये । शाट्यायनी रामाय क्रातुजातेयाय वैयाघ्रपद्याय । रामः क्रातुजातेयो वैयाघ्रपद्यः — ॥ १ ॥

## ४·१७

शङ्खाय बाभ्रव्याय । शङ्खो बाभ्रव्यो दक्षाय कात्यायनय आत्रेयाय । दक्षः कात्यायनिरात्रेयः कँसाय वारक्याय । कँसो वारक्यः सुयज्ञाय शाण्डिल्याय । सुयज्ञः शाण्डिल्योऽग्निदत्ताय शाण्डिल्याय । अग्निदत्तः शाण्डिल्यः सुयज्ञाय शाण्डिल्याय । सुयज्ञः शाण्डिल्यो जयन्ताय वारक्याय । जयन्तो वारक्यो जनश्रुताय वारक्याय । जनश्रुतो वारक्यः सुदत्ताय पाराशर्याय । सैषा शाट्यायनी गायत्रस्योपनिषदेवमुपासितव्या ॥ २ ॥

[ जैमिनीयोपनिषत् ४·१८–२१ = केनोपनिषत् 1–4 ( No. 2 ) of our Collection q. v.]

## ४·२२

आशा[a] वा इदमग्र आसीद्भविष्यदेव। तदभवत्। ता आपोऽभवन् ॥ १ ॥ तास्तपोऽतप्यन्त। तास्तपस्तेपाना हुस्सित्येव प्राचीः प्राश्वसन्। स वाव प्राणोऽभवत् ॥ २ ॥ ताः प्राण्यापानन्। स वा अपानोऽभवत् ॥ ३ ॥ ता अपान्य व्यानन्। स वाव व्यानोऽभवत् ॥ ४ ॥ ता व्यान्य समानन्। स वाव समानोऽभवत् ॥ ५ ॥ ताः समान्योदानन्। स वा उदानोऽभवत् ॥ ६ ॥ तदिदमेव सधमाद्यमासीदविविँक्तम् ॥ ७ ॥ स नामरू[d]पमकुरुत। तेनैनद्व्यविनक्। वि ह पाप्मनो विच्यते य एवं वेद ॥ ८ ॥ तदसौ वा आदित्यः प्राणोऽग्निरपान आपो व्यानो दिशः समानश्चन्द्रमा उदानः ॥ ९ ॥ तद्वा एतदेकमभवत् प्राण एव। स य एवमेतदेकं भवद्वेदैवं हैतदेकधा भवतीत्येकधैव श्रेष्ठः स्वानां भवति ॥ १० ॥ तदग्निर्वै प्राणो वागिति पृथिवी वायुर्वै प्राणो वागित्यन्तरिक्षमादित्यो वै प्राणो वागिति द्यौर्दिशो वै प्राणो वागिति श्रोत्रं चन्द्रमा वै प्राणो वागिति मनः पुमान् वै प्राणो वागिति स्त्री ॥ ११ ॥ तस्येदं सृष्टं शिँथिलं भुवनमासीदपर्याप्तम् ॥ १२ ॥ स मनोर्रूपमकुरुत। तेन तत् पर्याप्नोत्। दृढं ह वा अस्येदं सृष्टमशिथिलं भुवनं पर्याप्तं भवति य एवं वेद ॥ १३ ॥

*a*) ऋ 2·41·12 इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत्; अ 4·15·8 आशामाशां विद्योततात् वाता वान्तु दिशो दश. —*b*) ऋ 4·3·4 उक्था सधमाद्यानि; पा 6·3·96 सधमादस्थयोश्छन्दसि. —*c*) बृ 4·2·3 प्रविविक्ताहारतरः; मां 4 प्रविविक्तभुक्; गी 18·52 विविक्तसेवी. —*d*) बृ 1·4·7; छां 6·3·2; मुं 1·1·9; 3·2·8. —*e*) ऋ 5·85·8 सत्रा ता विष्या शिथिरेव; ऐब्रा 3·31 पर्वाणि शिथिराणि सन्ति दृळ्हानि. —*f*) मनोरूपम् contrasted in 8 above ?

## ४·२३

सैषा चतुर्विधा विहिता श्रीरुद्गीथः सामाक्र्यं ज्येष्ठब्राह्मण[b]म् ॥ १ ॥ प्राणो वावोद् वाग् गी स उद्गीथः ॥ २ ॥ प्राणो वावामो वाक् सा तत् साम ॥ ३ ॥ प्राणो वाव को वाक् ऋक् तदर्क्यम् ॥४॥ प्राणो वाव ज्येष्ठो वाग् ब्राह्मणं तज्ज्येष्ठब्राह्मणम् ॥५॥ उपँनिषदं भो ब्रूहीति। उक्ता त उपनिषद् यस्य ते धातव उक्ताः। त्रिधातु त्रिषु वाव त उपनिषदमब्रूमेति ॥ ६ ॥ एतच्छुक्लं कृष्णं ताम्रं सामवर्ण इति ह स्माह यदेव शुक्लकृष्णे ताम्रो वर्णोऽभ्यवैति स वै ते वृङ्क्ते दर्शमं मानुषमिति त्रिधातु। स ऐक्षत —क नु म-उत्तानाय शयानायेमा देवता बलिं हरेयुरिति ॥ ७ ॥

*a*) बृ 1·2·1 तदेवार्कस्यार्कत्वम्. —*b*) तांब्रा 7·6·7 ज्येष्ठब्राह्मणं वा एतत्. —*c*) छां 1·7·1; बृ 1·3·22; 6·4·20. —*d*) के 4·7 उपनिषदं भो ब्रूहीति etc. —*e*) छां 6·4·1 रोहितं शुक्लं कृष्णं रूपम्; श्वे 4·5 लोहितशुक्लकृष्णाम्. —*f*) Obscure text! —*g*) अ 3·21·10 आप उत्तानशीवरीः.

## ४·२४

स पुरुषमेव प्रपदनायावृणीत ॥ १ ॥ तं पुरस्तात् प्रत्यञ्चं प्राविशत्। तस्मा उरुरभवत्। तदुरस उरस्त्वम् ॥ २ ॥ तस्मा अत्रसद एता देवता बलिं हरन्ति ॥ ३ ॥ वाचमनुहरन्तीमग्निरस्मै बलिं हरति ॥ ४ ॥ मनोऽनुहरच्चन्द्रमा अस्मै बलिं हरति ॥ ५ ॥ चक्षुरनुहरदादित्योऽस्मै बलिं हरति ॥ ६ ॥ श्रोत्रमनुहराद्दिशोऽस्मै बलिं हरन्ति ॥ ७ ॥ प्राणमनुहरन्तं वायुरस्मै बलिं हरति ॥ ८ ॥ तस्यैते निष्खाताः पन्था बलिवाहना इमे प्राणाः। एवं हैतं निष्खाताः पन्था बलिवाहनाः सर्वतोऽपियन्ति प्राणा य एवं वेद ॥ ९ ॥ सा हैषा ब्रह्मासन्दीमारूढा। आ हास्मै ब्रह्मासन्दीं हरन्त्यधि ह ब्रह्मासन्दीं रोहति य एवं वेद ॥ १० ॥ तदेतद् ब्रह्म यशःश्रिया परिवृढम्। ब्रह्म ह तु सन् यशसा श्रिया परिवृढो भवति य एवं वेद ॥ ११ ॥ तस्यैष आदेशो योऽयं दक्षिणेऽक्षन्नन्तः। तस्य यच्छुक्लं तदृचां रूपं, यत् कृष्णं तत्साम्नां, यदेव ताम्रमिव बभ्रुरिव तद्यजुषाम् ॥ १२ ॥ य एवायं चक्षुषि पुरुष एष इन्द्र एष प्रजापतिः समः पृथिव्या सम आकाशेन समो दिवा समः सर्वेण भूतेन। एष परो दिवो दीप्यते। एष एवेदं सर्वमित्युपासितव्यम् ॥ १३ ॥

*a*) छां 8·6·5 लोकद्वारं विदुषां प्रपदनम्. —*b*) शब्रा 7·5·2·52 मनो वै समुद्रः, मनसो वै समुद्राद् वाचाभ्या देवास्त्रयीं विद्यां निरखनन्; पन्थ is the basic word: ऋ 1·35·11 ये ते पन्थाः सवितः पूर्व्यासो. —*d*) वासं 9·56 वरुण आसन्द्यामारूढः; तैसं 7·5·9·5 उद्गाता आसन्दीमारोहति; अ 14·2·65 यदासन्द्यामुपधाने; कौ 1·5 विचक्षणामासन्दीम्. —*e*) यशःश्रिया is singular. —*f*) नि 1·8 ब्रह्म परिवृढं सर्वतः. —*g*) बृ 2·3·6; छां 6·1·3; के 4·4; तै 1·11. —*h*) बभ्रु neuter? —*i*) Cp 1·43·10 above.

## ४·२५

सच्चासच्चासच्च सच्च वाक् च मनश्च (मनश्च) वाक् च चक्षुश्च श्रोत्रं च श्रोत्रं च चक्षुश्च श्रद्धा च तपश्च तपश्च श्रद्धा च तानि षोडश ॥ १ ॥ षोडशकलं ब्रह्म। स य एवमेतत् षोडशकलं ब्रह्म वेद तमेवैतत् षोडशकलं ब्रह्माप्येति ॥ २ ॥ वेदो ब्रह्म तस्य सत्यमायतनं शमः प्रतिष्ठा दमश्च ॥ ३ ॥ तद्यथा श्वः प्रैष्यन् पापात् कर्मणो जुगुप्सेतैवमेवाहरहः पापात् कर्मणो जुगुप्सेताकालात् ॥ ४ ॥ अथैषां

दशपदी विराट्[f] ॥ ५ ॥ दश पुरुषे स्वर्गनरकाणि[g]। तान्येनं स्वर्गं गतानि स्वर्गं गमयन्ति, नरकं गतानि नरकं गमयन्ति ॥ ६ ॥

*a*) छां 5·10·1 श्रद्धातप इत्याचक्षते. —*b*) See above 3·38 8; छां 6·7·1; बृ 1 5·14–15. —*c*) के 4·8 सत्यमायतनम्. —*d*) छां 5·10·8 तस्माज्जुगुप्सेत; ई 6 ततो न विजुगुप्सते. —*e*) काल = Death; काल meaning *death* is epic and classical. —*f*) छां 4 3·8. —*g*) तैआ 1·19 1 विसर्पी नरकः (m.); here it is neuter; नि 1·11 नेज् जिह्मायन्त्यो नरकं पताम.

## ४·२६

मनो नरको वाङ् नरकः प्राणो नरकश्चक्षुर्नरकः श्रोत्रं नरकस्त्वङ् नरको हस्तौ नरको गुदं नरकः शिश्नं नरकः पादौ नरकः ॥१॥ मनसा परीक्ष्याणि वेदेति वेद ॥२॥ वाचा[b] रसान् वेदेति वेद ॥ ३ ॥ प्राणेन गन्धान् वेदेति वेद ॥ ४ ॥ चक्षुषा रूपाणि वेदेति वेद ॥५॥ श्रोत्रेण शब्दान् वेदेति वेद ॥ ६ ॥ त्वचा संस्पर्शान् वेदेति वेद ॥ ७॥ हस्ताभ्यां कर्माणि वेदेति वेद ॥ ८ ॥ उदरेणाशनयां वेदेति वेद ॥ ९ ॥ शिश्नेन रामान्[c] वेदेति वेद ॥१०॥ पादाभ्यामध्वनो वेदेति वेद ॥ ११ ॥ प्लक्षस्य[d] प्रास्रवणस्य प्रादेशमात्रादुदक् तत् पृथिव्यै मध्यम्। अथ यत्रैते सप्तर्षयस्तद्दिवो मध्यम् ॥ १२ ॥ अथ यत्रैत उषास्तत् पृथिव्यै हृदयम्। अथ यत्रैतत् कृष्णं चन्द्रमसि तद्दिवो हृदयम् ॥ १३ ॥ स य एवमेते द्यावापृथिव्योर्मध्ये च हृदये च वेद नाकामोऽस्माल्लोकात् प्रैति ॥१४॥ नमोऽतिसामायैतुरेयाय[f] धृतराष्ट्राय[g] पार्थुश्रवसाय ये च प्राणं रक्षन्ति ते मा रक्षन्तु। स्वस्ति। कर्मेति[h] गार्हपत्यः। शम इत्याहवनीयः। दम इत्यन्वाहार्यपचनः ॥ १५ ॥

*a*) शब्रा 10·4·2·21 सर्वाणि भूतानि पर्यैक्षत (*parasmai*); जैब्रा 1·134 ते आत्मानमेव पर्यैक्षेताम्. —*b*) वाचा = जिह्वया (!); शब्रा 8·5·4·1 वाचैवान्नस्य रसं विजानाति; तांब्रा 20·14·3 एषा वाव प्रत्यक्षं वाक् या जिह्वाग्रेण वाचो वदति; जैब्रा 1·269 वाचा स्वादु चास्वादु च विजानाति. —*c*) रामान् m. and pl. like दाराः? but cp तैसं 5·6·8·3 नाग्निं चित्वा रामामुपेयात्. —*d*) तांब्रा 25·10·16, 22 सरस्वत्या विनशनात् प्लक्षः प्रास्रवणः. —*e*) छां 5·18·1; मै 6·38. —*f*) Mentioned only here. —*g*) धृतराष्ट्र and पृथुश्रवस् are mentioned in तांब्रा 25·15·3 (वंश). —*h*) के 4·8 कर्मेति प्रतिष्ठा.

## ४·२७

कः सविता। का सावित्री। अग्निरेव सविता। पृथिवी सावित्री ॥ १ ॥ स यत्राग्निस्तत् पृथिवी यत्र वा पृथिवी तदग्निः। ते द्वे योनी। तदेकं मिथुनम् ॥ २ ॥ कः सविता। का सावित्री। वरुण एव सविता। आपः सावित्री ॥ ३ ॥ स यत्र

वरुणस्तदापो यत्र वाऽऽपस्तद्वरुणः। ते द्वे योनी। (तदेकं मिथुनम्) ॥ ४ ॥ कः सविता। का सावित्री। वायुरेव सविता। आकाशः सावित्री ॥ ५ ॥ स यत्र वायुस्तदाकाशो यत्र वाऽऽकाशस्तद्वायुः। ते द्वे योनी। तदेकं मिथुनम् ॥ ६ ॥ कः सविता। का सावित्री। यज्ञ एव सविता। छन्दांसि सावित्री ॥ ७ ॥ स यत्र यज्ञस्तच्छन्दांसि यत्र वा छन्दांसि तद्यज्ञः। ते द्वे योनी। तदेकं मिथुनम् ॥ ८ ॥ कः सविता। का सावित्री। स्तनयित्नुरेव सविता। विद्युत् सावित्री ॥ ९ ॥ स यत्र स्तनयित्नुस्तद्विद्युत्, यत्र वा विद्युत तत् स्तनयित्नुः। ते द्वे योनी। तदेकं मिथुनम् ॥ १० ॥ कः सविता। का सावित्री। आदित्य एव सविता। द्यौः सावित्री ॥ ११ ॥ स यत्रादित्यस्तद् द्यौर्यत्र वा द्यौस्तदादित्यः। ते द्वे योनी। तदेकं मिथुनम् ॥ १२ ॥ कः सविता। का सावित्री। चन्द्र एव सविता। नक्षत्राणि सावित्री ॥ १३ ॥ स यत्र चन्द्रस्तन्नक्षत्राणि, यत्र वा नक्षत्राणि तच्चन्द्रः। ते द्वे योनी। तदेकं मिथुनम् ॥ १४ ॥ कः सविता। का सावित्री। मन एव सविता। वाक् सावित्री ॥ १५ ॥ स यत्र मनस्तद्वाग् यत्र (वा) वाक् तन्मनः। ते द्वे योनी। तदेकं मिथुनम् ॥ १६ ॥ कः सविता। का सावित्री। पुरुष (एव) सविता। स्त्री सावित्री। स यत्र पुरुषस्तत् स्त्री, यत्र वा स्त्री तत् पुरुषः। ते द्वे योनी। तदेकं मिथुनम् ॥ १७ ॥

## ४·२८

तस्या एष प्रथमः पादो भूस्तत् सवितुर्वरेण्यमिति। अग्निर्वै वरेण्यम्। आपो वै वरेण्यम्। चन्द्रमा वै वरेण्यम् ॥ १ ॥ तस्या एष द्वितीयः पादो भर्गमयो भुवो भर्गो देवस्य धीमहीति। अग्निर्वै भर्गः। आदित्यो वै भर्गः। चन्द्रमा वै भर्गः ॥ २ ॥ तस्या एष तृतीयः पादः स्वर्धियो यो नः प्रचोदयादिति। यज्ञो वै प्रचोदयति। स्त्री च वै पुरुषश्च प्रजनयतः ॥ ३ ॥ भूर्भुवस्तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहीति। अग्निर्वै भर्गः। आदित्यो वै भर्गः। चन्द्रमा वै भर्गः ॥ ४ ॥ स्वर्धियो यो नः प्रचोदयादिति। यज्ञो वै प्रचोदयति। स्त्री च वै पुरुषश्च प्रजनयतः ॥ ५ ॥ भूर्भुवःस्वस्तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयादिति। यो वा एतां सावित्रीमेवं वेदाप[a] पुनर्मृत्युं तरति, सावित्र्या एव सलोकतां जयति, सावित्र्या एव सलोकतां जयति ॥ ६ ॥

*a*) The normal formula is अप पुनर्मृत्युं जयति; e. g. in बृ 1·2·7 *et passim*; cp ऋ 10·133·5 अव तस्य बलं तिर; अ 6·6·3 अप तस्य बलं तिर.

॥ इति चतुर्थोऽध्यायः ॥

॥ इति जैमिनीयोपनिषत् ॥

## Additions to the Notes

| Page | Line | Parallel Quotations etc. |
|---|---|---|
| 1 | 15 | Add under *a* ) : cp बृ 2·5·18 नैनेन किंचनानावृतं, नैनेन किंचनासंवृतम्. |
| ,, | 16 | Add —$d_1$ ) after —*d* ) : भुज् in the sense of '*to be of use*'; cp नि 2·4 तथैव तान् न भुनक्ति श्रुतं तत्. Correspondingly add $d_1$ above भुञ्जीथाः in the text. |
| ,, | 17 | Add at the end : शं alternately splits the last पाद् into two sentences, मा गृधः and कस्य स्विद् ( v. l. चिद् in श्रीकर ) धनम्. |
| ,, | 21 | Read at the end : उवट and महीधर suggest जिजीविषेरिति पुरुषव्यत्ययः प्रत्यक्षकृतत्वान्मन्त्रस्य । जीवितुमिच्छेः......... |
| 2 | 9 | Add at the end : उवट rightly refers to छां 5·10·8 जायस्व म्रियस्वेति एतत् तृतीयं स्थानम्. |
| 3 | 8fb | Put *b* on शुश्रुम; add in the notes : —*b* ) ऋ 10·88·15 द्वे स्रुती अशृणवं पितॄणाम्...... |
| 5 | 9 | Add at the end : for नमउक्ति cf ऋ 3·14·2 अयामि ते नमउक्तिं जुषस्व; 5·43·9 प्र तव्यसो नमउक्तिं तुरस्य, अहं पूष्ण उत वायोरदिक्षि; 8·4·6 दाश्नोति नमउक्तिभिः. |
| 6 | 6 | On केनेषितं पतति प्रेषितं मनः cp ऋ 10·136·5 अथो देवेषितो मुनिः, 6·9·5 मनो जविष्ठं पतयत्स्वन्तः; 3·39·1 इन्द्रं मतिर्हृद आ वच्यमाना; 10·47·6 हृदिस्पृशो मनसा वच्यमानाः; वासं 34·3 यत् प्रज्ञानमुत चेतो धृतिश्च......; 34·6 हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसंकल्पमस्तु. |
| 7 | 13 | Add at the end : ऐब्रा 5·31 उद्यन् खलु वा आदित्यः सर्वाणि भूतानि प्रणयति तस्मादेनं प्राण इत्याचक्षते. |
| ,, | 15 | Can नूनं be न्यूनं ? cp जैब्रा 3·156 स होवाच न्यूनं त्वं वेत्थ, अन्यथा वयमतो विद्मेति. |
| 8 | 3 | Add : अ 5·30·10 ऋषी बोधप्रतीबोधौ, अस्वप्नो यश्च जागृविः. |
| ,, | 7fb | Add after प्रादुर्भवन्ति : जैब्रा 3·203 तेभ्यो ह नाविरास. |
| ,, | 6fb | Add after प्रजानाम् : जैब्रा 3·203 समुद्रेऽन्तर्महयक्षम्; शब्रा 11·2·3·5 ते हैते ( नाम च रूपं च ) ब्रह्मणो महती यक्षे ( अभ्वे in शब्रा 11·2·3·4 ). |
| 8 | 4fb | For etymological explanation of the word जातवेदस् see ऋ 6·15·13 अग्निः...विश्वा वेद जनिमा जातवेदाः and 8·39·6 अग्निर्जाता देवानामग्निर्वेद मर्तानामपीच्यम्. |
| 9 | 9 | For अथेन्द्रमब्रुवन्, cp जैब्रा 3·203 एत, इन्द्रमेव स्तवाम, स वावास्येशे । स एव न इमं दर्शयिष्यतीति । |
| | 10 | For तस्मात्तिरोदधे, cp ऋ 9·97·47 तिरो वर्पांसि दुहितुः ( abl., cp तस्मात् in the text ) दधानः. |

| Page | Line | Parallel Quotations etc. |
|---|---|---|
| 10 | 8fb | Add : further see note on छां 3·12·3. |
| 11 | 3 | Add : सायण connects the story of नचिकेतस् in तैत्रा and क with ऋ 10·135. |
| ,, | 9 | For नीयमानासु, cp शत्रा 14·1·1·32 यामस्मै दक्षिणामानयेयुः; instead of आ–नी, ऋ 10·107·5 has आ–वी, यः प्रथमो दक्षिणामाविवाय. |
| ,, | 9fb | For the idiom द्वितियं तृतीयं, cp तं ह द्वितीये वा तृतीये वा वचने उवाच–an entirely untraced remarkable उपनिषद्–quotation given by शंकराचार्य on ब्रसू 3·2·17 दर्शयति च, अथो अपि स्मर्यते. |
| 12 | 1 | For अनुपश्य, cp ऋ 7·70·4 अनु पूर्वाणि चख्यतुर्युगानि. |
| ,, | 18 | On तिस्रो रात्रीः cp अ 11·5·3 आचार्य उपनयमानो ब्रह्मचारिणं ..तं रात्रीस्तिस्र उदरे बिभर्ति. |
| 16 | 4 | On दूरमेते विपरीते, we can say with Geldner (on ऋ 1·163·3 असि सोमेन समया विपृक्तः) समया *ist das Gegenteil von* दूरम्. |
| ,, | 9 | Add a note on पण्डितंमन्यमानाः (one word) : Compare the use of ऊह with acc. as in पण्डितंमन्यमानाः in ऋ 10·52·3 कमप्यूहे यत् समञ्जन्ति देवाः; cp मभा 1·90·23 अधीयानः पण्डितंमन्यमानः. |
| 16 | 18 | Compare the use of आश्चर्य with that of कश्चित् in ऋ 1·37·13 शृणोति कश्चिदेषाम् and also in क 4·1 कश्चिद् धीरः प्रत्यगात्मानमैक्षत्. |
| 18 | 10fb | Add : धुराधुरम् and मेनामेनम् in जैब्रा 1·107 and 145 respectively. |
| 19 | 10 | After —*d*) क 6·5, add : तैसं 6·4·2·4 छायायै च आतपतश्च सन्धौ गृह्णाति, अहोरात्रयोरेवास्मै वर्णं गृह्णाति. |
| ,, | 8fb | Add : also प्रग्राह. |
| 20 | 1 | For युक्तेन मनसा cp शत्रा 6·3·1·14 न ह्ययुक्तेन मनसा किंचन संप्रति शक्नोति कर्तुम्. |
| 21 | 12 | For धीरः and इच्छन् cp ऋ 10·46·2 गुहा चतन्तमुशिजो नमोभिः, इच्छन्तो धीरा भृगवो अविन्दन्. |
| 22 | 9 | प्राणेन संभवति = *unites herself with Prāṇa*, cp अ 6·119·2 अथ पक्वेन सह सं भवेम. |
| 25 | 12fb | For the idea and the vocabulary, cp ऋ 1·24·7 नीचीनाः स्थुरुपरि बुध्न एषाम्. |
| 26 | 12 | Add after बृ 4·1·4, (पित्र्यम्, गान्धर्वम्, ब्राह्मम्). |
| ,, | 8fb | Cp the following from ऋ 1·61·2 इन्द्राय हृदा मनसा मनीषा, प्रत्नाय पत्ये धियो मर्जयन्त; 1·171·2 हृदा तष्टः (स्तोमः) मनसा धायि देवाः; 4·58·6 अन्तर्हृदा मनसा पूयमानाः; 6·28·5 इच्छामीद् धृदा मनसा चिदिन्द्रम्; 7·98·2 उत हृदा उत मनसा जुषाणः; 10·177·1 हृदा पश्यन्ति मनसा विपश्चितः. |

| Page | Line | Parallel Quotations etc. |
|---|---|---|
| 27 | 7fb | Add : अ 12·2·54 इषीकां जरतीमिष्ट्वा......; शब्रा 1·1·4·19 यदि नडानां यदि वेणूनां यदि इषीकाणाम्; जैब्रा 1·9 यथा मुञ्जादिषीकां विवृहेत्; नि 9·8 मुञ्जः विमुच्यते इषीकया ( attempt at etymology by connecting मुच् with मुज् in मुञ्ज् ). |
| 30 | 9 | Add : cp ऋ 7·61·5 न यासु चित्रं ददृशे न यक्षम्. |
| 32 | 8fb | For पुरुषे छाया cp शब्रा 2·2·3·10 छाययेव वा अयं पुरुषः पाप्मनाऽनुषक्तः...... |
| ,, | 12fb | अतिप्रश्नान् पृच्छसि; cp for a similar idea, ऋ 10·88·18 नोपस्पिजं वः पितरो वदामि पृच्छामि वः कवयो विद्मने कम्. |
| 33 | | 1fb Add वासं 4·22 अस्मे ते बन्धुः ( similar meaning ); later cp मभा 4·58·65 तस्य बाणमयं वर्षं शलभानामिवायतिम् ( नी. संततिम् ); 5·166·3 काम्बोजानां महाराज शलभानामिवायतिः; 9·13·41 शरवृष्टिमपश्याम शलभानामिवायतिम्. |
| 34 | 11fb | For अनुभवति cp ऋ 1·52·11 द्यामनु शवसा बर्हणा भुवत्; 1·165·5 इन्द्र स्वधामनु हि नो बभूथ; 3·32·11 न ते महित्वमनु भूदध द्यौः; तैसं 7·3·14·1 अग्निना तपोऽन्वभवत्, वाचा ब्रह्म, ब्राह्मणेन वाचम्. |
| 35 | 4 | उपस्थश्चानन्दयितव्यं च : cp वासं 19·92 आत्मन्नुपस्थे न वृकस्य लोम; शब्रा 12·9·1·6 अश्वस्य शिश्नं महिषी उपस्थे निधत्ते; and see also प्र 4·8; छां 5·8·1; बृ 2·4·11, 4·5·12, 6·2·13; तै 3·10. |
| 35 | 10 | Add : also छां 6·1·3; बृ 3·7·23; 3·8·11. For a fuller enumeration, see ऐआ 3·2·4 स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः श्रोता मन्ता द्रष्टाऽऽदेष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरपुरुषः स म आत्मेति विद्यात्. |
| 36 | 13 | Add after अहिनिर्ल्वयनी : cp ऋ 9·86·44 अहिर्न जूर्णामति सर्पति त्वचम्; शब्रा 11·2·6·13 स यथाहिस्त्वचो निर्मुच्येत, एवमस्मान्मर्त्याच्छरीरात् पाप्मनो निर्मुच्यते; जैब्रा 1·9 स यथाहिरहिच्छव्यै निर्मुच्येत. |
| 37 | 14 | समुद्र इत्येवं प्रोच्यते. Was it originally एव as in छां 6·10·1 ? |
| ,, | 3fb | Add : also ऋ 1·92·6 and 1·183·6. |
| 43 | 10 | Stages in the process of धनुर्गृहीत्वा etc. given vividly in वासं 16·22–23 : नम इषुमद्भ्यो धन्वायिभ्यश्च नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च नम आयच्छद्भ्योऽस्यद्भ्यश्च नमो विसृजद्भ्यो विध्यद्भ्यश्च; see also तैसं 4·5·3·2 with variants. |
| 50 | 8fb | Add the following note on अन्तेवासी : शब्रा 5·1·5·17 अन्तेवासी वा ब्रह्मचारी वा एतद्यजुरधीयात्; ऐआ 3·2·6 ता एताः संहिता नानन्तेवासिने प्रब्रूयात्, नासंवत्सरवासिने, नाप्रवक्त्रे इति आचार्याः; also बृ 6·3·7; छां 3·11·5; 4.10·1. |

| Page | Line | Parallel Quotations etc. |
|---|---|---|
| 52 | 4fb | For अप्यो श्रावय, cp वार्तिक 2 सिद्धं तु ओश्रावये परस्य चेति वचनात्, on पा 8·2·92 अग्नीत्प्रेषणे परस्य च; also पतञ्जलि on पा 8·2·89 प्रणवष्टे:—त्रिमात्रमोंकारं त्रिमात्रमोकारं वा विदधति तं प्रणव इत्याचक्षते |
| 53 | 4fb | Add : See also वेदमनूच्य in तै 1·11, which means वेदानुवचनं कृत्वा. |
| ,, | 3fb | On सत्यं वद, cp शब्रा 14·1·1·33 एकं ह वै देवा व्रतं चरन्ति यत् सत्यम्, तस्मादु सत्यमेव वदेत्. |
| 54 | 10 | Add after अतिथीन् प्रति पश्यति : अ 9·6·1 यो विद्याद् ब्रह्म प्रत्यक्षम्; ऐआ 1·1·1 यो वै भवति यः श्रेष्ठतामश्नुते स वा अतिथिर्भवति न वा असन्तमातिथ्या-याद्रियन्ते. |
| 56 | 3 | Add the following note as *c* on अथर्वाङ्गिरसः—अ 10·7·20 अथर्वाङ्गिरसो मुखं स्कम्भं तं ब्रूहि; 11·6·14...ऋचः सामानि भेषजा (i. e. अथर्ववेद) यजूंषि...; तैब्रा 3·12 8·2 अथर्वाङ्गिरसश्च ये; शब्रा 10·5·2·20 अग्निमित्यध्वर्यव उपासते, सामेति छन्दोगाः, उक्थमिति बह्वृचः, यातुरिति यातुविदः (perhaps a reference to the sorcery of the अथर्वन्s.)......; 11·5·6·7 मेदआहुतयो ह वा एता देवानां यदथर्वाङ्गिरसः; छां 3·4·1–2; बृ 2·4·10; 4·1·2. |
| ,, | 12 | 2) शं alternately reads आसने न. |
| 57 | 2 | It would be better if we could read सत्यम् in सत्यमभवत्, cf सच्च त्यच्चाभवत् above and in बृ 5·5·1. |
| ,, | 9 | ...स्वयमकुरुत...सुकृतं...; an attempt at etymology of सुकृत as स्व (यं) कृत, cp स्वधा = सुधा in ऋ 2·35·7 स्वधां पीपाय; 1·144·2 स्वधा अधयत्; अ 18·3·8 सं सोमेन मदस्व सं स्वधाभिः; and स्वधित = सुधित in तैब्रा 3·7·13·1 प्रियाण्यङ्गानि स्वधिता परूंषि. |
| 60 | 7 | Add at the end : also तैब्रा 3·7·3·4 आपस्तु न परिचक्षीत...तस्मादापो न परिचक्ष्याः. |
| 61 | 3 | Add at the end : शब्रा 6·7·4·9 देवानां वै विधामनु मनुष्याः; 10·2·4·3 स एष एकशतविधः, तस्य रश्मयः शतं विधाः, एष एवैकशततमो य एष तपति. |
| 61 | 8 | Add before तैआ the following :—ऋ 1·148·1 स्वर्ण चित्रम्; 2·2·7 स्वर्ण शुक्रम्, 8 स्वर्ण दीदेत्, 10 स्वर्ण शुशुचीत; 2·8·4 स्वर्ण भानुना चित्रो विभात्यर्चिषा; 4·10·3 स्वर्ण ज्योतिः; 10·123·7 स्वर्ण नाम जनत प्रियाणि. |
| 62 | 3fb | Add the following note on प्राणाद् वायु :—तैसं 5·1·5·1 प्राणो वै वायुः. |
| ,, | 2fb | Similarly on चक्षुष आदित्यः —ऋ 10·16·3 सूर्यं चक्षुर्गच्छतु...... |
| 63 | 1 | Note on नाभ्या अपानः—Connection of अपान with नाभि not un-natural with प्राण; see अ 2·28·3 मेमं प्राणो हासीन्मो अपानः; 5·30·15 मा ते प्राण उप दसन्मो अपानः; 2·16·1 प्राणापानौ मृत्योर्मा पातम्...; वासं 13·19 विश्वस्मै प्राणाय, अपानाय, व्यानाय, उदानाय... |

| Page | Line | Parallel Quotations etc. |
|---|---|---|
| 63 | 8 | For आयतनम् and प्रतिष्ठिताः ( प्रतिष्ठा ), see note on छां 3·12·3. |
| 70 | 13 | Add : the forms दुर्गन्धि and आञ्जनगन्धि do not seem to be covered by पा 5·4·135 गन्धस्य इत्, उत् पूति सु सुरभिभ्यः; दुर्गन्धि occurs in मनु 6·76 चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः; दुरभि ( wrong formation ) on the analogy of सुरभि occurs in मैसं 2·1·3 दुरभि वा एतमारद् यमाभिशंसन्ति. |
| 71 | 9fb | For आङ्गिराः cp the following :—ऋ 1·45·3 आङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवम्; 1·139·9 दध्यङ् ह मे जनुषं पूर्वो अङ्गिराः प्रियमेधः कण्वो अत्रिर्मनुर्विदुः; 3·31·7 अथाभवदङ्गिराः सद्यो अर्चन्. |
| 72 | 2fb | For आजेः सरणम् cp also जैब्रा 2·128 स बृहस्पतिः आजिसरणं ( adj. ) पन्थानमपश्यत्; ऐब्रा 2·25 हन्त, आजिं अयाम. |
| 73 | 5fb | Add the following note on यत्कामः स्तुवीतेति यत्कामः स्तुवीतेति. Prof. Louis Renou has drawn pointed attention to these 'Répétitions en fin de Khanda' in the chapter 'Remarques sur la छान्दोग्य-उपनिषद्' of his 'Études Védiques et Pāṇinéennes : Tome 1' (1955). So far as the छां is considered, we find these repetitions at the end of the following sections : I·3, 5, 7, 9, 11, 13; II·10, 21, 23, 24; III·11, 13, 14, 15, 17, 18 (not noticed by Renou), 19; IV. 3, 9, 15, 17; V·2, 10, 24; VI·7, 16; VII·26; VIII·6, 12, 13, 14, 15. These repetitions are generally of two or three words; one is the minimum and four is the maximum. शं, except in two or three places, has noticed and tried to explain the purpose of this द्विरभ्यास, द्विरुक्ति or द्विर्वचन ( e. g आदरार्थ, विद्यासमाप्त्यर्थ, उपासनसमाप्त्यर्थ, अध्यायपरिसमाप्त्यर्थ, सातविध्यसमाप्त्यर्थ, सामोपासनसमाप्त्यर्थ, यज्ञकल्पनापरिसमाप्त्यर्थ, दर्शनसमाप्त्यर्थ, कर्मसमाप्त्यर्थ, समस्तप्रश्ननिर्णयप्रदर्शनार्थ, त्रिवृत्करणप्रकरणसमाप्त्यर्थ, मन्त्रपरिसमाप्त्यर्थ, अत्यन्तानर्थहेतुत्वप्रदर्शनार्थ and उपनिषद्विद्यापरिसमाप्त्यर्थ ). If we examine other Upanishads in the present collection, we find these as follows :—ई 17 क्रतो स्मर कृतश्स्मर ( which we find in the same passage in बृ 5 15·1 ); के 4·9 प्रतितिष्ठति; क 3·17 तदानन्त्याय कल्पते; 6·17 तं विद्याच्छुक्रममृतम्; प्र 3·12 विज्ञायामृतमश्नुते; 6·8 नमः परमऋषिभ्यः ( also in मुं 3·2·11 ); मां does not contain any repetition; तै 1·9 तद्धि तपः; ऐ 1·3·14 परोक्षप्रिया इव हि देवाः; 2·6 समभवत्; 3·4 समभवत्; it is extremely remarkable that बृ does not have any repetition; श्वे 1·16 तद् ब्रह्मोपनिषत्परम्; 2·17 नमः (?); 6·23 प्रकाशन्ते महात्मनः; कौ 1·7 य एवं वेद ( also in कौ 4·19 ); 2·15 तथा समापयितव्यो |

| Page | Line | Parallel Quotations etc. |
|---|---|---|
| | | भवति; 3·8 स म आत्मेति विद्यात्; मै 1·4 त्वं नो गतिः; 2·7 अवस्थिता इति; 3·5 आप्नोतीति; 4·6 पुरुषस्य; 5·2 अन्तर्बहिश्च; 7·11 द्वैतीभावो महात्मन इति; बाष्कल has none; छागलेय is incomplete at the end and has, therefore, it seems, no repetition; आर्षेय 10 नमो ब्रह्मणे; शौनक 5 शौनकः; and last but not the least जै 2·15 साम वेद; 4·28 सावित्र्या एव सलोकतां जयति. |
| 73 | 13 & 14 | Add in the notes **उपसरणानि**...उपधावेत् cp ऋ 9·3·7 एष दिवं वि **धावति** and 9·3·8 एष दिवं **व्यासरत्**, also पा 7·3·78 पाघ्रा...**सर्तिशद्**-सदां पिबजिघ्र...**धौ**शीयसीदाः, ऐब्रा 7·14 वरुणं राजानमुप**धाव** स वरुणं राजानमुप**ससार**. |
| 79 | 11 | On उद्रशाण्डिल्य, add the following from मभा (CE) 2·7·11 :— हविष्मांश्च गविष्ठश्च हरिश्चन्द्रश्च पार्थिवः । हृद्यश्चोदरशाण्डिल्यः पाराशर्यः कृषीवलः ॥ |
| ,, | 8fb | Other citations from ऋ are 4·4·1 याहि राजेवामवाँ इभेन and 9·57·3 इभो राजेव सुव्रतः; शं explains : (i) इभो हस्ती तं अर्हति इति इभ्यः ईश्वरः, (ii) हस्त्यारोहः वा. |
| 80 | 6 | ऋ 3·48·2 यज्जायथास्तदहरस्य कामे supports the reading कामे. |
| 84 | ,, | हिङ्कार goes back to ऋ 1·164·28 मूर्धानं हिङ्कृणोन्मातवा उ. |
| 86 | ,, | We find the origin of संगव in ऋ 4·44·1 तं वां रथं वयमद्या हुवेम। पृथुज्रयमश्विना संगतिं गोः । संगतिं गोः i. e. संगवम् is acc. of time like दोषाम्; cp तैब्रा 1·5·3·1 मित्रस्य संगवः; शब्रा 2·2·3·9 यथा संगवोऽथ ग्रीष्मः; जै 1·12·4 आसंगवं आदिः; ऐब्रा 3·18 has संगविनी :—तस्माद्धेदं भरतानां पशवः सायंगोष्ठाः सन्तः मध्यान्दिने संगविनीमायन्ति. |
| 88 | 12 | Origin of महामनाः seems to be ऋ 1·165·2 केन महा मनसा रीरमाम and 6·40·4 आयाहि...इन्द्र महा मनसा सोमपेयम्. |
| 89 | 1 | Cp in general ऋ 6·75·3 वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना । योषेव शिङ्क्ते वितताधि धन्वञ् ज्या इयं समने पारयन्ती ॥ |
| 96 | 5 | For अपूप, add the following :—ऋ 3·52·7 अपूपमद्धि सगणो मरुद्भिः; सोमं पिब वृत्रहा शूर विद्वान्; शब्रा 2·2·3·12 व्रीहिमयमपूपं कृत्वा, 13 यवमयमपूपं कृत्वा; 4·2·5·19 इदं वा अपूपमशित्वा कामयते. |
| 99 | 7fb | For the origin of the formula of oath-taking तेन सत्येन, see ऋ 1·21·6 तेन सत्येन जागृतमधि प्रचेतुने पदे. In the Epics we find the formula made a little more explicit by the addition of the verb आलभ् :—मभा (CE) 3·240·38 सत्येनायुधमालभे; 3·281·98 सत्येनात्मानमालभे; (Bombay ed.) 13·2·72 तेनाहं विप्र सत्येन स्वयमात्मानमालभे; 15·3·52 सत्यमात्मानमालभे; 5·172·14 तथा मूर्धानमालभे; 15 सत्येनात्मानमालभे. |

| Page | Line | Parallel Quotations etc. |
|---|---|---|
| 99 | 3fb | Add also मभा 9·9·35 क्रोशाद्भिर्दयितैरन्ये भयार्ता न निर्वर्तिरे। (really for निववृतिरे; न निवर्तिताः; as commented by नी, is obviously wrong, the sense being quite the contrary). |
| 100 | 6 | उद्दालक आरुणि himself was the teacher of so many ऋषिs, besides his famous son, श्वेतकेतु:—e. g. शब्रा 11·5·3·1 शौचेयो ह प्राचीनयोग्यः। उद्दालकमारुणिमाजगाम। ब्रह्मोद्यमग्निहोत्रं विविदिषिष्यामीति; 12·2·2·13 प्रोतिर्ह कौशाम्बेयः। कौसुरुबिन्दिः उद्दालके आरुणौ ब्रह्मचर्यमुवास; षब्रा 1·6 न हि तदमुष्मिँल्लोके शक्नुवन्ति यदस्माल्लोकादकृत्वा प्रयन्ति। एतद्ध स्माहोद्दालक आरुणिः; cp also छां 5·11·2; बृ 6·3·7; कौ 1·1. |
| ,, | 8 | पुत्राय पिता......i. e. from father (older generation) to son (younger generation); cp ऋ 7·87·4 युगाय विप्र उपराय शिक्षन्. |
| ,, | 1fb | प्रतिष्ठा and आयतन are synonymous although they are always found together; cp ऋ 3·16·4 आ देवेषु यतते...; अ 17·1·30 सहस्रं प्राणा मयि आ यतन्ताम्; शब्रा 9·3·4·13 स्वायाम् एव एनम् एतत् दिशि आयत्तं प्रतिष्ठितं अभिषिञ्चति न वै स्वे आयतने प्रतिष्ठितः रिष्यति; शब्रा 11·5·2·10 अथो द्विप्रतिष्ठो वा अयं यजमानः......यजमानमेवैतत् स्वर्गे लोके **आयातयति प्रतिष्ठापयति** (both causal); तांब्रा 20·16·1 यदिदमस्यामाधि आयत्तमूलम्; cp also छां 6·8·6 सन्मूलाः सदायतनाः सत्प्रतिष्ठाः (प्रजाः) and के 4·8 तस्यै तपो दमः कर्मेति प्रतिष्ठा, वेदाः सर्वाङ्गानि सत्यमायतनम्. |
| 106 | 7 | घोर आङ्गिरस, a mythical teacher, personifying the dark side of the practice of अथर्ववेद. |
| 107 | 12 | For आण्डम् cp ऋ 10·121·1 हिरण्यगर्भः समवर्तताग्रे; शब्रा 6·1·1·10 तत आण्डं समवर्तत; also अण्डम्, cp मनु 1·9 तदण्डमभवद्धैमम्. |
| ,, | ,, | For संवत्सरस्य मात्राम् cp शब्रा 11·1·6·1 तदिदं हिरण्मयमाण्डं यावत् संवत्सरस्य वेला तावत् पर्यप्लवत. |
| ,, | 9fb | For समेघो नीहारः cp तैसं 7·4·8·2 तस्यैकैव निर्या यत् साम्मेघ्ये विषूवान्त्संपद्यते; तांब्रा 5·9·9 तस्य सा निर्या यत् सम्मेघे विषुवान् संपद्यते; साम्मेघ्य means *a cloudy season.* |
| ,, | ,, | For धमनयः cp अ 6·90·2 यास्ते शतं धमनयो अङ्गान्यनु विष्ठिताः; 7·35·2 इमा यास्ते शतं हिराः सहस्रं धमनीरुत. |
| 108 | 6 | आवसथान् मापयांचक्रे; here आवसथ has a special meaning : a place for the reception of guests; in ऐ 1·3·12 आवसथ has a more general sense of 'abode.' |
| ,, | 13 | समं दिवा; cp ऋ 7·62·1 समो दिवा ददृशे रोचमानः (सूर्यः). |
| ,, | 9fb | For अयाः in अधरेऽयाः, cp ऋ 10·116·9 अया इव परि चरन्ति; see नीलकण्ठ चतुर्धर on मभा (Bombay Text) 4·50·24 नाक्षान् क्षिपति गाण्डीवं न कृतं द्वापरं न च. |

| Page | Line | Parallel Quotations etc. |
|---|---|---|
| 109 | 13fb | अश्वतरीरथम् cp ऐब्रा 4·9 अश्वतरीरथेन अग्निः आजिम् अधावत्; see also जै 1·4·4 and notes thereon ( which are included later in these 'additions' ). |
| 111 | 6 | आभिप्रतारिन् see जैब्रा 3·156 तद्ध होवाचाभिप्रतारणो जीर्णः शयानः। पुत्रा हास्य दायं विभेजिरे. |
| 112 | 12,13 | चतुःशता गाः...नासहस्रेण...cp तैसं 7·1·5·2–3 ते संवत्सर एकां गामसृजन्त। सा वसुभ्यो रुद्रेभ्य आदित्येभ्यः प्राजायत त्रीणि च शतानि त्रयस्त्रिंशतं च ( 333 × 3 = 999 )। अथ सैव सहस्रतमी अभवत्. |
| ” | 12 | उप त्वा नेष्ये cp अ 11·5·3 आचार्य उपनयमानो ब्रह्मचारिणम्. |
| 114 | 4fb | For the reading कामे in the text, cp ऋ 3·48·2 यज्जायथास्तदहरस्य कामे. |
| 115 | 12 | अन्तेवासिनः cp शब्रा 5·1·5·17 अन्तेवासी वा ब्रह्मचारी वा; also बृ 6·3·7; छां 3·11·5; तै 1·3, 11. |
| ” | 7fb | For बहवः......पुरुषे कामाः......, also cp ऋ 10·46·10 पुरुस्पृहो मानुषासः. |
| 120 | 2 | लोह probably means 'Copper' or 'Bronze'; cp वासं 18·13 हिरण्यं च मे, अयश्च मे, श्यामं च मे, लोहं च मे... |
| ” | 7 | कुरूनश्वाऽभिरक्षति. Renou suggests विश्वाँ or विश्वा ( n. pl. ) [ विश्वाँ, better in our opinion ] in line with the following gloss in the text सर्वाश्चर्त्विजोऽभिरक्षति. |
| 123 | 12 | महज्जिगमिषेत् cp ऐब्रा 8·23 अजैषीर्वै समन्तं सर्वतः पृथिवीं महन्मा गमयेति; छां 7·6·1 तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति... |
| ” | 13 | मन्थं दधिमधुनोः उपमथ्य cp वासं 30·12 अवऋत्यै वधाय उपमान्थितारम्; तैब्रा· 1·6·8·4–5 एकया उपमन्थति। एका हि पितॄणाम्।; शब्रा 2·6·1·6 तस्मात् सकृदुपमथितो भवति; बृ 6·3·13 औदुम्बर्यां उपमन्थिनौ. |
| 127 | 8fb | अरण्ये contrasted with ग्रामे in छां 5·10·3; see also वासं 3·45 यद् ग्रामे यदरण्ये...यदेनश्चकृमा वयम्...; अ 12·1·56 ये ग्रामा यदरण्यं...तेषु चारु वदेम ते. |
| 128 | 14,17 | अभ्रं भवति, मेघो भवति, प्रवर्षति cp in this connexion these three names 4 अभ्रयन्ती 5 मेघयन्ती 6 वर्षयन्ती from among the seven names of कृत्तिकाs mentioned in तैसं 4·4·5·1. |
| 129 | 4 | क्षुद्राणि...भूतानि...cp ऋ 1·129·6 अव क्षुद्रमिव स्रवेत्; also in पा 2·4·8 क्षुद्रजन्तवः. |
| ” | 8fb | बुडिल आश्वतराश्वि, see note *a* on बृ 5·14·8. |
| ” | ” | महाशालाः cp a similar word सुषंसद् in ऋ 1·112·7 याभिः शुचन्तिं धनसां सुषंसदम्. |

